श्रीपार्थसारथिमिश्रविरचिता

# शास्त्रदीपिका प्रभासहिता

षष्ठाध्यायतः द्वादशाध्यायान्ता

( द्वितीयो भागः )




सम्पादकः

आचार्य श्रीपट्टाभिरामशास्त्री विद्यासागरः

श्रीलालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठम्

नूतन दिल्ली

१९८०-१९८१

संस्कृतविद्यापीठग्रन्थमालाया अष्टत्रिंशं पुष्पम्

श्रीपार्थसारथिमिश्रप्रणीता

# शास्त्रदीपिका

श्रीमत्तत्सत्कुलप्रसूतश्रीवैद्यनाथकृतया

प्रभाव्याख्यया सहिता

( द्वितीयो भागः )






प्रधानसम्पादकः

डॉ० मण्डनमिश्रः प्राचार्यः

दिल्ली केन्द्रिय संस्कृत विद्यापीठस्य

सम्पादकः

पी० एन्० पट्टाभिरामशास्त्री

विद्यासागरः

श्रीलालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठम्

शहीदजीतसिंहमार्गः, नूतन दिल्ली-१६

१९८०-१९८१

प्रकाशकः–

**डॉ० श्रीमण्डनमिश्रः प्राचार्यः**

श्रीलालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठम्

शहीदजीतसिंहमार्गः, नूतनदिल्ली–१६

**प्रथमं संस्करणम् ५०० प्रतयः**

मूल्यम्.......

श्रीलालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठ

तत्त्वावधाने प्रकाशितः

**मुद्रणम्–**

सं० सं० विश्वविद्यालयमुद्रणालयः,

वाराणसी–२२१००१

# प्रधानसम्पादकीयम्

श्रीलालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठस्य ग्रन्थप्रकाशनसमितिनिर्णयानुसारेण प्रभासहितायाः शास्त्रदीपिकाया द्वितीयो भागः प्रकाशपथमानीयते। प्रभानाम्नीटीकेयं **श्रीवैद्यनाथ**विरचिता प्राचीनां मातृकामवलम्ब्य संशोध्य प्रकाशिता। पूर्वमप्रकाशितानां प्रकाशितानामप्यत्यन्तदुर्लभानां ग्रन्थानां प्रकाशनाय विद्यापीठमिदं योजनाबद्धं कार्यं कुर्वदास्ते। तत्र मुद्रणालयदोषेण निश्चितक्रमानुसारेण कार्यं न सम्पद्यते। प्रभासहितशास्त्रदीपिकाया द्वितीयभागस्य प्रकाशनं गतवत्सर एव समापनीयमासीत्, किन्तु सखेदं वच्मि-यन्मुद्रणालयदुर्व्यवस्थया तथा कर्तुं न पारितमिति। अतः केन्द्रियशिक्षामन्त्रालयाधिकारिणः सानुनयं प्रार्थये-यदयं दोषो मर्षणीयोऽधिकारिभिरिति।

अस्य ग्रन्थस्य सम्पादनाय पूज्यपादा गुरुचरणाः प्रार्थिताः। जरसा समाक्रान्ता अपि ते मुद्रणालयीयां दुर्व्यवस्थां कथञ्चिदपाकुर्वन्त उत्तममिमं ग्रन्थं समपादयन्निति तेभ्यः प्रणामान् समर्पयामि। यावज्जीवं दृढगात्रास्सन्तस्ते एवमादीनां कार्याणां सम्पादने साहाय्यं विदध्युरिति सम्भावयामि। शिक्षामन्त्रालयाधिकारिणश्च प्रार्थये—यन्मुद्रणालयजनितान् दोषानविगणय्य यथापूर्वं ग्रन्थप्रकाशनाय द्रव्यराशिं स्वीकृत्य विद्यापीठगौरवसंरक्षणाय मां प्रोत्साहयेयुरिति।

वैशाखकृष्णपञ्चमी
सं० २०३८

विदुषां विधेयः
**श्रीमण्डनमिश्रः**



# किञ्चिन्निवेदनम्

श्रीपार्थसारथिमिश्रविरचितायाश्शास्त्रदीपिकायाः श्रीमत्तत्सद्रामभट्टसूरिवरात्मजश्रीवैद्यनाथविरचितया प्रभाख्यया व्याख्यया सह प्रथमो भागः पञ्चमाध्यायान्तो वत्सरद्वयात्पूर्वं पाठकानां करकमलानि सुशोभयति स्म। इदानीं तस्या आ च षष्ठाध्यायाद् आ च द्वादशाध्यायान्ताद् द्वितीयो भागो मनीषिणां हस्तमलङ्करिष्यतीति नितरां प्रसीदामि। प्रथमभागभूमिकायां श्रीपार्थसारथिमिश्रस्य श्रीतत्सत्कुलप्रसूतस्य श्रीवैद्यनाथस्य च विषये यद्वक्तव्यं तत्किञ्चिदिवावादिषम्। प्रभाव्याख्याया मातृकाविषये च यदुपपादनीयं तत्सविशेषं समुपापादयम्। श्रीवैद्यनाथस्य स्वव्याख्याया मूलं भट्टसोमेश्वरप्रणीता मयूखमालिका, अतिविस्तृतेयं व्याख्या। आयतावध्येतॄणां विस्तृतव्याख्यापठनेऽवलोकने च सहनशक्तिर्न द्रढीयसी स्यादिति श्रीवैद्यनाथः मयूखमालिकातस्सङ्गृह्य विषयान् प्रभानाम्नीं व्याख्यां प्रवर्तयामासेवेति प्रतीयते। अस्या व्याख्याया इयं शैली—सन्दिग्धानां पदानामर्थावबोधनम्, क्वचिच्छ्रौतसम्बन्धिना पदानां विवरणम्, श्रृङ्खलारूपेण निबद्धायां मीमांसायाः प्रत्यध्यायं प्रतिपादं प्रत्यधिकरणञ्च सङ्गतिप्रदर्शनम्, क्वचित्सावतरणं पङ्क्तीनामाशयाविष्करणम्, भावप्रकाशनम्, क्वचिदन्वयकथनम्, क्वचिच्च निर्णयावद्योतनञ्चेति। कस्यापि ग्रन्थस्य व्याख्याकरणे यावत्यस्सामग्र्यस्तास्सर्वा अप्यनेनावलम्बिताः।

आदिकाले आसीत्कश्चन समयः—यत्र च मीमांसाध्ययनाध्यापने केवलं सूत्रारूढे एवाभवताम्। सूत्रैस्सूचितानर्थान् सर्व एवाध्यगच्छन्। तदनन्तरं मध्यकालः, यत्र च भाष्यवार्तिकतट्टीकातद्व्याख्या चेति ग्रन्थेषु मनीषिभिः प्रणीतेषु सविशेषं तेषामध्ययनमिति। एवमतिविस्तृतिं प्रापिते शास्त्रे तदनन्तरकालोद्भवाः सङ्ग्रहेण प्रकरणग्रन्थान् निर्मायाध्येतॄन् ग्राहयामासुः। तत्रापि क्लेशमनुभवतामध्येतॄणां वैमुख्यमवेक्ष्य कतिपये व्याख्याप्रणयनेन प्रकरणग्रन्थान् विशदयितुं प्रारेभिरे। तदत्र शास्त्रदीपिका न प्रकरणग्रन्थः, किन्तु तत्तदधिकरणसूत्र-तद्भाष्य-तद्वार्तिकादिविषयसङ्ग्रहात्मक इति प्रथमभागीयभूमिकायामवादिषम्। तदस्य ग्रन्थरत्नस्य देशभेदेन मनीषिणो व्याख्यातारोऽनेके। प्रायो व्याख्यानं दक्षिणभारतीयैरेव कृतम्। तत्र भट्टसोमनाथव्याख्यानं विशिष्टं परिगण्यते शास्त्रविद्भिः। एतेन नेदमनुमातुं शक्यते यदप्पय्यदीक्षितेन्द्र—श्रीराजचूडामणिदीक्षित—श्रीकमलाकरभट्टप्रभृतिभिर्महनीयचरितैर्विरचिताष्टीका नादरयोग्या इति। किन्तु टीकानां मूलमातृका नोपलभ्यन्ते। तदर्थं भूयसि यत्ने कृतेऽपि प्रतिलिपीकृता एव ता अशुद्धिबहुला उपलभ्यन्ते। विविधा मातृका अवलम्ब्य मयूखमालिका मुद्रितेति नितरां तोषस्यावसरः। सेयमतिविस्तृतेति वैद्यनाथस्तां संक्षिप्याधुनिकाध्येतॄणां कोमलमतीनां कृते प्रभानाम्नीं प्रणिनाय।

अत्र दशमाष्टमपादस्याष्टमाधिकरणे 'दीक्षितो न ददाति न जुहोति न पचति' इति वाक्यविचारावसरे 'अस्मत्पितृचरणानां मातामहचरणाः श्रीरघुनाथभट्टवाजपेययाजिनः'

इति नाम निर्दिशति । मीमांसायां धर्मशास्त्रे च भट्टवंशस्सुप्रसिद्धः । वैद्यनाथोऽपि स्वपितृचरणान् श्री तत्सद्रामचन्द्रभट्टान् 'धर्मशास्त्रपारावार' इति विशेषणेन विशिनष्टि । विना मीमांसया धर्मशास्त्रस्य विना च धर्मशास्त्रेण मीमांसाया अध्ययनाध्यापनमेव नाभवच्चिरन्तनेषु कालेषु । दक्षिणभारते चिरन्तनाः पण्डिताः वेदाध्ययनपूर्वकं मीमांसां प्राधान्येनाधीयानाः 'मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता' इति कौमारिलं वचनं सर्वथानुसरन्ति स्म ।

तत्र तत्सद्वंशः श्रीवैद्यनाथपितृचरणानां मातामहवंशश्च मीमांसायां धर्मशास्त्रे च प्रामाणिकाविति ज्ञायते । अतएव श्री वैद्यनाथेन 'दीक्षितो न ददाति न जुहोति न पचति' इत्यधिकरणशास्त्रदीपिकाग्रन्थव्याख्यानावसरे कृतं विवरणं प्रदर्शयिष्यन् प्रथमं तदधिकरणविषयं किञ्चिदिव विशदयितुमभिलषामि-कृताधानो यजमान आधानपूर्वत्वेन वेष्टिपूर्वत्वेन वा सोमयागं चिकीर्षुः दीक्षासंस्कारान् 'आग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाणः' इति विहितदीक्षणीयेष्टिञ्चानुष्ठाय दीक्षितो भवति । तस्यायं निषेधः - न ददाति न जुहोति न पचति इति । अत्र नञर्थस्य विध्यर्थभावनया सहान्वये न दद्यात् न जुहुयात् न पचेत् इति प्रतिषेधः, यदि च धात्वर्थैस्सहान्वयस्तर्हि दानभिन्नं होमभिन्नं पाकभिन्नं कुर्यात् इति, यदि वा दीक्षितपदेनान्वयस्तर्हि अदीक्षितेन दानादिः कर्तव्य इति वा पर्युदासस्स्यात् । तत्र प्रतिषेधपक्षे प्राप्तिसापेक्षत्वात् शास्त्रप्राप्तदानादेः प्रतिषेधे विकल्पप्रसक्तिः । विकल्पप्रसक्त्या च पर्युदासाश्रयणमिति स्थितिः । प्रतिषेधे च प्राप्तिः पुरुषार्थतया, निषेधश्च क्रत्वर्थतयेति स्थितिर्भवेद्यदि द्वयोर्भिन्नविषयत्वेन न विकल्पस्स्यात् । अतः सोमक्रतुमनुतिष्ठता दीक्षितेनावश्यं वर्जनीयान्यग्निहोत्रादीनि भवन्तीति न विकल्पप्रसक्तिः । क्रत्वर्थत्वेन पुरुषार्थत्वेनेति भिन्नविषयत्वेऽपि प्रतिषेधस्य प्राप्तिसापेक्षत्वमनिवार्यम्, तदा कथं विकल्पपरिहार इति शङ्कायां श्री वैद्यनाथः श्रीमद्भट्टरघुनाथवाजपेययाजिनां वाक्यान्युद्धरति—'अत्राहुः' इत्यादीनि । ( पृ० ४७३, द्वि० भा० )

उद्धृतवाक्यानामयमाशयः—'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिवाक्यैः दीक्षितादीक्षितसाधारण्येन सामान्यतो होमादिप्राप्तिमात्रेण निषेध उपपन्नो भवत्येव, दीक्षितत्वेन रूपेण न तत्र कापि विशेषापेक्षा । यत्र विधिनिषेधयोः परस्परं बाध्यबाधकभावस्सम्भवी तत्र हि विकल्पः, यत्र च तयोस्स न सम्भवी तत्र न विकल्पः यथा सामान्यविशेषयोः । विशेषेण हि सामान्यस्य बाधो निश्चितः । बाधे च सति न विकल्पस्यावसरः । अतएव विधिनिषेधयोर्भिन्नविषयस्थलेषु ग्रन्थकृतां विकल्पाभावोक्तिस्सङ्गच्छते । यत्र च निषेध्याः क्रत्वर्था एव तेषां क्रत्वर्थता विधिं विना न सम्भवतीति तत्र न भिन्नविषयत्वरूपबाधसम्भव इति विकल्पस्स्यादेव । प्रकृते तु निषेधस्य प्राप्तिसापेक्षत्वेऽपि यावज्जीवादिवाक्यतः दीक्षितादीक्षितसाधारण्येन सामान्यतो होमादिप्राप्तिमुपजीव्य निषेध उपपन्न इति न विकल्प इति । एवं तत्सत्कुलसम्भूतो वैद्यनाथो गभीराणां विषयाणां सरलया शैल्या ग्रन्थिमुद्घाटयन् स्वस्य स्वकुलपरम्परायाश्च गौरवमाविष्करोति । यथा मीमांसायां धर्मशास्त्रे चास्य वैदुष्यं तथैव व्याकरणेऽलङ्कारशास्त्रेऽप्यस्तीति एतद्विरचितैर्ग्रन्थैरवगम्यते ।

संक्षिप्तया मनोहरया सरलया च प्रभया सहितायाः शास्त्रदीपिकायाः प्रकाशने डा० मण्डनमिश्रस्य यस्समुद्यमः स नितरां श्लाघ्यः, केन्द्रियसंस्कृतविद्यापीठस्य गौरवोन्नायकश्चेति निस्सङ्कोचं विश्वसिमि। एतदर्थं डा० मण्डनमिश्राय पुस्तकप्रकाशनसमितिसदस्येभ्यः, केन्द्रियशिक्षामन्त्रालयाधिकारिभ्यश्च शतशो धन्यवादान् वितरामि। मातृकालेखने तत्संवादकार्ये 'प्रूफ' पदाभिधेयस्य संशोधने, तदर्थं प्रत्यहं मुद्रणालयगमने च नितान्तमुपकृतवते मीमांसावेदान्ताचार्याय पं० श्रीमध्वाचार्याय डा० बसन्तबल्लभभट्टाय एम्० ए० पी-एच० डी० पदधारिणे च मदीयां मनस्सन्तुष्टिमाविष्करोमि। अस्मिन् सन्दर्भे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयदुर्व्यवस्थामनुल्लिख्य वर्तितुं नाभिलषामि। परिणतेऽस्मिन् वयसि यत्कष्टं सोढुं न शक्यते तदनिर्वर्णनीयं कष्टमनुभवितव्यमभवदिति सखेदं निर्दिशामि। सम्प्रत्येव कुलपतिपदभारं स्वीकृतवन्तः डा० श्रीगौरीनाथशास्त्रिणो विश्वविद्यालयीयं मुद्रणालयं सुचारुकार्यसम्पादने समर्थं विधाय विश्वविद्यालयस्य गौरवं संवर्द्धयेयुरिति तेभ्यो निवेदयन् विरमामि।

वाराणसी
२४-४-१९८१

विदुषामाश्रवः
**पी० एन्० पट्टाभिरामशास्त्री**



# अधिकरणसूची

## षष्ठोऽध्यायः प्रथमः पादः



## द्वितीयः पादः



## तृतीयः पादः

## चतुर्थः पादः



## पञ्चमः पादः

**षष्ठः पादः**



**सप्तमः पादः**



**अष्टमः पादः**

**सप्तमोऽध्यायः प्रथमः पादः**



**द्वितीयः पादः**



**तृतीयः पादः**



**चतुर्थः पादः**



**अष्टमोऽध्यायः प्रथमः पादः**

### द्वितीयः पादः



### तृतीयः पादः



### चतुर्थः पादः

**दशमोध्यायः प्रथमः पादः**



**द्वितीयः पादः**

तृतीयः पादः

**चतुर्थः पादः**



**पञ्चमः पादः**

षष्ठः पादः



सप्तमः पादः

## अष्टमः पादः



## एकादशाध्यायः प्रथमः पाद



## द्वितीयः पादः

### तृतीयः पादः



### चतुर्थः पादः

## द्वादशाध्यायः प्रथमः पादः



## द्वितीयः पादः

## तृतीयः पादः



## चतुर्थः पादः





श्रीः

# शास्त्रदीपिकायां

## प्रभासहितायां

### षष्ठोऽध्यायः

### तत्र प्रथमः पादः

१

द्रव्याणां०—भेदादिलक्षणैरेवमनुष्ठेये निरूपिते ।
कोऽनेनाधिक्रियेतेति साम्प्रतं सम्प्रधार्यते ॥
तदुपोद्घातरूपेण त्वादावेतद्विचार्यते ।
कर्मभिः पुरुषः कर्ता किमधिक्रियते न वा ॥

सत्यधिकारे कस्य कुत्राधिकार इति चिन्तयितुं लक्षणमारब्धव्य-

---

द्रव्याणां० फलभोक्तृत्वविशिष्टकर्तृत्वरूपाधिकारस्यानुष्ठेयसापेक्षत्वात्तन्निरूपणोत्तरमारम्भ इति सङ्गतिसिद्धयर्थमाह— भेदादीति । अज्ञातज्ञापकस्य हि विधेश्चतस्रो विधाः—उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारविधिरिति । तत्राज्ञातकर्मस्वरूपमात्रपरो विधिराद्यः । यथा 'अग्निहोत्रं जुहोती'ति । अत्र ह्यग्निहोत्राख्यकर्मस्वरूपमात्रं विधिना बोध्यते । अङ्गाङ्गित्वबोधनपरो द्वितीयः । यथा 'यवाग्वाऽग्निहोत्रं जुहोती'ति विधेर्होमस्याङ्गित्वं यवाग्वाश्चाङ्गत्वं तात्पर्यविषयः, स्वरूपस्यान्यतः सिद्धेः । अनुष्ठानप्रकारपरस्तृतीयः । यथा 'सायं जुहोती'त्यादिर्देशकालकर्तृक्रमादिविशिष्टानुष्ठानबोधकः । कर्मजन्यफलभोक्तृकर्तृविशेषरूपाधिकारिपरश्चतुर्थः । यथा 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'राजा राजसूयेने'त्यादिः । तत्र भेदलक्षणेनाद्यस्य शेषलक्षणेन द्वितीयस्य चतुर्थपञ्चमाभ्यां च तृतीयस्य विवेचनम् । षष्ठे च चतुर्थस्येति । **अनेनेति** । अनुष्ठेयेन कर्मणेत्यर्थः । एवमध्यायसङ्गतिमुक्त्वाद्याधिकरणस्य तामाह— **तदिति** । **अधिक्रियते** स्वामीक्रियते । स्वजन्यफलभोक्तेति यावत् । एवं चाधिकारसामा-

मिति तत्सिद्धयर्थमधिकारसद्भावः प्रथमं प्रतिपाद्यते। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'चित्रया यजेत पशुकामः' इत्यादिषु किं पुरुषस्याधिकारः स्वाम्यम्-कर्मजन्यफलभोक्तृत्वमस्ति न वेति चिन्त्यते। तदर्थमिदं विचार्यते येयं प्रत्ययोपात्ता भावना तस्यां किं धात्वर्थ एव भाव्यः प्रधानम्? स्वर्गादि तु साधनतया गुणभूतम्? उत काम्यमानत्वेनोपात्तः स्वर्गादिरेव भाव्यः तत्साधनश्च धात्वर्थ इति? ततोऽप्येतद्विवेक्तव्यम्—योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः सम्बन्धः, तत्र किं क्रिया प्रधानतः? पुरुषो गुणतः? ततो विपरीतं वेति? यदि गुणतः पुरुषः, ततः तस्य गुणभावं क्रियाक्षेपादेव सिद्धमनूद्य स्वर्गादि द्रव्यं साधनत्वेन विधीयते। कामयतिश्च साधनकामनानुवादः। तदयमर्थः—स्वर्गं साधनत्वेन कामयमानो यजेत, स्वर्गेण यागं कुर्यादित्यर्थः।

यद्वा स्वर्गकामनैव समुद्रमनोध्यानवत् गुणभूतकर्तृविशेषणं सती यागाङ्गमुपदिश्यत इति द्वेधा पूर्वः पक्षः। प्रधानतः पुरुषः, ततः तस्यात्मार्था स्वर्गादिगोचरा प्रवृत्तिः प्रत्ययेन विधीयते, साधनतया च याग उपदिश्यते—स्वर्गकामो यागेन कुर्यादात्मार्थां प्रवृत्तिमिति। स्वर्गकामस्यात्मार्था प्रवृत्तिः स्वर्गविषयैवेति, स्वर्गभावनैवानेन प्रकारेणोपदिष्टा भवति। तदयमर्थः—स्वर्गं यः प्राप्तुमिच्छति, स यागेन कुर्यादभिलषितम्। स्वर्गश्च तस्याभिलषित इति स्वर्गं भावयेत् यागेनेत्युक्तं भवति। स्वर्गकामोदाहरणे तु प्रथमपूर्वपक्षौपयिकतयेदमपि चिन्त्यते—स्वर्गशब्दो

---

न्यासिद्धौ तद्विशेषचिन्तनायोगादुपोद्घातरूपत्वमेतदधिकरणस्येत्यर्थः। स्वाम्यमित्यस्य व्याख्यानम् कर्मजन्येत्यादि। न च 'जातेष्टौ[1] पितुरधिकारानापत्तिः, पूतत्वफलानाश्रयत्वादिति वाच्यम्। पूतपुत्रः स्यामितीच्छावशेन परम्परयैव पूतत्वस्य फलत्वेन पितुस्तदाश्रयत्वोपपत्तेः। प्रधानतो गुणत इति प्रथमार्थे तसिप्रत्ययौ। स्वर्गादिद्रव्यमिति। स्वर्गशब्दस्य प्रीतिसाधनचन्दनादिवाचित्वस्य पूर्वपक्षाभिमतत्वादिति भावः। आदिना पशुकाम इत्यादौ पश्वादिः।

स्वर्गशब्दस्य सुखविशेष एव प्रसिद्धेराह—यद्वेति। 'रथन्तरे प्रस्तूयमाने समुद्रं मनसा ध्यायेदि'ति सामाङ्गत्वेन ध्यानवत्कर्माङ्गत्वेन तत्तत्कामनैव विधीयत इत्यर्थः।

---

१. 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहितेष्टिर्जातेष्टिः।

द्रव्यवचनः, प्रीतिवचनो वेति । प्रीतिवचनत्वे तु तस्याः साधनत्वासम्भवादत्यन्तानालम्बनः प्रथमः पक्षः स्यादिति । तत्र पूर्वः पक्षः—

धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते ।
स्वर्गादेः खलु वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥
भूतं च स्वर्गपश्वादि द्रव्यं भव्याय कर्मणे ।
उपदेश्यं न भूताय भव्यकर्मोपदेशनम् ॥

स्वर्गशब्दश्चन्दनादिषु प्रयोगाद् द्रव्यवचनमिति न साधनत्वासम्भवः । पश्वादेस्त्वसन्दिग्धमेव द्रव्यवचनत्वम् । अथवा स्वर्गादिकामनैव यागाङ्गमिति सर्वथा याग एव भाव्यः, न तेनान्यत्फलम् । असति च फलेऽधिकाराभावादनारम्भणीयमधिकारलक्षणम् । न चैवमफले कर्मणि न कश्चित् प्रवर्तेत । मा प्रवर्तिष्ट, किं नः छिन्नम् । नैतावता शक्यं फलमुपगन्तुम् । अफलस्य च कर्मणो धर्मत्वं न सिध्यतीत्येतदपि भवतु । तथा च 'चोदनालक्षणोऽर्थो धर्मः' इत्येतदपि प्रत्युद्धुतं स्यादित्येतदपि सत्यम् । धर्माधीनं च सकलं शास्त्रमिति सकलशास्त्राक्षेपेणेदमधिकरणमारब्धम् । विधिरपि पुरुषं प्रवर्तयति न तु फलवत्तां गमयति । न च प्रवर्तितोऽपि कश्चिदफले प्रवर्तत इति व्यर्थ एव विधिरिति प्राप्ते, अभिधीयते—

---

धात्वर्थस्यैवेति । भावनाभाव्याकाङ्क्षायां यजेतेत्येकपदश्रुत्या धात्वर्थयागस्यैव शीघ्रोपस्थितस्यान्वयो न तु पदान्तरोपात्तस्य स्वर्गपश्वादेर्दुर्बलवाक्यप्रमाणक इत्यर्थः । स्वर्गादेस्तर्हि कथमन्वयस्तत्राह भूतञ्चेति । भूतं सिद्धस्वभावम् । **भव्याय** साध्यरूपाय **कर्मणे** कर्मार्थम् । तथा च यागकरणत्वेन स्वर्गाद्यन्वय इत्यर्थः । यागस्य स्वर्गार्थत्वे दोषमाह—**न भूतायेति** । अदृष्टार्थत्वप्रसङ्गादिति भावः । द्वितीयपक्षमाह । **अथवेति नैतावतेति** । प्रमाणाभावादिति भावः । **धर्मत्वमिति** श्रेयःसाधनत्वस्य तत्त्वादित्यर्थः । **चोदनेति** विधिप्रमाणको धर्म इति द्वितीयसूत्रोक्तं निरस्तं स्यादित्यर्थः । **धर्माधीनम्** तन्निर्णयार्थत्वादिति भावः । विधिबलात्फलवत्त्वमाशङ्क्याह—**विधिरपीति** । **व्यर्थः** फलशून्यः । मानाभावादित्यर्थः ।

एकपदश्रुत्यपेक्षयैकाभिधानश्रुतेर्बलवत्त्वात्तया स्वर्गस्य भाव्यत्वावगम इत्याह—

पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना।
अवरुद्धा न यागादि भाव्यमालम्बितुं क्षमा ॥
स्वर्गादिः कामनायोगात्फलत्वेनैव गम्यते।
स्वरसात्पुरुषाणां हि कामना फलगोचरा ॥

लिङादयो हि विधिं भावनां चाभिदधति। तेन प्रकृत्युपात्तयागसम्बन्धात् पूर्वमेव विधिसम्बन्धो भावनायाः प्रतीयते। प्रवर्तनारूपश्च विधिः। प्रवृत्तिहेतुश्च व्यापारः प्रवर्तना, तद्योगिता चापुरुषार्थभाव्याया भावनाया न सम्भवतीति, यागातिक्रमेण पुरुषार्थस्यैव भाव्यत्वं विधिश्रुतिबलादध्यवसीयते। कस्य पुनरसौ प्रवर्तनारूपो व्यापारः? शब्दस्येति ब्रूमः। तस्य सन्निहितत्वाद् अन्यस्य चाप्रतीतेः। यद्यपि चास्याचेतनत्वादाज्ञादिव्यापारासम्भवः, तथापि योऽस्य व्यापारः सम्भवति तस्यैव यथा प्रवर्त्तनारूपत्वं सम्पद्यते तथा यतितव्यम्। अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः। तत्र यदि भाव्यांशे पुरुषार्थ उपनीयते ततस्तत्प्रतिपादनं प्रवृत्तिहेतुर्भवति नान्यथा। तेन शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं सम्पादयितुं तद्विषयभूताया भावनायाः पुरुषार्थभाव्यत्वं निश्चीयते। स्वर्गादिश्च कामनायोगात् भाव्यतया गम्यते।

भाव्यविषया हि मुख्यरूपेण कामना, साधनेषु तु तत्सम्बन्ध-

---

पदश्रुतेरिति। **विधिश्रुत्या** विधिप्रत्ययरूपश्रुत्या। **अवरुद्धा** विध्यन्विता। **न यागेति**। अपुरुषार्थस्य तस्यामन्वयायोग्यत्वादिति भावः। यदुक्तं कामशब्दः साधनकामनानुवाद इति तन्निरस्यति—**स्वरसादिति**।

आद्यपद्यं व्याचष्टे **लिङादयो हीति**। 'विधिनिमन्त्रणे'त्याद्यनुशासनादनुभवाच्चेदित्यर्थः। **तेन** एकशब्दाभिधानेन। **यागातिक्रमेण** सन्निहितयागत्यागेन। लोकवद्वेदे पुरुषाभावात्पृच्छति—**कस्येति**। **सन्निहितत्वात्** श्रूयमाणत्वात्। **अन्यस्य** प्रवर्तकान्तरस्येच्छादेः। **प्रवर्तनारूपत्वमिति**। तथा च स एव प्रवर्तनात्वेन लिङ्वाच्य इत्यर्थः। **प्रतिपादनं** प्रतिपत्त्यनुकूलव्यापारः अभिधाख्या। स च पदज्ञानं तद्गोचरसंस्कारो वेत्यर्थवादपादे दर्शितमस्माभिः।

द्वितीयं श्लोकं व्याचष्टे **भाव्यविषया हीति**। **मुख्यरूपेण** स्वभावतः। **गौणी**

निमित्ता गौणी। न चात्र गौण्या ग्रहणे प्रमाणमस्ति। तस्माद्विधिश्रुतेः कामनायोगाच्च स्वर्गपश्वादीनामेव भाव्यत्वम्, यागश्च तत्साधनम्। प्रीतिवचनश्च स्वर्गशब्दः, तामनभिधाय तद्विशिष्टद्रव्याभिधानासम्भवात्, द्रव्यस्वरूपमात्रे चाप्रयोगात्। अतः स्वर्गादिकामस्य पुरुषस्य तद्भावना यागादिविशिष्टा विधीयते। यद्यपि च स्वर्गकामस्यार्थान्तरविषया प्रवृत्तिः शेषत्वेन सम्भवति, तथापि पुरुषान्तरशेषत्वस्यापि सम्भवात्। स्वर्गकामस्य कदाचित्फलेतरमनिच्छतस्तच्छेषित्वासम्भवान्न स्वर्गकामार्थंप्रवृत्तित्वेन निर्दिश्यते। यैव हि स्वर्गकामेषु शेषत्वेनानुस्यूता पुरुषान्तरेभ्यश्च व्यावृत्ता स्वर्गार्था प्रवृत्तिः सैव स्वर्गकामप्रवृत्तिरित्येवं विशेषणं सहते। अतः स्वर्गकामार्थप्रवृत्त्युपदेशात्तत्साधनत्वेनैव विहितो यागः स्वर्गसाधनत्वेनैव विहितो भवति। फलसाधने च कर्मणि फलभागिनः पुरुषस्य सिद्धोऽधिकार इति लक्षणमारब्धव्यम्।

इति स्वर्गकामाधिकरणम् ॥१॥

---

फलसाधनत्वसम्बन्धरूपगुणादागता। [१]भूतभव्यसमुच्चारणन्यायेन स्वर्गद्रव्यस्य यागार्थत्वमुक्तं दूषयति—प्रीतीति। अत्राकृत्यधिकरणन्यायमाह। तामिति पुरुषस्येत्यनन्तरं शेषत्वेनेत्यध्याहारः। ननु स्वर्गकामस्य भोजनाद्यर्थप्रवृत्तावपि यागवैशिष्ट्यविधिः स्यादित्याशङ्क्य निराकरोति **यद्यपीति**। अर्थान्तर भोजनादि। **पुरुषान्तरेति**। भोजनादिप्रवृत्तेः स्वर्गकामशेषत्वस्यापि सम्भवादित्यर्थः। फलेतरं भोजनादि। **तच्छेषित्वासंभवात्** भोजनप्रवृत्तिशेषित्वासम्भवात्। का तर्हि तथा निर्दिश्यते? तां दर्शयति **यैव हीति**। सैव स्वर्गोद्देश्यकैवेत्यर्थः। ननु स्वर्गकामार्थप्रवृत्तिसाधनत्वेऽपि स्वर्गसाधनत्वं यागस्य कथमत आह **अत इति**। कामपदस्य स्वर्गे इच्छाविषयत्वरूपफलत्वबोधनार्थत्वेन पुरुषपरत्वाभावाद्वि॰षणीभूतस्वर्गपरत्वेन स्वर्गभावनासाधनत्वेनावगतस्य यागस्य तद्द्वारा पार्ष्ठिकान्वयेन स्वर्गसाधनत्वावगम इति भावः। **फलभागिन इति**। विधिवशेनात्मनेपदबलेन च कर्तृगतफलावगमादिति भावः। **लक्षणम्** अधिकारविशेषनिरूपणात्मकोऽध्यायः। सूत्रप्रयोजने स्पष्टे॥

इति स्वर्गकामाधिकरणम् ॥ १ ॥

---

१. 'भूतं भव्यायोपदिश्यते' इति न्यायः।

१

फलार्थित्वात्० सिद्धेऽधिकारे स किं समग्रानुष्ठानासमर्थानामन्ध-बधिर-पङ्गु-मूक-देव-तिरश्चामपि ? किं वा समर्थानां मनुष्याणामेवेति ? संशयः । तत्र यदि यथाधिकारमङ्गविनियोगः, ततस्सर्वेषामपि । अथ यथाविनियोगमधिकारः, तदा समग्रानुष्ठानसमर्थानामेवेति ।

तत्र प्रधानवाक्येन सर्वेषामधिकारधीः ।
जायते तद्दर्शनाङ्गवाक्यानामुपवर्णनम् ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति प्रधानवाक्येन सर्वेषां स्वर्गकामाधिकारं कर्मावगतम्, तदनुसारीणि चाङ्गवाक्यानि न तत्सङ्कोचायालम् । अतश्चक्षुष्मन्तम्प्रत्याज्यावेक्षणविधिः, अचक्षुष्मतस्तु विध्यभावात् तद्रहितमेव फलसाधनम् । एवं बधिरस्य वाचनरहितम्, मूकस्य मन्त्रोच्चारणरहितम्, पङ्गोश्च विष्णुक्रमणरहितमिति सर्वेषामर्थिनामशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकारः ।

स्यादेवमर्थिनाम् । तिरश्चान्तु साम्परायिकफलकामनाभावात्कथमधिकारशङ्का, तेषामपि चतुर्दश्युपवासादिदर्शनादस्त्येवादृष्टार्थितेति मन्यते ।

अत्रोच्यते—नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना ।
यतोऽसमर्थस्तच्छून्यं कर्म कृत्वाधिकारभाक् ॥

पुरुषम्प्रति हि विधीयमानमसमर्थं प्रत्यविहितत्वादनङ्गमेवेति तद्रहितमेव कर्माविगुणं समग्रं फलं साधयेत् ।

---

२

फलार्थित्वात्० सङ्गतिं दर्शयन्नाह सिद्ध इति । अनुष्ठानासमर्थानाम् । सर्वाङ्गोपेतप्रधानानुष्ठानासमर्थानाम् । वाचनेति । 'क्लृप्तीर्यजमानं वाचयती'ति विहितम् 'आयुर्यज्ञेन कल्पतामि'त्यादिमन्त्रवाचनमित्यर्थः । साम्परायिकेति । परलोकभोग्ये-

क्रतुं प्रति विधिस्तेषां तादृशं तच्च शक्नुवत् ।
कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया ॥

न हि स्वातन्त्र्येणाङ्गवाक्यानि पुरुषैः सम्बध्यन्ते, प्रधानवाक्यशेषत्वात्तेषाम् । तद्युक्तेन तु प्रधानवाक्येन तदङ्गयुक्तः क्रतुः पुरुषैः संयुज्यमानोऽसमर्थानपहाय समर्थान् प्रति विज्ञायते । अतोऽन्धस्य क्रतुरेवाविहितः, न त्वाज्यावेक्षणमेवाविहितम् इतरच्च विहितमिति मन्तव्यम् । न च प्रधानवाक्यविरोधात्सर्वाधिकारनिश्चयः, विशेषाभावाद्धि सर्वाधिकारः स्यात् । अस्ति चात्र विशेषोऽङ्गोपसंहारसामर्थ्यम् । अतः समर्थानामेवाधिकारः ।

यत्र तु प्रधानवाक्यादिविरोधो यावज्जीवादौ, तत्र भवत्येव यथाशक्तिप्रयोगादपि प्रयोजनमिति वक्ष्यते । तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलम् । तिरश्चां तु प्रधानमात्रेऽप्यसामर्थ्यान्न क्वचिदधिकारः । ऋषीणान्त्वनादौ संसारे पूर्वपूर्वभृग्वादिवरणसम्भवादस्त्येवाधिकार इति ऋष्युदाहरणमनादर्तव्यम् । देवतानां त्वात्मोद्देशेन त्यागासम्भवाद्विग्रहाभावाच्चाशक्तेरनधिकारः ॥

इति तिर्यगधिकरणम् ॥ २ ॥

---

त्यर्थः । दर्शनात् । [1]भाष्यकारोक्तदर्शनप्रसिद्धेः । अदृष्टार्थिता अदृष्टफलार्थिता । ननु पुरुषं प्रत्याज्यावेक्षणाद्यङ्गविध्यभावेऽपि चक्षुमन्तं प्रत्येवाज्यावेक्षणाङ्गयुक्तक्रतुविधिरित्यङ्गीकार्यम् । अन्यथा सर्वाधिकारबोधकप्रधानविधिसङ्कोचापत्तेरत आह **न चेति** । **विशेषेति** । सर्वपदाश्रवणादिति भावः । **अङ्गोपसंहारसामर्थ्यम्** इतिकर्तव्यताकाङ्क्षावशात्सर्वाङ्गसाहित्यप्रतीतिसामर्थ्यम् । **यावज्जीवेति** । तत्र जीवनव्यापकत्वस्य प्रधाने प्रतीतिः सर्वाङ्गोपसंहारे बाधापत्तेरिति भावः । **प्रयोजनम्** अन्धादीनां काम्यप्रयोगानुष्ठानाननुष्ठानरूपम्। देवानामधिकारे सहस्रसंवत्सरसत्रे संवत्सरशब्दस्य न दिवसपरत्वम् । सिद्धान्ते तु तदिति । सूत्रं स्पष्टम् ॥

इति तिर्यगधिकरणम् ॥ २ ॥

---

१. 'ननु तिर्यञ्च आसन्नं फलं चेतयन्ते न कालान्तरफलं प्रार्थयन्ते । कालान्तरफलानि च वैदिकानि कर्माणि । उच्यते-कालान्तरेऽपि फलं कामयमाना लक्ष्यन्ते । शुनश्चतुर्दश्यामुपवसतः पश्यामः । श्येनांश्चाष्टम्याम्' इति शाबरं भाष्यम् । ( पृ० १०८ चौ० संस्करणम् )

३

लिङ्ग० इदानीं किं पुंस एवाधिकारः ? उत स्त्रिया अपीति संशयः ।

तत्र पुंल्लिङ्गनिर्देशात्पुंस एवाधिकारिता ।
प्रकृत्यर्थतया लिङ्गं सङ्ख्यावन्नाविवक्षितम् ॥

विभक्त्यर्थस्य हि सङ्ख्याया ग्रहाधिकरणेऽविवक्षितत्वमुक्तम् लिङ्गन्तु प्रातिपदिकार्थो ग्रहवत् विवक्षितम्, उद्देश्योऽपि फलकामो विवक्षितलिङ्गः । अतः पुमानेव स्यात् । अद्रव्यत्वाच्च स्त्रिया द्रव्यत्यागात्मकयागानुष्ठानासम्भवादननुष्ठाने चाधिकारासम्भवादनधिकारः । तथा 'भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः' इति स्मरणात् । अतः पुंस एवाधिकारः । उच्यते —

प्रकृत्यर्थोऽपि खल्वेतदुद्देश्यस्य विशेषणम् ।
सङ्ख्यया तुल्यनीतित्वान्न विवक्षां प्रपद्यते ॥

ग्रहस्तूद्देश्यत्वाद् विवक्षितः, न प्रातिपदिकार्थत्वात् । लिङ्गन्तु प्रातिपदिकार्थोऽप्युद्देश्यविशेषणत्वादविवक्षितम्, वाक्यभेदप्रसङ्गाद् अनपेक्षितपरिच्छेदत्वाच्चोद्दिश्यमानस्य । न चायं प्रातिपदिकार्थो विभक्तिविकाराणां टाबादीनां चान्वयव्यतिरेकाभ्यां लिङ्गाभिधायित्वात् । अतः सङ्ख्यावदविवक्षितमिति स्त्रिया अप्यधिकारः । न चाद्रव्यत्वमस्याः, कर्तनादिभिरर्जनसम्भवात्, पित्रादिदत्तसम्भवात् दायादिसम्भवाच्च । 'पुत्रा-

---

३

लिङ्ग० अन्धादीनामिव स्त्रिया अपि क्रतुप्रयोगाशक्त्यानधिकारप्रसक्तावपवादात्सङ्गतिः । अथवा समर्थानामधिकारसिद्धौ क्वास्ति क्व नास्ति इति कोष्ठशोधनिकारूपेण चिन्तनावसर इति इदानीमित्यनेन सूच्यते । प्रकृत्यर्थेति प्रत्ययलोपेऽपि लिङ्गप्रतीतेरिति भावः ।

तुल्यनीतित्वादिति । उद्देश्यविशेषणस्यापि विधौ वाक्यभेददोषात्मकन्यायस्य सङ्ख्यायामिवात्राऽपि साम्यादित्यर्थः । परिच्छेदरूपकार्याभावेऽपि सम इत्याह अनपेक्षितेति । वस्तुतो न लिङ्गं प्रकृत्यर्थमिति सौहार्देनाह न चेति । कर्तनेति सूत्रकर्तने-

भावे दुहिते' त्यादि स्मरणात्। पत्याऽऽर्जितस्य चोभयसाधारणत्वात् 'धर्मे चार्थे च कामे च नातिचरितव्या पाणिग्रहणात्तु सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहे चे' त्यादिवचनात्। 'ये यज्ञपत्नीं वर्धानि' त्यादिमन्त्रवर्णेभ्यश्च स्पष्टः स्त्रिया अधिकारः। पत्नीशब्दस्य स्वामिवचनत्वात्। 'भार्या पुत्रश्चे'ति वचनन्तु बहुश्रुतिस्मृतिविरुद्धत्वाद-स्वातन्त्र्यपरं व्याख्येयम्॥

इति स्त्रीपुंसयोरुभयोरधिकाराधिकरणम्॥ ३॥

४

स्ववतोस्तु० सिद्धे द्वयोरधिकारे किं दम्पती पृथग् यजेयाताम्? उत सहेति चिन्तायामाख्यातोपात्तायाः सङ्ख्यायाः गुणभूतोपादेयकर्तृ-गामित्वेन विवक्षितत्वादेकैकशः प्रयोगे प्राप्ते—

सहेति ब्रूमः। तथा हि कर्म समग्रं भवति, इतरथा वैगुण्यं स्यात्। यजमानप्रयोगे पत्न्यवेक्षणान्वारम्भादिलोपात्, तत्प्रयोगे च यजमाना-वेक्षणादिलोपात्। न चर्त्विग्वत् परिक्रयेण यजमानः पत्नीम्, सा च तमुपादातुं शक्नुतः, स्वामिवचनत्वात् पत्नीयजमानशब्दयोः। स्वामिनश्च परिक्रयेणासम्पत्तेः। अतोऽङ्गसाकल्यालोचनया सहप्रयोगमध्यवस्यामः।

---

त्यर्थः। **दायेति** 'स्त्रीधनं दुहितृणामि'त्यादिना मातृधनग्रहणाधिकारादिति भावः। **स्वामीति** 'पत्युर्नो यज्ञसंयोग' इत्यनुशासनादिति भावः। ऐतिशायनो मुनिः पुंयुक्त-मधिकारमाहेति सूत्रार्थः॥

इति स्त्रीपुंसयोरुभयोरधिकाराधिकरणम्॥ ३॥

४

**स्ववतोस्तु**। उपजीवकत्वसङ्गतिमाह **सिद्धे** इति। अवेक्षणमाज्यस्य 'पत्न्याज्यमवेक्षते यजमानश्चे'ति विहितम्। 'पत्न्यन्वारभते' इति विहितं स्पर्शन-मन्वारम्भः। **परिक्रयः** स्वाधीनीकरणम्। **प्रतिषेधादिति** 'जायापत्योर्न विभागो विद्यते'

संसृष्टद्रव्यत्वाच्च तयोर्विभागप्रतिषेधाच्च न पृथग् यष्टृत्वसम्भवः। परस्परसापेक्षयोरेवाग्नीषोमयोरिव देवतात्वं दम्पत्योः कर्तृत्वम्, कर्तृरूपैक्यादाख्यातोपात्तैकत्वसङ्ख्याऽग्नीषोमौ देवतेतिवत् सहप्रयोगेऽप्यविरुद्धा। तस्मात्सहप्रयोगः।

इति दम्पत्योः सहाधिकाराधिकरणम् ॥ ४ ॥

५

द्व्याधानं० आधानं प्रकृत्य 'क्षौमे वसानावग्निमादधीयाताम्' इति श्रुतम्। तत्र संशयः-किमाधानं द्वौ पुमांसौ सस्त्रीकौ सह कुर्याताम्? उतैकः? इति। तत्र

पूर्वत्राख्यातसङ्ख्यायाः कर्तृरूपान्वयः स्थितः।
तेनेह कर्तृरूपस्य भेदो द्विवचनाद् भवेत् ॥
वसानाविति चौकारात्पुंद्वयं सम्प्रतीयते।
द्वित्वपुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः ॥

यद्यपि पुंद्वयवत् स्त्रीपुंसयोरपि द्विवचनमौकारान्तं दृष्टम्-कुक्कुटश्च कुक्कुटी च कुक्कुटाविति, तथाप्युभयाव्यभिचारात्पुंस्त्वं द्वित्वश्चास्याभि-

---

इति स्मृत्येत्यर्थः। आख्यातोपात्तैकत्वोपपत्तिमाह **परस्परेति**। एवञ्च कर्तृस्वरूपधर्मैक्यपरमाख्यातैकवचनमित्यर्थः। स्वं धनं तद्वतोः स्त्रीपुंसयोर्वचनादाज्यावेक्षणादिबोधकादैककर्म्यमिति सूत्रार्थः ॥

इति दम्पत्योः सहाधिकाराधिकरणम् ॥ ४ ॥

५

**द्व्याधानञ्च**। आख्यातोपात्तसङ्ख्यायाः कर्तृत्वपरत्वस्यापवादात्सङ्गतिः। क्षुमा अतसी तत्सम्भवे वस्त्रे क्षौमे। एक इत्यनन्तरं सस्त्रीक इति शेषः। **नियम्येते**

धेयम्। तयोश्चाभिधेययोरसति स्त्रीसद्वितीयत्वप्रमाणे परस्परनियमात् पुमांसावेव द्वौ गम्येते। तयोश्चोत्पत्तावप्राप्तेस्तद्विधानार्थमेवेदं वचनम्। उत्पत्तिवाक्यस्य त्वाधानविधिपरत्वेनार्थवत्त्वादेकवचनं निर्देशमात्रार्थं भविष्यति। क्षौमशब्दश्च 'टुक्षु शब्दे' इत्यस्माद्धातोरुत्पन्नः शब्दवत्त्वानुवादः। मलिनत्वेन क्षौमसादृश्याद्वा गौणः। तस्माद् द्वौ पुमांसौ। एवञ्चात्यन्तं सन्निकृष्टार्थविधानाच्छ्रुत्यनुग्रहः, क्षौमवसानसम्बन्धविधावत्यन्तं वाक्यं स्यादिति प्राप्तेऽभिधीयते—एक एव। कुतः?

क्षौमशब्दो न मुख्यस्सन् मुख्यमर्थं परित्यजेत्।
नापि धात्वर्थयोगेन वर्तते रूढिसम्भवात्॥
वसानक्षौमशब्दौ च तव स्यातामनर्थकौ।
द्वित्वमात्रविधायित्वात्तस्मात्क्षौमं विधीयते॥
तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते।
उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः॥
संनिकर्षश्च शब्दस्य धर्मो न तदनुग्रहात्।
प्रधानभूतशब्दार्थपरित्यागोऽवकल्पते॥
कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः।
युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते॥

---

इति। यौ द्वौ पुमांसौ यः पुमान् स द्विसङ्ख्य इतीत्यर्थः। **असतीति**। कुक्कुटावित्यादौ मिथुनादिपदसमभिव्याहारस्य प्रमाणस्य सत्त्वात् स्त्रीपुंसयोर्बोध इति भावः। **उत्पत्तौ** 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्युत्पत्तिविधौ। **एकवचनं** आदधीतेत्येकवचनम्। **निर्देशेति**। साधुत्वेत्यर्थः। **अत्यन्तेति**। विधिपदगताधाने तत्पदार्थसङ्ख्याविधानादित्यर्थः। **श्रुतिः** विधिपदश्रुतिः। **अत्यन्तमिति**। उद्देश्यविधेययोर्द्वयोरपि विधिपद बहिर्भूतत्वादित्यर्थः। **वाक्यं** प्रमाणमिति शेषः। **उत्पत्तीति**। 'अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः' इति न्यायादुत्पत्तिविधावदोषत्वमन्यत्र तु 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इति वाक्यभेदावहत्वादशक्यतेत्यर्थः। **सन्निकर्षः** विधिपदगतत्वम्। **अनुग्रहादिति** ल्यब्लोपे पञ्चमी। अनुग्रहमङ्गीकृत्येत्यर्थः। **तदधिष्ठानभेदतः** कर्तृत्वा-

अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते ।
वसानावादधीयातामित्येतावनुवादकौ ॥
अनुवादो यथाप्राप्ति सा च स्त्रीपुंसयोर्द्वयोः ।
तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः ॥
एक एव पुमांस्तस्मादादधीत सह स्त्रिया ।
उत्पत्तिवाक्ये ह्येकत्वमुपादेयं विवक्षितम् ॥

इति द्व्याधानाधिकरणम् ॥ ५ ॥

६

तस्या० दम्पत्योस्सह प्रयोगः स्थितः । तत्र 'पत्न्यवेक्षते' इत्यादिषु पत्न्येव कर्त्री । 'यजमानोऽन्वारभते' इत्यादिषु चोपादेयस्य यजमानस्य विवक्षितलिङ्गत्वात्पुमानेव कर्ता । ये तु फलिसंस्कारा वचनेनापि न व्यवस्थापितास्ते द्वयोरपि फलित्वादावर्तन्ते । अतो न तेषु चिन्ता ।

---

श्रयभेदात् । **वसानावि**त्यत्र स्त्रीपुंसयोः प्रतीतौ प्रमाणमाह-**अप्राप्तत्वादि**त्यारभ्य **प्राप्तिवशादि**त्यन्तेन । अनुवादस्य प्रापकाधीनत्वादुत्पत्तिवाक्यमेव स्त्रीसद्वितीयतायां मानमित्यर्थः । **एतेन** 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति द्विपुरुषकर्तृकयज्ञवत् द्व्याधानमिति सूत्रार्थः ॥ ५ ॥

इति द्व्याधानाधिकरणम् ॥ ५ ॥

६

**तस्याः०** अपवादसमाख्या बुद्धिस्थेन तत्पूर्वाधिकरणेन तद्विशेषचिन्तारूपतया सङ्गतिरित्याह **स्थित** इति । **फलिसंस्काराः** फलभोगयोग्यताजनकसंस्कारा अञ्जनादयः । तत्र केशश्मश्रु वपत इत्यत्र भूतभाव्युपयोगरहितत्वेन संस्कार्यत्वासम्भवात्केशश्मश्रुणोर्वपने उपादेयत्वेन द्वन्द्वावगतसाहित्यविवक्षणात्तस्य पुंस्येव व्यवस्थेत्यनावृत्तिरिति

यानि तु परार्थान्युपस्थानानुमन्त्रणादीनि याजमानसमाख्यया यजमान-कर्तृकाणि तेषु किं दम्पत्योरन्यतरः कर्ता ? उत पुमानेवेति ? चिन्त्यते । तत्र—

याजमानसमाख्यानं यजमानपदाद्यथा ।
निष्पद्यते तथैवैतद्यजमानपदादपि ॥

तेन समाख्यानाविशेषादविशिष्टं द्वयोरपि कर्तृत्वम् ।

विद्वत्वाद्वा पुमानेव कुर्यादविदुषीतरा ।
वेदाध्ययनशून्यत्वात्प्रतिषिद्धं हि तत् स्त्रियः ॥

यद्यप्युपनयनमष्टवर्षस्य संस्कार्यत्वेनाविवक्षितलिङ्गत्वात् स्त्रिया अपि भासते, अतएवाध्ययनमप्यानिर्दिष्टकर्तृकत्वात्प्रकृतमुपनीतं कर्तारमाश्रयत् स्त्रिया अपि स्यात् इत्यधिकारबुद्धिर्भवति, तथाप्याहृत्य स्त्रीणामध्ययनप्रतिषेधादविदुषी स्त्री न शक्ता मन्त्रोच्चारणं कर्तुम् । न च तदन्यथानुपपत्त्या तस्या अपि विद्वत्ता सम्पादयितुं शक्यते, सम्पन्नविद्येन पुंसा तेषामनुष्ठानसिद्धेः । अतः पुमानेव कर्ता ॥

इति पुंस एवोपस्थानाद्यधिकाराधिकरणम् ॥ ६ ॥

---

**वचनेना**पीत्युक्तम् । **तत्रेति** । अत्र सकृदुच्चरितयजमानपदस्योभयप्रकृतिकत्वायोगाद्यजमानश्च यजमाना चेत्येकशेषे तात्पर्यम् । तथा च कृतैकशेषयजमानपदात्तद्धिताङ्गीकारेणोभयकर्तृकत्वलाभे एकार्थत्वेन विकल्प इत्यर्थः ।

सिद्धान्तमाह—**विद्वत्त्वाद्वेति** । **तदन्यथानुपपत्त्या** समन्त्रकानुष्ठानानुपपत्त्या । **तेषां** समन्त्रकाङ्गानाम् । **यावदुक्त**मवेक्षणादि **आशीः** 'आयुर्दा अग्नेऽस्यायुर्मे देहो' त्याशंसनमन्त्रः । ब्रह्मचर्यञ्च भवति नान्यत् अविद्वत्त्वेन पुंसा अतुल्यत्वादिति सूत्रार्थः ॥६॥

इति पुंस एवोपस्थानाद्यधिकाराधिकरणम् ॥ ६ ॥

७

चातुर्वर्ण्य० किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः ? उतापशूद्राणां त्रयाणामिति । तदर्थमिदं विचार्यते—किं कामश्रुतिप्रयुक्त-विद्यार्जनम् ? उत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतय इति । द्विधा चात्र पूर्वः पक्षः । एकस्तावत्स्वाध्यायाध्ययनं क्रत्वनुष्ठानज्ञानौ-पयिकतया विहितं क्रत्वङ्गं क्रतुविधिभिरेव प्रयाजादिवत्प्रयुज्यते, क्रत-वश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाश्चतुर्णामध्ययनं प्रयुञ्जते तत्र त्रयाणां 'वसन्ते ब्राह्मणमुपनयीते'त्यादिभिरुपनयनसंस्कारोऽध्ययनाङ्गत्वेन विहितः । चतुर्थस्तु विध्यभावादनुपनीत एवाधीत्य विद्यां लब्ध्वाऽधि-क्रियत इति ।

द्वितीयस्तु—न क्रत्वङ्गमध्ययनं श्रुत्याद्यभावात्, तदक्षरग्रहणादि-दृष्टकार्यपरम्परया वाक्यार्थज्ञानं यावद्गतम्, ज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्तेस्तत्रैवाध्ययनं स्वविधिना विनियुज्यते, न तद्-द्वारेण क्रतौ । तेनाध्ययनमाधानमिवाग्न्यर्थं ज्ञानाङ्गम्, न क्रत्वङ्गम् ।

---

७

चातुर्वर्ण्यम्० विद्याया अभावाद्यथा स्त्रियाः स्वातन्त्र्येणानधिकारस्तद्वच्छूद्रस्यापी-त्यातिदेशिकी सङ्गतिः । अपगतः शूद्रो येभ्यस्तेषाम्, शूद्रव्यतिरिक्तानामित्यर्थः । **काम-श्रुतयः** 'स्वर्गकाम' इत्यादिविधयः । **क्रत्वनुष्ठानेति** । क्रत्वनुष्ठानसाधनीभूतज्ञाने-त्यर्थः । स्वाध्यायावाप्तिमात्रस्य तद्द्वारा ज्ञानमात्रस्य वा भाव्यत्वस्यानर्थक्येनासम्भ-वादित्यर्थः । एवञ्च क्रतोरुद्देश्यकोटिनिवेशात्क्रत्वङ्गत्वमिति भावः । **प्रयुज्यते** अनुष्ठाप्यते । **चतुर्थः** शूद्रः । **विध्यभावादिति** । तं प्रत्युपनयनविधौ हि सति तदभावे वैगुण्यं नान्यथेत्यर्थः ।

पूर्वत्रास्वरसोद्भावनपूर्वकं द्वितीयपक्षमाह—**द्वितीयस्त्विति** । **श्रुत्यादी**त्यादिना प्रकरणादिसङ्ग्रहः । **ग्रहणादी**त्यादिना पदतदर्थज्ञानादेः । अयमाशयः—अक्षरग्रहणादेः सन्निहितत्वेऽपि प्रयोजनवत्वाग्रहाद्वाक्यार्थज्ञानस्य च लिङ्गादेवानुष्ठानोपायत्वग्रहेण प्रयोजनवत्वज्ञानात्तदङ्गमेवाध्ययनं न तदतिक्रमेणान्यद्भाव्यमाकाङ्क्षतीति । न चाध्ययननियमानर्थक्यम् द्रव्यार्जननियमवत्पुरुषगतादृष्टजनकतयोपपत्तेः । **तेनेति** ।

अतस्तेन विनापि क्रतूनामवैगुण्यादनधीतवेद एव शूद्र उपद्रष्टृवचनादनुतिष्ठन्नधिक्रियते, क्रतवो ह्यविशेषेण चतुरोऽप्यधिकुर्वाणास्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनं न प्रयुञ्जते। शूद्रस्य त्वन्यतः सिद्धविद्यत्वाभावात्तदर्जनमपि प्रयुञ्जते। अतो यद्यपि स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान् किमर्थं वयमाचार्यसमीपमानीता इत्येवं प्रयोजनमपेक्षमाणान्—ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वंस्तेषामेवाध्ययनं विधत्ते, न शूद्रस्य, तथाऽप्यसाववहितेनैवाध्ययनेन उपायान्तरेण वा विद्यां लब्ध्वाऽधिक्रियेतेति।

सत्यमध्ययनं नाङ्गं तत्कृता त्वङ्गमर्थधीः।
तद्वतः क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम्॥

क्रतुविधयोऽन्यथानुपपत्त्या विद्यार्जनमाक्षिपन्ति। यदा तु स्वाध्यायाध्ययनोपात्तविद्यान् द्विजन्मनो लभन्ते, तदा तैरेव लब्धात्मानः अनुपपत्तिक्षयात् न चतुर्थस्य विद्यामाक्षिपन्ति। यदा चैवं विहितोपायसिद्धज्ञानवत एव विधयोऽधिकुर्वन्ति, तदा तदेव ज्ञानमकर्मकालोपात्तमपि अग्निवत्क्रतूनामङ्गमिति तच्छून्यस्य स्वाच्छन्द्येन विद्यामर्जयतोऽपि न सिध्यत्यधिकारः। मन्त्रवत्सु च अनधीतवेदस्य कुतोऽधिकारः, कुतस्तरां चानग्नेरग्निसाध्येषु। तस्मात्त्रयाणामधिकारः॥

इत्यपशूद्राधिकरणम्॥ ७॥

---

अध्ययनेनेत्यर्थः। प्रथमपक्षे स्वाध्यायविधेः साधारण्यात्तद्विहिताध्ययनेनैव शूद्राधिकारः। अत्र तु स्वाध्यायविधेरुपनीतत्रैवर्णिकमात्रविषयत्वेन विहिताध्ययनाभावेऽप्यविहितेनैवाध्ययनेनेति विशेषं दर्शयति—**अत** इति। शूद्रस्याध्ययननिषेधादाह–**उपायान्तरेण वेति**। उपद्रष्टृवचनादिनेत्यर्थः।

सिद्धान्तमाह—**सत्यमिति**। **नाङ्गम्** न क्रत्वङ्गम्। तत्कृता त्वर्थधीः क्रत्वङ्गमित्यन्वयः। **तद्वतः** अध्ययनजन्यार्थज्ञानवत इति द्वितीयाबहुवचनान्तम्। **तुर्यस्य** चतुर्थस्य शूद्रस्य। **ताम्** अर्थधियम्। पूर्वार्धार्थं प्रति हेतुत्वादुत्तरार्धार्थं प्रथममाह—**क्रत्विति**। **लब्धात्मानः** पर्यवसितार्थाः। **अग्निवत्** आधानसिद्धाहवनीयादिवत्। ननु कामश्रुत्यसङ्कोचाय शूद्रस्यापि विद्याक्षेपस्स्यादिति शङ्काशूकं मनसि कृत्वाह—**मन्त्रवत्सु चेति**। सूत्रेऽधिक्रियत इति शेषः॥

इत्यपशूद्राधिकरणम्॥ ७॥

८

त्रयाणां० किं त्रयाणामपि मध्ये द्रव्यवत एवाधिकारः ? उताद्रव्योऽपि कर्मार्थेन द्रव्यमर्जयित्वाऽनुतिष्ठन्नधिक्रियत इति संशये, पुरुषार्थोपात्तद्रव्यवतां लाभान्नाद्रव्यस्य तदर्जनं क्रतुभिराक्षिप्यते। अतो विदुषामिव द्रव्यवतामधिकारः।

नैतत्तुल्यम्। विद्या हि प्रत्यक्षविधिसिद्धा त्रयाणामिति तैरेवोपपन्नाः क्रतवो न शूद्रस्याक्षिपन्तीति युक्तम्। द्रव्यार्जनं तु सर्वपुरुषाणां द्रव्यकार्यैरेवाक्षेप्तव्यम्। तत्राविशेषात् भोजनादिवत् क्रतूनामपि तदाक्षेपकत्वं न वार्यते। अतोऽद्रव्योऽपि द्रव्यमर्जयित्वा कुर्यात्॥

इति यागे निर्धनस्याधिकाराधिकरणम्॥ ८॥

९

अङ्गहीनश्च० अङ्गहीनोऽपि द्रव्यहीनवत्तत्प्रतिसमाधानेन तत्कुर्यात्, द्रव्यहानिर्बहिरङ्गमधिकारं व्यरौत्सीत्। अङ्गहानिस्त्वन्तरङ्गं विरुणद्धीति विशेषाशङ्का। अथवा द्रव्यहीनवदङ्गहीनस्य सिद्धमेवाधिकारमुत्तरविवक्षयाऽनुवदतीत्यपौनरुक्त्यम्॥

इत्यङ्गहीनाधिकाराधिकरणम्॥ ९॥

---

८

त्रयाणाम्० सिद्धविद्यस्येव सिद्धद्रव्यस्यैवाधिकार इति प्राप्तमापोद्यत इति सङ्गतिः। कार्यैरेवेत्येवकारेण विध्यन्तरसिद्धत्वाभाव उक्तः॥

इति निर्धनाधिकाराधिकरणम्॥ ८॥

९

अङ्गहीनः० प्रतिसमाधानेन बाधिर्यादिप्रतीकारेण। आतिदेशिकी चात्र सङ्गतिः। द्रव्येति। प्रतियोगिनो बहिरङ्गत्वात्तदभावोऽपि तथोक्तः। मा विरौत्सीत् प्रतिबन्धको मास्तु। विरुणद्धि प्रतिबध्नाति। शङ्काया अतिमन्दत्वादाह—अथवेति॥

इत्यङ्गहीनाधिकाराधिकरणम्॥ ९॥

१०

उत्पत्तौ०—यस्य त्वप्रतिसमाधेयमङ्गवैकल्यम्, स न कथंचिच्छक्नोति कर्तुमिति न काम्येष्वधिक्रियते। नित्येषु त्वाहिताग्निश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एव॥

इति दशममचिकित्स्यांगवैकल्यस्यानधिकाराधिकरणम् ॥१०॥

११

अत्र्यार्षे०—'दर्शपूर्णमासयोः आर्षेयं वृणीते' इति विधाय पुनः श्रुतम् 'एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते' इति। तत्र विचारः—किं दर्शपूर्णमासयोरेकार्षेय-द्व्यार्षेययोरप्यधिकारः? उत त्र्यार्षेयस्यैवेति। तत्र 'आर्षेयं वृणीते' इति वरणमात्रे विहिते, चतुर्णां षडादीनां च प्रतिषेधे कृते, अर्थादेक-द्वि-त्रि-पञ्चानां प्राप्तं वरणमिति तच्छ्रवणमनुवादः। अथवा आर्षेयं वृणीते' इति सामान्यं यथा 'त्रीन्वृणीते' इत्यनेन त्वत्पक्षे विशेष्यते, तथैकं वृणीते द्वौ वृणीते इत्याभ्या-

---

१०

**उत्पत्ति०** प्रतीकार्यत्वविशेषणव्यावर्त्यप्रदर्शनाय तिर्यगधिकरणसिद्धमेवात्र स्मार्यत इति न पुनरुक्तिः। **आहिताग्निश्चेत्** तादृशाङ्गवैकल्यात्प्रागाहिताग्निश्चेत्। आधानकाले तथात्वे तु तत्रानधिकारित्वान्न नित्येष्वधिकारीति भावः। एतच्च नित्येऽधिकारकथनं सर्वशक्त्यधिकरणवक्ष्यमाणभुक्तम्। उत्पत्तित एव नित्यसंयोगादान्धादेर्नाधिक्रियत इति सूत्रार्थः॥ १०॥

इत्यचिकित्स्याङ्गवैकल्यस्यानधिकाराधिकरणम् ॥ १० ॥

११

**अत्र्यार्षेयस्य०** अन्धादिवदत्र्यार्षेयस्याप्यनधिकारोक्तेरातिदेशिकी सङ्गतिः। ऋषिः प्रवरभूतो भृग्वादिस्तत्सम्बन्ध आर्षेयस्तं वृणीते कथयतीत्यर्थः। न पञ्चातिक्रम्य षडादीनित्यर्थः। **तच्छ्रवणं** एकद्व्यादिश्रवणम्। अनुवादश्च वरणसामान्यविधेस्स्तुत्यर्थ इति भावः। त्रित्वविशिष्टवरणविधौ तु चतुरादीनामप्रसक्तेर्निषेधानुपपत्तिरिति ज्ञेयम्।

मपि विशेषाभावात्, उभयथापि हि द्वित्वैकत्वयोस्त्रित्वेनाविशेषादेकं द्वौ त्रीन् पञ्च वा वृणानोऽधिक्रियेतेति प्राप्तेऽभिधीयते—

असङ्ख्याकविधौ तावत्प्रतिषेधद्वयाश्रयात् ।
वाक्यद्वयं प्रसज्येत त्रीनित्येतच्च पाक्षिकम् ॥
एकद्वित्रिविधानं चेत्ततो वाक्यत्रयं भवेत् ।
विकल्पश्च भवेत्तस्मात् त्रित्वमेव विधीयते ॥

'एकं वृणीते' इत्यादौ विध्यश्रवणादर्थवादेन विधिः कल्प्यः। तत्र यदि वरणमात्रे विहिते चतुर्णाम् षडादीनां च प्रतिषेधस्स्यात् ततः प्रतिषेधद्वयाश्रयणाद्वाक्यद्वयं कल्प्यं स्यात् । तत् एकादिपक्षे च त्रयाणामभावात् 'त्रीनि'ति नित्यवच्छ्रवणमुपरुध्येत । अथैकादिभिः सर्वैर्विशेष्येत, तथाऽपि सङ्ख्यात्रयविधानाय वाक्यत्रयं कल्प्यम् । त्रित्वस्य च पाक्षिकत्वं तदवस्थमेव । त्रित्वमात्रविधौ त्वेकार्थविधानादेकवाक्यत्वम्, तदन्तर्गतत्वाच्च द्वित्वैकत्वश्रवणं नित्यानुवादः । चतुरादिप्रतिषेधश्चानुवाद एव । तस्मात्त्रित्वविशिष्टवरणविधानात् तदुपसंहारसमर्थस्यैवाधिकारः ॥

इति त्र्यार्षेयाधिकरणम् ॥ ११ ॥

---

विनिगमकाभावादपि न सिद्धान्तसिद्धिरित्याह अथवेति । उभयथा अनुवाद्यत्वविधेयत्वाभ्याम् । असङ्ख्याकेति । सङ्ख्यारहितार्षेयं वृणीते इत्येतावन्मात्रविधिपक्ष इत्यर्थः । आश्रयात् आश्रयणात् । पाक्षिकमिति एकादिपक्षे तदभावादित्यर्थः । आद्यपद्यं व्याचष्टे एकमित्यादि । कल्पनाप्रसङ्गे ह्येककल्पनयोपपत्तौ नानेककल्पनं युक्तमिति त्रित्ववाक्य एवैकस्य विधेः कल्पनं युक्तम् । त्वन्मते त्वनेकविधिकल्पनेत्यर्थः । वाक्यद्वयमित्यनन्तरं विधायकमिति शेषः । तदेकादीति । आर्षेयैकादीत्यर्थः । द्वितीयपद्यं व्याचष्टे अथैकेति । विशेष्येत आर्षेयवरणसामान्यमिति शेषः । उपसंहरति—तस्मादिति । अत्र च त्रित्वविशिष्टवरणविधानाच्चतुरार्षेयादिरपि त्रीन् वृण्वानोऽधिकार्येव । प्रवराधिकोऽपि त्रीनिति विधिवशेन त्रयाणामेव वरणात् । एकार्षेयद्व्यार्षेययोस्तु सर्वथानधिकारस्त्रित्वविशिष्टवरणासामर्थ्यादिति ध्येयम् ॥ ११ ॥

इति त्र्यार्षेयाधिकरणम् ॥ ११ ॥

१२

वचना०—'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति विधाय श्रूयते 'वर्षासु रथकारोऽग्निमादधीते' ति। किं ब्राह्मणादीनामेव रथकरणे निमित्ते वर्षाविधिरयम्? उत रथकारसंज्ञकस्यावान्तरवर्णस्याधानान्तरविधानमिति संशये, द्विजानां विद्वत्त्वात्कालमात्रविधाने च लाघवात्तेषामेव कालविधिः, नाऽविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधिरिति प्राप्ते—

रूढिबलेन योगबाधाद्वचनबलाच्चाविदुषोऽप्यधिकारप्रतीतेरविघातात्

---

१२

वचनात्० आर्षेयस्यैव वचनाद्रथकारस्याधिकार इति सङ्गतिः। अवान्तरेति।

व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव च।
मारूषश्च द्विजन्मा च मैत्रः सात्वत एव च॥

इति स्मृत्युक्तनामपञ्चकस्य वर्णावान्तरभेदस्येत्यर्थः। व्रात्योऽनुपनीतः। आधानान्तरमित्यनेन नेदमाधानमग्निसंस्कारकम्। विद्याया अभावेन क्रत्वनधिकारादग्नीनामनुपयोगात्। किन्तु लौकिकाग्निगुणकसमर्थकर्म कल्प्यफलमिति दर्शितम्। प्राप्त इत्यनन्तरमुच्यत इति शेषः। रूढिबलेन उक्तस्मृतिमूलकप्रसिद्धिबलेन। अधिकारेति आधानाधिकारेत्यर्थः। ननु

वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्रयाम्।
माहिष्येण करण्यान्तु रथकारः प्रजायते'

इत्युक्तोऽपि रथकारो[1] रूढ्यैव प्रतीयत इत्याशङ्क्याह। ऋभूणामिति। 'ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामी'ति रथकारस्यादध्यादि'ति विनियुक्तमंत्रे ऋभुशब्दप्रयोगात्तस्य च 'सौधन्वाना ऋभव, इति मन्त्रान्तरे सौधन्वनशब्दसामानाधि-

---

१. वैश्याशूद्रयोरित्यत्यादिना प्रतिपादितो यो रथकारस्तस्यात्र ग्रहणं न कर्तव्यम्. किन्तु 'सौधन्वना ऋभवः सूरचक्षुषः' इति मन्त्रे सामानाधिकरण्यनिर्देशानुसारेण सौधन्वनापरपर्याय एव रथकारो रूढ्या ग्राह्यः।

'ऋभूणां त्वे' ति च मन्त्रवर्णाद् ऋभुसौधन्वनापर्यायस्यावान्तरवर्णस्य रथकारस्येदमाधानं विधीयते।

इति रथकाराधिकरणम् ॥ १२ ॥

१३

स्थपतिः०—'ऐन्द्रं वास्तुमयं चरुं निर्वपेदि'ति प्रकृत्य श्रूयते—'एतया निषादस्थपतिं याजयेदि'ति। तत्र संशयः—किं द्विजातिरेव यो निषादानामाधिपत्यं करोति तस्यात्राधिकारः? षष्ठीसमास एवायम्, उत निषाद एव स्थपतिः तस्य कर्मधारयश्चायमिति। तत्र—

पक्षद्वयेपि शब्दोऽयं योगादेव प्रवर्तते।
तत्र षष्ठीसमासत्वे विदुषः स्यादधिक्रिया॥
आहिताग्नेश्च यदि तु कर्मधारय इष्यते।
अनाहिताग्नेरज्ञस्य प्रसज्येताधिकारिता॥
तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते।
निषादपदमेव तु स्थपतौ लक्षणां व्रजेत्॥
न हि षष्ठी श्रुता येन तत्सम्बन्धी विधिर्भवेत्।
निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम्॥

---

करण्यात्तत्पर्यायस्यैव [1]छागनयेन ग्रहणमिति भावः। सूत्रे रथकारस्याधानमिति शेषः। तदीयाधानस्य सर्वाधानेभ्यः परिशिष्टत्वादित्यर्थः॥

इति रथकाराधिकरणम् ॥ १२ ॥

१३

स्थपतिः० वास्तुमयमिति वास्तुशाकबीजप्रकृतिकमित्यर्थः। पूर्ववैषम्येण प्रत्यवस्थानात्संगतिं सूचयन्नाह योगादेवेति। लक्षणामिति नामार्थयोर्विभक्त्यर्थातिरिक्त-

---

१. षष्ठाध्यायान्तिमाधिकरणसिद्धोऽयं नयः।

कर्मधारयपक्षे तु न काचिदपि लक्षणा ।
निषाद एव स्थपतिरतः श्रुत्या प्रतीयते ॥
तेन श्रुतिबलादज्ञोऽनाहिताग्निश्च सन्नपि ।
निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ॥

इति निषादस्थपत्यधिकरणम् ॥ १३ ॥

इति शास्त्रदीपिकायां षष्ठस्याध्यायस्य
प्रथमः पादः ॥ १ ॥



भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वाल्लुप्तषष्ठीस्मरणस्य चानियतत्वान्निषादपदस्य निषादसम्बन्धिनि स्थपतिरूपे लक्षणा स्यादित्यर्थः । तदाह नहीति ॥ १३ ॥

इति निषादस्थपत्यधिकरणम् ॥ १३ ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञश्रीमद्रामभट्टसूरिवरात्मजतत्सद्वैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां
षष्ठस्य प्रथमः पादः ।



## अथ षष्ठेऽध्याये द्वितीयः पादः

१

पुरुषार्थैक० —अनेककर्तृकेषु कर्मसु 'ऋद्धिकामाः सत्रमासीरन्नि' त्यादिषु किमेकैकस्य कृत्स्नं फलं भवति, अतश्च प्रत्येकं कृत्स्नफलकामानामधिकारः ? उत समुदायस्य कृत्स्नं फलम्, प्रत्येकं तु फलावयवः, ततश्च फलावयवकामानामधिकार इति संशयः । तत्र—

समुदायस्य कर्तृत्वात् तस्य कृत्स्नफलान्वयः ।
फलावयवयोगः स्यात्प्रत्येकं समुदायिनाम् ॥

यद्यपि कामपदे बहुत्वमुद्देश्यगतत्वादविवक्षितमिति कामिनः प्रधानभूतानुद्दिश्य गुणत्वेन विधीयमानं कर्म प्रतिप्रधानावृत्तेरेकैकस्यैव स्वफलं साधयतीति प्रतिभाति, तथाऽप्याख्यातोपात्तस्य कर्तृबहुत्वस्योपरितनाधिकरणन्यायेन विवक्षितत्वात् संहत्यकामिभिः कर्तव्यम् । न चैकस्मिन्कर्मणि बहूनां प्रत्येकं कर्तृत्वं सम्भवति, एकेन कृतेऽपरस्य कर्तृत्वायोगात् । अतः समुदितानां व्यासज्यकर्तृत्वम् । कर्तृगामि च फलम् । अतस्तदपि समुदायस्यैव, तदंशन्तु समुदायिनः प्राप्नुवन्तीत्यवयवकामानामधिकार इति प्राप्ते —

---

## द्वितीयः पादः

१

पुरुषार्थैक० पूर्वपादे स्वर्गकामादिनरोपस्थापकशब्दमुखेनाधिकारचिन्तनम् । इह तु आख्यातमुखेनेति पादान्तरत्वम् । आख्यातादधिकारिप्रतीतिर्विलम्बितेति पश्चादारम्भः । अनेकेति । 'सप्तदशावराः' इति वचनात्सप्तदशकर्तृकेत्यर्थः । **अतश्च ततश्चेति** प्रयोजनकथनम् । वाक्कायप्रवृत्त्यविशेषेऽपि मानसफलसङ्कल्पविशेषात्सार्थको विचार इति भावः । समुदायस्येति समुदितानामित्यर्थः । कर्तुरिष्टसाधकताया विध्यात्मने-

**अभिधीयते—**

समुदायस्य कर्तृत्वं यद्यपि स्यात्तथाऽपि तु ।
प्रत्येकमधिकारित्वात्तथैव फलमाप्नुयुः ॥

यद्यथाऽवगम्यते, तत्तथैवाङ्गीकर्तव्यम् । इह चाधिकारावस्थायां, साहित्यस्याविवक्षितत्वात्प्रत्येकमधिकारः प्रतीयते, कर्तृत्वं च संहतानाम् । अतः संहत्य प्रयुक्तं कर्म प्रत्येकं फलं साधयतीति स्वीकर्तव्यम् । न चैवमत्यन्ताकर्तृगामित्वम्, तेष्वेव व्यासज्यवृत्ति कर्तृत्वम्, प्रत्येकवृत्तिफलमिति प्रकारभेदमात्रम् ।

कर्तृत्वमपि चैतेषां प्रत्येकमवगम्यते ।
कर्तृगामि बहुत्वं हि द्रव्यगाम्यन्यथा भवेत् ॥

कर्तृबहुत्वं साक्षादभिधीयते, न कर्त्राश्रयद्रव्यबहुत्वम् व्यासज्यवर्तिनि च कर्तृत्वे न कर्तॄणां बहुत्वं स्यात्, किन्तु द्रव्यमात्रस्य तत्र कर्तृबहुत्वाभिधानमसमञ्जसं स्यात् सम्भवति च सर्वेषां प्रत्येकं युगपत्

---

पदाभ्यामवगमादिति भावः । अत एवाह कर्तृगामि चेति । समुदायस्यैव समुदितव्यासक्तमेव । नचैवमिति । कर्तृत्वपर्याप्त्यधिकरणपर्याप्तिप्रवृत्तिकत्वाभावेऽपि कर्तृत्वाधिकरणवृत्तित्वस्य फले संभवादिति भावः । वस्तुतस्तु[1] संख्यालकारशास्त्रयोरेकवाक्यतया कर्तृबहुत्वे लकारबहुवचनमित्यर्थात्कर्तृत्वविशिष्टबहुत्वस्य च कर्तृत्वबहुत्व एव सम्भवान्न बहूनामेकं कर्तृत्वमित्याह कर्तृत्वमपीति । द्रव्यगामि कर्तृत्वोपलक्षितपुरुषगामि । कथमेकस्मिन् कर्मणि नानाकर्तृसमावेशो विरोधादित्याशङ्क्य युगपत्तत्तत्स्वांशत्यागस्याध्वर्युप्रक्षिप्यमाणहविषि सम्भवाददविरोध इत्याह—सम्भवति चेति । न चैकप्रयोगादनेकफलोत्पत्तौ योगसिद्ध्यधिकरणविरोधः । एकस्य कर्तुरनेकफलोत्पत्तेरेव तत्र निरासात् ।

---

१. 'लः कर्मणि च भावे चाकर्मकेभ्यः' 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति लकारशास्त्रं सङ्ख्या शास्त्रञ्च । अनयोश्चैकवाक्यतया ख्यातानां कर्तृसङ्ख्यावाचित्वं न तु कर्त्राश्रयद्रव्यसङ्ख्यावाचित्वमिति भावः ।

कर्तृत्वम् । पर्याये हि विरोधः स्यात् । एकेन कृते परस्य कर्तृत्वायोगात् यौगपद्येन । तस्मात्प्रत्येकमधिकारः ।

इति सत्रे प्रत्येकं सत्रिणः फलसंबन्धाधिकरणम् ॥ १ ॥

२

प्रयोगे०—दर्शपूर्णमासादिषु किमेको द्वौ बहवो वा कर्त्तारः ? उत एक एवेति संशयः । तदर्थं च किमाख्यातोपात्ता कर्तृसङ्ख्या विवक्षिता ? नेति चिन्त्यते । तत्र -

फलार्थिनं समुद्दिश्य कर्मणामुपदेशनात् ।
उद्देश्यगामिनी सङ्ख्या ग्रहवन्न विवक्षिता ॥

स्यान्मतम्, यद्यपि कामपदगता सङ्ख्या उद्देश्यगतत्वात्तद्गत-लिङ्गवत्, ग्रहैकत्वञ्चाविवक्षिता । तथाऽप्याख्यातोपात्ता संख्या विधीय-

---

कर्त्रनेकत्वे तु प्रतिप्रधानमावृत्तेन्यार्यसिद्धत्वात् । पुरुषार्थस्यैकसिद्धित्वात् प्रत्येकान्वयात्तस्य तस्य प्रत्येकमधिकारः स्यादिति सूत्रार्थः ॥

इति सत्रे प्रत्येकं सत्रिणः फलसम्बन्धाधिकरणम् ॥ १ ॥

प्रयोगे० फलकामिसाहित्यवदुद्देश्यगतत्वादाख्यातसङ्ख्याप्यविवक्षितेति पूर्वपक्षोत्थानात्सङ्गतिः । कर्तुः प्राप्त्यनुपदेशेऽकर्तुरपि सा स्यादित्याह **यदीति** । नन्वाख्यातस्य विध्यन्वितभावनावाचित्वात्कुर्यादित्येव शाब्दम् प्राप्नुयादित्येव त्वार्थमत आह **यद्यपीति** । क्रियाविधौ हि गुणभूतकर्तृसंख्या विवक्षिता स्यात्तस्यास्त्वनुवाद्यत्वान्न संख्या विवक्षेत्यर्थः । ननु भावनानुवादेऽपि संख्याया अप्राप्तत्वाद्विधिः स्यादत आह **न हीति** । **वैरूप्येति** सकृदुच्चरितस्य युगपदुद्देश्यत्वेन विधेयत्वेन चार्थबोधकत्वासम्भवादित्यर्थः । भावनोद्देशेन यागसङ्ख्योभयविधाने वाक्यभेदात्सङ्ख्याविशिष्टयागविधिरिति पक्षान्तरं **यागं वेत्यनेनोक्तम्** । वैरूप्यपरिहारेण शङ्कते **अथेति** । यागस्योपायतया अप्राप्तत्वात्तद्विशिष्टतया क्रियाया अप्यप्राप्तत्वाद्विधेयत्वमित्यर्थः । ननु फलक्रियाया रागप्राप्तत्वेऽपि

---

१. मूले ग्रहवदिति । 'ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहं प्रधानमुद्दिश्य सम्मार्गे विधीयमाने ग्रहगतैकत्वस्य प्रधानगतत्वादविवक्षेति ग्रहैकत्वाधिकरणे सिद्धान्तितम् । तद्वदत्र स्वर्गकामवाक्ये यः स्वर्गं प्राप्तुमिच्छति स यागेन तमाप्नुयादित्येवं स्वर्गार्थिनं पुरुषं प्रति यागेन तत्प्राप्तिरुपदिश्यते । तत्र च पुरुषो न गुणभूतः, तस्योद्देश्यकोटौ प्रवेशात् । एवञ्च गुणभूतपुरुषस्यैवादाख्यातोपात्तापि सङ्ख्या प्रधानपुरुषामिन्येव । अतो न विवक्षा सङ्ख्याया इति भावः ।

मानक्रियाक्षिप्तगुणभूतकर्तृगामित्वाद्विवक्षितेति । तदसत्, अविधेयत्वात् क्रियायाः यागेन स्वर्गं प्राप्नुयादित्येतावदुच्यते, नानुष्ठानम् । तदर्थप्राप्तम् । स्वर्गप्राप्तौ च पुंसः प्रधानत्वाऽविवक्षिता संख्या यदि स्वर्गं कुर्यादित्युच्येत, ततोऽन्योऽपि स्वर्गं प्राप्नुयात् न कर्तैव । यद्यपि स्वर्गं कुर्यादित्युच्यते तथाऽप्यविधेयैव क्रिया । यो हि यदिच्छति, स तत्करोतीत्येवं फलकामस्य फलविषया क्रिया प्राप्तैव । तां प्रत्ययेनानूद्य प्रकृत्यर्थो यागादिः करणतया विधीयते । प्रत्ययार्थश्च कर्तृसंख्या, तेनासावनुवाद्यगतत्वादविवक्षिता । न ह्येकेन प्रत्ययेन फलकामस्य रागप्राप्तां फलभावनामुद्दिशता कर्तृसङ्ख्या भावनां यागं वा प्रत्युपादातुं शक्यते, वैरूप्यप्रसङ्गात् । अथ मतम्, यद्यपि यागानुरक्ता फलक्रिया प्राप्तैव, तथाऽपि यागक्रियाया अप्राप्तत्वेन विधेयत्वाद्विशेषणभूता संख्या विधेयगतत्वाद्विवक्षितेति । तदप्ययुक्तम् । यद्यपि यागानुरक्ता क्रिया न प्राप्ता, तथाऽपि क्रियास्वरूपं तावत्प्राप्तमेव, तत्र विशिष्टक्रियाविषयोऽपि विधिः श्रूयमाणः प्राप्ताप्राप्तविवेकेन यागानुरागमात्रपरो भवति । न हि फलक्रियातः क्रियान्तरं यागेनानुरज्यते, सा चेत्प्राप्तैव, तद्विशेषणं च सङ्ख्या न साक्षाद्यागगता, प्रत्ययार्थत्वात् ।

तस्मादविवक्षितेति—

अत्राभिधीयते—रागप्राप्ता फलप्राप्तिर्न सा शब्देन बोध्यते ।
प्रत्ययश्च क्रियावाची न प्राप्तिं प्रतिपादयेत् ॥
उपग्रहविशेषाच्च नाकर्तुः फलसङ्गतिः ।
विधेश्चैवमतोऽन्यस्य न फलप्राप्तिसम्भवः ॥

---

यागक्रिया न प्राप्तेत्याशङ्क्याह न हीति । क्रियान्तरं यागकर्मिका क्रिया यागानुरक्ता नात्र विधीयते, यागस्य साधनत्वेन विधौ तस्या अर्थप्राप्तत्वेन त्वयाऽपि विध्यनङ्गीकारात् । असाधितस्य करणत्वासंभवादित्यर्थः । सा चेत् फलक्रिया चेत् । सङ्ख्याविशिष्टयागविधिपक्षं दूषयति न साक्षादिति । भावनाद्वारैव हि तस्या यागसम्बन्धः साक्षात्वेकाभिधानश्रुत्या भावनान्विततत्वमेवेति भावः । तदाह प्रत्ययेति । अत्राऽपि पूर्वोक्तं वैरूप्यं बोध्यम् ।

स्वर्गादिकाममुद्दिश्य क्रियैवेह विधीयते ।
यागादियुक्तासङ्ख्या च तद्गतत्वाद्विवक्षिता ॥
फलक्रियानियोगेन न हि पुंसां फलार्थिनाम् ।
रागप्राप्ता यतो नैषा शब्देन न विधीयते ॥

अर्थिपदेन तावदर्थितामात्रमुच्यते, न प्रवृत्तिः । आख्यातमपि यच्छब्दाद्युपबन्धाभावात् यागादिविशिष्टभावनाविधिपरमेव स्वरसादवगम्यते । ततश्च स्वर्गो मे स्यादित्येवं यः कामयते, स तं यागेन भावयेदिति भावनैव सर्वविशेषणविशिष्टा फलोपायत्वेन कामिनो विधीयते । न चावश्यमर्थिनस्तद्विषया प्रवृत्तिः प्राप्ता, येन तद्बलात्तत उत्तार्य विधिर्यागाद्यनुवादमात्रपरत्वेनैव व्यवस्थाप्येत । न च फलकामः प्राग्वचनादिदं जानाति प्रवृत्तस्य मे स्वर्गः सिद्ध्यति, न त्वप्रवृत्तस्य दैवात्, कारणान्तराद्वेति । तदज्ञानात्स्वर्गप्राप्तिमभिलषंस्तद्विषयप्रवृत्त्योर्मध्यस्थ उदास्ते । यदा तु वचनमस्य यागादिविशिष्टं व्यापारं विधत्ते, तदा तस्येप्सितोपायतां विधिप्रामाण्यादवगम्य तत्र प्रवर्तते । तस्माद्विधेयैव भावना यागादिविशिष्टा, सङ्ख्या च तद्विशेषणमिति विवक्षितैव । लिङ्गं तु कामपदगतमुद्देश्यविशेषणत्वादविवक्षितमिति विशेषः ।

---

**रागेति** । फलं मे भूयादितीच्छयैव प्राप्तेत्यर्थः । **शब्देन** विधिशब्देन । **बोध्यते** अज्ञाता ज्ञाप्यते । अथवा तद्वाचकः शब्दोऽयत्र नास्तीत्यर्थः तदाह **प्रत्ययश्चेति** । क्रियाविधावन्योऽपि । स्वर्गमाप्नुयादित्युक्तं परिहरति **उपग्रहेति**[1] । आत्मनेपदेत्यर्थः । **विधेश्चैवमिति** कर्त्रिष्टसाधनताबोधकविधिवशात् इत्यर्थः । **तद्गतत्वात्** भावनाविशेषणत्वात् । ननु फलविषयकप्रवृत्तिरपि रागप्राप्तैव यो यदिच्छति स तत्करोतीति व्याप्तेरत आह **फलेति** । **नियोगेन** नियमेन । तथा चोक्तव्याप्तिरसिद्धा । स्वप्रवृत्तिं विनापीष्ट-

---

१. यजेतेत्यात्मनेपदात् क्रियाफलस्य कर्तृगामित्वादिति । ननु यत्र च नात्मनेपदं 'सौर्यं चरुं निर्वपेत्' इत्यादौ तत्र कथं कर्तृगामित्वं क्रियाफलस्य, अकर्तृगामित्वं कुतो न स्यादिति चेन्न, 'अग्नीनादधीत' इत्याधानगतात्मनेपदेन फलस्य कर्तृगामित्वसिद्धेः । तथा हि-आधानमलौकिकाहवनीयाद्यग्निसाधकम् । आधानेन पुरुषोऽग्निमान् भवति । अदृष्टरूपाग्निमानित्यर्थः । इदमदृष्टं न कर्तृगामि, किन्त्वाहवनीयादिगतम् । तेनाग्निना येन येन ये ये क्रतवोऽनुष्ठीयन्ते तत्तज्जन्यफलस्य तत्तत्कर्तृगामित्वमेव नान्यगामीति सोमनाथाः ।

ये तु स्वर्गकामस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते 'वेदैवासौ मर्यैवैतत्कर्तव्यमिति' 'स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदा' इत्यादिभाष्यवार्तिकयथाश्रुतग्रहणात् भावनायाः अविधानमाहुः, तेषामनूद्यमानविशेषणस्याविवक्षितत्वादिदमधिकरणं विरुध्यते, सर्ववाक्येषु च क्रियामविधाय गुणमात्रविधानात्। 'चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत'—इत्येवमनेकगुणविधानं क्वचिदपि न स्यात्। ततश्च 'रेवतीषु वारवन्तीयं कृत्वा पशुकामो ह्येतेन यजेते'त्यादिषु प्राप्तभावनोद्देशेन यागस्य रेवती-वारवन्तीयसम्बन्धस्य च विधानात् गुणविधिपक्षवद् वाक्यभेदः स्यात्। न च यागविशेषणत्वं गुणानां, येन तस्यैकस्य विशिष्टस्य विधानाद्वाक्यभेदः परिह्रियेत, सर्वेषां भावनागामित्वात्।

यथोक्तं 'धात्वर्थकारकाणामरुणैकहायन्यादिवत्परस्परेणाऽसम्बध्य-भावनासम्बद्धानामुत्तरकालं परस्परोपकारित्वमि'ति सप्तम-नवमाद्ययोर्वक्ष्यतीति। तस्माद्भावनाविधिकृतमेवानेकगुणविधानं प्रस्तुतं चाधिकरणं समर्थनीयम्। यथाह—'भावनारूढं विधित्वं भावनार्थत्वेनैव गृह्यते, तदाऽर्थाद्विशेषणविधौ सत्यवाक्यभेदं वक्ष्यामः। यदा तु तत् विशेषणार्थमित्यवधार्यते, तदा भावनायास्सन्निहितप्रोषितत्वात् अनेकविशेषणयोगे सति यदर्थे विधिरवसीयते, तस्यैवैकस्य विधानम्, नेतरस्य तद्देशस्यापि चक्षुषेव स्पर्शादिरि'ति वाक्यभेदो भविष्यति इति। अल्पं चेदमुच्यते, सर्वत्र भावनाविध्यभिधानात्। तस्मात् 'वेदैवासौ मयैतत्कर्तव्यमिति,

---

चन्द्रोदयादिदर्शनादिति भावः। **व्यापारम्** भावनाम्। वार्तिकव्याख्यातॄणामेकदेशिनां-मतमेतदधिकरणविरोधेन दूषयितुमुपन्यस्यति **ये त्विति**। **चोदिते हीति** पूर्णमास्य-धिकरणसूत्रम्। प्रमाणान्तरप्राप्ते कर्मणि सति तदन्वयित्वाद् गुणानां मिथो वैशिष्ट्या-भावेन तस्य तस्य प्रत्येककर्तव्यत्वमुपदिश्येतेति विध्यावृत्तिदोष इति तदर्थः। **क्वचिदपि** सौर्यं चरुमित्यादौ। **न चेति** यागस्य कारकत्वेनाक्रियारूपत्वादिति भावः। **यथोक्तमिति** आधाराग्निहोत्राधिकरणवार्तिक इत्यर्थः। तदधिकरणवार्तिकस्यैव सम्मतिमाह **यदाहेति**। **तत्** विधित्वम्। **विशेषणार्थम्** भावनाविशेषणार्थम्। नैतदनेकगुणविधि-स्थल एव भावनाविधानमपि त्वेकगुणविधावपीत्याह—**अल्पं चेदमिति**। सर्वत्र विशिष्ट-

स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदे'त्यादि भाव्यस्वरूपप्राप्त्यभिप्रायम्, न भावनाभिप्रायमिति व्याख्येयम्। अतो भावनाया विधेयत्वात्तद्विशेषणभूता कर्तृसङ्ख्या उपादेयगतत्वाद्विवक्षितेति सिद्धम्।

दर्शादौ कर्त्रैक्यनियमाधिकरणम् ॥ २ ॥

३

प्रक्रमात्तु०— काम्यं कर्म कामार्थेन प्रक्रान्तं वीतायां फलेच्छायाम्, अप्राप्ते वा फले, किं नियोगतः समापनीयम्, नेति? चिन्त्यते।

तत्राभीप्सितसिद्ध्यर्थं साधनेषु प्रवर्तते।
सिद्धे तस्मिंस्तदिच्छायां वीतायां किं प्रवर्तते॥

यदि मन्येत न फलार्थं कर्म, किन्तु फलकामनायां निमित्ते कर्मैव कर्तव्यम्। तस्य हि भाव्यता पदश्रुत्यैवावगम्यते, वाक्यात्कामस्य। तच्च दुर्बलम्। न चोपक्रममात्रेण चोदितं कृतं भवति, समाप्तेः शास्त्रार्थत्वात्। न च पूर्वाधिकरणोक्तरीत्या नित्यानित्यसंयोगविरोधः, काम्यानां नित्यत्वाभावात्। अतः कामे निष्पन्ने, निवृत्तेऽपि, तन्निमित्तं कर्म कर्तव्यमिति।

नैतदेवम्। न ह्यपुरुषार्थं कर्म भाव्यं भवतीत्युक्तम्, न च फलान्तरं कल्पयितुं शक्यम्, श्रुतहान्यश्रुतकल्पनयोरन्याय्यत्वात्। शिष्टविगर्हणन्तु

---

भावनाविधिरेव तत्वमिति वार्तिकेऽभिधानादित्यर्थः। प्रयोगे पुरुषश्रुतेस्तस्य चाविधेयत्वात्प्रयोगे यथाकामी स्यात् एको द्वौ बहवो वेति सूत्रार्थः॥

इति दर्शादौ कर्त्रैक्यनियमाधिकरणम् ॥ २ ॥

३

प्रक्रमात्तु० यदि फलोपायत्वेन क्रियाविधिस्तर्हि फलसिद्धौ न तदनुष्ठानमित्याक्षेपात्सङ्गतिः। काम्यमिति। केवलकाम्यं दृष्टार्थकारीर्यादीत्यर्थः। किमित्यस्य कुत इत्यर्थः। सिद्धान्त्येकदेशिशङ्कामाह यदीति। समाप्तेरिति। फलोत्पत्त्यनुकूलव्यापारसमूहस्याख्यातार्थतया तदवयवस्याविधानादन्यथा क्वापि समाप्तिर्न स्यादिति भावः।

अनृतवादभ्रान्तिनिमित्तम् । न च परमार्थतोऽनृतमस्ति, शास्त्रार्थस्य सङ्कल्पितत्वान्निवृत्तायां च कामनायामशास्त्रार्थत्वात्तस्मादसमापनीयमिति प्राप्ते—

ब्रूमः—

न हि सम्भावनामात्राद्भ्रान्तिः कल्पयितुं क्षमा ।
सर्वस्मृतिषु तुल्यत्वादप्रामाण्यप्रसञ्जनात् ॥

तथा च निन्दावचनं, प्रायश्चित्तं च युज्यते । तस्मात्क्रतुमुपक्रान्तं नियोगेन समापयेत् । तैत्तिरीया हि समामनन्ति 'देवताभ्यो वा एषः आवृश्च्यते, यो यक्ष्य इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत, न देवताभ्यः आवृश्च्यते' इति ।

इति आरब्धकाम्यकर्मणो नियमेन परिसमाप्त्यधिकरणम् ॥३॥

४

लोके०—रथगृहकर्मादि प्रक्रान्तं किमवश्यं समाप्यम् ? नेति ? संशये, तेषामपि शास्त्रीयत्वात् विहितमुपक्रान्तं नियमेन समापनीयमिति, श्रुतिकल्पनात्, 'देवताभ्यो वा एष आवृश्च्यते इति देवताश्रयव्यापार-

---

ननु कामनाया निमित्तत्वं नित्यानित्यसंयोगविरोधात्पूर्वाधिकरण एव परिहृतमित्याशङ्क्य तस्य केवलकाम्यस्थले न प्रसक्तिरित्याह न चेति । संभावनामात्रात् भ्रान्तेः पुरुषधर्मत्वसम्भावनामात्रात् । निन्दाप्रायश्चित्तवचनमाह तैत्तिरीया हीति । आवृश्च्यते द्रुह्यति । प्रक्रमात्तु नियम्येत समाप्तिरिति शेषः । आरम्भस्य समाप्तिनिमित्तत्वादिति सूत्रार्थः ॥

इत्यारब्धकर्मणां नियमेन परिसमाप्यत्वाधिकरणम् ॥ ३ ॥

४

लोके कर्माणि० अपवादसङ्गतिः । शास्त्रीयत्वात् शास्त्रविहितनियमाश्रयत्वात् । ननु गृहादिकर्माश्रितसन्निवेशविशेषनियमविधावपि कर्मणो न विधिरत आह

मात्रस्यावश्यसमापनीयत्वावगमात्, गृहादीनामपि प्रक्रान्तानामावश्यकं समापनमिति प्राप्ते—

अभिधीयते--अशास्त्रादेव हि प्राप्तिदृष्टार्थेषु गृहादिषु ।
तेन शास्त्रं न कल्प्येत पुरुषार्था हि देवता ॥ ११ ॥

पुरुषार्था हि देवता गृहप्रदेशेषु निवेश्यते, न तु गृहकर्म देवताश्रयम् । तस्मान्न समापननियमः ।

इति लौकिककर्मणस्समाप्त्यनियमाधिकरणम् ॥ ४ ॥

५

प्रतिषेधे --'न कलञ्जम्भक्षयेदि'त्येवमादिषु संशयः—किं प्रजापतिव्रतवत्पर्युदासाश्रयणेनाभक्षणं भक्षणाभावसङ्कल्पः कल्प्यफलो विश्वजिदादिवद्विधीयते ? उत भक्षणं प्रतिषिध्यते ? प्रत्यवायपरिहारायेति । यदि नञ्विशिष्टं भक्षणं विधिना सम्बध्यते, ततः पर्युदासः । अथ नञ्विध्योः सम्बन्धः ततः प्रतिषेधः । तत्र—

भक्षणव्यवधानेन नञ्विध्योर्नास्ति सङ्गतिः ।
भक्षणन्तु नञा युक्तमव्यवायाद्विधीयते ।।

---

**देवतेति**। वास्तुपुरुषादिदेवतासम्बन्धात्तद्द्रोहपरिहारस्यावश्यकत्वादित्यर्थः । **पुरुषार्थेति**। पुरुषस्याभ्युदयार्था न तु गृहकर्माङ्गं तस्या यागरूपतया तदसम्भवादित्यर्थः । अधिपुरुषाणि पुरुषाधिकारिकाणि कर्माणि तेषां ज्ञानं ततः शास्त्रादेवेति सूत्रार्थः ॥

इत्यारब्धलौकिककर्मणां समाप्तेरनियमाधिकरणम् ॥ ४ ॥

५

**प्रतिषेधेषु०** प्रारब्धसमापनस्येव निषेधस्यापि प्रत्यवायपरिहारार्थतेत्यातिदेशिकी सङ्गतिः । **कलञ्जम्** विषदिग्धशस्त्रहतपशुमांसमित्याहुः । 'नेक्षेतोद्यन्तमित्यादी'नि प्रजापतिव्रतानि । **तद्धेतुरिति** भक्षणाभावप्रयोजक इत्यर्थः । अध्यायसङ्गतिं दर्शयन् पूर्वपक्षमुपसंहरति **अत इति** । यथाकामस्य भावो **याथाकाम्यम्** । स्वेच्छा-

श्रुत्या च विधिसम्बन्धो भक्षणस्य नञः पुनः ।
पदान्तरत्वाद्वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥
तस्माद्भक्षणमेवेह नञा युक्तं विधीयते ॥

तत्र भक्षणाभावोऽननुष्ठेयत्वादविधेय इति, तद्धेतुः सङ्कल्पो विधीयते । स चाश्रुतफलः कल्प्येन फलेन सम्बध्यते । अतः फलकामाधिकारमेवंजातीयकमिति, निष्कामानां यथाकाम्यम् । अत्रोच्यते—

नञ्भक्षयत्योरेवन्तु स्वार्थहानिः प्रसज्यते ।
सङ्कल्पलक्षणात् तत्र श्रुतेरत्यन्तबाधनम् ॥

मत्पक्षे पुनः प्रत्यासत्तिमात्रबाधनम् न वा तदपि, किं तर्हि भक्षयेदिति पदं परिपूर्णं नञा सम्बध्यते—भक्षयेन्नेति । भक्षयेदिति च भक्षणभावनायां प्रवर्तना गम्यते । नञा सम्बद्धेन विधिना तद्विपरीतनिवर्तनाप्रतीतिः । निवर्त्तना च निवृत्तिफलो व्यापारः । न च प्रेक्षापूर्वकारी पुरुषो रागतः प्रवर्तमानोऽसति प्रत्यवायफलत्वे निवर्तयितुं शक्यते इति, श्रुतनिवर्तनान्यथानुपपत्त्या विषयीभूतभक्षणव्यापारस्य प्रत्यवायपरत्वं कल्प्यते । अतस्तत्परिहाराय सर्वेषामेवंजातीयकं वर्जयितव्यम् ।

ये तु नञर्थविषयस्य नियोगस्य, भक्षणे प्रवृत्तस्य नियोज्यस्य च लब्धत्वात् न प्रत्यवायकल्पना प्रमाणवतीत्याहुः, ते श्रुतार्थापत्तेः प्रमाणत्वोप-

---

वशात् भक्षणमभक्षणं वेत्यर्थः । परिपूर्णमित्येकदेशान्वयाव्युत्पत्तेरुपलक्षणम् । **भक्षणव्यापारस्य** भक्षणभावनायाः । प्रत्यवायपरत्वम् प्रत्यवायहेतुत्वम् । **एवं जातीयकम्**—निषेधविषयः ।

**ये त्विति** । गुरव इत्यर्थः । विध्यर्थकार्यस्य नियोज्याकांक्षायां तत्समर्पकतया फलकामादिपदानामन्वयरतत्कल्पना वाऽश्रुतफलेषु भवति, तल्लाभे तु न कल्पनेत्यर्थः । **ते इति** । भक्षणस्य प्रत्यवायाहेतुत्वे तद्वर्जनकार्यता श्रूयमाणा नोपपद्यत इति भावः । ननु कार्यताज्ञानस्य प्रवर्तकत्वाद्वर्जनस्य प्रत्यवायानुत्पादरूपफलाकल्पनेऽपि तद्विषयप्रवृत्तिसम्भवान्न श्रुतार्थानुपपत्तिः । न च फलोपाय एव कार्यताधीर्नान्यत्रेति वाच्यम् ।

पादनान्निरस्ताः। किञ्च भक्षणं नञर्थविशेषणत्वेनोपक्षीणं न नियोज्यविशेषणम्। आख्यातेन कर्तुरनभिधानात्, उभयविशेषणत्वे चावृत्तिप्रसङ्गात्। ननु न ब्रूमः श्रुत्या नियोज्यविशेषणत्वम्, नञर्थविशेषणस्यैवार्थान्नियोज्यविशेषणतामाचक्ष्महे। भक्षणप्रवृत्त एव हि तदभावे नियोक्तुं शक्यते, नान्यः। सत्यमेवम्, तथापि न नियोज्यविशेषणत्वे भक्षणस्य प्रमाणमस्ति। यदि ह्येतावतैव नियोज्यविशेषणत्वमाश्रीयते, ततः सर्वत्र जीवनं, शक्तिश्च नियोज्यविशेषणे स्याताम्। ततश्च तदवच्छिन्नस्य नियोज्यस्य लब्धत्वात् विश्वजिदादौ, स्वर्गकामादेरकल्पनं स्यात्। तत्र यत्किञ्चित्केन चिदुच्यते 'प्रयुक्तिलाघवाय फलकल्पनमि'ति तन्निषेधाधिकारेष्वपि समानमित्यास्तां तावत्।

इति प्रतिषिद्धकर्मणोऽनुष्ठानेऽनिष्टापाताधिकरणम् ॥ ५ ॥

---

शास्त्रीयकार्यताज्ञानस्य फलोपायत्वज्ञानं विनैव सिद्धेः। अत एव सन्ध्योपासनादौ कार्यताधीस्तन्निरपेक्षेत्यत आह **किञ्चेति**। भक्षणप्रवृत्तः शाब्द आर्थो वा। आद्य आह—**भक्षणमिति** श्रुतनञर्थविशेषणत्वोपक्षीणस्य नाश्रुतकर्तृविशेषणत्वं युक्तमिति भावः। नन्वश्रुतकल्पनापेक्षया श्रुतस्योवोभयान्वयोऽस्त्वित्यत आह **उभयेति**। द्वितीयपक्षमाशङ्कते **नन्विति**। अर्थादित्युक्तं विवृणोति—**भक्षणेति**। भक्षणप्रवृत्तस्य ममेदं कार्यमिति बोद्धृत्वान्नियोज्यत्वमुताप्रवृत्तस्य नियोगासम्भवरूपादर्थात्? तत्र नाद्य इति आह **सत्यमिति**। विधिशतेनापि निष्फले कार्यताज्ञानाननुभवादित्यर्थः। द्वितीये दोषमाह **यदि हीति**। एतावतैवेत्येवकारेण कार्यबोद्धृत्वव्यवच्छेदः अर्थलभ्यत्वादेवेत्यर्थः। **प्रयुक्तीति** विधेरङ्गांश एव प्रयोजकत्वशक्तिकल्पनं प्रधानांशे तु फलेच्छयैव प्रवृत्तिरिति न तत्कल्पनमिति लाघवमित्यर्थः। **समानमिति** निवृत्तिप्रयोजकत्वशक्यकल्पनाल्लाघवादनिष्टफलकल्पनं समानमित्यर्थः। प्रतिषेधत्वेनाभिमतेषु अकर्मत्वात्संकल्परूपत्वात्प्रतिषिद्धानां क्रियानुष्ठानं स्यान्निः कामानामिति शेषः। अकर्मणां विभक्तत्वान्निषेधभिन्नत्वादिति सूत्रार्थः॥

इति प्रतिषिद्धकर्मणोऽनुष्ठानेऽनिष्टापाताधिकरणम् ॥ ५ ॥

६

तस्मिंस्तु०—स्मार्ता यमनियमाः 'प्राङ्मुखो भुञ्जीत, उदङ्मुखो मूत्रं कुर्यादि'त्येवमादयः किं जननप्रभृति प्रवर्तन्ते, जातो यदा शक्नुयात्तदेत्यर्थः? उतोपनयनप्रभृतीति संशये, अनग्निसाध्यत्वादमन्त्रसाध्यत्वाच्चैषां शक्तमात्राधिकारत्वे प्राप्ते—

ब्रूमः—उपनयनप्रभृति स्युरिति। कुतः? स्मरणात्। स्मरन्ति हि 'उपनयनादिर्नियमः' इति। तस्मादुपनीताधिकारः।

इति स्मार्तनियमानामुपनयनोत्तरकालकर्तव्यताधिकरणम् ॥६॥

७

अभ्यासो०—'यावज्जीवमग्निहोत्रं जुहोती'ति 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'ति च श्रूयते। तत्र संशयः-किं सातत्येनानुष्ठानम्? उत सायंप्रातरग्निहोत्रम्, पौर्णमास्यमावास्ययोश्च दर्शपूर्णमासाविति? संशयः। तत्र जीवने निमित्ते कर्मविधानान्नैमित्तिके चासम्भाविताङ्ग-

---

६

**तस्मिंस्तु० स्मार्ता इति। यमाः** प्रतिषेधाः। यम उपरम इत्यनुशासनात्ते च पूर्वत्रोदाहृता एवात्राऽप्युदाहरणमिति दर्शिताः। स्मार्तत्वं च नियमानामेव विशेषणं वैदिकेष्वधिकारासंभवेन पूर्वपक्षासम्भवात्। प्रतिषेधेषु तु वैदिकेष्वपि अग्न्याद्यनपेक्षणात् संभवत्यधिकार इति। इत्थं च पूर्वाधिकरण एव विशेषविचारात्सङ्गतिः। **उपनयनादिरिति** गौतमस्मृतौ नियम इति यमोपलक्षणम्। वर्णपुरस्कारेणोक्तास्तु सुरापानादिनिषेधा उपनयनात्प्रागपि प्रवर्तन्त एवेति ज्ञेयम्॥

**इति स्मार्तनियमानामुपनयनोत्तरकालकर्तव्यताधिकरणम् ॥ ६ ॥**

७

**अभ्यासः०** अधिकारसङ्कोचप्रसङ्गात्संगतिः। **उपादेयम्** कृतिसाध्यम्। **उपबध्यते** नित्यप्रयोगे विशिष्यते। अनुपादेयत्वादित्यनन्तरं न यथाशक्त्युपबन्ध इति

त्यागेऽप्यवैगुण्यात्, कालस्य चाङ्गत्वात् तल्लोपेन सन्ततानुष्ठानं न्याय्यमिति प्राप्ते—ब्रूमः—

अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत्कृतः ।
अनुपादेयरूपत्वात्तस्मिन्कर्म विधिर्यतः ॥

यद्धि प्रयोगविधिवशादुपादेयम्, तद्धि यथाशक्तीत्युपपद्यते, कालस्य पुनरनुपादेयत्वात् । एषा हि तत्र वचनव्यक्तिः—अस्मिन्काले प्राप्ते कर्म कर्तव्यमिति । ततश्चार्थात्तत्कालमेव जीवनं निमित्तमिति, न कालान्तरानुष्ठानम् । एतेनाग्निविद्ये व्याख्याते । तयोरप्यध्ययनाधानविधिसिद्धयोः स्वीकरणात् प्रयोगविधिनाऽननुष्ठाप्यत्वात् । एषा वचनव्यक्तिः—अग्निमान् विद्वांश्चाधिक्रियतेति । प्रत्यक्षमेव विद्यावतोऽधिकारश्रवणम्, 'य एवं विद्वानग्निहोत्रमिति सर्वत्र श्रवणात् । तस्मात्काले प्राप्ते विदुषः अग्निमतश्चाङ्गान्तराणि यथासम्भवमुपसंहृत्यानुष्ठानम् ॥

इति यावज्जीवकर्मणामग्निहोत्रादीनां
स्वकालकर्तव्यताधिकरणम् ॥ ७ ॥

८

तेषामौ०—यदि कालशास्त्रानुरोधेन निमित्तसङ्कोचः, ततः कालशास्त्रस्य सकृदनुष्ठानेन सम्पादितत्वात्तद्वशेन सकृदेव सायंप्रातःकालयोः, पौर्णमास्यमावास्ययोश्च कृतः शास्त्रार्थ इति न पुनरनुष्ठानं स्यात् ।

---

शेषः । **अर्थात्** कालस्यावश्यापेक्षासामर्थ्यात् । **एतेन** कालस्यानुपादेयत्वकथनेन । **प्रयोगेति** अग्निहोत्रादिप्रयोगविधिनेत्यर्थः । **उपसंहृत्य** सम्पाद्य ॥

इति यावज्जीवकर्मणामग्निहोत्रादीनां स्वकालकर्तव्यत्वाधिकरणम् ॥ ७ ॥

८

**तेषाम्०** सङ्गतिं सूचयन् पूर्वपक्षमाह—**यदीति** । **सम्पादितत्वात्** उपपन्नप्रयोजकत्वशक्तित्वात् । अन्यथा एकस्मिन्नपि दर्शादावावृत्तिः स्यादिति भावः । सकृदनुष्ठाने कालशास्त्राविरोधेऽपि निमित्तत्वस्य श्रुतस्य विरोधादावृत्तिरित्याह—**मैवमिति** ।

मेवम्, न हि कालशास्त्रवशाज्जीवनस्य निमित्तत्वं हीयते, किन्तु तत्कालीनमेव जीवनम्, न कालान्तरीयमित्येतावत्। ततश्च तादृशस्यैव जीवनस्य पुनः पुनरावृत्तौ, शास्त्रमपि पुनः पुनर्नैमित्तिके पुरुषं नियुङ्क्ते। अतो निमित्तावृत्तावावृत्तिर्नैमित्तिकानाम्।

इत्यग्निहोत्रादीनां स्वकालावृत्त्या आवृत्त्यधिकरणम् ॥ ८ ॥

९

तथान्तः०—'युक्तं नैमित्तिकेषु पुरुषार्थेषु निमित्तावृत्तावावृत्तिरिति, तत्र प्रत्यावृत्तिफलमन्यदन्यच्च निष्पत्स्यते। क्रत्वर्थेषु तु भेदनहोमादिषु क्रतूपकारस्यैव साध्यत्वात्सकृत्कृतेनैव तत्सिद्धेरेकस्मिन्प्रयोगे भेदनावृत्तावपि, न होमावृत्तिरिति विशेषं मन्यमानस्य उत्तरं-क्रत्वर्थेष्वपि शास्त्रेण निमित्तावृत्तावावृत्त्यवगमादावृत्तौ निमित्तस्यावृत्तेनैव होमेन सगुणः क्रतुः स्वफलाय पर्याप्नोतीति कल्पनात्। एषामपि निमित्तावृत्तावावृत्तिः।

इति निमित्तावृत्त्या नैमित्तिकावृत्त्यधिकरणम् ॥ ९ ॥

---

दर्शावच्छिन्नजीवनस्य दर्शभेदाद्भेदो न तु[१] दर्शावयवभेदादपीति न पुनः पुनरावृत्तिरिति ज्ञेयम्। तेषां कालानामौत्पत्तिकत्वादुत्पत्तिप्रयोजकत्वात्तदागमेन कर्मप्रवर्ततेति सूत्रार्थः ॥

इत्यग्निहोत्रादीनां स्वकालावृत्त्यावृत्त्यधिकरणम् ॥ ८ ॥

९

तथा० अतिदेशस्याधिकाशङ्कानिवृत्त्यर्थत्वात्तमाह युक्तमिति। अन्यत् प्रत्यवायपरिहारान्तरम्। क्रतूपकाराख्यफलैक्येऽपि निमित्तावावृत्तेनैव भेदनहोमेन तदुत्पत्तेर्निमित्तत्वश्रुतिवशेनाङ्गीकारान्न सकृदनुष्ठानमित्युत्तरार्थः। तथान्तः क्रतुप्रयुक्तानपि तथा प्रतिनिमित्तमावर्त्तेत इति सूत्रार्थः ॥

इति निमित्तावृत्त्या नैमित्तिकावृत्त्यधिकरणम् ॥ ९ ॥

---

१. अवयवभेदान्नावयविनो भेदः सिध्यति। अद्य षष्टिघटिकापरिमितकालो दर्शस्येत्यत्र षष्टिघटिकापरिमितकालस्यैव दर्शपदवाच्यत्वं भवति। अतोऽवयवभेदेन नावयविनो भेद इति पुनः पुनरावृत्तिर्नैकस्मिन् दर्श इति भावः।

१०

आचाराद्०—गुर्वनुगमनादीनामाचारप्रमाणकानां गुरुगमनादिनिमित्तकानां किं निमित्तावृत्तावावृत्तिः स्यान्नेति संशये, तत्र दृष्टार्था ह्येते, अनुगमनाभ्युत्थानाभिवादनादिभिः प्रीतो गुरुः सम्यग् विद्यां ददातीति। तत्र यथाऽनुष्ठिते प्रीतिर्भवति, तथा कर्तव्यं सकृदसकृद्वा, न त्ववश्यमावर्तनीयमिति प्राप्ते—

अभिधीयते—दृष्टार्थेष्वपि नियमाद्दृष्टाभ्युपगमात्, तस्य च शास्त्रप्रमाणकत्वात्तद्वशेन निमित्तावृत्तावावृत्तिः।

इति गुर्वनुगमनाद्याचाराणां प्रतिनिमित्तमावृत्त्यधिकरणम् ॥ १० ॥

११

ब्राह्मणस्य०—'सोमेन यजेत, स्वाध्यायमधीयीत, प्रजामुत्पादयेदि'ति श्रुतं सोमविद्याप्रजं किं नित्यम्, उतानित्यमिति संशयः। तत्र यावज्जीवादितुल्यनिर्देशाभावात् 'ज्योतिष्टोमेन स्वर्गकामो यजते'ति च फलश्रवणात् 'वसन्ते वसन्ते ज्योतिषा यजेते'ति चास्य कालविधिपरत्वात्, अध्ययनप्रजयोस्तु विश्वजिद्वत्स्वर्गकल्पनात् 'सप्तमे ब्रह्मवर्चसकामः' इत्येव—

---

१०

आचारात्० आचारेति। एवं च नैमित्तिकत्वेऽप्याचार एव प्रमाणमिति भावः। आवृत्त्याचरणस्य दृष्टगुरुप्रीतिप्रयुक्तत्वान्न तन्नियम इति पूर्वपक्षमाह तत्रेति। प्रत्यवायानुत्पत्त्यर्थतया तदाचरणस्य नैमित्तिकत्वबोधकश्रुतिकल्पकत्वाददृष्टार्थत्वेऽपि वा नियमादृष्टानुसारेणावृत्तिनियमसिद्धिरित्याह दृष्टार्थेष्वपीति। अपिना प्रत्यवायपरिहारार्थत्वमेव मुख्यमिति सूचितम्॥

इति गुर्वनुगमनाद्याचाराणां प्रतिनिमित्तमावृत्त्यधिकरणम् ॥ १० ॥

११

ब्राह्मणस्य० आवश्यकप्रसङ्गात्सङ्गतिः। यावज्जीवाधिकरणपूर्वपक्षरीत्या शङ्कते काम्यस्यैवेति। तदीयसिद्धान्तनयेन दूषयति अभ्यासलक्षणेति। अमृत-

मादीनां चोपनयनगतानां फलानाम् उपनयनस्याऽध्ययनाङ्गत्वेन स्वयम्फलानपेक्षत्वादध्ययनफलत्वमेव न्याय्यम्। अतः फलकामाधिकारत्वमेवैषामिति प्राप्ते—

अभिधीयते नित्यानीति। कुतः ?

वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते।
यावद्वसन्तं नियमः सोमस्यातोऽवगम्यते॥
यावद्वसन्तमभ्यासः काम्यस्यैवाथ चोद्यते।
यजेतेति पदेनैवं प्राप्नोत्यभ्यासलक्षणा॥

तस्माद्वसन्ते निमित्ते विधानादागत आगते वसन्ते नियमेन सोमः कर्तव्य इति नित्यः। अध्ययनमप्यश्रुतफलमक्षरग्रहणादिना क्रमेण धर्माधर्मावबोधफलत्वात्, तस्य चावश्यकत्वादावश्यकम्, ब्रह्मवर्चस्वादिकं त्वध्ययनाङ्गभूतोपनयनाश्रितसप्तवर्षादिगुणफलत्वादध्ययनफलमनाशङ्कनीयमेव। प्रजोत्पादनमपि अमृतत्वानृणत्वफलश्रवणादनुत्पाद्य तथा सुतान् अधोगच्छती'ति प्रत्यवायस्मरणान्नित्यमेव सोमविद्याप्रजम्। ऋणश्रुतिरपि सोमादीनामावश्यकत्वं दर्शयति, न च तत्र ब्राह्मणश्रवणात्तद्विषयामेवावश्यकत्वम्, विधिवाक्येषु विशेषाश्रवणात्। ब्राह्मणग्रहणस्योपलक्षणार्थत्वात्—अतस्त्रयाणामप्यावश्यकाः सोमादयः।

इति त्रैवर्णिकानामृणत्रयापाकरणस्य नित्यताधिकरणम्॥ ११॥

इति शास्त्रदीपिकायां षष्ठाध्यायस्य द्वितीयः पादः॥ २॥



---

त्वेति तस्य चावश्यकत्वादित्याशयः। अमृतत्वस्य स्वर्गरूपत्वान्नावश्यकत्वमत आह अनुत्पाद्येति। ऋणश्रुतिः 'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते यज्ञेन देवेभ्यो ब्रह्मचर्येण ऋषिभ्यः प्रजया पितृभ्यः' इत्येवंरूपा। ब्राह्मणश्रवणात् उक्तश्रुतौ सूत्रे च ब्राह्मणपदश्रवणात्॥

इति त्रैवर्णिकानामृणत्रयापाकरणस्य नित्यताधिकरणम्॥ १०॥

इति श्रीमद्रामभट्टबुधवरात्मज तत्सद्वैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां षष्ठस्य द्वितीयः पादः॥२॥



## अथ षष्ठेऽध्याये तृतीयः पादः ।

१

सर्वशक्तौ०—'यावज्जीवमग्निहोत्रं जुहुयात्', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'वसन्ते वसन्ते ज्योतिषा यजेते' ति । किमत्र सर्वाङ्गोपसंहारेणैवाधिकारः ? उत यदा यावन्त्यङ्गानि शक्नोत्युपसंहर्तुम्, तदा तावद्भिरुपेतं प्रधानं कुर्वन्नधिक्रियेतेति संशयः ।

तत्र—

समुच्चितानामङ्गानामित्थम्भावेन सङ्ग्रहः ।
सर्वाङ्गयुक्तमेवातः प्रधानं फलसाधनम् ॥

न चाफलसाधनेऽधिकारोऽस्ति । अतो न हीनाङ्गस्य प्रयोगः ।

उच्यते—

नैमित्तिकं नियोगेन कर्तव्यमवगम्यते ।
निमित्तेन ततोऽशक्यहानेनापि प्रयुज्यते ॥

---

## तृतीयः पादः

१

**सर्वशक्तौ** ० । अत्र निमित्तहेतुकयथाशक्त्युपबद्धाधिकारचिन्तनात्पादान्तरत्वम्[१] । **इत्थंभावेन** इतिकर्तव्यताकांक्षया । तथा चाविशेषात्सर्वेषां करणोपकारजनकत्वमवगम्यते । उपकारस्यादृष्टरूपत्वेनैतावद्भिर्जन्यत इत्यनवगमादिति भावः । **हीनाङ्गस्य** किञ्चिदङ्गहीनप्रधानस्य । **नैमित्तिकमिति** निमित्तसम्बद्धकर्मनिमित्तेन हेतुना नियोगेन नियमेन कर्तव्यमवगम्यते । यतस्ततोऽशक्याङ्गत्यागेनाऽपि प्रयुज्यत इत्यर्थः । **यावदिति** 'धातुसम्बन्धे प्रत्ययाः' इत्यधिकारे 'यावति विन्दजीवोः' इत्यनेन यावच्छब्दे उपपदे जीवधातोर्णमुल्विधानाज्जीवनस्य यागभावनासम्बन्धो व्याप्यव्यापकभावरूपो यावत्पदसमभिव्याहारेण प्रतीयत इत्यर्थः यागाश्चात्र प्रधानभूता एवोच्यन्ते न त्वङ्गभूता

---

१. पूर्वं पादद्वयेन काम्यनित्यनैमित्तिकाधिकार उक्तः । अत्र च तदधीननिरूपणपरोऽधिकार इति पादान्तरत्वमिति ।

यावच्छब्दोपबद्धं हि जीवनं धातुसम्बन्धविहितेन णमुल्प्रत्ययेन सम्बन्धान्तरासम्भवान्निमित्तत्वेन यागानुरक्तभावनां प्रत्यवगम्यते। दशपूर्णमासविशेषितश्च यजिः कालयोगिनामाग्नेयादीनामेव वाचकः, नाङ्गानाम्। निमित्तस्य चैतद्रूपम्—यत्तस्मिन्सति नैमित्तिकमवश्यं कर्तव्यम्। अतः प्रधानानुरक्ता भावना स्ववाक्यश्रुतनिमित्तवशप्राप्तावावश्यकत्वानुरोधेन यथासम्भवम् अङ्गानि गृह्णाति, तावतैव शास्त्रवशात् फलसिद्धिरिति, यथाशक्तिप्रयोगेणैवाधिकारः। स चायं न्यायस्तन्त्ररत्ने, न्यायरत्नमालायां च प्रपञ्चितः। तीर्थान्तरं च निराकृतमित्युपरम्यते।

इति सर्वशक्त्यधिकरणम् ॥ १ ॥

२

काम्येषु—काम्यानि कर्माणि 'ऐन्द्राग्नमेकादशकपालं निर्वपेदि' त्यादीन्युदाहरणानि। प्रकृतावपि काम्यः प्रयोगः उदाहरणमेव। तत्रापि किं यथाशक्ति प्रयोगेणाप्यधिकारः? उत सर्वाङ्गोपसंहारेणैवेति? विचारः।

---

अपि येन तेषामप्यवश्यकर्तव्यता स्यादित्याह **दर्शेति**। एतावतापि कथमवश्यकर्तव्यत्वं तत्राह। **निमित्तस्य चेति**। निमित्तस्य व्याप्यत्वात्तस्य व्यापकाक्षेपकत्वमित्यर्थः। **तत** इत्यादिश्लोकशेषं व्याचष्टे। **अत इति**। स्ववाक्येत्यनेनाङ्गानां स्ववाक्ये श्रवणाभावात् प्राकरणिकस्तत्सम्बन्ध इति दौर्बल्यम्। अतोऽङ्गसाहित्यांशे यथा शक्तीत्युपबन्धो 'निमित्तश्रुतिबलात्कल्पनीय इत्यर्थः। ननु फलनिमित्तरूपानेकोद्देशे वाक्यभेदात्फलस्याश्रुतत्वाच्चाफलैव निमित्तचोदनेत्यधिकाराभाव' एवेति कथं यथाशक्ति प्रयोगेणाधिकार इत्युक्तिरत आह। **स चायमिति**। निमित्तश्रुतिवशेनाकरणनिवृत्त्यर्थमकरणस्य प्रत्यवायजनकत्वमिव भावनाया भाव्याकांक्षानिवृत्त्यर्थं सदा सर्वेप्सितस्य पापक्षयस्य करणफलत्वमपि कल्प्यते। धर्मेण पापमपनुदतीत्यादिश्रुतेश्च। **न चोद्देश्यानेकत्वम्** फलनिमित्तोद्देश्यतयोर्वैलक्षण्यात्सजातीयोद्देश्यानेकत्व एव वाक्यभेदात्। अत एव जातेष्ट्यादावुभयसमावेश इत्यादिर्विस्तर इत्यर्थः। **तीर्थान्तरम्** गुरुतन्त्रम्। निराकरणं दर्शितप्रायमेवेति ॥

इति सर्वशक्त्यधिकरणम् ॥ १ ॥

२

**काम्येषु०**। अत्रापवादः सङ्गतिः। **अविशेषेति** समर्थासमर्थसामान्यप्रतीतेरित्यर्थः।

तत्रासत्यपि निमित्ते प्रजाकामादिशब्दैरविशेषप्रतीतेरसमर्थानामप्यधिकार इति स्थितेऽपि, तिर्यगधिकरणे पूर्वाधिकरणोपजनिताङ्गलोपकालुष्यबुद्धिः—काम्येष्वपि लोपं मन्यते ।

अत्रोच्यते—प्रजाकामादिशब्दाः समर्थेऽप्यविरुद्धाः । न च कामनानिमित्तम्, येनावश्यकत्वं शाब्दं स्यात् । अङ्गानि तु शाब्दानि न शक्यन्ते वाधितुम् । नैमित्तिके पुनः शाब्दमावश्यकत्वं प्रधानस्येति तदविरोधेनाङ्गानि यथाशक्ति गृह्यन्त इति विशेषः ।

इत्यङ्गवैकल्ये काम्यकर्मणोर्निष्फलत्वाधिकरणम् ॥ २ ॥

३

क्रियाणाम०—अतः परमतिप्रसङ्गनिराकरणेन नैमित्तिके स्थापितस्य यथाशक्तिप्रयोगस्य शेषत्वेन प्रतिनिधिविचाराः प्रस्तोष्यन्ते । तदुपोद्धातत्वेन त्विदं चिन्त्यते-किं दर्शपूर्णमासादिषु नीवारादिद्रव्यान्तरं क्रियमाणं कर्मान्तरत्वमापादयति ? उत द्रव्यान्तरेऽपि तदेव कर्मेति ? यद्यन्यत्, ततो न प्रतिनिधिः । अथ तदेव, तदा द्रव्यान्तरं प्रतिनिधाय प्रयोक्तव्यं कर्म । तत्र—

द्रव्यस्यैव क्रिया नाम रूपं नार्थान्तरं ततः ।
तदात्मनश्च तद्भेदे न भवेद्भिन्नता कथम् ? ॥

---

तथा च प्रधानबोधककामशब्दासंकोचायाङ्गसंकोच एव युक्त इत्याशयः । अङ्गलोपरूपकालुष्ययुक्ता बुद्धिर्यस्य स तथा ॥

इति काम्यस्याङ्गवैकल्ये निष्फलत्वाधिकरणम् ॥ २ ॥

३

**क्रियाणाम्०** । सङ्गतिं दर्शयितुमाह अत इति । **अतिप्रसङ्गः** काम्येषु । **शेषत्वेनेति** । प्रतिनिधिसत्वे हि मुख्याभावेऽपि यथाशक्तिप्रयोगः स्यात्तदभावे तु न स्यादत आक्षेपसमाधानरूपोत्तरं विचारे सङ्गतिः । पूर्वाधिकरणं त्वतिप्रसङ्गवारणेन तच्छेषत्वान्न व्यवधायकमिति भावः । प्रकृतं तूत्तरोपोद्घात इति सङ्गतमित्याह **तदिति** ।

उच्यते--

तदात्मनोऽपि त्वस्त्येव व्यतिरेकः कियानपि ।
जातिवद्गुणवच्चातस्तद्भेदेऽपि न भिद्यते ॥

क्रियापि जात्यादिवद्देवदत्तादिभेदेऽपि चलति, यजति, दर्शपूर्णमासावनुतिष्ठतीत्येवमेकबुद्धिवेदनीया न भेदं प्रतिपद्यते । न ह्यत्यन्तभिन्नत्वं द्रव्यात् क्रियायाः, येन तद्भेदात् भेदः स्यात् । भेदोऽपि त्वस्त्येव, अनेकान्ताभ्युपगमात् । अतो द्रव्यान्तरेऽपि क्रियाभेदाभावात्सिद्धः प्रतिनिधिः ।

इति द्रव्यभेदेऽपि कर्माभेदाधिकरणम् ॥ ३ ॥

४

श्रुतिप्रमाण० दर्शपूर्णमासयोः श्रुतद्रव्यापचारे द्रव्यान्तरं प्रतिनिधाय प्रयोगः कर्तव्यो नेति विचारे, न कर्तव्य इत्याह । सर्वशक्त्य-

---

द्रव्यस्यैवेति । रूपम् औदासीन्यावस्थातोऽवस्थान्तरम् । व्यतिरेकः भेदः । अवस्थाभेदेन स एवायं चैत्र इति प्रतीतेरनुपपत्तेः । तादृशक्रियार्थप्रवृत्यादेरनुपपत्तेश्चेति भावः । वस्तुव्यवस्थाया अनुभवाधीनत्वादाह देवदत्तादीति ।[1] न चैवं सत्याग्नेयाग्नीषोमीयादिकर्मणामभेदापत्तिरिति वाच्यम् । तत्र शब्दान्तरादिप्रमाणवशेन भेदसिद्धेः । अन्यत्र तु कर्त्रादिभेदौपाधिकी भेदबुद्धिरिति भावः ॥

इति द्रव्यभेदेऽपि कर्माभेदाधिकरणम् ॥ ३ ॥

४

श्रुति० । कर्मेति कर्मविधानमात्रेण चरितार्थत्वात् । अर्थाक्षेपस्य च प्रमाणान्तरावगतद्रव्यलाभेनानवतारादिति भावः । द्रव्यस्येत्यनन्तरमप्राप्तस्येति शेषः । तथात्वे

---

१. पूर्वत्रासम्भवन्निवेशो गुणो वाजिनादिः कर्मभेदकत्वेन द्वितीये प्रतिपादितः । प्रकृते च प्रतिनिधीयमानो नीवारादिर्नासम्भवन्निवेशः । अतोऽत्र द्रव्यभेदान्न कर्मभेदः । आग्नेयाग्नीषोमीययोस्तु द्रव्यैक्येऽपि नाभेदः, कर्मभेदकप्रमाणेन भेदसिद्धेः । जगतीतलवर्तिकर्ममात्रस्यैकव्यक्तिकत्वपक्षेऽपि नाग्नेयाग्नीषोमयोरैक्यम्, तयोः शास्त्रेण भिन्नापूर्वजनकत्वेन व्यवस्थापितत्वादिति तात्पर्यम् ।

धिकरणे अशक्याङ्गत्याग उक्तः, न पुनरङ्गान्तरागमः । न च द्रव्यान्तरागमे प्रमाणमस्ति । कर्मचोदना तावन्न द्रव्यं प्रयुङ्क्ते । यत्तु द्रव्यस्य प्रयोजकं 'व्रीहिभिर्यजेते'ति, तद्व्रीहिणामेव प्रयोजकम्, नान्यस्य । अतो नान्यागमः ।

स्यादेवं यदि व्रीहिशास्त्रं द्रव्यस्य विधायकं स्यात् । कर्मचोदनया त्वाक्षिप्तं द्रव्यं व्रीहिशास्त्रेण नियम्यते ।

यदा त्वलाभात् व्रीहीणामुदास्ते व्रीहिचोदना ।
कर्मशास्त्रं तदा द्रव्यमन्यदाक्षिपति ध्रुवम् ॥

तस्मादस्ति प्रतिनिधिः ॥

इति द्रव्यापचारे प्रतिनिधिना कर्मसमापनीयताधिकरणम् ॥ ४ ॥

५

न देवताग्नि० देवता अग्नीन्द्रादिः, अग्निः आहवनीयादिः, शब्दः मन्त्रः, क्रिया प्रयाजप्रोक्षणादिरदृष्टार्था । दृष्टार्थेषु त्ववघातादिषु अस्त्येव प्रतिनिधिः । नखनिर्भेदनादिभिरपि तत्कार्यसिद्धेः । तदेषां देवता-

---

गौरवादिति भावः । कथं तर्हि प्रतिनिधिस्तत्राह । **यदा त्विति** । **उदास्ते** नियमविषये उदासीना भवति । अशक्यत्वादिति भावः । **आक्षिपतीति** । तेन विनावश्यानुष्ठेयकर्मानिर्वाहादिति भावः ।

इति द्रव्यापचारे प्रतिनिधिना कर्मसमापनीयत्वाधिकरणम् ॥ ४ ॥

५

**न देवता०** । अपवादसङ्गतिमाह **पूर्वेणेति** । **विधिलक्षणा** विधिगम्या । **आनीयमाना** स्वेच्छयोद्दिश्यमाना । [1]त्यज्यमानद्रव्योद्देश्यत्वेन विधेयत्वस्य देवतात्वा-

---

१. उद्देश्यत्वमात्रं न देवतात्वम् तावन्मात्रे देवताव्यवहाराभावात् । किन्तु यत्र या उद्देश्यतया विधीयते सा तत्र देवतेति विध्युपलक्षितमेव देवतास्वरूपमिति ।

दीनामपि विस्मरणादिनाऽपचारे किं देवतान्तरम्, अग्न्यन्तरं शब्दान्तरं-क्रियान्तरं च प्रतिनिधेयम् ? उत नेति। पूर्वेण न्यायेन प्रतिनिधौ प्राप्ते--

अभिधीयते--यत्र हि प्रतिनिधीयमानं मुख्यस्य कार्यं साधयति, तत्र प्रतिनिधिः, न चेह तथा सम्भवति। देवता तावद्विधिलक्षणा न चान्या आनीयमाना देवता भवति। न चादेवतायै सङ्कल्प्यमाने यागो भवति, अतो न देवताकार्यमन्यतः सम्भवति। तथाऽऽहवनीयादिरदृष्टार्थः, विनाऽऽप्याघारेण प्रक्षेपसम्भवात्? न च तददृष्टमन्येन सिध्यतीति प्रमाणमस्ति। नीवारादिना तु पुरोडाशनिर्वृत्तिः प्रत्यक्षेणोपलभ्यते, मन्त्रस्तु यद्यपि प्रकाशनार्थत्वात् दृष्टार्थः, तथापि तस्य ध्यानादिनाऽपि सिद्धेर्न मन्त्रान्तरं, शब्दान्तरं वा प्रतिनिधेयम्। अवश्यं हि तदर्थप्रकाशकं शब्दान्तरं प्रतिनिदधता पूर्वं तदर्थस्तु स्मर्तव्यः। तस्मिंश्च स्मृते कृतकरत्वान्न शब्दान्तरं प्रतिनिधेयम्।

ये तु मन्त्रनियमकृतमदृष्टं न तदन्येन सिध्यतीत्यप्रतिनिधिमाहुः। तेषां व्रीह्यपचारेऽपि तत्कृतनियमस्यान्यथासिद्धेर्द्रव्यान्तरं प्रतिनिधिर्न सिध्येत्, प्रयाजादिकार्यस्याप्यन्यतः सिद्ध्यनवगमान्नास्ति प्रतिनिधिः।

इति देवतादीनामपचारे प्रतिनिध्यभावाधिकरणम् ॥ ५ ॥

६

प्रतिषिद्धं० 'अयज्ञिया वै माषाः, वरकाः, कोद्रवाः' इति प्रतिषिद्धयज्ञसाधनभावानां माषादीनां प्रतिनिधित्वेनोपादानम्, न वेति

---

दिति भावः। **सङ्कल्प्यमाने** द्रव्य इति शेषः। **तस्य** प्रकाशनस्य। **ध्यानम्** चिन्तनम्। **कृतकरत्वात्** कृतक्रियत्वात्। **तेषामिति** मत इति शेषः। तस्मादृष्टार्थानुष्ठाने' नियमादृष्टमप्रयोजकमित्यवश्यं वाच्यम्। अन्यथा कृष्णलेष्ववघातापत्तेरिति आशयः॥

इति देवतादीनामपचारे प्रतिनिध्यभावाधिकरणम् ॥ ५ ॥

संशयः। यज्ञाङ्गत्वं माषादीनां प्रतिषिध्यते। प्रतिनिधित्वे तु न माषस्य यज्ञाङ्गत्वम्, किन्तु तद्गतस्य व्रीह्याद्यंशस्य। अतः प्रतिनिधेया माषादयः।

नैतदेवम्—'अयज्ञियाः' इति यज्ञार्हतामात्रं प्रतिषिध्यते, प्रतिनिधित्वे चावर्जनीयं साधनत्वम्। अतो न तेषां प्रतिनिधित्वम्॥

इति प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणम्॥ ६॥

७

तथा० प्रोषिते कार्यान्तरव्यापृते मृते वा यजमाने याजमानपदार्थकरणाय पुरुषान्तरं प्रतिनिधेयम्? उत नेति। प्रतिनिधौ प्राप्ते--

उच्यते—मृते तावत्कः पुरुषान्तरं प्रतिनिदध्यात्, को वाऽध्वर्य्वादीन् प्रवर्त्तयेत्, स्वयं प्रवर्तमानेषु च तेषु न मृतस्याकर्त्तुः फलं सिध्यति। यदि तु प्रतिनिहित एव फलमपि लभते। ततोऽसौ मुख्य एव स्यात्, न प्रतिनिधिः। पत्नी त्वस्वतन्त्राऽनग्निश्च मृते पत्यौ पुरुषान्तरम्प्रतिनिधाय प्रयोक्ष्यतीत्यनाशङ्कनीयमेव। प्रोषिते अन्यत्र व्यापृते वा यजमाने ये तावत्परार्थाः आज्यावेक्षणादयः, तेषु यथासमाख्यमध्वर्य्वादय एव कर्त्तार

---

६

प्रतिषिद्धश्च०। इह पूर्वसिद्धान्तहेतुमुख्यकार्यासाधकत्वप्रत्युदाहरणेन पूर्वपक्षात्सङ्गतिः। व्रीह्यादीत्यादिशब्दोपात्तमुद्गाद्यंशस्य माषगतत्वं बोध्यम्। यज्ञार्हता यज्ञसाधनता। प्रतिषिद्धं च न प्रतिनिधेयम्। हि यतः तस्य प्रतिषेधस्य श्रुतिः अविशेषेण यज्ञानर्हतामात्रेणेति सूत्रार्थः॥

इति प्रतिषिद्धद्रव्यस्य प्रतिनिध्यभावाधिकरणम्॥ ६॥

७

तथा०। इहातिदेशिकी सङ्गतिः। अकर्तुः दक्षिणादानाद्यकर्तुः। परार्थाः

इति न प्रतिनिधिना कार्यम् । फलिसंस्कारास्तु अन्येन क्रियमाणा न यजमानस्य योग्यतां जनयन्तीत्यनर्थकः प्रतिनिधिः ।

इति स्वामिनः प्रतिनिध्यभावाधिकरणम् ।। ७ ।।

८

बहूनां० तु 'सप्तदशावराः सत्रमासीरन्नि'ति सप्तदशसु प्रवृत्तेषु यदा कश्चिन्म्रियेत, तदा तत्स्थानेऽन्यः प्रतिनिधेयः ? उत नेति । न स्वामिनः प्रतिनिधिरित्युक्तम् । एवं प्राप्ते—

अस्ति प्रतिनिधिरित्याह-काम्यमपि कर्म यदा प्रवृत्तं भवति, तदाऽवश्यं समापनीयमित्युक्तम् । आवश्यकत्वाच्च यथाशक्ति प्रयोक्तव्यम् । अतो यद्यपि 'ये यजमानाः, ते ऋत्विजः' इति यजमानशब्दस्य स्वामिभूतकर्तृवचनत्वादेकपदोपात्तयोः स्वामित्वकर्तृत्वयोरार्त्विज्योद्देशेन विधिसम्भवात्स्वामिभिरेवार्त्विज्यं कर्त्तव्यम् । आनीयमानश्चोपरितनाधिकरणन्यायेन स्वामी न भवति । तथाऽपि तन्मात्रं हित्वा कर्त्रंशे साप्तदश्यं समापयितुमागमयितव्यं पुरुषान्तरम् ॥

इति सत्रे स्वामिनोऽपचारे प्रतिनिध्यादानाधिकरणम् ॥ ८ ॥

---

फलिसंस्कारातिरिक्ताः । तथा स्वामिनो न प्रतिनिधिः फलस्य कर्मप्रयोज्यत्वात्फलसम्बन्धस्य प्रतिनिधावापत्तेरिति सूत्रार्थः ॥

इति स्वामिनः प्रतिनिध्यभावाधिकरणम् ।। ७ ।।

८

**बहूनां०** । आपवादिकी सङ्गतिः । **सम्भवादिति** [1]वाक्यभेदाप्रसक्तेरिति भावः । **उपरितनेति** । सङ्कल्पकालमारभ्य विधिवशेनाप्रवृत्तत्वादिति वक्ष्यमाणन्यायेनेत्यर्थः । **तन्मात्रम्** स्वामित्वमात्रम् । **समापयितुम्** सम्पादयितुम् । बहूनां सम्बन्धिनि प्रवृत्ते कर्मणि अवैगुण्यार्थमन्यमागमयेदिति सूत्रार्थः ॥

इति सत्रे स्वामिनोऽपचारे प्रतिनिध्यादानाधिकरणम् ।। ८ ।।

---

१. प्राप्तार्त्विज्योद्देशेन स्वामित्वकर्तृत्वयोर्विधाने वाक्यभेदो यद्यपि स्यात् तथापि स्वामित्वविशिष्टकर्तृत्वविधौ वाक्यभेदाप्रसक्तिरिति ।

९

स स्वामी० योऽसावानीतः, स किं स्वामी फलभागी स्यात् ? उत नेति संशये, स्वामिस्थानोपनिपातात्स्वामित्वं मन्यमानस्य उत्तरम्—यो ह्यारभ्य समापयति, तस्य फलम् । अयं पुनर्मध्ये प्रविष्टो न फलं प्राप्तुमर्हति । न चासौ विधिवशात्प्रवृत्तः, येन विधिप्रामाण्यात्फलं लभते । इतरैस्तु स्वामिभिरसौ सामादिभिः संख्यासम्पत्त्यर्थमानीतः । तस्मान्नास्य स्वामित्वम् ॥

इति सत्रे प्रतिनिहितस्य स्वामित्वाभावाधिकरणम् ॥ ९ ॥

१०

स तद्धर्मा० किमानीतस्य फलिसंस्काराः कर्त्तव्याः, नेति विचारः । फलप्रतिग्रहणयोग्यतासञ्जननार्था हि ते । न चानीतस्य फलमित्युक्तम् । अतो नास्य फलिसंस्कारा इति ।

सत्यम् । नास्य फलम्, इतरेषां तु सप्तदशकर्तृकैः संस्कारैर्योग्यता-जन्यते, सर्वत्र कर्त्रंशे साप्तदश्यनिवेशात्, अतस्तत्सिद्ध्यर्थं प्रतिनिधिरपि संस्कारान् कुर्यात् ॥

इति सत्रे प्रतिनिहितस्य यजमानधर्मग्राहित्वाधिकरणम् ॥ १० ॥

---

९

स स्वामी० । स्वामिस्थानेति । एवञ्च फलभागित्वापत्त्या न प्रतिनिधित्वमिति पूर्वाक्षेपात्सङ्गतिः । फलसङ्कल्पासङ्कल्पौ प्रयोजनम् । इतरेषां तु प्रारब्धसमापनात्पापक्षयरूपमेव फलं बोध्यम् ॥ स्पष्टमन्यत् ॥

इति सत्रे प्रतिनिहितस्य स्वामित्वाभावाधिकरणम् ॥ ९ ॥

१०

स तद्धर्मा० । पूर्वाधिकरणप्रयोजनत्वेन प्रसक्तस्य फलिसंस्काराकरणस्यापवादात्सङ्गतिः । फलं चात्र पापक्षयरूपं न तु मुख्यम् । यथोक्तानुष्ठानवैगुण्यादिति ॥

इति सत्रे प्रतिनिहितस्य यजमानधर्मग्राहित्वाधिकरणम् ॥ १० ॥

११

सामान्यं० श्रुतापचारे प्रतिनिध्युपादानं स्थितम्। तत्र यत्किञ्चित्प्रतिनिधातव्यम्? उत सदृशमेवेति संशयः। तत्र—

आग्नेयचोदना तावद्यत्किञ्चिद् द्रव्यमाक्षिपेत्।
व्रीहिशास्त्रं पुनर्व्रीहिविषयं नान्यगोचरम्॥
अतः केन प्रमाणेन सदृशस्योपसङ्ग्रहः।
व्रीहिचोदनया सत्यं व्रीहिजातिर्विधीयते॥
सा च द्रव्यपरिच्छेदद्वारेणाङ्गत्वमृच्छति।
तच्च द्रव्यं परिच्छिन्नमनेकावयवात्मकम्॥

अवयवा एव ह्येकद्रव्यतामापन्ना अवयविशब्दाभिधेया जात्या परिच्छिद्यन्ते, न त्वत्यन्तमर्थान्तरम्। अतस्तैरेवात्रयवैर्जात्याश्रयभूतैः कर्म साधनीयम्। तत्र यदि सदृशमुपादीयते, ततस्तेषामवयवानां कतिपयाः लभ्यन्ते, जातिमात्रम्, अवयवान्तरमात्रञ्च परित्यक्तं भवति। विसदृशोपादाने पुनः समस्तपरित्यागः स्यात्। अतो व्रीहिशास्त्रमपि यथासम्भवमुपपादयितुं सदृशोपादानम्। एवं सुसदृशलाभे मन्दसदृशं नोपादेयम्, सुसदृशे बह्ववयवानुग्रहात्॥

इति श्रुतद्रव्यापचारे सदृशस्यैव प्रतिनिधित्वाधिकरणम्॥ ११॥

---

११

**सामान्यम्०** प्रतिनिधिविशेषविचारात्सङ्गतिरिति सूचनायाह—**श्रुतेति**। **ऋच्छति** प्राप्नोति। व्रीहित्वादिजातिपरिच्छिन्नस्य द्रव्यस्यावयवातिरेके सिद्धान्तासिद्धेराह **तच्चेति**। **एकद्रव्यताम्** एकंद्रव्यमिति व्यवहारयोग्यताम्। **अवयविशब्दो** व्रीह्यादिशब्दः। **अत्यन्तमित्यनेन** भेदाभेदसूचनम्। **जात्याश्रयभूतैः** जात्याश्रयीभवनयोग्यैः।[१] प्रकृतोपयोगमाह **तत्रेति**। भूयोवयवसामान्यं सादृश्यमिति प्रसिद्धेरिति भावः। सामान्यं सादृश्यमुपादेयम् तैरेव यवैर्यतश्चिकीर्षा प्रधानस्येति सूत्रार्थः॥

इति श्रुतद्रव्यापचरे सदृशस्यैव प्रतिनिधित्वाधिकरणम्॥ ११॥

---

१. योग्यतापर्यन्तमनुधावनमावश्यकम्। एतादृशी योग्यता नीवारावयवेष्वप्यस्ति। अत एव व्रीहिशास्त्रस्य कियाननुग्रहस्सम्भवति।

१२

निर्देशात्तु० वैकल्पिकेषु व्रीहियवादिषु एकेन व्रीहिणा प्रक्रान्ते प्रयोगे, यदि तस्य अपचारो भवति, तदा किं वैकल्पिकान्तरमुपादेयम् ? उत व्रीहिसदृशमिति संशये, मुख्ये सति प्रतिनिध्ययोगाद्यवोपादने प्राप्ते—

ब्रूमः—वैकल्पिकेषु यावदेकमनुपक्रान्तं तावदितरेषाम् उपक्रान्ते तु तस्मिंस्तदेवाङ्गम्, इतरदनङ्गमेव। व्रीहिभिश्च सङ्कल्प्य यवैः कुर्वाणो 'नानृतं वदेदि'ति क्रत्वङ्गभूतं प्रतिषेधमतिक्रामेत्। अतो व्रीहीणामेवाङ्गत्वात् तत्सदृशमेवोपादेयम् ॥

इति द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् ॥ १२ ॥

१३

वचना० 'यदि सोमं न विन्देयुः, पूतीकानभिषुणुयुरि'ति किमयमभावे विधिः— सोमाभावे पूतीकैर्यागं कुर्यादिति सोमजातिरिव पूतीकजातिर्यागसाधनपरिच्छेदकत्वेन विधीयते ? उत प्रतिनिधिनियमः ? यः सोमजातिपरिच्छिन्नान् सकलानवयवानुपादातुमशक्तो विकलानुपादित्सते, सः पूतीकगतानिति । पूतीकत्वं सोमावयवोपलक्षणम्, न साधनोपलक्षणमिति । तत्राभावे विधिरिति प्राप्ते—

---

१२

**निर्देशात्तु०** आतिदेशिकी सङ्गतिः। अधिकाशङ्कामाह **मुख्ये सतीति**। **अनङ्गमेवेति**। अन्यथा तदभावकृतवैगुण्यापत्तेः व्रीहिसङ्कल्पवति प्रयोगे तेषामेवाङ्गत्वमित्यङ्गीकारात्। अत एवैच्छिको विकल्प इत्युच्यते। इच्छयैव व्यवस्थितत्वादिति भावः। दोषान्तरमाह **व्रीहिभिश्चेति**। निर्देशात्सङ्कल्पाद्विकल्पे यत्प्रवृत्तं तदेवाङ्गमिति सूत्रार्थः ॥

इति द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् ॥ १२ ॥

१३

**वचनाच्च०**। सुसदृशोपादानस्यापवादात्सङ्गतिः। पूतीका लताविशेषाः। **उपादित्सते** उपादातुमिच्छति। **न साधनेति** न साधनान्तरेत्यर्थः। पूर्वपक्षमाह। **तत्रेति**।

नियम इत्याह—साधनत्वं हि पूतीकानामत्यन्ताप्राप्तं विधातव्यम्, प्रतिनिधिनियमे तु पाक्षिकप्राप्तानां नियममात्रं विधीयत इति लाघवं भवति ।

ननु सुसदृशानामन्येषां सम्भवादीषत्सदृशाः पूतीकाः पक्षे नैव प्राप्नुवन्तीति कथं नियम्यन्ते ? उच्यते—सौसादृश्यं हि न प्रतिनिधेः प्रापकम् । किं तर्हि नियामकम् ? मुख्याभावात्तु प्रतिनिधेः प्राप्तिः, तस्यां चावस्थायां न्यावन्न्यायेन सदृशं नियन्तुमुपक्रम्यते, तावद्वचनेनासुसदृशाः पूतीका नियम्यन्ते । अतः प्रतिनिधिनियमोऽयम् ॥

इति पूतीकानां प्रतिनिधित्वाधिकरणम् ॥ १३ ॥

१४

न प्रतिनिधौ० यदा प्रतिनिधिना प्रयोगे प्रक्रान्ते तस्यापचारो भवति, तदा किं प्रतिनिधिसदृशमुपादातव्यम् ? उत मुख्यसदृशमिति संशये, वैकल्पिकन्यायेन प्रक्रान्तस्यैव तत्र प्रयोगाङ्गत्वात्, तत्सदृशमेवोपादातव्यं, न मुख्यसदृशम् ।

---

सिद्धान्तकोटेर्वाक्यादप्रतीतेर्न्यायस्य चात्यन्तविसदृशेष्वनवतारादिति भावः । लाघवं सूचयन् सिद्धान्तमाह । नियम इति० नियमविधिः । प्रापकप्रमाणमात्रसापेक्षो न नियामकं प्रतीक्षत इत्याशयेनाह [१]उच्यत इति० ।

प्रयोजनम्० । पूर्वपक्षे पूतीकानां सोमस्थानापत्त्या सोमपदवन्मन्त्राणामतिदेशादूहः । सिद्धान्ते तु सोमावयवानामेव साधनत्वादनूह इत्येकम् । अन्यदप्युत्तराधिकरणे व्यक्तीभविष्यतीति मुख्याभावे वचनादन्याय्यमल्पसदृशं पूतीकादि तत्सामान्येन मुख्यसादृश्येन प्रतिनिधिर्भवति । इतरपक्षस्य गौरवेणाभावादिति सूत्रार्थः । न प्रतिनिधौ । पूर्वप्रयोजनकथनात्सङ्गतिः ॥

---

१. मुख्याभावप्रयुक्तं प्रतिनिधेर्ग्रहणं भवति न सौसादृश्यप्रयुक्तम् । सुसदृशेष्वीषत्सदृशेषु च द्रव्येषु प्राप्तेषु वचनमिदं नियामकत्वेन परिगण्यते । अतोऽत्र प्रतिनिधिनियम एवेति भावः ।

इति पूतीकानां प्रतिनिधित्वाधिकरणम् ॥ १३ ॥

नैवम् । न हि नीवाराणामङ्गत्वमस्ति, प्रमाणाभावात् । व्रीहियवांस्तु तद्गतानुपाददानो नान्तरीयकतया नीवारानुपादत्ते, नाङ्गतया । अतस्तदपचारे पुनरपि श्रुतावयवलाभाय व्रीहिसदृशमेवोपादेयम् ॥

इति प्रतिनिध्यपचारे मुख्यसदृशस्य प्रतिनिधित्वाधिकरणम् ॥ १४ ॥

१५

स्याच्छ्रुति० यद्यपि प्रमाणाभावान्नीवाराणामनङ्गत्वम् । श्रुतिलक्षणस्य पूतीकादेरङ्गत्वात् तस्य प्रकान्तस्यापचारे तत्सदृशमेवोपादेयं न सोमसदृशम् ।

नैवम् । न हि श्रुतिः पूतीकानामङ्गत्वमाह, तद्गतानां सोमावयवानां प्रतिनिधिनियमोह्ययम्, नाभावे विधिरित्युक्तम् । अतस्तदपचारेऽपि सोमसदृशमेवोपादेयम् ।

इति पूतीकापचारे सोमसदृशस्य प्रतिनिधित्वाधिकरणम् ॥ १५ ॥

---

१४

नान्तरीयकतया० । अवर्जनीयतया श्रुतेति० व्रीहिशास्त्रावगतेत्यर्थः । एवञ्च पूतीकापचारे न तत्सदृशमुपादेयं किन्तु सोमसदृशमेवेति प्रयोजनं सिद्धम् । प्रतिनिधौ भ्रष्टे न तत्सदृशं समत्वात् किन्तु मुख्यसदृशमेवेति सूत्रार्थः ॥

इति प्रतिनिध्यपचारे मुख्यसदृशस्य प्रतिनिधित्वाधिकरणम् ॥ १४ ॥

१५

स्यात्० । सिद्धस्य प्रयोजनस्याक्षेपसमाधानात्सङ्गतिः ॥

इति पूतीकापचारे सोमसदृशस्य प्रतिनिधित्वाधिकरणम् ॥ १५ ॥

१६

मुख्याधिगमे० यदा मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रस्थितो यद्यन्तरा मुख्यं लभते, तदा किं मुख्यमेवोपाददीत, अथवा प्रतिनिधिमिति ? प्रतिनिधेः सङ्कल्पितत्वाल्लब्धं मुख्यमनादृत्य प्रतिनिधिमेवोपाददीत, अन्यथा मिथ्यासङ्कल्पापत्तेः ।

उच्यते—यथाशक्ति शास्त्रार्थं सम्पादयामीत्येवं सङ्कल्पयितव्यम् न प्रतिनिधिस्वरूपम् । न च मुख्ये सति, प्रतिनिधिः शास्त्रार्थो भवति । अतो मुख्याधिगमे तदेव स्यात् ।

इति प्रतिनिधिग्रहणावसरे मुख्यप्राप्तौ तस्यैवोपादानाधिकरणम् ॥ १६ ॥

१७

प्रवृत्ते० यदा पुनर्मुख्यं खदिरमलब्ध्वा, प्रतिनिधिं कदरमुपादाय तक्षणादिषु कतिपयेषु संस्कारेषु कृतेषु, प्राक् पशुनियोजनात् खदिरं लभते, तदा किमुपात्तेन प्रतिनिधिना कार्यं कुर्यात् ? उत तत्त्यागेन मुख्यमुपादाय संस्काराँश्च पुनः कृत्वा, तत्रैव पशुं नियुञ्जीतेति संशयः ? तत्रोपात्ते प्रतिनिधौ निवृत्तव्यापारं शास्त्रं नान्यदुपादापयति । तस्मान्न मुख्यसंग्रह इति प्राप्ते—

अभिधीयते । नोपादानपरं शास्त्रं येन तस्मिन् कृते निवृत्तव्यापारं स्यात्, प्रधानानुष्ठानार्थं शास्त्रम् । तच्च प्रधानं सति मुख्ये प्रति-

---

१६

मुख्याधिगमे० । प्रतिनिध्युपचारे मुख्यसदृशोपादानसिद्धौ सुतरां मुख्योपादानमित्यनन्तरसङ्गतिः । न प्रतिनिधीति अनङ्गत्वादिति भावः ॥

इति प्रतिनिधिग्रहणावसरे मुख्यप्राप्तौ तस्यैवोपादानाधिकरणम् ॥ १६ ॥

निधिना क्रियमाणं विगुणं स्यात्। अतः संस्कृतमपि कदरं हित्वा, खदिरे एव पशुर्नियोज्यः एवं व्रीह्यादिषु द्रष्टव्यम् ॥

इति प्रतिनिधिप्रवृत्त्यनन्तरं मुख्यप्राप्तौ तस्यैवोपादानाधिकरणम् ॥ १७ ॥

१८

नाऽनर्थ० कृते प्रतिनिधिना नियोजने, यदा मुख्यमुपलब्धं, तदा कृतमपि नियोजनं साद्गुण्याय पुनः खदिरे कर्तव्यमिति मन्वानस्योत्तरं—कृते नियोजने लब्धोऽपि खदिरोऽनर्थक एव। नियोजनार्थं हि तदुपादानम्, तच्च कृतम्, न गुणानुरोधेनावर्त्तयितव्यम्। अतो नादर्तव्यः खदिरः।

अथवा सूत्रद्वयमिदमेकाधिकरणम्। प्रवृत्तेऽपि प्रधाने मुख्योपादानमिति चेत्? न, अनर्थकत्वादिति ॥

इति प्रतिनिधौ कार्ये प्रक्रान्ते श्रुतद्रव्यलाभेऽपि प्रतिनिधिना समापनाधिकरणम् ॥ १८ ॥

१९

द्रव्यसंस्कार० यदा पुनरतनुत्वात्तक्षणादिसंस्काराणामयोग्यः खदिरो नियोजनमात्रे योग्यः, कदरश्च महान्संस्कारयोग्यः, तदा कस्यो-

---

१७

प्रवृत्ते०। अप्रवृत्त इव प्रवृत्तेऽपि प्रतिनिधौ मुख्योपादानातिदेशात्सङ्गतिः।

इति प्रतिनिधिप्रवृत्त्यनन्तरं मुख्यप्राप्तौ तस्यैवोपादानाधिकरणम् ॥ १७ ॥

१८

नानर्थ०। अपवादात्सङ्गतिः।

पादानमिति, खदिरोपादाने संस्काराणां बहूनामत्यन्तहानिः, कदरे तु तेषामनुग्रहः ? खदिरशास्त्रमपि किञ्चिन्न्यूनं सम्पादितं भवति ।

ततस्तस्योपादानम् । नैतदेवम् । बहवोऽपि हि—

द्रव्यार्था एव संस्काराः, तेषां नान्यत्प्रयोजनम् ।
तद्वशेन ततो द्रव्यपरित्यागो न युज्यते ॥
ततः संस्कारहीनेऽपि खदिरे स्यान्नियोजनम् ।
तक्षणादीनि लप्स्येरन् प्रधानेन विरोधतः ॥

इति प्रतिनिधिग्रहणानन्तरं मुख्यस्यैवोपादानाधिकरणम् ॥ १९ ॥

२०

अर्थद्रव्य० यदा पुनरतितनुत्वान्नियोजनस्याप्ययोग्या खदिरलता भवति, तदाऽपि किं मुख्यत्वात्सैवोपादेया ।

नेत्याह । न हि तयोपात्तयाऽपि कश्चिदर्थः, कार्याक्षमत्वात् । अतस्तादृशे लब्धेऽपि, तदनादरेण प्रतिनिधिरेव कदरः कार्यक्षम उपादातव्यः ।

इति प्रयोजनायोग्यस्य मुख्यस्य सत्त्वेऽपि प्रतिनिध्युपादानाधिकरणम् ॥ २० ॥

---

१९

द्रव्यसंस्कार० । आपवादिकी सङ्गतिः । किञ्चिदिति । तत्रापि सदृशत्वेन खदिरावयवसत्वादिति भावः । तदर्थत्वाद्द्रव्यार्थत्वात्संस्काराणामिति सूत्रशेषार्थः ॥

इति प्रतिनिधिग्रहणानन्तरं संस्कारायोग्यस्यापि मुख्यस्य लाभे तस्यैवोपादानाधिकरणम् ॥ १९ ॥

२०

अर्थद्रव्य० । द्रव्यादरादपवादात्सङ्गतिः । अर्थः प्रयोजनम् । उक्तद्रव्याभावे तदुत्पत्तिरेवादर्त्तव्येति सूत्रार्थः ॥

इति प्रयोजनायोग्यस्य मुख्यस्य सत्त्वेऽपि प्रतिनिध्युपादानाधिकरणम् ॥ २० ॥

२१

विधिर० दर्शपूर्णमासयोर्यदाऽश्वशफपरिमाणाय, शेषकार्येभ्यश्चापर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्थाः व्रीहयोऽल्पा लभ्यन्ते, तदा किं तैरेव पुरोडाशः कर्तव्यः ? उत नीवारैरिति संशयः । तत्र—

भूयसां शेषकार्याणां मा भूदत्यन्तबाधनम् ।
एकस्य व्रीहिशास्त्रस्य किञ्चिद्बाधस्तु युज्यते ॥

नीवारोपादाने व्रीहिशास्त्रमेकं विकलं भवति, व्रीह्युपादाने पुनर्भूयसामत्यन्तबाधः, न च व्रीहीणां प्रधानाङ्गत्वं येन द्रव्याङ्गभूतेभ्यः अङ्गगुणविरोधन्यायेन बलीयस्त्वं स्यात्, व्रीहीणामपि पुरोडाशप्रकृतितया तदङ्गत्वात् । उच्यते—

व्रीहयोऽपि पुरोडाशभूता यागस्य साधनम् ।
तद्वैकल्ये प्रधानस्य गुणहानिः प्रसज्यते ॥

व्रीह्यवयवा एव पुरोडाशभावापन्ना यागं साधयन्ति, ते च नीवारोपादाने विकलाः स्युः, ततश्च प्रधानवैगुण्यं स्यात्, तस्माच्छेषकार्याण्यनादृत्य व्रीहिभिरेव पुरोडाशः कर्त्तव्यः ॥

इति प्रधाननिर्वाहकत्वेऽङ्गनिर्वाहाक्षमस्यापि मुख्यस्यैवोपादानाधिकरणम् ॥ २१ ॥

इति शास्त्रदीपिकायां षष्ठाऽध्यायस्य तृतीयः पादः ॥ ३ ॥

---

२१

विधि र० । आपवादिकी सङ्गतिः शफः खुरः । तदङ्गत्वात्० पुरोडाशाङ्गत्वात् । यागस्येति० । व्रीहिभिर्यजेतेति श्रुत्या यागाङ्गत्वमेव परं पुरोडाशरूपतयेत्यर्थः । व्रीह्यवयवा० । एवेत्यनेन श्रुतयागाङ्गत्वोपपत्तिरुक्ता । एकदेशे प्रधानमात्रे संभवति विधिः शेषकार्याणामनुग्राह्यः स्यादिति सूत्रार्थः ॥

इति प्रधाननिर्वाहकत्वेऽङ्गनिर्वाहाक्षमस्यापि मुख्यस्यैवोपादानाधिकरणम् ॥ २१ ॥

इति श्रीमत्तत्सद्रामभट्टबुधवरात्मजवैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां षष्ठस्याध्यायस्य तृतीयः पादः ।



# अथ षष्ठाध्याये चतुर्थः पादः

१

शेषाद्० पूर्वस्मिन्पादे यथाशक्ति प्रयोगगतो विचारो वृत्तः। अतः परं पादद्वयेन प्रायश्चित्ताधिकारश्चिन्त्यते—कीदृशेन निमित्तेन कस्मिन्नैमित्तिके प्रायश्चित्ते अधिक्रियत इति। तदिह तावदिदं चिन्त्यते—दर्शपूर्णमासयोः 'मध्यादवद्यति, पूर्वार्द्धादवद्यती'ति श्रूयते। यदा चावत्तस्य नाशदोषापहारादि भवति, तदा किं 'यस्य सर्वाणि हवींषि नश्येयुः, दुष्येयुः, अपहरेयुर्वा, आज्येनैता देवताः परिसंख्याय यजेते'ति हविर्विनाशादिनिमित्तेन चोदिताज्यभागेनाधिक्रियते? उत तस्यामवस्थायां शेषादेव पुनरवदेयम्? आज्यं तु निःशेषनष्टे हविषि चोद्यते इति। किं प्राप्तम्? विनष्टे ह्यवदाने पुनर्मध्यपूर्वार्द्धसम्भवात् तावन्मात्रस्य च शास्त्रार्थत्वात्तत एवावदेयम्, न हविरन्तरापेक्षा। हविरन्तरापेक्षायां चाज्यं विधीयते, न स्थित एव हविषि आज्यचोदना। तस्माच्छेषादवदेयम्। एवं प्राप्ते ब्रूमः—

कृत्स्नं खलु पुरोडाशं प्रकृत्य श्रूयते वचः।
मध्यादवद्यतीत्येतद्विकलान्नाऽवगम्यते ॥

कृत्स्नस्य हि पुरोडाशस्य यो मध्यदेशः तदपादानको यस्तस्योपरितनोऽङ्गुष्ठपर्वमात्रोऽवयवः, सोऽवदातव्यः। यस्तु तस्याधस्तनोऽवयवः, सोऽवदेयस्यापादानभूतः न त्वसाववदेयः। अतो नासौ हविः। यत्तु हविः, तद्विनष्टम्। तद्विनाशे च हविरन्तरमुत्पाद्यम्।

---

## चतुर्थः पादः

१

शेषात्० निमित्ताधिकारगतप्रतिनिधिचिन्तनोत्तरं तदधिकारगतप्रायश्चित्तस्य बुद्धिस्थतया पादद्वये चिन्तनमित्याशयेनाह-पूर्वस्मिन्निति०। विचारः प्रतिनिधिविचारः।

यदाऽपि समस्तपुरोडाशसाध्यो यागः, तदापि द्व्यवदाननाशे तस्य विकलत्वादविकलं हविरन्तरमुत्पाद्यम्। तत्तु न्यायतः पुरोडाशान्तरं वचनात्त्वाज्यं भवति। न च 'यस्य सर्वाणी'ति वचनात्सर्वेषां विनाशे आज्यमिति भ्रमितव्यम्, हविर्विनाशस्य निमित्तत्वात् सर्वशब्देनाऽविशेषणात्॥

इति द्रव्यावदाननाशे हविरन्तरोपादानाधिकरणम्॥ १॥

२

अपि वा० स्विष्टकृदिडार्थस्य नाशः किं शेषावदानस्य निमित्तम्? उत नेति? तत्र तन्नाशे शेषादवदेयम्, यागशेषप्रतिपत्त्यर्थत्वात्। विनष्टेऽपि तद्द्रव्ये, पुनः-शेषसद्भावात्पुनरवदाय संस्कर्तव्यम्।

सत्यम्। विद्यते शेषः, स त्वागामिप्रतिपत्त्यन्तरगृहीतत्वात् न नष्टावयवत्पूर्वप्रतिपत्त्या सम्बध्यते, यस्त्वंशस्तस्य प्रतिपाद्यः, स विनष्टः।

---

तत्राप्येतत्वादार्थे विशेषं दर्शयति–तदिहेति०। एवं च पूर्वोक्तद्रव्यापचारप्रसङ्गागतत्वेन तन्निमित्तप्रायश्चित्तचिन्तनस्य तदानन्तर्यमिति सूचितम्। [1]वार्तिकमतानुसारेणाप्याह **यदेति०**। अवदाननाशे शेषादवदेयं तस्य यागार्थत्वादिति सूत्रार्थः।

इति अवदाननाशे हविरन्तरोपादानाधिकरणम्॥ १॥

२

**अपि वा०**। आतिदेशिकी सङ्गतिः। **किमिति०**। नाशे सति शेषादवदेयं न वेत्यर्थः। पूर्वपक्षमाह—**तन्नाश इति०**। ननु प्रतिपाद्यभागस्य नाशात्कस्यावदानं स्यादत आह—**विनष्टेऽपीति०**। 'शेषात्स्विष्टकृते समवद्यती'ति शेषमात्रश्रवणात्तस्य सत्वादित्यर्थः।

---

१. समग्रः पुरोडाशो हविः, अवत्तं द्रव्यमेव हविरिति मतद्वयम्। अवदानसंस्कारसंस्कृतं द्रव्यं हविरिति बहवः। हविष्ट्वप्रयोजकस्संस्कारोऽवदानं नामेति तेषामाशयः। समग्रेऽपि पुरोडाशे हविश्शब्दप्रयोगो वर्तत इति मतद्वयम्। तत्र वार्तिककारमते पुरोडाश एव हविः, न अवत्तं द्रव्यम्। अवदानेनाऽपि पुरोडाशस्य सत्वात् सिद्धान्तहानिस्स्यादित्यत आह—यदापीति। कृत्स्नस्यैव पुरोडाशस्य हविष्ट्वं वार्तिकमते। यदादानं भवति तदा कृत्स्नत्वहानिरेव। अतो द्रव्यान्तरमुपादेयमिति न सिद्धान्तहानिरिति भावः।

न च द्रव्यान्तरोत्पत्त्याशङ्का, शेषप्रतिपत्त्यर्थानां द्रव्यान्तरे क्रियमाणानामानर्थक्यात्, स्विष्टकृत्तु यद्यप्यपूर्ववान्, तथाप्येकदेशद्रव्यत्वात् द्रव्यान्तरस्याप्रयोजकः वाचनिकेन तु हविर्विनाशादिनिमित्ते चोदितेनाज्येन तदनुष्ठानमिष्टमेव। इडाद्यर्थं गृहीतस्य तु हविष्ट्वाभावात्प्रतिपत्तिव्यतिरिक्तापूर्वाभावाच्च लोप एव न्याय्यः ॥

इति स्विष्टकृदर्थमवत्तस्य नाशे पुनरवदाननिराकरणाधिकरणम् ॥ २ ॥

३

निर्देशा०—शेषप्रसङ्गादिदमधिकरणम्। दर्शपूर्णमासयोः शेषभक्षाः, ते किं ऋत्विग्भ्योऽन्यैः कर्तव्याः? उत ऋत्विग्भिरेवेति संशयः। तत्र कर्मकरत्वात् ऋत्विजां सर्वभक्षेषु प्राप्तानाम्, इडायां पुनः श्रवण-

---

सिद्धान्तमाह—**सत्यमिति०**। 'उत्तरार्धात्स्विष्टकृते' इति वाक्यान्तरेण श्रुतस्य प्रतिपाद्यांशस्य नाशादन्यस्य च प्रतिपत्त्यन्तरविषयत्वान्न तदर्थं स्विष्टकृदित्यर्थः। नष्टावयवस्य पूर्वभाविनी प्रतिपत्तिः स्विष्टकृल्लक्षणम्। **अपूर्ववानिति०**। ततश्च अदृष्टविशेषोत्पत्तये द्रव्यान्तरोत्पादानं प्रसज्यत इति भावः। 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगादिति' चतुर्थेऽप्रयोजकत्वाभिधानादपूर्वस्यापि प्रतिपत्त्यनुनिष्पाद्यत्वावगमान्न तदर्थं द्रव्यान्तरोत्पादनमित्यर्थः। तत्किं लोप एव तत्राह—**वाचनिकेनेति०**। 'यस्य सर्वाणी'ति वचनविहितेनेत्यर्थः। न च वचनस्यापि द्रव्यान्तरोत्पादाने प्रसक्ते नियमार्थत्वादिह च तत्प्रसक्तेरप्रयोजकत्वेनाभावात्कथमाज्येनानुष्ठानमिति वाच्यम्। पुरोडाशान्तरोत्पादनाप्रयोजकत्वेऽपि अपूर्वजननार्थं द्रव्याकाङ्क्षासत्वेनाज्यनियमोपपत्तेरिति भावः। अपि वेति पूर्वपक्षव्यावृत्तिः। शेषभाजां तत्कार्याणां लोपः स्यात्। विशिष्टस्य तत्तद्भागस्यैव तत्र कारणत्वादिति सूत्रार्थः॥

इति स्विष्टकृदर्थमवत्तस्य नाशे पुनरवदाननिराकरणाधिकरणम् ॥ २ ॥

३

**निर्देशात्०** सङ्गतिमाह—**शेषेति**। कर्तृसंशयश्च शंयुवाककालभक्षे हविःशेषान् भक्षयन्तीति सामान्यविहिते बोध्यः। इडाप्राशित्रचतुर्धाकरणभक्षेषु प्रथमान्त्ययोः सर्वर्त्विजां प्राशित्रे च ब्रह्मणः कर्तृत्वनिश्चयात्। **तत्रेति०**। भक्षे कर्तृनियमस्य कर्मसामर्थ्यप्रयो-

मस्ति 'यजमानपञ्चमाः इडां भक्षयन्ती'ति, तद्भक्षान्तरपरिसंख्यार्थमिडामेव ते भक्षयन्तीति। तस्मादन्येष्वन्ये भक्षयितार इत्याशङ्क्य निराक्रियते। यजमानस्याकर्मकरत्वेन अप्राप्तस्य प्रापकमिदं वचनम्। अतोऽपरिसंख्यातत्वात् भक्षान्तराणां, तेष्वपि प्रकृता एव कर्तारः।

इति ऋत्विजामेव शेषभक्षणाधिकाराधिकरणम् ॥ ३ ॥

४

अर्थसम०—दर्शपूर्णमासयोः कपालमधिकृत्य श्रूयते 'भिन्ने मनो ज्योतिरिति जुहोती'ति। तत्र संशयः—किं कृत्स्नभेदो निमित्तम्? उतैकदेशभेदः? उतोभयमिति?

तत्रैकदेशभेदस्य नित्यत्वान्न निमित्तता।
कादाचित्कस्तु कृत्स्नस्य भेदो गच्छेन्निमित्तताम् ॥

---

जनत्वात्कर्मकराणां प्राप्तिरित्यर्थः। न च यजमानप्राप्त्यर्थं वचनम्। कर्मसामर्थ्यौपयिकतया तस्यापि भक्षप्राप्तेरित्याशयः। अकर्मकरत्वेनेति०। दक्षिणादानविधिबलेन सर्वाङ्गेषु प्रायशो ऋत्विजामेव कर्तृत्वान्न यजमानस्य भक्षरूपाङ्गे प्राप्तिरित्याशयः। इडाभक्षे प्राशितामेव[1] निर्देशाच्छेषभक्षः शंयुवाककालेऽन्यैः कार्यः। यथा प्रधाने द्व्यवदानमात्रनिर्देशात्तावन्मात्रहोमस्तद्वदिति सूत्रार्थः॥

इति ऋत्विजामेव शेषभक्षणाधिकाराधिकरणम् ॥ ३ ॥

४

अर्थसम० भक्षणस्येव होमस्यापि कर्माङ्गद्रव्यसंस्कारकत्वेन पूर्वपक्षात्सङ्गतिः। **भिन्नसंस्कार** इति। तथा च भिन्ने इति सप्तमी तप्ते पयसीत्यादिवत्प्राधान्यबोधिका द्वितीयान्त

---

१. इडाभक्षणे चतुर्धाकरणभक्षे प्राशित्रभक्षे च ऋत्विजां कर्मकरत्वेन भक्षप्राप्तिरस्ति, प्रतिपत्त्यर्थस्य भक्षस्य कर्त्रपेक्षायां तेषां प्राप्तिः। यदि भक्षणं कर्तृसंस्कारस्यात् तर्हि यजमानस्यापि कर्तृत्वरूपेण सः स्यात्। न हि भक्षणं कर्तृसंस्कारः, अपितु द्वितीयानिर्देशात् द्रव्यप्रतिपत्तिरिति भावः।

भिदुराणां हि द्रव्याणां मिथः संघर्षणेन नित्यः केनाप्यंशेन भेद इति, न निमित्तत्वं सम्भवति। अतो कृत्स्नभेद एव निमित्तम्।

नैवम्। न हि संघर्षणमात्रात् भिन्नबुद्धिर्भवति। संघृष्टमिति हि तदा मतिर्भवति, न भिन्नमिति। भेदनं चेह निमित्तम्। तच्चैकदेशेऽप्यनित्यत्वान्निमित्तं भवत्येव।

द्वितीयपक्षवादी तु मन्यते—

होमोऽयं भिन्नसंस्कारो भेददोषनिबर्हणात्।
सन्निपत्योपकारित्वात्तथा सति हि लभ्यते॥
आरादुपक्रियातश्च न्याय्या स्यात्सन्निपातिता।
सन्निपातित्वपक्षे तु वाक्यं स्याद्विनियोजकम्॥
आरादुपक्रियात्वे तु प्रक्रिया विनियोजिका।
कार्यक्षमश्च संस्कार्यः कृत्स्नभिन्नं न तत्क्षमम्॥

न हि सर्वथा भिन्नं कपालमधिश्रपणयोग्यं भवति, अकार्योपयोगिनश्चानर्थकः संस्कारः, तस्मात्तत्कार्याविरोधेन यदा कियताऽप्यंशेन भेदो भवति, तदैव होमो भवतीति प्राप्ते ब्रूमः—

संस्कारत्वे भवेदेवं न त्वियं भिन्नसंस्क्रिया।
संस्कार्यत्वे हि भिन्नस्य निमित्तत्वं न लभ्यते॥
निमित्ताभावतो होमो नित्यमङ्गं क्रतोर्भवेत्।
नित्यश्चानित्यसंस्कार्यसम्बन्धं लभते कथम्॥

यदा हि भिन्नं संस्कार्यत्वेनोद्दिश्य तत्संस्कारार्थत्वेन होमो विधीयते, तदा भिन्नशब्दस्य संस्कार्यप्रतिपादनोपक्षयान्न निमित्तपरत्वं स्यात्। असति च निमित्ते होमोऽयं नित्याङ्गं स्यात्, तदेवमापद्यते,

---

यार्थे इति भावः। सोऽयमिति०। यद्यपि विधिना नित्यत्वमनित्यत्वं वा नाऽभिधीयते किन्तु निमित्तसम्बन्धादनित्यत्वं तदभावाच्च नित्यत्वमार्थिकमेवेति निमित्तवशादिव भाव्यस्वरूपवशादपि अनित्यत्वे न कश्चिद्विरोधः, तथापि निमित्तश्रवणे सति स्वाभाविकत्वरूपनित्यत्वपरित्यागेनैव क्रत्वङ्गतावगम्यते निमित्ते सत्येतदङ्गमिति। तदभावे तु स्वाभाविकत्वेनावगतस्य द्वारमपि तादृगेव युक्तं सति संभवे। असम्भवे तु स्वाभाविकत्व-

नित्यं च दर्शपूर्णमासयोर्होमेनोपकुर्याद्भिन्नकपालसंस्कारद्वारेणेति, । न चैतत्सम्भवति, भिन्नस्य कादाचित्कत्वेन नित्यवत् कृतावभावात् । सोऽयं नित्यानित्यसंयोगविरोधः तस्माद्भेदो निमित्ते होमो विधीयते स चाविशेषादेकदेशभेदे कृत्स्नभेदेऽपि स्यात् ।

इति कृत्स्नभेदे एकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ४ ॥

५

क्षामे०—'यस्य पुरोडाशौ क्षायतः, तं यज्ञं निर्ऋतिर्गृह्णाति, यदा तद्धविःसंतिष्ठते, अथ तदेव हविर्निर्वपेत्, यज्ञो हि यज्ञस्य प्रायश्चित्तिरिति, पुरोडाशक्षाणनिमित्तः पुनः प्रयोगः कृत्स्नैकदेशक्षाणयोरविशेषेण भेदनहोमवत्स्यादिति प्राप्ते—

अभिधीयते—क्षामे हविषि यत्प्रायश्चित्तं तन्न पूर्ववत्, किन्तु सर्वदाहे स्यात् । कुतः ? एकदेशक्षाणस्यावर्जनीयत्वेन नित्यत्वान्निमित्तत्वायोगात् । अथावर्जनीयदाहातिरिक्तो दाह एकदेशेऽपि वर्तमानो निमित्तं स्यादित्युच्यते, तन्न; अपरिज्ञानादिहावर्जनीयो दाहो नाधिक इति । तस्मात्सर्वक्षाणमिह निमित्तम् ॥

इति पुरोडाशक्षाणे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ५ ॥

---

बाधेनानित्यमपि क्वचिदङ्गीक्रियते यथा वासिष्ठानां नाराशंसो द्वितीयः प्रयाज इत्यादौ । एवञ्च प्रकृते निमित्तसप्तम्यङ्गीकारेण सामञ्जस्ये नानित्यसंस्कार्यपरत्वं युक्तमित्याशयः । प्रायश्चित्तमेकदेशे भिन्न एव स्यात् । अर्थेन प्रयोजनेन सम्बन्धात्संस्कार्यत्वोपपत्तेरिति सूत्रार्थः ॥

इति कृत्स्नभेदे एकदेशभेदे च प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ४ ॥

५

क्षामे तु० अपवादसङ्गतिः । क्षायति दह्यते । संतिष्ठते० समाप्तम्भवति । अत्र हविषः समाप्त्यसंभवात्प्रयोगसमाप्तिरुच्यते । सा च यस्य सर्वाणि इति वचनादाज्येनेति ज्ञेयम् ॥

इति पुरोडाशक्षामे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ५ ॥

६

यथाश्रुतीति० दर्शपूर्णमासयोर्दोहौ प्रकृत्य श्रूयते 'यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि' ति । तत्र संशयः—किमुभयार्तौ पञ्चशरावः ? उतान्यतरार्तावपीति ? ग्रहाधिकरणन्यायेनोद्देश्यस्य निमित्तस्य विशेषणमविवक्षितमिति स्थितमेव । न तु निमित्तस्वरूपमप्यविवक्षितमिति । इह तु यथा नार्तिमात्रं निमित्तं न हविर्मात्रम्, मिलितन्तु निमित्तम् एवमुभयशब्दाम्नानात् अयमपि मिलितं निमित्तमस्तु । तस्मादुभयार्तौ पञ्चशराव इति प्राप्ते ब्रूमः—

यच्छब्दोपक्रमं यावन्निमित्तं पर्यवस्यति ।
तावद्ग्राह्यं ततोऽन्यत्तु श्रुतमप्यविवक्षितम् ॥

'यस्यार्तिमार्च्छेदि'त्येतावता यत्किञ्चिदिति गम्यते । तच्च नित्यं निमित्तं न भवितुमर्हति । सर्वदा सर्वस्य हि यत्किञ्चिदार्तं भवति । अन्ततः चिन्तित-निमिषितादि । तथा 'यस्य हविरि'ति हविषोऽपि नित्यत्वात् । अतोऽवश्यमार्त्या हविर्विशेष्टव्यम्, तावता च निमित्तप्रतीतिपर्यवसानात्, उभयपदं न निमित्तरूपे प्रविष्टम् ।

अथोभयविशिष्टमेव हविर्निमित्तं नार्तिविशिष्टमित्युच्येत, तदपि नित्यम् । अथ यस्योभयमार्त्तमित्यार्तिविशिष्टमुभयम्, तद्विशिष्टा

---

६

**यथाश्रुतीति चेत्०** कृत्स्नैकदेशोभयदाहवदुभयार्त्तिर्न निमित्तमित्यातिदेशिकी सङ्गतिः। **दोहौ०** सायं प्रातर्दोहौ दधिपयोधौ । आर्त्तिः नाशो दोषोपहारश्चेत्याहुः । शरावशब्दः परिमाणविशेषवचनः । स च वृत्तं प्रादेशमात्रं तु शरावं निगमोदितमिति मण्डनोक्तः । प्रस्थमात्रमिदं प्रोक्तं चमसश्चेति याज्ञिकैरिति । चोक्तो ज्ञेयः । पौनरुक्त्यमाशङ्क्य निराकरोति—**ग्रहेति०** निमित्तस्वरूपमप्यविवक्षितमिति न तु स्थितमित्यन्वयः । प्रकृतपूर्वपक्षमाह—**इह त्विति०** यत्किञ्चिदार्त्तः आर्त्तानार्त्तसाधारणहविर्मात्रस्य वा नित्यत्वान्न निमित्तत्वमिति । **एवमिति०** तावतैव निमित्तत्वोपपत्तावपि उभयमिति शब्दपाठस्यानर्थक्यपरिहाराय निमित्तकोटौ निवेश इत्यर्थः । **यदिति** । यच्छब्दादुपक्रमो बोधो यस्य तत्तथा । **यावत्पर्यवस्यति०** यावत्पदार्थसम्बन्धे पर्यवस्यतीत्यर्थः **तावद् ग्राह्यम्०**

वाऽऽर्त्तिर्निमित्तं न हविः। तदयुक्तम्, यस्योभयमार्तमिति। किं तदुभयमित्याकाङ्क्षा स्यात्। तस्माद्हविःशब्दार्तिशब्दौ तावदवश्यं विवक्षितौ। भवतु हविर्विवक्षा, तत्तु उभयपदसन्निधानात्तद्विशिष्टं सदार्त्या सम्बध्यते, न स्वरूपेणेति चेत्। न, यथैव हविःशब्द आच्छेदित्यनेनाख्यातेन सम्बन्ध्येत, तथोभयपदमप्यसमस्तत्वात्तेनैव सम्बध्यते न हविषा, नामपदानां परस्परासम्बद्धानामाख्यातेन सम्बन्धात्। तत्र यदि यस्य हविरार्त्तम्, यस्योभयमार्तमिति द्वयं निमित्तीकृत्य पञ्चशरावो विधीयेत, तथा सति निमित्तयोरुपादेयानामिवारुणादीनां क्रियया वशीकारासम्भवात्, निमित्ताभ्यामेव वशीकृतायाः क्रियायाः प्रत्येकसम्बन्धनिमित्तो वाक्यभेदः। पुनरपि हविरार्तिश्चान्यतरार्ताववशिष्टेति, तत्रापि नैमित्तिकं स्यादिति सिद्धं नः समीहितम्। उभयार्तिमात्रमनिरूपितं न निमित्तं भवतीत्यविवक्षैवावशिष्यते।

यद्यपि चोभयपदमाख्यातं हित्वा हविषा सम्बध्यते, तथाऽपि यदि हविस्स्वरूपमुभयपदेन सम्बध्यते, हविःस्वरूपं चार्त्या, तथा सति हविरार्त्तिसम्बन्धस्य निमित्तत्वात्पुनरस्मत्पक्षसिद्धिः। अथ तूभयपदानुरक्तमार्त्या सम्बध्यते, तदनुरक्तं चोभयपदेन, तन्न; न हि पदद्वयं हविषा सम्बध्यमानमितरसम्बन्धं यावद्विलम्बते, कारणाभावात्, हविः-

---

निमित्तकोटाविति शेषः। ततो निमित्तपर्यवसायकादन्यत् उभयत्वम्। भवत्विति० निमित्तपर्यवसानायावश्यकत्वादित्यर्थः। हविस्तु आर्त्या सम्बध्यमानं सामानाधिकरण्यादुभयपदार्थविशिष्टमेव सम्बध्यतामित्यर्थः। उभयान्वितस्य हविष आर्त्यान्वयस्य व्युत्पत्तिविरहेणायोगात्प्रत्येकामार्तिप्रार्त्यान्वये च निमित्तभेदाद् वाक्यभेदः स्यात्। न चारुणैकहायनीवदेकक्रियान्वयेन पार्ष्ठिकान्वयः। क्रियाप्रधान्ये गुणानुरोधेन तदावृत्त्यनौचित्यात्तथात्वेऽप्यत्रैन्द्रयागक्रियाया निमित्तप्रधानतया तदावृत्तावावृत्तेरौचित्यात् गुणस्य हि वशीकारो न प्रधानस्येति भावः। प्रत्येकञ्च नैमित्तिकान्वये मदिष्टसिद्धिरपीत्याह पुनरपीति०। दोषान्तरमाह—उभयेति०। अनिरूपितम्० विशेष्यानिश्चयादनिश्चितम्।

ननूभयं हविरित्यनयोरकारकत्वात् क्रियां विहायापि परस्परान्वयो नाव्युत्पन्न इति शङ्कामपाकर्तुमाह—यद्यपि चेति। एवमपि शुद्धस्य हविष उभयत्वेनेवार्त्यापि

स्वरूपेणैव संबन्धसम्भवात्। अथार्तिरेवोभाभ्यां विशिष्टा निमित्तं स्यात्, तथाप्येकैकेनेतरेतरनिरपेक्षेण विशेषणात् निमित्तत्वेन चाविवक्षितसाहित्यत्वाद्धविरार्तिमात्रम्, उभयार्तिमात्रं च निमित्तं स्यात्, अन्यतरानुरक्तायास्त्वन्यतरेण सम्बन्धे द्विरुच्चारणाद्वाक्यभेदः स्यात्। अतो नोभयं निमित्तसंनिपाति। तत्र चार्तं हविर्मात्रमुद्दिश्य पञ्चशरावे विधीयमाने यद्युभयत्वे हविषि विधीयेत, ततो वाक्यभेदः। परिच्छेदकत्वेन च विधीयमानं विधीयेत, यावन्निमित्तं च नैमित्तिकानुष्ठानस्य निश्चितत्वान्न परिच्छेदकाकाङ्क्षा। निश्चिते च सर्वत्र नैमित्तिके विधीयमानमप्युभयत्वं परिसंख्यार्थं स्यात्। न चैकेन वाक्येन विधिः परिसंख्या च सम्भवतीत्यादि दूषणजातं ग्रहाधिकरणोक्तमनुसन्धातव्यम्। तस्माद्धविरार्तिमात्रं निमित्तम्। उभयपदं त्वेवं योज्यं—न सायंदोहार्तिरेव निमित्तम्, न प्रातर्दोहार्तिरेव, किं तूभयमपि परस्परानपेक्षनिमित्तमिति॥

इति हविरार्त्यधिकरणम्॥ ६॥

७

होमाभिषव०—ज्योतिष्टोमे श्रुतम् 'अभिषुत्य हुत्वा भक्षयन्ती'ति। तत्र किमभिषवः होमश्च प्रत्येकं भक्षस्य कारणम्? उत संहत्येति?

---

सम्बन्ध उतैकविशिष्टस्यापरेणेति। तत्राद्य आह—तथा सतीति०। द्वितीयं शङ्कते अथ त्विति०। कारणेति निमित्तत्वस्य शुद्धहविरार्त्यन्वयमात्रेण पर्यवसानादिति भावः। अथवैकपदोपात्तत्वरूपान्तरङ्गप्रत्यासत्तिरूपकारणाभावादित्यर्थः। सम्भवात्० अन्वयसम्भवात्। एवं परस्परान्वयाभावे आर्तिक्रियान्वयेन विवक्षाशा परिशिष्यत इत्याह अथेति०। एतद्दूषणं तत्र यदीत्यादिपूर्वग्रन्थेनोक्तमेव दर्शयति—तथापीति०। निमित्तानन्तर्गतावपि विधेयत्वमाशङ्क्य निराकरोति—तत्र चेति०। उभयपदश्रवणस्य गतिमाह—उभयपदं त्विति०। होमा० पूर्वातिदेशेन पूर्वपक्षात्सङ्गतिः।

इति हविरार्त्यधिकरणम्॥ ६॥

उद्देश्यत्वान्न साहित्यं तयोः शक्यं विवक्षितुम् ।
ततः प्रत्येकमेवाभ्यां भक्षणं प्रतिभूयते ॥

न ह्येकेनैव वाक्येनाभिषवहोमौ निमित्तत्वेनोद्दिश्य भक्षणं विदधता तत्साहित्यमपरं शक्यं विधातुम्, वाक्यभेदप्रसङ्गात् । अतः प्रत्येकमेव निमित्तत्वम् उच्यते—

निमित्तत्वे भवेदेवमेकैकस्य निमित्तता ।
होमाभिषवकर्त्ता तु भक्षाङ्गत्वेन चोच्यते ॥

द्वितीयानिर्दिष्टसोमसंस्कारार्थी भक्षस्तं प्रति प्रयोजनान्तरप्रयुक्ताभिषवहोमकर्ता गुणत्वेनोपादीयमानो विवक्षितविशेषणो भवति । तत्रार्थिकं होमाभिषवयोर्निमित्तत्वम्, न शाब्दम् । अभिषवहोमसमानकर्तृकं तु भक्षणं शाब्दम्, तेनाभिषवसमानकर्तृकत्वम् होमसमानकर्तृकत्वं च द्वयं विवक्षितसाहित्यं भक्षणाङ्गम् । अतो येनोभयमनुष्ठितम्, स एव भक्षयेत् ।

इति होमाभिषवोभयकर्तुरेव भक्षणाधिकरणम् ॥ ७ ॥

---

७

**भक्षणं प्रति भूयते॰** निमित्तत्वेन स्थीयत इत्यर्थः । **न हीति ।** **एकेनैवे**त्यनेन निमित्तरूपोद्देश्यानेकत्वकृतो वाक्यभेदस्तावदगत्या स्वीक्रियत इति सूचितम् । एवञ्चाभिषुत्य हुत्वेत्यनयोर्भक्षणक्रियान्वयात्साहित्यस्य च विवक्षानुपपत्तेरभिषुत्य भक्षयन्ति हुत्वा भक्षयन्तीति चानुषङ्गेण वाक्यभेदाङ्गीकरणादेकैकमेव निमित्तमित्याह—**अत इति॰** । निमित्तत्वबोधकयच्छब्दाद्यभावादपेक्षितः क्त्वाप्रत्ययाभिहितः कर्ता विविक्षितसाहित्यो गुणत्वेन विधीयत इति सिद्धान्तमाह—**उच्यत इति॰** । कर्तुः संस्कार्यत्वेनान्वयशङ्कानिरासायाह—**द्वितीयेति॰** । भक्षानिति द्वितीयान्तनिर्दिष्टेत्यर्थः । आर्थिकनिमित्तत्वोपपादनाय **प्रयोजनान्तरेति॰** । अभिषवहोमयोर्भक्षणविध्यनुष्ठाप्यत्वे हि निमित्तत्वं न स्यात्, विध्यन्तरानुष्ठाप्ययोस्तु भक्षणहेतुत्वादार्थिकं निमित्तत्वमुपपन्नमित्याशयः । तद्वत् अविवक्षितनिमित्तविशेषणमिति सूत्रार्थः ॥

इति होमाभिषवोभयकर्तुरेव भक्षणाधिकरणम् ॥ ७ ॥

८

पुनराधेयमोदनवत्० 'यस्योभावग्नी अनुगतावभिनिम्लोचेत्, आदित्योऽभ्युदियाद्वा, पुनराधेयं तस्य प्रायश्चित्तिरि' ति किमुभयानुगमो निमित्तम्? उतान्यतरानुगमोऽपीति। समस्तपञ्चशरावन्यायेनान्यतरानुगममात्रं निमित्तमिति प्राप्ते—

अभिधीयते—

सत्यं निमित्तवेलायामुभावित्यविवक्षितम्।
नैमित्तिकं तु नैवैतदेकस्योत्पादनक्षमम्॥

पुनराधेयं हि वाक्यान्तरेण यादृशमवगतम्, तादृशमेव गार्हपत्याहवनीययोरुदयाभिनिम्लोचनवेलायामनुगतयोरुत्पादकत्वेन चोद्यते। तच्च सहितयोरेव तयोरुत्पादकमवगतम्, नान्यतरस्य। अतस्तादृशमेवात्र विधीयमानमन्यतरानुगमेन कार्यं कर्तुं न क्षममित्युभयानुगमे स्यात्॥

इति पुनराधेयं प्रति वह्न्यनुगमद्वयस्य निमित्तताधिकरणम्॥ ८॥

---

८

पुनः० पूर्वत्र हविरुभयत्ववन्निमित्तकोटिप्रवेशाभावेऽप्यत्र तत्सत्वादविवक्षेत्याक्षेपात्सङ्गतिः। यस्येति। उभौ गार्हपत्याहवनीयौ अनुगतौ नष्टौ। अभिलक्ष्य निम्लोचेदस्तमियाद्रविरित्यर्थः।

सत्यमिति। वाक्यभेदादिदोषान्निनिमित्तविशेषणतया विवक्षाविरहेऽप्युभयोत्पादकनैमित्तिकानुष्ठानबोधकस्य विधेरुभयानुगमविषय एव सङ्कोचः। अन्यथाऽधिकस्य परित्यागे 'वीरहा वा एष देवानां योऽग्निमुद्वासयत' इति दोषप्रसङ्गादिति भावः। आधानाद्भिन्नमेवैतत्कर्मैकाग्न्युत्पादनसमर्थमिति शङ्कानिरासायाह—पुनराधेयं हीति। पुनःशब्देन प्रसिद्धस्यैवाभ्यासप्रतीतेरिति भावः। वाक्यान्तरे अग्नीनादधीतेत्याधानवाक्ये। न चोद्देश्यगतत्वात्तत्राविवक्षितं द्वित्वमिति शङ्क्यम्, अनिर्ज्ञातोद्देश्यगतत्वेन तदसम्भवादित्याशयः॥

इति पुनराधेयं प्रति वह्न्यनुगमद्वयस्य निमित्तताधिकरणम्॥ ८॥

९

पञ्चशरा० यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि'ति किमार्तिदोहप्रतिनिधित्वेन पञ्चशरावोऽमावास्याकर्मण एव साधनत्वेन विधीयते ? उत कर्मान्तरं हविरार्तौ निमित्ते चोद्यत इति ?

आर्तत्वाद् द्रव्ययोरन्यत् कर्मणो द्रव्यमीप्सितम् ।
लाघवं च विधेरेवमतो द्रव्यविधिर्भवेत् ॥

ननु पञ्चशरावपरिमाणमोदनद्रव्यम्, इन्द्रश्च देवतेति बहवोऽर्था प्राप्ते कर्मणि कथं विधीयेरन् ? पञ्चशरावशब्दार्थमेकं विधास्यामः । तेन बहुव्रीहिणा अत्र अन्यपदार्थ ओदन एव परिमाणविशिष्टो विधीयते । सान्नाय्यस्थानापत्त्या च तद्देवताप्राप्तेरैन्द्रपदं नित्यानुवादः । तस्माद् द्रव्यविधिः । उच्यते—

स्थानापत्त्या हि नैकान्तात्प्राप्तिरिन्द्रस्य लभ्यते ।
महेन्द्रस्यापि सद्भावात्तस्मादिन्द्रो विधीयते ॥
प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते ।
शक्यो विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते ॥

इति पञ्चशरावनिर्वापस्य कर्मान्तरताधिकरणम् ॥ ९ ॥

---

९

**पञ्चशरावस्तु०** निमित्तप्रसङ्गान्नैमित्तिकचिन्तेति सङ्गतिः । **ईप्सितम्** अपेक्षितम् । बहुव्रीहिणेति । पञ्च शरावाः परिमाणमस्येत्येवं बहुव्रीह्यर्थकतद्धितार्थद्विगुनेत्यर्थः । **ओदन एवेति** [1]'वैश्वदेवीपदवद्यौगिकत्वेन सन्निहितवाचित्वादिति भावः । यद्यप्यत्र पूर्वपक्षेऽपि प्रक्रान्तप्रयोगस्य पञ्चशरावेण समापनेऽपि 'अथोत्तरस्मै हविषे **वत्सा**नपाकुर्यादि'ति पुनः करणविधानान्नानुष्ठाने भेदस्तथापि पञ्चशरावे सान्नाय्यधर्माः पूर्वपक्षे, सिद्धान्ते त्वौषधधर्मा इति प्रयोजनमित्याहुः ॥

**इति पञ्चशरावनिर्वापस्य कर्मान्तरताधिकरणम् ॥ ९ ॥**

---

१. 'वैश्वदेव्यामिक्षा' इत्यत्र विश्वेदेवा देवता अस्येति व्युत्पत्तौ 'अस्य' पदं यथा सन्निहितमामिक्षाद्रव्यं वदति तथा प्रकृते सन्निहित ओदन एवान्यपदार्थ इत्यर्थः ।

१०

स प्रत्यामने० तदिदं कर्मान्तरं किममावास्यां प्रत्यामनेत् ? उत तस्या एवाङ्गमिति संशयः ? तत्र पञ्चशरावः कार्यमपेक्षते, दोहयोश्चार्तत्वादमावास्यानिवृत्तेः तत्कार्यं साधनमपेक्षते, तयोराकाङ्क्षावशात् सम्बन्धः । तस्मादामावास्ये कार्ये विधीयमानः पञ्चशरावयागस्तस्याः प्रत्याम्नायः स्यात् ।

स्यादेवं यद्यमावास्या निवृत्ता न तु सा तथा ।
पूर्वद्रव्यविनाशेऽपि द्रव्यस्याऽन्यस्य सम्भवात् ॥

सम्भवति पयोऽन्तरे दध्यन्तरे च नामावास्यानिवृत्तिः, अनिवृत्तायां च तस्यां न तत्कार्यं साधनमपेक्षते । द्रव्यविनाशोपजनितवैगुण्यसमाधानन्त्वपेक्षितव्यम् । अतस्तदुपकारेणामावास्याङ्गं पञ्चशरावः ॥

इति पञ्चशरावस्य नैमित्तिकदर्शयागाङ्गत्वाधिकरणम् ॥१०॥

११

विश्वजिद्० 'यः सत्रायागुरते स विश्वजिता यजेते'ति किमागूर्य प्रवृत्तस्य विश्वजित् ? उताऽप्रवृत्तस्य ? उतोभयोरपीति ? संशयः ।

द्वयोरपि भवेत्कस्माद्विशेषस्याश्रुतत्वतः ।
प्रवृत्त एव वा कुर्यात्सत्राङ्गं हि तथा भवेत् ॥

---

१०

स प्रत्यामनेत्० प्रसङ्गसङ्गतिं सूचयन्नाह—तदिदमिति । प्रत्यामनेत् निवर्तयेत् । सम्भवतीति । 'अथोत्तरस्मै हविष' इति विधिवशात्संस्कृते आवश्यकत्वाद्वा लौकिके संभवति सतीत्यर्थः । तदुपकारेण समाधानरूपोपकारेण । अत्र पूर्वपक्षे पञ्चशरावयागभ्रेषे प्रधानत्वात्पुनरनुष्ठानं सिद्धान्ते नेति प्रयोजनम् ॥

इति पञ्चशरावस्य नैमित्तिकदर्शाङ्गत्वाधिकरणम् ॥ १० ॥

तत्र फलं न कल्पयितव्यं भवति ।

निमित्तश्रुतिवैयर्थ्यान्न त्वेतदपि युज्यते ।
साधारण्ये च वैरूप्यं क्रत्वर्थपुरुषार्थतः ॥

यच्छब्देन ह्यागुरणं निमित्तं प्रतीयते । प्रवृत्तस्य चागुरणं नित्यं निमित्तं न भवितुमर्हति । तत्र निमित्तश्रुतिरुपरुध्येत । साधारण्यपक्षे तु प्रवृत्तं प्रति क्रत्वर्थत्वादप्रवृत्तं प्रति पुरुषार्थत्वाद्वैरूप्यं स्यात् ।

अथोभौ प्रति पुरुषार्थत्वेन विधीयेत, तथा सति फलकल्पना तावदवश्यम्भाविनी । तत्र प्रवृत्तस्यानपेक्षितविधानं स्यात् । न हि सत्रमागूर्य कुर्वतः किंचिदपेक्षितम्, यस्तु सत्रफलाय सत्रमागूर्य कुतश्चित्कारणात्तत्राप्रवृत्तः, तस्य सत्रफलप्राप्तये प्रारब्धाकरणदोषपरिहाराय च साधनमपेक्षमाणस्य विश्वजिद्विधानमपेक्षितार्थं भवति । तस्मात्सत्रमागूर्य अकुर्वतः प्रायश्चित्तमिदम् ॥

इति सत्रार्थं सङ्कल्प्य प्रवृत्तस्य विश्वजिदावश्यकताधिकरणम् ॥११॥

१२

वत्ससंयोगे० कः प्रायश्चित्ताधिकारेऽस्य सम्बन्धः ? उच्यते—

---

११

विश्वजित्० आपवादिकी सङ्गतिः। आगुरते उद्युक्त इत्यर्थः। आगूर्य[१] सङ्कल्पं कृत्वा। सत्रफलप्राप्तय इति। विधीयमानस्य फलाकाङ्क्षायामुपस्थितं सत्रफलमेव कल्प्यते। एवं प्रारब्धाकरणदोषसमाधानाकाङ्क्षायामपि विश्वजिदेव विधीयते। नैमित्तिकत्वाच्च प्रत्यवायपरिहारो मुख्यं फलं सत्रफलमानुषङ्गिकमिति ज्ञेयम्॥

इति सत्रार्थं सङ्कल्प्य प्रवृत्तस्य विश्वजिदावश्यकत्वाधिकरणम् ॥ ११ ॥

१२

वत्स० नैमित्तिकचिन्तायाः पादार्थत्वात्तद्भिन्नचिन्ताया एतदुपोद्घाततयोत्तरा-

---

१. सत्रसङ्कल्परूपमागूरणं कृत्वा यस्सत्रं न करोति तस्येदं कर्म सत्रफलार्थत्वेन विधीयते न तु सत्राङ्गतयेति ज्ञेयम् ।

विश्वजित्सत्रे प्रवृत्तस्य अथाप्रवृत्तस्येति विचारिते तत्प्रसङ्गाद्वत्सापाकरणलक्षितो व्रतकालः किं सान्नाय्ये प्रवृत्तस्य ? उतासान्नाय्ययाजिनोऽपीति चिन्ताऽऽपतिता। तदुपोद्घातत्वेन प्रथमं काललक्षणैव प्रतिपाद्यते। 'बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामि' ति किमयं वत्सविशिष्टव्रतविधिः ? उत व्रतानुवादेन वत्सविधिः ? उत वत्सापाकरणं व्रतकालोपलक्षणम् इति संशयः ? तत्र वत्सविशिष्टव्रतविधानम्। रागप्राप्तत्वाद्वा भोजनस्य तदनुवादेन वत्सविधिः। न वत्सस्य व्रते पाण्यादिवत्करणत्वं सम्भवति। अथ वत्समेव व्रतयेत्, तदशक्यम्। विशसने च वत्सव्याघातः। विध्यन्तरञ्च 'पुरा वत्सानामपाकर्तोर्दम्पती अश्नीयातामि'ति विद्यते। तेनैतदेकं वाक्यम्। अतो व्रतोपायनस्य वत्सापाकरणेन कालो लक्ष्यते।

इति बर्हिषेत्यादिश्रुतेर्व्रतकालोपलक्षकत्वाधिकरणम् ॥१२॥

१३

कालश्चेत्० किमयं कालः सान्नाय्ययाजिन एव ? अथासान्नाय्य-

---

धिकरणगताया असङ्गतिमाशंक्य निराकरोति क इति। बर्हिषेति। बर्हिर्लवनकालो लक्ष्यते। व्रतम् नियमयुक्तं भोजनम्। उपैति करोति। वत्सैरिति वत्सापाकरणकाललक्षणा। एतदेवात्रोदाहरणम्। पूर्वं तु तृणस्याभक्ष्यत्वेन पूर्वपक्षासंभवात्काललक्षणानिश्चयेन तत्साहचर्येणात्रापि सिद्धान्तोपपत्यर्थमुदाहृतम्। रागेति। नियमविधौ च सज्वरस्यापि तदापत्तौ शेषिविरोधापत्तेरिति भावः। दूषयति नेति। नन्वशक्यत्वादेव वत्सपदे मांसलक्षणेत्यत आह विध्यन्तरं चेति। अपाकर्तोः अपाकरणात्। तेनैतदिति। विध्यन्तरप्राप्त्यानुवादकत्वेन हेतुना। एतत् बर्हिषेत्याद्यमावास्यायामित्यन्तमेकं वाक्यम्। अन्यथा तु वाक्यभेदः स्यादिति। अनुवादकत्वं च पुरेत्यादेः कालविधित्व एवेत्युपोद्घातोपपत्तिरिति भावः॥

इति बर्हिषेत्यादिश्रुतेः व्रतकालोपलक्षकत्वाधिकरणम् ॥ १२ ॥

१३

कालश्चेत्० ननु चेति। असोमयाजिनोऽग्नीषोमीयाभावे ह्येक एवाग्नेयः

याजिनोऽपि ? इति विचारः। तत्रासान्नाय्ययाजिनो वत्सापाकरणाभावात् न तल्लक्षितकालसम्भवः। ननु चैकपुरोडाशायामपि 'अनपायश्च कालस्य लक्षणं हि पुरोडाशौ' इति वक्ष्यते। तेनैव गतार्थम्। सत्यम्, तत्राग्नीषोमीयाभावेऽपि आग्नेयेन तदुपलक्षणसम्भवः। इह वत्सापाकरणमेवोपलक्षणम्, तदभावे केन कालो लक्ष्यतेति विशेषाऽऽशङ्का।

उच्यते। सर्वथा तावदुपलक्षणमेव वत्सापाकरणम्, तच्च स्वकालद्वारेण व्रतकालं लक्षयति। तदयमर्थः—यो वत्सापाकरणकालः, ततः पूर्वकाले व्रतमिति। स चायमग्न्यन्वाधानात्पश्चात्तनः कालोऽसान्नायिनोऽपि सम्भवति। तस्मात्तस्याप्यनेन कालेनाऽधिकारः।

इति वत्सापाकरणकालस्य सन्नयदसन्नयदुभयार्थताधिकरणम् ॥१३॥

१४

प्रस्तरे० 'सह शाखया प्रस्तरं प्रहरती'ति वचनं किं प्रस्तरप्रहरणाङ्गत्वेन शाखां विधत्ते ? उत शाखाप्रतिपत्तिः प्रहरणं प्रस्तरप्रहरणकाले विधीयते ? इति। प्रहरणाङ्गत्वे सन्नयताऽपि शाखाहर्तव्या। प्रतिपत्तित्वे तु नेति चतुर्थे हरतेर्यजतिरूपत्वात्तत्र प्रस्तरस्य गुणभावात्

---

पुरोडाशः पूर्णमास्याम्। एवञ्च पुरोडाशद्वयोपलक्ष्य अन्तरालकालो नास्तीति नोपांशुयाज इत्याशङ्क्य अनपायो हि कालस्य लक्षणं हि पुरोडाशौ न तु विशेषणं येन विशिष्टः कालो न स्यादिति दशमे वक्ष्यत इत्यर्थः।

इति वत्सापाकरणकालस्य सन्नयदसन्नयदुभयार्थत्वाधिकरणम् ॥ १३ ॥

१४

**प्रस्तरे०** सङ्गतिं स्वयमेव वक्ष्यति। हरणस्य शाखाप्रतिपत्तित्वं [1]चतुर्थे उक्तमेवेति पौनरुक्त्यमाशंक्य परिहरति **चतुर्थे इति**। हरतौ साहित्यमित्येतावच्चतुर्थे विवक्षितम्। प्राधान्यांशस्त्वेतदधिकरणसिद्धस्तत्रोक्तो न तु साधित इत्यर्थः।

---

१. 'प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात्' इत्यधिकरण इत्यर्थः।

शाखाया अपि सहशब्देन तत्तुल्यत्वावगमाद् गुणभावमाशङ्क्य, न शाखाया यजौ साहित्यं प्रहरणमात्रे श्रवणात्। हरतौ च प्रस्तरस्य प्राधान्यात्, शाखाया अपि प्राधान्यमित्युक्तम्। इह पुनर्भवतु प्रहरणे सहभावः, तथाऽपि न प्राधान्यम्। अयं हि वाक्यार्थः–यत्प्रस्तरं प्रहरति तत् सह शाखया नान्यथेति, शाखासंसर्गः प्रस्तरस्य प्रह्रियमाणस्याङ्गं मैत्रावरुणग्रहस्येव पयःसंसर्गः। यदि प्रस्तरप्रहरणकाले शाखाप्रहरणं विधित्सितम्, तदा प्रस्तरेण सह शाखां प्रहरेदितीदृशं वचनं स्यात्। तस्मात्प्रस्तराङ्गं शाखा ततश्चासन्नयताऽपि प्रस्तरार्थत्वेन शाखाहर्तव्येति पूर्वपक्षः—

सिद्धान्तस्तु—'प्रस्तरं प्रहरेदि' त्ययमर्थः प्रस्तरप्रहरणेन प्रतिपादयेत् सह शाखयेति। यदि च शाखापि प्रतिपाद्यते, ततः शाखया सह प्रस्तरः प्रतिपादितो भवति, नान्यथा। तेन शब्दस्वारस्यात्तावच्छाखापि प्रतिपाद्येति गम्यते। न च प्रकारान्तरमस्ति, येन प्रतिपत्तिर्बाध्येत।

किञ्च तत्रोपयुक्ता शाखा प्रतिपत्तिमपेक्षते, नोपयोगान्तरम्। अतोऽपि प्रतिपत्तिः। प्रस्तरग्रहणं तु तत्काले प्रतिपत्तिः शाखायाः कथं स्यादित्येवम्। अतः सन्नयत एव शाखाप्रहरणम्। इदमपि प्रासङ्गिकमेवाधिकरणं व्रतकालोऽसन्नयतोऽपीत्युक्तम्। शाखाहरणं तु नैवम्,

---

'श्रयणवदिति' सूत्रार्थमाह **मैत्रेति**। 'पयसा मैत्रावरुणं श्रीणाती'ति विहित इत्यर्थः। **शब्देति**। सहशब्देत्यर्थः। **प्रकारान्तरमिति**। 'मैत्रावरुणाय दण्डं प्रयच्छती'त्यत्र यथा चतुर्थ्युक्तसम्प्रदानत्वबलेन दण्डस्य प्रतिपत्तिर्बाध्यते तथाऽत्र बाधकं नास्तीत्यर्थः। **तत्र** वत्सापाकरणादौ। न केवलं सहार्थबलादेव शाखाप्रतिपत्तिः प्रहरणादवगता, किन्त्वाकां-

किन्तु सन्नयत एवेति। यद्वा वत्सापाकरणं कालोपलक्षणमित्युक्तम्। प्रस्तरप्रहरणमपि कालोपलक्षणमित्युच्यते ॥

इति असन्नयतः शाखाहरणनिराकरणाधिकरणम् ॥१४॥

इति शास्त्रदीपिकायां षष्ठस्य चतुर्थः पादः ॥ ४ ॥



---

क्षावशादपीति अतोऽपीत्युक्तम्। पादसङ्गतिः प्रसङ्गरूपा। आपवादिकी त्वनन्तरेत्युक्तम् आतिदेशिकी वानन्तरसङ्गतिरित्याह यद्वेति ॥

इत्यसन्नयतः शाखाहरणनिराकरणाधिकरणम् ॥ १४ ॥

इति श्रीमद्विद्वन्मान्यतत्सद्रामभट्टात्मजवैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां षष्ठस्य चतुर्थः पादः।



# अथ षष्ठाध्याये पञ्चमः पादः ।

१

अभ्युदये० अकाले प्रक्रान्ते दर्शे प्रायश्चित्तमाम्नातम्—'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्, स त्रेधा तण्डुलान्विभजेत्, ये मध्यमाः स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्, ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दधंश्चरुम्, येऽणिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरुमि' ति । तत्र संशयः–किं कर्मान्तरमिदम् ? उत प्रक्रान्तस्यैव दर्शस्य देवताभ्योऽपनयः, देवतान्तरसंयोगश्च चोद्यते ? इति ?

अनेकार्थविधायित्वात्कर्मान्तरविधिर्भवेत् ।
प्राप्तकर्मानुवादेन नानेकार्थविधिः क्षमः ॥

अग्न्यादयो देवताः, तद्गुणाश्च दातृत्वादयः, दधिशृतयोश्चाधिकरणत्वम्, स्थविष्ठाणिष्ठादीनाञ्च चरुत्वमिति बहवोऽर्था नापूर्वविधिमन्तरेण शक्यन्ते विधातुम् । तस्मात्कर्मान्तरमेवाकालोपक्रमप्रायश्चित्तत्वेन विधीयत इति प्राप्त उच्यते—

---

अथ षष्ठाध्याये पञ्चमः पादः ।

१

**अभ्युदये०** पूर्वत्र द्रव्यापचारनिमित्तचिन्तनमत्र तु कालापचारादिनिमित्तप्रायश्चित्तचिन्तेति पादान्तरता । **अकाल** इति चतुर्दश्याममावास्याभ्रान्त्यान्वाधान[१] इत्यर्थः । **दर्श** दर्शेष्टौ हविरभिलक्ष्य । **पुरस्तात्** पूर्वदिशि । मध्यमाः सखण्डाः **स्थविष्ठाः** स्थूला अखण्डाः । **अणिष्ठा** अर्धाधिकखण्डाः । **दधंश्चरुम्** दध्नि चरुम् । **शृते** दुग्धे ।

---

१. दर्शपूर्णमासेष्टिः द्व्यहकाला । तत्र पूर्वस्मिन् दिनेऽन्वाधानादीनि कतिपयान्यङ्गान्यनुष्ठीयन्ते । अन्वाधानं नाम 'ममाग्ने वर्च' इत्यादिमन्त्रेणाग्निषु समिधो निक्षेपणम् । चतुर्दश्याममावास्याभ्रान्तिश्चेत्तत्पूर्वदिनेऽन्वाधानं भवेत् । तदान्वाधानमकाले समारब्धमित्यर्थः ।

प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना ।
प्राकृतीभ्यस्तदाच्छिद्य द्रव्यमन्याभ्य उच्यते ॥

न तावत्सम्भवन्त्यां गतौ प्रकृतहानाप्रकृतकल्पनाविशिष्टविधानापूर्वकर्मान्तरकल्पनं न्याय्यम् । सम्भवति चात्र प्रक्रान्त एव गुणविधानम् । तथाहि 'त्रेधा तण्डुलान्विभजेदि'त्यनेन तावन्मध्यमादिभावेन तण्डुलानां विभागो न विधीयते, मध्यमादिविनियोगवशेनैवार्थसिद्धत्वात् । अतस्तण्डुलशब्देन प्रकृतं हविस्त्रयमुपलक्ष्य तस्यापरित्यक्तयागान्वयस्य पूर्वदेवताभ्यो विभागः-अपनयः विधीयते । ततश्चापनीतानां हविषां देवतान्तरसंयोगोऽपेक्षितो मध्यमादिश्रवणैर्विधीयते-मध्यमानां तण्डुलानामग्निर्दाता, स्थविष्ठानां दध्नश्चेन्द्रः प्रदाता, अणिष्ठानां शृतस्य च विष्णुः शिपिविष्टः । न चानेकार्थविधानम्, दातृप्रदातृ-शिपिविष्टशब्दानां यौगिकानां श्रुत्यैवाग्न्यादिपदसामानाधिकरण्यात् पदद्वयप्रतिपादितं विशिष्टं देवताकारकमेकेन विधिना शक्यं विधातुम् ।

---

**प्रकृतेति** । प्रकृतानुवादियच्छब्दवशेन प्रकृतस्य द्रव्यस्य तत्सम्बन्धिकर्मणश्च हानमप्रकृतस्य प्रमाणं विनैव कल्पनं गुरुभूतविशिष्टविधानमपूर्वजनककर्मान्तरविधानं चेति द्वन्द्वः । **हविस्त्रयम्** तण्डुलदधिपयोरूपम् । अमावास्यायामुपांशुयाजाज्याभावात् । **पूर्वदेवताभ्य इति** । त्रेधा तण्डुलान्विभजेदित्यनेन पूर्वदेवतासंयुक्तानां ततो विभागोऽपनयाख्यो विधीयते ये मध्यमा इत्यादिना देवतान्तरसम्बन्ध इत्यर्थः । **न चेति** । ये मध्यमा मध्यमोद्देशेनाग्निदातृरूपानेकविधानाद्वाक्यभेदः स्थविष्ठाणिष्ठवाक्ययोश्च स्थविष्ठदध्याद्यनेकोद्देशादिन्द्रप्रदात्राद्यनेकविधेश्च स[1] इत्यर्थः । तत्रोद्देश्यानेकत्वकृतस्तावदगत्यैवाङ्गीक्रियते । अन्यथा कर्मान्तरविधानाङ्गीकारे त्रेधा तण्डुलानित्यपनयविध्यानर्थक्यं स्यात् । हविष उपादेयतया प्रकृतग्रहणे मानाभावेन तदुपयोगाभावात् । अतो वाक्यभेदाङ्गीकार एव युक्तः । विधेयानेकत्वकृतं तु परिहरति **दात्रिति** । शिपयो रश्मयस्तैराविष्ट इति योगार्थः । अरुणयेति तु न योगिकं न वा शक्त्यैकहायनीपदसमानाधिकरणम् गुणमात्रवाचित्वात् । किन्तु लक्षणयेति सूचितम् । एवं च विष्णुः शिपिविष्ट इत्यादिमन्त्रार्थवादादिप्रसिद्धया विशेषणविशेष्यभावावगमाद्विशेषणविभक्तेश्चा-

---

१. वाक्यभेदः ।

अभ्युदयेष्टिप्रकरणे च 'सह श्रपयती'ति वचनमस्ति। तेन सम्प्रतिपन्नदेवताकयोर्दधिश्रविष्ठयोः, शृताणिष्ठयोश्च सहपाकादर्थप्राप्तं चरुत्वम्, दधिश्रृतयोश्चाधिकरणत्वमिहानूद्यते। तस्मादवाक्यभेद इत्यकर्मान्तरत्वम्।

एवञ्चातञ्चनाभ्यासदर्शनमुपपन्नं भवति। तथा हि—श्रूयते 'यदि बिभियादभिमोदेष्यतीति महारात्रे हवींषि निर्वपेत्, फलीकृतैस्तण्डुलैरुपासीत, अर्धं दधि हविरातञ्चनार्थं निदध्यात् अर्धं न, यद्यभ्युदियात् तेनातच्य प्रचरेत् यदि न, प्रातरन्येद्युस्तेन ब्राह्मणं भोजयेदि'ति। तद्यदि कर्मान्तरमभ्युदितेष्टिः, ततस्तत्र दधिशृतयोरधिकरणत्वेन प्रणीताकार्ये विधानादुपादेयत्वेन प्रकृतग्रहणे प्रमाणाभावात् लौकिक एव दधनि श्रपणं कृत्वा सायं दोहेनाकालेऽपि प्रक्रान्तेन प्रायश्चित्तनिर्हृतकालापराध-

---

विवक्षितार्थत्वादेकमेव कारकमित्याह-**विशिष्टेति**। **सम्प्रतिपन्नदेवताकयोः** एकदेवतयोः। भिन्नदेवताकयोरपि सह श्रपणविधौ दध्नंश्रृते इति निरपेक्षाधिकरणत्वानुवादानुपपत्तेः। पुनश्च त्यागार्थं पृथक्करणाक्षेपाच्च गौरवं स्यादिति भावः। **अर्थप्राप्तमिति**। यथा 'सह शाखयेति साहित्यबलात् शाखायाः प्रहरणं तथात्रापि तण्डुलानां द्रव्यान्तरेण सह श्रपणमित्युक्तेऽर्थात् द्रव्यान्तरस्यापि श्रपणमित्यर्थः। एतच्च सहत्वमात्रस्य प्राप्तश्रपणानुवादेन विधानमित्यभिप्रायेणोक्तम्। तण्डुलानामेव देवतान्तरसम्बन्धात्तेषामपि श्रपणप्राप्तेर्विशिष्टश्रपणविधिपक्षे तु सुतरां चरुत्वाधिकरणत्वयोः प्राप्तिरिति ज्ञेयम्। लिङ्गदर्शनमाह—**एवञ्चेति** अकर्मान्तरत्वे सतीत्यर्थः। **आतञ्चनम्** दुग्धे दधित्वसिध्यर्थं दधिलेशप्रक्षेपस्तस्याभ्यास आवृत्तिस्तद्दर्शनमनुवाद इत्यर्थः। **यदीति**। मां अभिमुखं पूर्वस्यां चन्द्र उदेष्यतीति विभियात् शङ्केत। महारात्रे चन्द्रोदयात्पूर्वमुपासीत प्रतीक्षेत। सायं दोहनिष्पन्नं दधि अर्धं प्रतिपदि कर्तव्यं दर्शार्थं यद्धविस्तदातंञ्चनार्थं निदध्यात्। अर्धं अर्धान्तरं नातञ्चनार्थं किन्तु तूष्णीं परिपालयेत्। एवं सति यदि चन्द्र अभ्युदियात्तदा तेनातञ्चनार्थनिहितेनार्धेन परेद्युरमायां रात्रावातञ्च्य तत्कृतेन दध्ना प्रतिपदि प्रचरेत् दर्शेष्टिं कुर्यात्। तूष्णीं स्थापितेन चाभ्युदितेष्टिम्। यदि नाभ्युदियात्तदाऽन्येद्युर्द्वितीयदिने प्रातरेतेनातञ्चनार्थं निहितेन ब्राह्मणं भोजयेदित्यर्थः। अर्धान्तरेण तु दर्शयाग एवेति भावः। पूर्वपक्ष एतदनुपपत्तिं दर्शयति-**तद्यदीति**। **प्रणीताकार्ये** हविःश्रपणे। **आतञ्चनम्** तेनातच्येति विहितम्। एवञ्च सति प्रक्रान्तस्य दध्नोऽदृष्टवैगुण्यापादकत्वम्।

दोषेणैकान्तरितोऽपि दर्शः कर्तव्यः, न दध्यन्तरमुत्पाद्यम्। तत्रातञ्चनमनर्थकम्। तत्र प्रक्रान्तस्य दध्नस्त्यागे, दध्यन्तरोत्पादे चादृष्टद्वयं कल्प्यम्। अस्मत्पक्षे तु तेन दध्ना प्रक्रान्तस्य प्रयोगस्यानुष्ठितत्वात् अवश्यं श्वो दध्यन्तरमुत्पाद्यमित्यर्थवदातञ्चनम्। तत्र सायंदोहार्थेनैवातञ्च्यात्, नान्येनेत्येतावद्विधेयमिति लाघवम्। तस्मादकर्मान्तरम्।

इत्यभ्युदयेष्ट्यधिकरणम् ॥ १ ॥

२

उपांशु० तत्रैव चिन्ता—किमुपांशुयाजद्रव्यस्याप्याज्यस्य प्राकृतीभ्यो देवताभ्योऽपनयः, नेति ? अमावास्यायामप्युपांशुयाजोऽस्तीति कृत्वा चिन्तेयम्। न त्वमावास्यायामुपांशुयाजोऽस्ति। वाचनिको हि तस्य पौर्णमासीकालः। 'उपांशु पौर्णमास्यां यजन्ति' इति। कालपरं हीदं वचनमिति सूत्रकारस्थितिः। तदुक्तं 'सूत्रकारेणाऽमावास्यायामुपांशुयाजमनिच्छता एतदेव पौर्णमासीविधिपरत्वेनोपन्यस्तमि'ति। तथा च 'त्रयोदशाऽमावास्यायामि'ति लिङ्गमुपपद्यते। अन्यथा चतुर्दशत्वापत्तेः। तदप्युक्तम्—

---

पुनरातञ्चनस्य चाप्राप्तत्वाददृष्टस्य कल्पनेति कल्पनाद्वयमित्याह-**तत्रे**ति। **एतावदिति**। नियममात्रमित्यर्थः। अत्र च त्रेधेति पूर्वदेवतापनयविधिरेवाकर्मान्तरत्वे तदानर्थक्यापत्तेः। सिद्धान्ते तु देवतान्तरसंयोगविध्यपेक्षितापनयविधायकत्वेनार्थवत्त्वात्, तेन विना देवान्तरसंयोगविध्यसंभवादिति ज्ञेयम्। **प्रयोजनम्**। लिङ्गदर्शनेन व्यक्तम्।

**इत्यभ्युदयेष्ट्यधिकरणम्** ॥ १ ॥

२

**उपांशु०** उक्तदेवतापनयस्याज्ये आक्षिप्य समाधानात्सङ्गतिः। **तत्रैवेति** पूर्वोदाहृतवाक्य एवेत्यर्थः। **कालपरं हीति**। देवताया मन्त्रलिङ्गेनाज्यस्य सर्वस्मै वेति वचनेनोपांशुत्वस्य चोत्पत्तिवाक्येन प्राप्तेरप्राप्तपूर्णमासीकाल एव विधितात्पर्यमिति भावः। अत्रार्थे पौर्णमास्यधिकरणवार्तिकसम्मतिमाह-**तदुक्तमिति**। **उपन्यस्तम्**।

'पौर्णमास्यां यदा तिस्रो द्वे दर्शविषये सदा ।
प्रधानाहुतयस्सन्ति तदा सङ्ख्योपपद्यते' ॥ इति ।

तस्मात्कृत्वाचिन्तैवेयम् । उपवर्षस्तु वृत्तिकारो बह्वृचब्राह्मणेऽमावास्यायामप्युपांशुयाजो विहित इति, तदभिप्रायेणेयं चिन्तेत्याह । तत्राज्यस्य देवतान्तरसंयोगावचनान्न प्राकृतीभ्योऽपनयनम्, तण्डुलग्रहणेन तु प्रकृतहविर्मात्रस्य प्राकृतीभ्योऽपनयविधानादाज्यस्याप्यस्त्येवापनयः, तच्च ताभ्योऽपनीतं देवतान्तरेण वचनाभावादसंयुक्तं प्रहीणं भवति । न च देवताभावे यागः सम्भवतीत्युपांशुयाजो लुप्यते ॥

इत्युपांशुयाजेऽपि देवतापनयाधिकरणम् ॥ २ ॥

३

निरुप्ते० यदा निरुप्ते हविषि चन्द्राभ्युदयो जायते, तदैव किं प्रायश्चित्तम्? उत कर्मोपक्रममात्रे? इति । तत्रावश्यं तावद्धविषा चन्द्रोदयो विशेष्टव्यः, न च तदुदासीनं तस्य विशेषणं भवतीत्यवश्यं या

---

दशमोपान्त्ये 'अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगादि'ति सूत्रेण निर्दिष्टम् । **त्रयोदशेति ।** 'चतुर्दशपौर्णमास्यामहुतयो हूयन्ते' इति पूर्वः शेषः । सवषट्काराहवनीयाहुतिसङ्ख्येयम् । पौर्णमास्यां तावत् प्रधानाहुतित्रयम् । पञ्च प्रयाजास्त्रयोनुयाजा आज्यभागद्वयं स्विष्टकृच्चेति चतुर्दश । अमायामुपांशुयाजाभावात्त्रयोदशेति **बह्वृचाः** शाङ्खायनाः । तद्ब्राह्मणं च 'अथ यत्संनयन् पुरोडाशावान्तरेणोपांश्वाज्यस्य यजति' 'अथ यत्संनयन् सान्नाय्यस्यान्तरेणोपांशु आज्यस्य यजती'ति । उक्तन्यायस्तु वचनबाध्य इत्याशयः । त्रयोदशेति लिङ्गदर्शनं चावयुत्यानुवाद इति ज्ञेयम् । **प्रहीणम्** देवताहीनम् । एवञ्च वचनबलात्प्रारब्धासमापनदोषोऽपि नेत्याह-**न चेति ।**

इत्युपांशुयाजेऽपि देवतापनयाधिकरणम् ॥ २ ॥

३

**निरुप्ते०** नैमित्तिकप्रसङ्गान्निमित्तचिन्तेति संगतिः । **विशेष्टव्य इति ।** अभिशब्दोक्तलक्षणक्रियाद्वारा विशेषणीय इत्यर्थः । **तत्** हविः । उदासीनम् क्रियारहितम् । लक्षकत्वं हि स्वक्रिययाभ्युदयं प्रति स्यान्नान्यथेत्यर्थः ।

काचित्क्रियाऽपेक्षिता। तत्र निर्वापस्य श्रुतत्वात्, तद्विशिष्टमेव हविरभ्युदयविशेषणमिति नानिरुप्ते प्रायश्चित्तम्।

नैवम् हविरभ्युदियादित्येतावतैवाप्रवृत्तस्याभ्युदयसम्बन्धासम्भवात् प्रवृत्तं हविरिति ज्ञायते। तावता च निमित्ततोपपत्तेरविवक्षितो हविरुभयत्ववन्निर्वापः। तस्मादकालप्रवृत्तिमात्रं निमित्तमिति प्रागपि निर्वापादभ्युदये ज्ञाते, कर्तव्यमेव नैमित्तिकम्॥

इत्यनिरुप्तेऽप्यभ्युदयेष्ट्यनुष्ठानाधिकरणम्॥ ३॥

४

अनिरुप्ते० कर्मप्रवृत्तिमात्रं निमित्तमिति स्थितम्। नैमित्तिकस्तु देवताऽपनयः, देवतान्तरसंयोगश्च किं निर्वापोत्तरकालं तण्डुलावस्थे हविषि कर्तव्यः, निर्वापस्तु प्राकृतीभ्य एव स्यात् ज्ञातेऽप्यभ्युदये? उत वैकृतीभ्य एव निर्वापः? इति संशये, तण्डुलग्रहणात्तदवस्थस्यैवापनयः।

नैतदेवम्? हविर्मात्रोपलक्षणार्थं तण्डुलग्रहणम्, न स्वरूपेण विवक्षितम्। तद्विवक्षायां हि दधिशृतयोरनपनयात् देवतान्तरसंयोगवचनमनुपपन्नं स्यात्। तस्मात्प्राङ् निर्वापादभ्युदये वैकृतीभ्य एव निर्वापः॥

इत्यनिरुप्तेऽभ्युदये वैकृतीभ्यो निर्वापाधिकरणम्॥ ४॥

---

**प्रवृत्तं हविरिति।** देवतायै सङ्कल्पितस्यैव हविष्ट्वात्संकल्पितं निमित्तमित्यर्थादवगम्यत इत्यर्थः।

इत्यनिरुप्तेऽप्यभ्युदयेष्ट्यनुष्ठानाधिकरणम्॥ ३॥

४

**अनिरुप्ते०** उपजीवकत्वरूपसङ्गतिप्रदर्शनायाह **कर्मेति।** निर्वापविवक्षायान्तु ततः प्राङ् निमित्ताभावादभ्युदयेऽपि वैकृतीभ्य एव निर्वाप इति सिद्धान्तायोगादिति भावः॥

इत्यनिरुप्तेऽभ्युदये वैकृतीभ्यो निर्वापाधिकरणम्॥ ४॥

५

विनिरुप्ते० एकस्मिन्द्वयोर्वा मुष्ट्योः प्राकृतीभ्यो निरुप्तयोर्यदाऽभ्युदयोऽवगम्यते, किं तदा शेषं प्राकृतीभ्यो निर्वप्तव्यम्? उत वैकृतीभ्यः? अथवा तूष्णीमिति संशये।

प्राकृतीनां प्रवृत्तत्वात् ता एवावशिष्टेऽपि स्युः, अथवा निमित्तानन्तरं नैमित्तिकोऽपनयस्संयोगश्च कर्तव्यः। तस्माद्वैकृतीभ्यः शेषं दद्यात्।

सत्यम्; निमित्तानन्तरं नैमित्तिकम्। तत्र विभागस्य संयोगमात्रापेक्षत्वेनावयवेऽपि सम्भवादवशिष्टो निर्वापांशः प्राकृतीभ्यस्तावदपनेतव्या इत्येतद्गृह्णीमः, वैकृतीभ्यस्तु संयोगोऽस्यामवस्थायां न सम्भवति, ता हि प्राकृतीनां स्थाने संयोज्याः। पदार्थेन च प्राकृतीनां संयोगो विहितः, नावयवेन। तेन वैकृत्योऽपि पदार्थेन संयोजयितव्याः, नावयवेन। न च सामिकृते निर्वापे वैकृतीनां पदार्थसंयोगः सम्भवति। तस्मात्प्राकृतीभ्योऽपनीतो वैकृतीभ्यश्चासंयुक्तोऽवशिष्टो निर्वापांशस्तूष्णीं कर्तव्यः॥

इति किञ्चिन्निरुप्तेऽभ्युदयेऽवशिष्टस्य तूष्णीं निर्वापाधिकरणम्॥५॥

---

५

विनिरुप्ते० निरुप्तानिरुप्तप्रसङ्गादर्धनिरुप्तचिन्तेति सङ्गतिः। ता एवेति। अपनयस्य पदार्थधर्मत्वाच्चतुर्मुष्टिनिर्वापस्यैकपदार्थत्वेनावशिष्टमुष्टिद्वयस्य चावयवत्वान्न पूर्वदेवतापनय इत्याशयः। निमित्ताधीनत्वादपनयसंयोगयोरवशिष्टेऽपि प्रसङ्ग इति द्वितीयपक्षमाह-निमित्तानन्तरमिति। तत्रेति। निवृत्तिरूपापनयस्यावयवेऽपि 'न कलञ्जं भक्षयेदि'ति निषेधवत्सम्भवादिति भावः। अनुष्ठेयस्तु संयोगो विहितफलदानादिवन्नैकदेशविषय इत्याह-विहित इति। सामीत्यर्धार्थकम्। अर्धनिरुप्ते चतुर्मुष्टीनामेकदेशस्य नापनयः कृत्स्नस्यैव देवतागुणत्वादिति सूत्रार्थः॥

इत्यभ्युदये किञ्चिन्निरुप्तेऽवशिष्टस्य तूष्णीं निर्वापाधिकरणम्॥ ५॥

६

सान्नाय्य० किमियमभ्युदयेष्टिः सन्नयत एव स्यात्? उतासन्नयतोऽपीति? संशये, 'शृते चरुं दधनि चरुमि'ति श्रवणात्, असन्नयतश्च दधिशृतयोरभावात्, नास्ति नैमित्तिके सामर्थ्यम्। तस्मात्संन्नयत एवाधिकारः।

सत्यम् यदि दधिशृते चरोरधिकरणत्वेन चोद्येयाताम्। न त्वेवम्, वाक्यभेदप्रसङ्गात्, । न ह्येकं वाक्यं स्थविष्ठाँस्तण्डुलानुद्दिश्य देवतान्तरं दध्यधिकरणत्वञ्च शक्नोति विधातुम्। अतस्तण्डुलान् दधि-शृते चोद्दिश्य देवतामात्रं विधीयते। न चोद्देश्यानां साहित्यं विवक्षितम्। अतोऽसन्नयतो दधिशृताभावेऽपि तण्डुलानां देवतान्तारसंयोगः कर्त्तव्यः॥

इति सन्नयदसन्नयदुभयस्यैवाभ्युदये प्रायश्चित्ताधिकरणम्॥ ६॥

---

६

**सान्नाय्य०** सत्यपि निमित्ते नैमित्तिकप्रवृत्तिः क्वचिदाक्षिप्य समाधीयत इति सङ्गतिः। **श्रवणादिति**। यद्यप्ययमनुवादस्तथापि तद्बलादेव नैमित्तिकं संनयद्विषयं व्यवतिष्ठते।[१] 'न गिरे'ति निषेधानुवादबलादिवेरापदस्य गिरापदस्थानकत्वम्। 'सह श्रपयती'ति विहितद्रव्यान्तरसाहित्यासम्भवाद्वा तत्रासंनयतः शक्त्यभाव इति पूर्वपक्षाशयः। । **न चेति**। अत्र देवतान्तरविधावुद्देश्यानां हविषां साहित्यं न विवक्षितमित्येकोऽर्थः स्पष्ट एव। श्रपणविधावुद्देश्यानां श्रप्यमाणानां साहित्यं नित्याङ्गतया न विवक्षितमित्यपर उक्तपूर्वपक्षाशयनिरासार्थः। स्वकार्यप्रयुक्तयोरेव हि द्रव्ययोः साहित्यमङ्गं न तु तद्बलेन द्रव्यप्रयुक्तिरिति तदभावेन साहित्यविधिप्रवृत्तिरित्याशयः। एवमनुवादोऽपि पाक्षिक एवेति।

इति सन्नयदसन्नयदुभयस्यैवाभ्युदये प्रायश्चित्ताधिकरणम्॥ ६॥

---

१. 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्' इति वाक्ये निषेधोऽनुवादकः, तेन गिरापदस्थानकत्वमिरापदस्य सिध्यतीति यथा, तथा नैमित्तिकं सन्नयद्विषयमिति भावः।

७

साम्युत्थाने० 'यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्, सोममपभज्य विश्वजितातिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत' इति । किमयं विश्वजित् क्रीतराजकस्यैवोत्थाने ? उताक्रीतराजकस्यापीति विचारः । तत्र—

नैमित्तिकमिदं सोमविभागेन विशेषितम् ।
नाक्रीतराजकस्यैतच्छक्यं क्रीते भवेदतः ॥

उच्यते—

यदि सोमविभागोऽयमङ्गत्वेन विधीयते ।
तत एवं भवेदेष त्वर्थप्राप्तो न चोद्यते ॥

क्रीतराजकस्य तावदर्थप्राप्तः सोमविभागोऽर्थान्तरविभागवन्न विधातव्यः । अक्रीतराजकस्य त्वशक्यत्वादेव विधेयो विभागः । तस्माद्रागप्राप्तद्रव्यविभागानुवादमात्रमिदम् । सोमग्रहणं तु प्रदर्शनार्थम् । विश्वजिन्मात्रन्तु विधीयत इत्यक्रीतराजकस्यापि स्यात् ॥

इति सत्राय प्रवृत्तमात्रस्य विश्वजिदनुष्ठानाधिकरणम् ॥ ७ ॥

---

७

साम्युत्थाने० पूर्ववदिहापि नैमित्तिकसङ्कोचनिराकरणादातिदेशिकी सङ्गतिः । **यदीति** । दीक्षितानां मध्ये कश्चिदित्यर्थः । **सामि** अर्धानुष्ठाने । **उत्तिष्ठासेत्** परित्यज्य गन्तुमिच्छेत् । सोमं सर्वयजमानसाधारणमपभज्य विभज्य । **राजा** सोमः । पाक्षिकानुवादत्वपरिहाराय **तस्मादिति** । **प्रदर्शनार्थम्** । उपलक्षणम् । अयमपि विश्वजित्सत्रफलार्थः । प्रारब्धसत्राकरणदोषनाशार्थश्चेति ज्ञेयम् ॥

इति सत्राय प्रवृत्तमात्रस्य विश्वजिदनुष्ठानाधिकरणम् ॥ ७ ॥

८.

दीक्षा० नैमित्तिकप्रसङ्गाद् दीक्षानिमित्ता धर्माः कियन्तं कालमनुवर्तन्त इत्येवमर्थं दीक्षापरिमाणं चिन्त्यते। ज्योतिष्टोमे श्रुतानाम् 'एका दीक्षा तिस्रो दीक्षाः द्वादश दीक्षाः' इत्येवमादीनां सर्वेषां किं ज्योतिष्टोमे विकल्पेन निवेशः? उत द्वादशपरिमाणमेव तत्र स्यात्, एकादीनां तूत्कर्षो विकृतिष्विति संशयः।

तत्र भाष्यकारः 'यथाकाम्यविशेषादि'त्यनेन पूर्वपक्षमुक्त्वा 'द्वादशाहस्तु लिङ्गादि'त्यनेन 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीते'ति श्रुतस्य भृतिवननस्य पक्षान्तरेष्वसम्भवाद् द्वादशपरिमाणमेव सिद्धान्तितवान्।

वार्त्तिककारस्त्वयुक्तमिदमिति मत्वा सूत्रद्वयमपि द्वयोरधिकरणयोरुत्सूत्रपूर्वपक्षयोः सिद्धान्तसूत्रत्वेन व्याचख्यौ। तत्र भृतिवननसामर्थ्यात् द्वादशाहपरिमाणं मन्वानस्योत्तरम् न हि प्रत्यक्षश्रुतानामेकादिपक्षाणां भृतिवननवशेन दौर्बल्यम्, येन तदनुग्रहार्थमुत्कृष्येरन्। तस्माद्यथाकाम्येव स्यात्, भृतिवननं तु द्वादशपक्षे भविष्यति।

यद्वा 'दीक्षितो भृतिं वन्वीते'त्येतावद्विधीयते। द्वादशग्रहणं तु प्रदर्शनार्थमिति व्याख्येयम्॥

इति ज्योतिष्टोमे दीक्षापरिमाणनियमाधिकरणम्॥ ८॥

---

८

दीक्षा० सङ्गतिमाह-नैमित्तिकेति। दीक्षानिमित्ता धर्मा दीक्षितो न जुहोती'त्यादयस्तेषां शाब्दनैमित्तिकाधिकारत्वाभावेऽपि तत्प्रसङ्गागतत्वं तदुपयोगित्वेन च परिमाणचिन्तनमित्यर्थः। भृतिमिति ऋत्विग्भ्यो देयं दक्षिणाद्रव्यं वन्वीत याचेतेत्यर्थः। 'वनु याचने' इति धात्वनुसारात्। अयुक्तमिति। एकस्य भृतिवचनस्यानुरोधेन बहूनां एकादिदीक्षापक्षाणामुत्कर्षस्यान्याय्यत्वादेकस्य भृतिवचनस्यैव तदौचित्यादित्याशयः। पाक्षिकत्वास्वरसादाह-यद्वेति। प्रदर्शनार्थमिति। दीक्षितस्य याचनं दीक्षाकालपर्यन्तमित्यर्थसिद्धत्वाद्द्वादशपदं लक्षणया दीक्षाकालानुवादकमित्यर्थः।

इति ज्योतिष्टोमे दीक्षापरिमाणनियमाधिकरणम्॥ ८॥

९

द्वादश० द्वादशाहे किं दीक्षापरिमाणानां विकल्पः ? उत द्वादशपरिमाणमेवेति । प्रकृतिवद्विकल्पे प्राप्ते—

उच्यते—'षट् त्रिंशदहो वा एषः, यद् द्वादशाहः' इति लिङ्गादुपसत्सुत्यानां च प्रतिस्वं द्वादशत्वाद्दीक्षा अपि द्वादशेति गम्यते, तथा 'अभीन्धत एव दीक्षाभिरि'ति दीक्षाबहुत्वमाख्याय तद्वाक्यशेषे 'द्वाभ्यां लोमाऽवद्यति, द्वाभ्यां त्वचं द्वाभ्यामसृक् द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमि'ति षण्णां द्विकानामनुक्रमणाद्विश्युद्देशगतं बहुत्वं द्वादशस्वेव स्थाप्यते ॥

इति द्वादशाहे दीक्षापरिमाणनियमाधिकरणम् ॥ ९ ॥

१०

पौर्णमास्या० दीक्षाप्रसङ्गादिदमधिकरणम् । गवामयने 'चित्रापूर्णमासे दीक्षेरन्, मुखं वा एतत्संवत्सरस्य, यच्चित्रापूर्णमासी, तस्य न काचन निर्या भवति' इत्येवं चैत्रीं स्तुत्वा, तत उक्तम् 'चतुरहे पुरस्तात्

---

९

द्वादशाहस्तु० अपवादसङ्गतिं सूचनायाह-प्रकृतिवदिति । अभीन्धते अभितो दीप्यते । आख्याय विधाय । द्वाभ्याम् दीक्षाभ्याम् । इयञ्च द्वादशरात्रीर्दीक्षितः स्यादिति वचनं नास्तीति कृत्वा चिन्तेति तन्त्ररत्ने ॥

इति द्वादशाहे दीक्षापरिमाणनियमाधिकरणम् ॥ ९ ॥

१०

पौर्णमास्याम्० कालविधिचिन्तायाः पादसङ्गतिमाह-दीक्षेति । पूर्ववद्विकल्पापवादाद् आतिदेशिक्यनन्तरसङ्गतिर्ज्ञेया । गवामयनं नाम संवत्सरसाध्यं सत्रम् । चित्रानक्षत्रयुक्ते पूर्णमासे चैत्र्याम् । निर्या दोषः । पूर्णमासस्य पुरस्ताच्चतुरहे एकाद-

पौर्णमास्यै दीक्षेरन्, तेषामेकाष्टकायां क्रयः सम्पद्यते' इति । तत्र संशयः— किमेषां या काचित्पौर्णमासी ? किंवाऽनन्तरश्रुता चैत्री ? उत माघीति ? तत्राविशेषाद्या काचित्स्यात् । चैत्रीस्तुतिस्तु 'चित्रापूर्णमासे दीक्षेरन्, इत्यस्य शेषः, न 'चतुरहे पुरस्तादि'त्यस्य । न चैकाष्टकाश्रुतिवशान्माघी-विषयत्वम्, द्वादशानामपि कृष्णाष्टमीनामेकाष्टकाशब्दवाच्यत्वात् । तथाहि श्रूयते 'द्वादश पौर्णमास्यः, द्वादशैकाष्टकाः' इति । तस्मादविशेषः ।

सत्यमेकाष्टकाशब्दो न विशेषकः, चैत्र्यास्त्वनन्तरमेव कीर्तित-त्वात् सामान्यविषयः पौर्णमासीशब्दः तद्विषयो भवति । तस्माच्चैत्री स्यात् । स्यादेतदेवं यद्येकाष्टकाशब्दः सर्वत्र स्यात्, स च माघ्याः पौर्ण-मास्या उपरितने कृष्णपक्षे याऽष्टमी, तस्या एव वाचकः, वृद्धव्यवहारे प्रसिद्धेः । अन्यासु तु गौणः प्रयोगः । किं चोपक्रमे 'एकाष्टकायां दीक्षेरन्, एषा वै संवत्सरस्य पत्नी'ति तस्यां दीक्षामुक्त्वा, तत्र दोषमभिधाय, अन्ते 'चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन्' इत्युक्त्वा दीक्षातः प्रच्युतामेकाष्टकां क्रयसम्पत्त्याऽनुगृह्णाति तेषामेकाष्टकायां क्रयः सम्पद्यते, तेनैकाष्टकां न छंबट्कुर्वन्ती'ति । संवत्सरपत्नी च माघ्याः पौर्णमास्या उपरितन्येवाष्टमी, नान्याः । तद्विषयो हि मन्त्रः श्रूयते—

'याञ्जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥ इति ।

---

स्यामित्यर्थः । अतश्च द्वादशदिनपर्यन्तं दीक्षा तदुत्तरं त्रयोदशे दिनेऽष्टम्यां सोमक्रय इत्यर्थः । चैत्रीस्तुत्या विशेषमाशङ्क्याह-**चैत्रीति** । तथा च विकल्प इत्याशयः । अन्यत्रापि श्रौतप्रयोगान्न मुख्यगौणत्वावधारणमत आह **किञ्चेति** । **तत्र दोषमिति** । 'आर्त्तं वा एते संवत्सरस्याभि दीक्षन्ते यदेकाष्टकायां दीक्षन्ते' इति शीतार्ति-रूपदोषमभिधायेत्यर्थः । **न च्छंबडिति** न व्यर्थीकुर्वन्तीत्यर्थः । एतावताप्येकाष्टकाशब्दः कथं माघकृष्णाष्टमीपरस्तत्राह **संवत्सरेति** । । कुतस्तत्राह **तद्विषयो हीति** । तत्सा-ध्याष्टकाकर्माङ्गदेवताविषय इत्यर्थः । **आर्त्तमिति** शीतार्त्तियुक्तं यथा स्यात्तथेति क्रियाविशेषणम् । **तन्नामानौ** शिशिरनामकौ ऋतू इति द्विवचनमवयवमासाभि-प्रायम् । अत्रेत्थमेकवाक्यतया सकलवाक्यार्थः । संवत्सरपत्नीत्वेन तावदेकाष्टका

किं च 'आर्तं वा एते संवत्सरस्याभिदीक्षन्ते ये 'एकाष्टकायां दीक्षान्ते तन्नामानावृतू भवतः' इति शिशिरगतामष्टमीमेकाष्टकां दर्शयति। तस्मान्माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गावामयनिकी दीक्षेति ॥

इति गवामयने माघपौर्णमास्याः पुरस्ताद्दीक्षाविधानाधिकरणम् ॥ १० ॥

११

दीक्षा० दीक्षितस्याग्निहोत्रादयाः प्रतिषिद्धाः। अवभृथे कृते दीक्षातो मुक्तिः। तद्यदा केनचित्कारणेनावभृथोत्कर्षो भवति, तदा किमग्निहोत्रादि कर्त्तव्यम्, न वेति संशयः। तत्र 'दीक्षितो न ददाति न जुहोती'ति यावन्तं कालं शास्त्रवशेन दीक्षानुवृत्तिः, तावत् न जुहोतीति शास्त्रार्थं मत्वाऽवभृथोत्कर्षेण शास्त्रकृता दीक्षानुवृत्तिः। अतः कर्त्तव्यमग्निहोत्रादि मन्यते। तस्योत्तरम्—

न काललक्षणा{ं} प्रमाणमस्ति। दीक्षाया एव प्रतिषेधनिमित्तत्वोपपत्तेः। अतो येन केनापि हेतुना दीक्षाऽनुवर्तमाना प्रतिषेधमप्यनुवर्तयति। तस्मादकर्त्तव्यमग्निहोत्रादि प्रागवभृथात् ॥

इति दीक्षोत्कर्षे तन्नियमोत्कर्षाधिकरणम् ॥ ११ ॥

---

दीक्षायां प्रशस्ता परं त्वार्तत्वादिदोषात्ततश्चैत्री निर्दुष्टतया संवत्सरमुखतया च प्रशस्ता। ततोऽपि माघ्येकादशी प्रशस्ततरा। क्रयसम्पत्त्यैकाष्टकानुग्रहादिति ॥

इति गवामयने माघपौर्णमास्याः पुरस्ताद्दीक्षाविधानाधिकरणम् ॥ १० ॥

११

**दीक्षाकालस्य०** दीक्षाप्रसङ्गागतचिन्तोत्तरं दीक्षानिमित्तकधर्मचिन्ता पूर्वोक्ता क्रियत इत्यवसरसङ्गतिः। **प्रतिषिद्धा इति**। 'दीक्षितो न जुहोती'त्यादिवचनैरित्यर्थः। **अवभृथ इति**। तदङ्गमन्त्रे दीक्षाविमोचकत्वोक्तेरिति भावः। **उत्कर्ष इति**। सन्ध्यातः पूर्वं क्रियमाणस्य रात्रावनुष्ठानं इत्यर्थः। **मत्वेति**। 'अहरहर्द्द्यात्सायं जुहोती'ति काले प्रसक्तस्य तत्रैव प्रतिषेधौचित्याद्दीक्षया स्वकाललक्षणेति भावः। अहरहरिति वीप्सया जीवदधिकारावगमादग्निहोत्रेऽपि यावज्जीववाक्यैकवाक्यतया तदवगमाज्जीवति पुरुषेऽपि प्रसक्तेरतत्रैव निषेधसंभवान्न लक्षणा युक्तेति आह-**नेति** ॥

इति दीक्षोत्कर्षे तन्नियमोत्कर्षाधिकरणम् ॥ ११ ॥

१२

तत्र० अवभृथोत्कर्षकृता दीक्षानुवृत्तिः पुरुषापराधकृता, न विधिकृता। अतस्तत्काले पुरुषापराधकृतमग्निहोत्राननुष्ठानमिति प्रतिहोमः कर्तव्यः। नैवम्। यथा तथा वा तावदनुवृत्ता तावता चानधिकाराद्ग्निहोत्रमकर्तव्यम्। कर्तव्याकरणे च प्रतिहोमः। तस्मान्न प्रतिहोमः॥

इति दीक्षानुवृत्तौ प्रतिहोमनिराकरणाधिकरणम् ॥ १२ ॥

१३

प्रतिषेधा० कृतेऽवभृथे यद्युदवसानीयोत्कर्षो दैवाद्भवति, तदा किमग्निहोत्रं कर्तव्यम् अकरणे च प्रतिहोमः स्यात्? अथवा न कर्तव्यं प्रतिहोमश्च न कर्तव्यः? इति। तत्रावभृथस्य दीक्षोन्मोचनत्वात्तदुत्तरकालकर्तव्यमग्निहोत्रम्, अकरणे च प्रतिहोमः स्यात्।

सत्यम्, दीक्षा निवृत्ता, तथाऽपि'एतया पुनराधेयसंमितयेष्ट्वाऽ-

---

१२

तत्र० अग्निहोत्रवत्प्रतिहोमस्याप्यकरणमित्यातिदेशिकी सङ्गतिः। **अत इति।** दीक्षितो न जुहोतीति शास्त्रप्रवृत्तेर्दीक्षानुवृत्तिमूलत्वात्तस्याश्च पुरुषापराधमूलत्वात्स एवाग्निहोत्राननुष्ठानेऽपि मूलमित्यभिमानः। **प्रतिहोम इति।** अतिपन्नस्य होमस्य कालान्तरे प्रतिकृष्य करणं प्रतिहोमः। **तावता चेति।** दीक्षानुवृत्तिमात्रेण निषेधशास्त्रप्रवृत्तेस्तावता चानधिकारादकर्तव्यत्वमित्यर्थः। यथा पूर्वेषां शास्त्रीयदीक्षाकालान्तःपातिनामिति सूत्रैकदेशार्थः॥

इति दीक्षानुवृत्तौ प्रतिहोमनिराकरणाधिकरणम् ॥ १२ ॥

१३

**प्रतिषेधात्०** आतिदेशिकी सङ्गतिः। **तत्रेति।** 'एतये'ति वक्ष्यमाणवचनं तु कर्मान्तरविधिपरम्। अन्यथोदवसानीयोत्तरमेव न ततः प्रागिति दोषत्रयापादकपरिसंख्यापत्तेरित्याशयः। **तथापीति।** दीक्षितहोमानुवादेनेष्टिकर्तुरधिकारबोधकं वचनं

ग्निहोत्रं जुहोती'ति वचनेन कृतोदवसानीयस्याग्निहोत्राधिकारप्रतिपादनात् प्रागधिकाराभावादकर्तव्यमग्निहोत्रम् । अकृते च न प्रतिहोमः ॥

इत्युदवसानीयोत्कर्षेऽपि प्रतिहोमनिराकरणाधिकरणम् ॥ १३ ॥

१४

प्रतिहोम० कृत्वाचिन्तेयम् । यदि प्रतिहोमाः स्युः, कस्तेषां क्रम इति । युगपदुपस्थितानामनियमः । येनैव क्रमेणातिपन्नाः तेनैव कर्त्तव्याः । तेनाग्निष्टोमादिषु सायमग्निहोत्रप्रभृतयः प्रतिहोमाः, षोडशिनि प्रातःप्रभृतयः ॥

इति प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणम् ॥ १४ ॥

१५

प्रायश्चित्त० गतं प्रासङ्गिकम् । पुनः प्रायश्चित्ताधिकारमनुसन्धत्ते—दर्शपौर्णमासयोः श्रुतो 'भिन्ने जुहोती'ति होमः किं यत्र यत्र भेदः तत्र सर्वत्र स्यात् ? उत प्रकरण एव निविशत इति ? सन्देहे, वाक्येन

---

न कर्मान्तरविधायकनिषेध्यतया होमस्य सन्निधानादिति भावः । सूत्रे आ इष्टेरिति पदच्छेदः ॥

इत्युदवसानीयोत्कर्षेऽपि प्रतिहोमनिराकरणाधिकरणम् ॥ १३ ॥

१४

प्रतिहोमश्चेत्० प्रासङ्गिकी सङ्गतिः । युगपदिति । उपस्थितिक्रमे ह्यनुष्ठानक्रमः स्यान्नान्यथेत्यर्थः । अतिपन्नानामतिपत्तिक्रमेणैवोपस्थितेस्तेनैव क्रमेणानुष्ठानमित्याह येनैवेति । सायमिति । तेषामहन्येवावभृथसमाप्तेरिति भावः । षोडशिनि रात्राववभृथात्प्रातः क्रमेणेति ॥

इति प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणम् ॥ १४ ॥

१५

प्रायश्चित्तम्० साक्षात्पादसङ्गतिमाह गतमिति । प्रतिहोमवत्स्वतंत्रनिमित्ताधिकारशङ्कोत्थानादनन्तरसङ्गतिर्ज्ञेया । सर्वत्र अग्निहोत्रादिष्वपीत्यर्थः । शेषि-

यावन्निमित्तं नैमित्तिकमवगम्यमानमशक्यं प्रकरणेन प्रकृतेऽवस्थापयितुम्। तस्मात्सर्वत्र स्यादिति मन्वानस्योत्तरम्। नैमित्तिकस्यापि तावदवश्यं फलेन भवितव्यम्, तदभावे विध्ययोगात्। तत्राप्रीतफलकल्पनात् प्रकृतैकवाक्यतैव बलीयसीति तत्रैव निवेशः॥

इति भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गताधिकरणम्॥ १५॥

१६

व्यापन्नस्या० 'व्यापन्नमप्सु परिहरती'ति श्रूयते। तत्र व्यापन्न-शब्देन किमुच्यत इति प्रश्नेनैवोपक्रमः। तत्रोत्तरम्—यदार्याणामभोज्यं केशकीटावपन्नादि तद् व्यापन्नं प्रतीयेत॥

इति व्यापन्नशब्दार्थनिर्णयाधिकरणम्॥ १६॥

१७

विभाग० ज्योतिष्टोमे बहिष्पवमानं सर्पतां 'यदि प्रस्तोताऽप-

---

रूपोद्देश्ये आनर्थक्यपरिहारायापूर्वसाधनत्वलक्षणावन्निमित्ते तदभावेऽपि नैमित्तकस्य फलकल्पनागौरवपरिहारार्थे प्रकृतक्रत्वङ्गत्वात्तदनुरोधेनार्थान्निमित्तसंकोच इत्याह-**नैमित्तिकस्यापीति**। दर्शपूर्णमासाधिकारे श्रुतं प्रायश्चित्तं सर्वत्र स्याद्दोषतौल्यादिति सूत्रार्थः॥

इति भेदनहोमस्य नैमित्तिकस्य दर्शपूर्णमासाङ्गताधिकरणम्॥ १५॥

१६

**व्यापन्नस्य०**। **प्रश्नेनेति** प्रश्नमूलः सूत्रारम्भ इत्यर्थः। अप्सुगतौ प्रहरण-वाक्ये इति सूत्रार्थः।

इति व्यापन्नशब्दार्थनिर्णयाधिकरणम्॥ १६॥

१७

**विभागश्रुतेः०** भेदनप्रायश्चित्तवदिहापि सङ्कोचशङ्कोत्थानात्सङ्गतिः। **बहिष्प-वमानं** तत्प्रदेशम्। **सर्पताम्** गच्छताम् उद्गातृप्रतिहर्तृप्रस्तोतॄणां मध्ये। तत्र

च्छिन्द्यात्, ब्रह्मणे वरं दद्यात् यदि प्रतिहर्त्ताऽपच्छिन्द्यात् सर्ववेदसं दद्यात्, यद्युद्गाताऽपच्छिन्द्यात् अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत । तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन्स्यादिति । तद् यद्युद्गातृप्रतिहर्त्त्रोरपच्छेदो युगपद्भवति, तदा किं प्रायश्चित्तं कर्तव्यम्? न वेति? संशयः । तत्रो-भाभ्यां क्रियमाणोऽपच्छेदो नैकेन व्यपदेष्टुं शक्यते । तस्माद्यौगपद्ये निमित्तविघातात् प्रायश्चित्तं न कर्त्तव्यम् ।

स्यादेवं यदि कर्तृत्वं सापेक्षमुभयोर्भवेत् ।
एकैकस्य तु यत्नेन निरपेक्षेण जायते ॥
विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः ।
कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥

इत्यपच्छेदयौगपद्ये प्रायश्चित्तानुष्ठानाधिकरणम् ॥ १७ ॥

१८

तत्र० यौगपद्ये प्रायश्चित्तद्वयमापतति । तत्किं समुच्चीयते? अथ विकल्पः? इति विचारः । तत्र विकल्पस्यान्याय्यत्वात् 'तेन पुनर्यजेते'ति

---

चाग्रे उद्गाता तत्पश्चात्तत्कच्छधारी प्रतिहर्ता तत्कच्छधारी प्रस्तोतेति । अपच्छेदो विभागः । स यत्क्रियया भवति तत्कर्तृकत्वेन व्यवह्रियत इति ज्ञेयम् । **सर्ववेदसम्** सर्वस्वम् । **युगपदिति** उभयक्रियाजन्य इत्यर्थः । **उभाभ्यामिति** । यत्क्रियया विभागस्तस्य तत्र कर्तृत्वमिह तूभयक्रियाजन्येनैकैकस्य निरपेक्षं कर्तृत्वमिति निमित्तविरह इत्यर्थः । **स्यादेवमिति** । अपच्छेदानुकूलक्रियाजनकयत्नाश्रयत्वं हि तत्कर्तृत्वम् । यत्नश्च यत्नान्तरनिरपेक्ष एव क्रियाहेतुरिति द्वयोरपि निरपेक्षमेव कर्तृत्वमित्यर्थः । ननूभयनिष्ठैकैव क्रियेति तज्जनकयत्नोऽपि यत्नान्तरापेक्ष एवेत्याशङ्क्याह—**कालमात्रन्त्विति** । क्रिया तु भिन्नैव । तस्या एकद्रव्याश्रितस्वभावत्वादिति भावः । केचित्तु विभागभेदाभिप्रायेण व्याचक्षते । एकैककर्तृकविभागस्य निमित्तत्वश्रुतेरिति सूत्रार्थः ॥

**इत्यपच्छेदयौगपद्ये प्रायश्चित्तानुष्ठानाधिकरणम् ॥ १७ ॥**

१८

तत्र० उपजीवकत्वसङ्गतिं सूचयति-**यौगपद्य** इति । **तेन पुनरिति** । प्रयोग-

प्रयोगद्वयसम्भवात्। पूर्वस्मिन्नदाक्षिण्यम, उत्तरस्मिन् सर्ववेदसमित्युभयसम्भवात्समुच्चयः।

नैतदेवम्। यत्र हि प्रयोगे निमित्तम्, तस्यैव नैमित्तिकं प्रायश्चित्तमङ्गम्, न प्रयोगान्तरे क्रियमाणेन प्रायश्चित्तेन निमित्तवतः प्रयोगस्य साद्गुण्यं भवति। तस्मादेकस्मिन्नेव प्रयोगे द्वयमापतति, तदशक्यं समुच्चेतुमिति विकल्पः॥

इत्यपच्छेदयौगपद्ये प्रायश्चित्तविकल्पाधिकरणम्॥ १८॥

१९

पौर्वापर्ये॰ यत्रानुपूर्व्येणोद्गातृ-प्रतिहर्त्रोरपच्छेदो भवति, तदा किं पूर्वोत्पन्ननिमित्ते प्रायश्चित्तं कार्यम्? उतोत्तरनिमित्तमिति? संशयः। तत्र पूर्वनिमित्तमसञ्जातविरोधं निर्विघ्नमवगम्यते तद्विरुद्धत्वादशक्यमवगन्तुमुत्तरम्। अतः पूर्वबलीयस्त्वम्, विकल्पो वा। एवं प्राप्ते—

अभिधीयते—नात्र पूर्वेणोत्तरस्य ज्ञानस्योत्पत्तिः शक्यते निरोद्धुम्, प्रत्यक्षेण वाक्येन तदवश्यमुत्पद्यत एव। तच्चोपजायमानं स्वविरुद्धं पूर्वज्ञानं बाधमानमेवोत्पद्यते, तेनोत्पन्नमपि पूर्वप्रायश्चित्तज्ञानं

---

भेदेऽपि कर्मैक्यात्प्रयोगान्तरे क्रियमाणेनाप्युपकारोपपत्तिरित्याशयः। **यत्र हीति**। निमित्तस्य प्रयुज्यमानकर्मसम्बन्धितया नैमित्तिकानुष्ठापकत्वात्तत्प्रयोगोपकारकत्वावगमेन न प्रयोगान्तरसमावेश इत्यर्थः॥

**इत्यपच्छेदयौगपद्ये प्रायश्चित्तविकल्पाधिकरणम्**॥ १८॥

१९

**पौर्वापर्ये॰** विकल्पापवादात्सङ्गतिः। **आनुपूर्व्येण** क्रमेण। **उत्पद्यत एवेति**। निरपेक्षत्वान्निर्दुष्टत्वाच्चेति भावः। **बाधमानमेवेति**। विरुद्धयोरेकत्र समावेशायोगादिति भावः। नन्वुत्पन्नस्य कथं बाधस्तत्राह-**तेनेति**। मिथ्यात्वग्रहेण विषयापहाराद्

मिथ्या भवति, बाधितत्वात् । उत्तरस्य तु न किञ्चिद्बाधकमस्ति । न हि पूर्वविज्ञानमुत्तरबाधेनोत्पद्यते, तस्यामवस्थायामुत्तरस्यानुपजातत्वात् । जाते तूत्तरविज्ञाने जायमानेनैव तेन बाधितं पूर्वविज्ञानमसत्त्वात् नोत्तरं बाधितुं क्षमते । तस्मात्पूर्वदौर्बल्यम् ।

नैमित्तिकशास्त्राणां ह्ययमर्थः—निमित्तोपजननात् प्रागन्यथाकर्तव्योऽपि क्रतुर्निमित्ते सति अन्यथा कर्तव्य इति । ततश्च यथा नित्यं द्वादशशतज्ञानमुत्पन्नं पाश्चात्येनैव नैमित्तिकेन सर्ववेदसदानादिज्ञानेन बाध्यते, तथा नैमित्तिकमपि पूर्वनिविष्टमुत्तरेण बाध्यते ॥

इत्यपच्छेदाधिकरणम् ॥ १९ ॥

२०

यद्युद्गाता० पौर्वापर्ये जघन्यनिमित्तं प्रायश्चित्तमिति स्थितम् । तद्यद्युद्गाता जघन्यो भवति, किं पुनर्यज्ञे सर्ववेदसं देयम् ? उत द्वादशशतमिति ? संशयः । तत्र 'यत्पूर्वस्मिन् दास्यन् स्यादि'ति यदेव क्रतुस्वभावतो देयं तदेव प्रतीयते । तच्च द्वादशशतम् । तस्मात्तदेव पुनः प्रयोगे

---

बाध इत्यर्थः । उत्तरत्रैव कुतो न मिथ्यात्वग्रहस्तत्राह **उत्तरस्य त्विति** । **जायमानेनैवेति** । पूर्वत्र मिथ्यात्वग्रहपूर्वकमेवोत्पद्यमानेनेत्यर्थः । **असत्त्वात्** गृहीताप्रामाण्यकत्वेनासत्प्रायत्वात् । ननूत्तरस्य प्रत्यक्षशास्त्रादुत्पत्तावपि पूर्वबाधेन तस्यां किं मानमत आह-**नैमित्तिकेति** । **अन्यथा** पूर्वावगतपदार्थाभाववान् । तथा च पूर्वावगतविरुद्धत्वेन नैमित्तिकावगमाद्विरुद्धत्वस्य च तदभावव्याप्यतारूपत्वात्पूर्वाभावमविषयीकृत्यापर्यवसानात्पूर्वबाधकत्वमिति भावः । यद्यपि दृष्टान्ते सावकाशनिरवकाशत्वमधिकमस्ति तथाप्यत्र तदभावेऽपि परत्वमविशिष्टमित्यभिप्रायः । **प्रकृतिवत्** प्राकृतकुशादेर्यथा वैकृतशराद्यपेक्षयेति सूत्रार्थः ॥

इत्यपच्छेदाधिकरणम् ॥ १९ ॥

२०

**यद्युद्गाता०** उपजीवकत्वसङ्गतिसूचनायाह-**पौर्वापर्य** इति । **जघन्यम्** अन्त्यम् । भवतीत्यनन्तरं तदेति शेषः । **क्रतुस्वभावतः** क्रतुस्वरूपमात्रप्रयुक्तम् ।

देयमित्येकः पूर्वपक्षः । पूर्वस्मिन् प्रयोगे प्रथमं द्वादशशतं दास्यन्नासीत्, प्रतिहर्तरि त्वपच्छिन्ने सर्ववेदसम् । अत उभयमपि पुनः प्रयोगे 'यत् पूर्वस्मिन् दास्यन् स्यादि'ति शक्यं वक्तुम् । तस्माद्विकल्प इति द्वितीयः ।

सिद्धान्तस्तु द्वादशशतं सर्ववेदसेन बाधितम् । अतो न तद्दास्यन् भवति सर्ववेदसमेव तु दास्यन् भवति । तस्मात्तदेव पुनः प्रयोगे स्यात् । ननु तदप्यदाक्षिण्येन बाधितम्, नेति ब्रूमः । न ह्युद्गात्रपच्छेदेन पूर्वदक्षिणा बाध्यते । किं तर्हि ? पूर्वस्मिन् प्रयोगे दातव्या सती दक्षिणा तत उत्कृष्य उत्तरस्मिन् प्रयोगे निक्षिप्यते, पूर्वप्रयोगे चोद्गात्रपच्छेदवेलायां द्वादशशतं बाधित्वा सर्ववेदसमेव दातव्यमासीत् । अतस्तदेव पुनः प्रयोगे देयम् ॥

इत्युद्गातुरुत्तरापच्छेदे सर्वस्वदक्षिणादानाधिकरणम् ॥ २० ॥

२१

अहर्गणे॰ द्वादशाहादिष्वहर्गणेषु यदा कस्मिंश्चिदहन्युद्गात्रपच्छे-

---

निमित्तनिरपेक्षत्वादिति भावः । विकल्पपक्षमाह-**पूर्वस्मिन्निति** । पूर्वप्रयोगे देयत्वेन प्रसक्तत्वस्योभयत्र साम्यान्न शब्दसङ्कोचो युक्त इत्यर्थः । **बाधितमिति** । यच्छब्देनोद्गात्रपच्छेदाव्यवहितस्य देयतया प्रसक्तस्य सर्वस्वस्याभिधानं न तु तद्बाधितस्य द्वादशशतस्य प्रसक्त्यभावादिति भावः । दास्यन्नित्यस्याबाधितदेयपरत्वे सर्वस्वस्याप्युपादानं न स्यादिति शङ्कते-**नन्विति** । बाधाभावं विवृणोति-**न हीति** । अदक्षिणं यज्ञमिष्ट्वेत्यस्यानुवादत्वादिति भावः । 'तेन पुनर्यजेतेति' पुनः प्रयोगः उत्कृष्टपूर्वदक्षिणाविशिष्टो विधीयत इत्यर्थप्राप्तं पूर्वप्रयोगे अदाक्षिण्यमित्याह-**किं तर्हीति** । ननु क्रतावबाधेऽपि पूर्वप्रयोगे सर्वस्वदक्षिणाया बाध एवेत्याशंक्याह-**पूर्वप्रयोगे चेति** । **वेलायाम्** नैमित्तिकोत्कर्षविधेः पूर्वमिति शेषः । एवञ्चोत्कर्षविधेः पूर्वमबाधितं सर्वस्वमेवेति तदेवोत्कृष्यते नान्यदिति भावः । यथेतरस्मिन् पूर्वप्रयोग इति सूत्रार्थः ॥

इत्युद्गातुरुत्तरापच्छेदे सर्वस्वदक्षिणादानाधिकरणम् ॥ २० ॥

२१

**अहर्गणे॰** दक्षिणापुनःप्रयोगयोरेकविधिविधेयतया बुद्धिस्थपुनःप्रयोगविशेष-

दो भवति, तदा किं कृत्स्नस्याहर्गणस्यावृत्तिः ? उत तदेवाहरावर्तते ? इति संशये, साधननिवेशित्वाद् धर्माणां गणस्य च साधनत्वात् तस्यैवादक्षिणस्य संस्थापनम्, पुनः प्रयोगश्चेति प्राप्ते, अभिधीयते—

अशाब्दत्वात् समूहस्य न फलं प्रति चोदना ।
यागस्य चोदना तत्र यागाः प्रत्येकमेव ते ॥
अतो मिथोऽनपेक्षास्ते यागाः स्वाङ्गसमन्विताः ।
फलं संहत्य कुर्वन्ति स्वापूर्वद्वारमाश्रिताः ॥
तेन यस्मिन्नपच्छेदस्तदावृत्तिगुणान्वितः ।
अनावृत्तिगुणैरन्यैः संहत्य कुरुते फलम् ॥

इत्यहर्गणेऽपच्छेदे सर्वावृत्तिनिराकरणाधिकरणम् ॥ २१ ॥

इति शास्त्रदीपिकायां षष्ठस्य पञ्चमः पादः ॥ ५ ॥



---

चिन्तनात्सङ्गतिः । **गणस्य चेति** । 'द्वादशाहेन प्रजाकाममि'त्यत्र द्वादशाहपदेन गणाभिधानादिति भावः । **अशाब्दत्वादिति** । यजिसामानाधिकरण्यस्य द्वादशाहपदस्य समूहियागवाचकत्वादिति भावः । ननु यागत्वं समुदायव्यासक्तमित्याशंङ्कां निवारयति **यागा इति** । अथवा यागाः प्रत्येकमेव ते करणमिति शेषः । अतः प्रत्येकं साधनत्वात् **अनपेक्षाः** सन्तः स्वाङ्गैः समन्विता इत्यर्थः । अङ्गविधावुद्देश्यानां साहित्याविवक्षणादिति भावः । तर्हि प्रत्येकं फलोत्पादकत्वापत्तिरत आह-**फलमिति** । फलं प्रत्युपादेयानामेकपदोपादानावगतसाहित्यस्य विवक्षितत्वादिति भावः । [1]**तदिति** तदहरित्यर्थः ।

इत्यहर्गणेऽपच्छेदे सर्वावृत्तिनिराकरणाधिकरणम् ॥ २१ ॥

इति श्रीमद्विद्वन्मान्यतत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां षष्ठस्य पञ्चमः पादः ॥ ५ ॥



---

१. सूत्रस्थतत्पदग्रहणम् ।

## अथ षष्ठाध्याये षष्ठः पादः ।

१

सन्निपाते॰ दर्शपूर्णमासयोः पुरुषभेदेन कल्पभेदः समाम्नातः- 'राजन्यवासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषामि' त्यादिः । स दीक्षणीयादिष्वतिदिष्टः सत्रेष्वनेककर्तृकेषु प्राप्तः । तत्र सन्दिह्यते- किं भिन्नकल्पा अपि संहत्य सत्रमासीरन्? उत तुल्यकल्पा एवेति ? तदर्थ- मिदं विचार्यते-किं वासिष्ठादयो नाराशंसाद्यङ्गत्वेन कर्तारो विधीयन्ते ? उत वासिष्ठानुद्दिश्य नाराशंसादि तादर्थ्येन विधीयते ? इति । तत्र वासिष्ठार्थत्वेन विधाने फलकल्पनात्प्रकरणबाधाच्च वासिष्ठादय एव नाराशंसाद्यङ्गत्वेन विधीयन्ते । षष्ठी च सम्बन्धवाचिनी । सत्रेषु च सत्रिणां प्रत्येकमेव कर्तृत्वमिति स्थितम् । अतस्तत्र वासिष्ठावासिष्ठैः क्रियमाणो नाराशंसो वासिष्ठेनापि तावत् क्रियत एवेत्यविगुणः । तथा तनूनपादन्यैरपि । अतो यं कञ्चित्कल्पमाश्रित्य भिन्नकल्पा अप्यधिक्रियेरन् इत्येवं प्राप्ते—

ब्रूमः—वासिष्ठादीन् स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादि विधीयते, तादर्थ्ये च क्रतूपकारद्वारेणाऽप्युपपन्नमिति न फलकल्पनापत्तिः ।

---

## षष्ठः पादः

१

सन्निपाते॰ पूर्वपादेषु प्राधान्येन प्रकृत्यधिकारचिन्तनमिह तु विकृत्यधिकारचिन्तेति पादान्तरत्वमानन्तर्यं च बोध्यम् । कल्पेति । पक्षव्यवस्थेत्यर्थः । द्वितीयप्रयाजसन्निधौ नाराशंसतनूनपान्मन्त्रयोः शाखाभेदेनाम्नानात्तयोर्व्यवस्था वासिष्ठादिवाक्येन क्रियते । कर्तार इति । यद्यपि नाराशंसमन्त्रे होत्रे वैश्वामित्रविधानान्न साक्षात्कर्तृत्वं वासिष्ठस्य तथापि यजमानतया प्रयोजककर्तृत्वं बोध्यम् । तादर्थ्येन वासिष्ठाद्यर्थत्वेन । षष्ठ्या स्वामित्वार्थकत्वमाशङ्क्याह-षष्ठी चेति । सम्बन्धः कर्तृत्वरूपः । क्रतूपकारेति । वासिष्ठा- र्थत्वं न तद्गतफलसाधनतया किन्तु तत्फलसाधनक्रतूपकारितयेत्यर्थः । ननूभयथा

एवञ्च धात्वर्थस्यान्यत्र विधानात्सन्निकृष्टविधिर्भवति । प्रयाजोद्देशेन तु वासिष्ठादिविधौ धात्वर्थेऽन्यस्य विधानाद्विप्रकृष्टार्थविधानं स्यात् । अतः सत्रेऽन्यतरकल्पाश्रयणे अन्येषां तेन क्रतूपकारालाभाद्विगुणः क्रतुर्न फलं साधयेत् । तस्मात्तुल्यकल्पानामेवाधिकारः ॥

इति सत्रे तुल्यकल्पानामधिकाराधिकरणम् ॥ १ ॥

२

वचनात्तु० 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामि' त्यत्र संशयः—किमयं षष्ठीतत्पुरुषैकशेषः—राज्ञः पुरोहितो राजपुरोहितः राजपुरोहितश्च राजपुरोहितश्च राजपुरोहिताविति ? ततश्च राजद्वयसम्बन्धिनोर्द्वयोः पुरोहितयोरधिकारः ? उत कृतैकशेषेणोत्तरपदेन तत्पुरुषो राज्ञः पुरोहितौ राजपुरोहिताविति । ततश्चैकराजसम्बन्धिनोर्द्वयोरधिकारः ? उत कर्मधारयः ? राजात्मकौ पुरोहिताविति । अथवा द्वन्द्वः राजा च पुरोहितश्चेति ? तत्र युगपदधिकरणे द्वन्द्वः । तेन पदद्वयमपि लक्षणावृत्ति स्यात् । अतस्तत्पुरुषोऽयम् । समासादुत्पन्नं द्विवचनं तदर्थस्यैव द्वित्व-

---

वाक्यार्थोपपत्तौ किं विनिगमकं तत्राह-एवञ्चेति । वासिष्ठार्थत्वेन नाराशंसविधौ चेत्यर्थः । यद्यप्यत्र धातुरेव न श्रुतस्तथाऽप्यवश्यकल्पनीयविधिप्रत्ययस्य प्रकृतिभूतधातुं विनानुपपत्तेर्नाराशंसं द्वितीयं प्रयजेदिति वाक्यपर्यवसानादुक्तार्थोपपत्तिः । एवं कार्य इत्यध्याहारेऽपि सामान्यवाचकस्य कृञः प्रयाज एव पर्यवसानान्नानुपपत्तिरिति बोध्यम् ॥

इति सत्रे तुल्यकल्पानामधिकाराधिकरणम् ॥ १ ॥

२

वचनात्तु० आपवादिकी सङ्गतिः । एतेनेति । कुलायाख्येनाहीनेनेत्यर्थः । सायुज्यं नामैकराज्यसम्बन्धित्वमैहिकं फलम् । युगपदिति । एकैकेन पदेन युगपत् अधिकरणे अभिधेयेऽर्थे द्वन्द्व [१]इत्यर्थः । अन्यथा परस्परान्वयसामर्थ्याभावेन समासानु-

---

१. 'आधानञ्च द्वियज्ञवत्' इत्यधिकरणे तन्त्ररत्ने विषयोऽयं निरूपितः ।

माह। तस्माद् राजद्वयसम्बन्धिनौ द्वौ। यद्वा पुरोहितपदाद् द्विवचनं तदर्थस्यैव द्वित्वमाह—राजपुरोहितौ द्वाविति। एतस्मिंस्तु पक्षद्वये पूर्वपदं लक्षणावृत्ति स्यात्।

किञ्च नैकस्य राज्ञः पुरोहितद्वयमस्ति। 'पुरोहितं वृणीते' इत्युपादीयमानस्यैकत्वस्य विवक्षितत्वात्। प्रथमपक्षे राजपदमनर्थकम्। राज्ञ एव पुरोहितोऽस्ति, नान्यस्य। अतोऽव्यभिचारादविशेषणं सदनर्थकं राजपदं स्यात्। अतः कर्मधारयोऽस्तु। सोऽपि न, राज्ञः पुरोहितत्वाभावात्। ब्राह्मण एव पुरोहितत्वेन वरीतव्य इति श्रूयते। तस्माद् द्वन्द्व एवायम्। न च तत्र कस्यचिल्लक्षणा, 'युगपदधिकरणे द्वन्द्वः' इत्यस्यापवादादित्युक्तं तन्त्ररत्ने। तस्माद् राज्ञः पुरोहितस्य चात्र भिन्नकल्पयोरेव सतोर्वचनाधिकारः॥

इति कुलाययज्ञे भिन्नकल्पयोरप्यधिकाराधिकरणम्॥ २॥

---

पपत्तेरिति भावः। तदर्थस्यैवेति। समासार्थस्य राजसम्बन्धिपुरुषस्यैवेत्यर्थः। पुरोहितपदादिति। समासाद्द्विवचनेऽप्यव्यवहितपुरोहितपदैकशेषमात्रेणोपपत्तौ न समुदायैकशेषकल्पनं युक्तमिति भावः।

यद्वेति पक्षं दूषयति—किञ्चेति। यद्यपि वरणे संस्कार्यतयोद्देश्यत्वं तथापि वृतेन पुरोहितेनेष्टं भावयेदिति विनियोगविधावुपादेयत्वादुपस्थितैकत्वं तत्र विवक्षितमिति भावः। प्रथमेति। द्वितीये त्वेकसम्बन्धित्वबोधाय तत्सार्थक्यमिति भावः। अपवादादिति सेयं युगपदधिकरणता दुःखा दुरूपपादा चेति महाभाष्य एव निरासादित्यर्थः। भिन्नकल्पयोरेवेति। यद्यपि नाराशंससमानकल्पस्य पुरोहितस्यास्ति सम्भवस्तथापि [1]सोमफलचमसादिभिन्नकल्पताया आवश्यकत्वमिति भावः। सूत्रं तु वचनादेकस्य राज्ञो द्विसंयोगः पुरोहितद्वयसम्बन्धः। तस्माद्वचनादेव हि एकस्य पुंसः अञ्जलिहोमे सव्यापसव्ययोः पाणिकार्यकरत्वमिति द्वितीयपूर्वपक्षार्थकम्॥

इति कुलाययज्ञे भिन्नकल्पयोरप्यधिकाराधिकरणम्॥ २॥

---

१. हविष्कृदाह्वाने 'हविष्कृदेही'ति ब्राह्मणकल्पे 'हविष्कृदागहि' इति राजन्यकल्पे, सोमयागे सोमरसभक्षणं ब्राह्मणस्य फलचमसभक्षणं राजन्यस्येति भिन्नकल्पत्वम्। फलचमसं नाम न्यग्रोधस्तिभिनीराहाय तास्सम्पिष्य तस्मै भक्षं प्रयच्छेदिति विहितम्, तस्य भक्षणम्।

३

सत्राणि० सत्रेषु किं त्रयाणामपि वर्णानामधिकारः ? उत ब्राह्मणस्यैव ? इति विचारः। तदर्थं किं 'ये यजमानाः त ऋत्विजः' इत्यनेनार्त्विज्यं यजमानसंस्कारत्वेन विधीयते ? उत यजमाना आर्त्विज्याङ्गत्वेन ? इति चिन्त्यते।

सत्राणि सर्ववर्णानां भवेयुरविशेषतः।
ऋद्धिकामादिवाक्येषु विशेषः श्रूयते न हि॥
प्राप्तेषु त्रिषु वर्णेषु यच्छब्देनोपबन्धनात्।
संस्कारार्थतया तेषामार्त्विज्यमुपयुज्यते॥

प्रधानभूतैरेव च तैः क्रियमाणमार्त्विज्यं न गुणभूतानध्वर्यून् कर्तॄनपेक्षते। गुणभूतकर्तृ-परिच्छेदेन ब्राह्मण्यमार्त्विज्याङ्गं तदभावे तदपि द्वाराभावान्न सत्रे प्राप्नोति। तस्मात् त्रयाणामधिकार इति प्राप्ते ब्रूमः—

नार्त्विज्यं यजमानानां संस्कारत्वेन चोद्यते।
तथा ह्यप्राकृतं कार्यमार्त्विज्यस्य प्रसज्यते॥
तेन यच्छब्दयोगेऽपि नोद्देशः स्वामिनामिह।
आर्त्विज्यमेव तूद्दिश्य यजमानविधिर्भवेत्॥

---

३

**सत्राणि**। अत्राप्यापवादिकी सङ्गतिः, भिन्नकल्पनिरासात्। उत्तरोपोद्घातत्वमपि ज्ञेयम्। **यच्छब्देनेति** प्राथम्यस्याप्युपलक्षणम्। ऋत्विजां कर्मार्त्विज्यम्। तत्कर्तृकाः पदार्था इत्यर्थः। ननु प्रकृतितो ब्राह्मणकर्तृकत्वस्यार्त्विज्ये प्राप्तेर्यजमानसंस्कारत्वेऽपि न राजन्यादिप्राप्तिरत आह—**प्रधानेति**। प्रकृतौ ब्राह्मण्यस्य गुणभूतकर्तृपरिच्छेदेनाङ्गत्वादिह च प्रयोजनाभावेनाप्राकृतकार्यत्वेन च गुणभूतकर्तृद्वारस्याभावान्न तत्प्राप्तिरित्यर्थः। **स्वामिनाम्** यजमानानाम्। **आर्त्विज्यमेव त्विति**। अनुवादे लक्षणाया युक्तत्वादिति

प्रकृतितश्च द्वौ धर्मावार्त्विज्याङ्गत्वेन प्राप्तौ—अन्यकर्तृकता ब्राह्मणकर्तृकता च। तत्राऽन्यकर्तृकता 'ये यजमानाः त ऋत्विजः' इत्यनेन बाधिता। ब्राह्मणकर्तृकतायास्तु न किञ्चिद् बाधकमस्ति। ऋद्धिकामादिशब्दानां ब्राह्मणत्वाविरोधात्। तस्मात्प्रकृतितः प्राप्तं ब्राह्मणकर्तृकत्वं वाचनिकं च यजमानकर्तृकत्वमुभयं सम्पादयितुं ब्राह्मणा एव सत्राण्यासीरन्निति ॥

इति सत्रे ब्राह्मणाधिकाराधिकरणम् ॥ ३ ॥

४

वासिष्ठानां० ब्राह्मणानामपि किं सर्वेषामधिकारः? उत वासिष्ठानां तत्समानकल्पानां च? अथवा वैश्वामित्राणां तत्समानकल्पानाञ्च? इति संशयः। तत्राविशेषात्सर्वेषाम्। 'वासिष्ठो ब्रह्मे'ति प्रकृतौ वचनात् ब्रह्मत्वस्यावैगुण्यायाऽवश्यं वासिष्ठेन भवितव्यम्। अतस्तत्समानकल्पानामधिकारः।

य एव कश्चित्तस्तोमभागमधीते, स एव वासिष्ठ इति, अवासिष्ठ-

---

भावः। अन्येति। यजमानभिन्नेत्यर्थः। ऋद्धीति। ब्राह्मणविषयतया चरितार्थस्य ऋद्धिकामपदस्य नातिदेशबाधकता युक्तेत्यर्थः ॥

इति सत्रे ब्राह्मणाधिकाराधिकरणम् ॥ ३ ॥

४

वासिष्ठानाम्० पूर्वत्रैव विशेषविचारात्सङ्गतिरिति सूचनायाह—ब्राह्मणानामपीति। अविशेषादिति। प्रकृतौ 'वाशिष्ठो ब्रह्मा वैश्वामित्रो होते'ति वचनाविशेषात्सर्वेषां वासिष्ठतत्समकल्पनाञ्च विकल्पेनाधिकार इत्यर्थः। सूत्रोक्तमापाततो द्वितीयपक्षमाह वासिष्ठ इति।

सिद्धान्तमाह–य एवेति। एतदर्थवादवशेन विधिगतवासिष्ठपदस्य श्येनपद-

स्यापि स्तोमभागविदो ब्रह्मत्वस्यानुज्ञानान्नावश्यम्भावी वासिष्ठः। 'विश्वामित्रो होते'तिवचनात् हौत्रमवश्यं वैश्वामित्रेणैव कर्त्तव्यम्। न च भिन्नकल्पनामधिकारः अस्तीति स्थितमाद्ये। तस्माद्वैश्वामित्रस्य तत्समानकल्पानाञ्च सत्रेऽधिकारः॥

इति वैश्वामित्र-तत्समानकल्पानामधिकाराधिकरणम्॥ ४॥

५

विहारस्य० किमनाहिताग्नीनामपि सत्राधिकारः? उताहिताग्नीनामेव? इति संशयः।

तत्राग्नीनां परार्थत्वाद्यस्य कस्य चिदग्निषु।
साधितं कर्म सर्वेषां फलं साधयति ध्रुवम्॥

औदुम्बरीव येन केनचिद्यजमानेन संमिता। तस्माद्येन केनचिदाहिताग्निना संहत्याऽनाहिताग्नयोऽप्यासीरन्। नैवम्—

इष्टिपूर्वकता सोमविकाराणामवस्थिता।
इष्टौ चानाहिताग्नीनां न कथञ्चिदधिक्रिया॥

---

वल्लक्षणया 'रश्मिरसी'त्यादिमन्त्ररूपस्तोमभागाध्येतृपरत्वेन तस्यैव ब्रह्मत्वस्यानु पश्चात् ज्ञानान्मुख्यवासिष्ठनियमाभाव इत्यर्थः। भाष्ये तु 'य एव कश्चित्स्तोमभागानधीयीत स एव ब्रह्मा भवेदि'ति विधिवाक्यमुदाहृतम्। वासिष्ठो ब्रह्मेति च तदर्थवाद इत्युक्तम्॥

इति वैश्वामित्रतत्समानकल्पानामधिकाराधिकरणम्॥ ४॥

५

विहारस्य०। प्रासङ्गिकी सङ्गतिः। परार्थत्वादिति। क्रत्वर्थत्वादित्यर्थः। यजमानसंस्कारार्थत्वे हि सर्वेषां संस्कारसिध्यर्थं तदपेक्षा स्यान्नतु तदस्तीति भावः। इष्टिपूर्वकतेति। एतच्चाग्निष्टोमपूर्वकत्वस्याप्युपलक्षणम्। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यनेनेष्टिपूर्वकत्वतत्समानकर्तृकत्वयोरङ्गत्वावगमादनाहिताग्नेर्न तत्सम्भव इत्यर्थः। नन्विष्टिपूर्वकत्वतत्समानकर्तृकत्वयोर्यत्किञ्चिदाहिताग्निनाप्युपपत्तेर्न सर्वे-

आधातुरग्नयः कार्यं नान्येषां साधयन्ति च ।
उपग्रहविशेषेण क्रतुरेव फलान्वयात् ॥

'आदधीते'त्यात्मनेपदादाधातुरेवाधानफलेन भवितव्यम्, कर्मयोग्यता चाग्नीनां फलम् । अतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति । तस्मादनाहिताग्नीनामनधिकारः । 'यजमानसंमितौदुम्बरी'ति तु शास्त्रार्थो येन केनचिदपि प्रकृतप्रयोगगतेन यजमानेन सम्पाद्यत इति वैषम्यम् ॥

इत्याहिताग्नेरेवाधिकाराधिकरणम् ॥ ५ ॥

६

जुह्वादी० जुह्वादिपात्रेषु चिन्ता । तत्कि यस्य कस्यचित्पात्रैः सत्रं प्रयोक्तव्यम् ? उतान्यानि साधारणानि उत्पाद्यानीति ? तत्राग्निवदुपग्रहविशेषविरोधाभावात् यस्य कस्यचित्पात्राणि भवेयुः । सत्यम् । अयं विरोधो नास्ति, किन्त्वाहिताग्निमग्निभिर्दहन्ति, यज्ञपात्रैश्च दहन्ती'ति, तथा 'दक्षिणे हस्ते जुहूमासादयेदि'त्यादिवचनैः पात्राणां दाहे गुणभावः, सादनप्रतिपत्तिश्च विधीयते । तद्यदि कस्यचित्पात्रैरुपक्रान्ते प्रयोगे, तस्य यजमानस्य दिष्टगतिः स्यात् ततस्तस्य संस्कारः, पात्राणां च प्रतिपत्तिर्हीयेत । यदि तु तैर्दह्येत तदा प्रक्रान्तः प्रयोगो विगुणः स्यात् । तस्मात्साधारणान्युत्पाद्येरन् ।

इति जुह्वादीनां साधारण्याधिकरणम् ॥ ६ ॥

---

षामाहिताग्नितानियम इत्यत आह—आधातुरिति । अग्निसंस्काररूपफलस्याधातृगामित्वाभावादाह—कर्मेति । विहारस्याग्नित्रयस्यान्यदीयस्याप्यन्यकार्ये प्रभुत्वात्समर्थत्वादनग्नीनामपि सत्रं स्यादिति सूत्रार्थः ॥

इत्याहिताग्नीनामेवाधिकाराधिकरणम् ॥ ५ ॥

६

जुह्वादीनाम्० आत्मनेपदानुपपत्तिहेतुप्रत्युदाहरणात्सङ्गतिः । दिष्टगतिर्मरणम् । विगुण इति । अन्यस्य जीवतः पात्रसम्भवेऽपि तदीयानुमत्यादिप्रतीक्षया प्रयोगप्राशुभावभङ्गापत्तिरिति भावः । जुह्वादीनामग्निवत्स्वीयानामेवाप्रयुक्तत्वात् यथाकामी यत्किञ्चित्पात्रैः कर्ता प्रतीयेतेति सूत्रार्थः ॥

इति जुह्वादीनां साधारण्याधिकरणम् ॥ ६ ॥

७

पुरुषकल्पेन० यास्विष्टिष्वध्वरकल्पादिषु 'सप्तदश सामिधेनीरनुब्रूयादि'ति श्रुतम् । तासु किं वैश्यस्यैवाधिकारः ? उत त्रयाणामपीति ? संशये दर्शपूर्णमासप्रकरणपठितेन 'सप्तदश वैश्यस्ये'ति वाक्येन साप्तदश्याङ्गत्वेन वैश्यो विधीयते कर्ता । न च प्रकृतौ साप्तदश्यमस्तीति यत्राध्वरकल्पादौ तद्विहितम्, तत्रैव वैश्यविधिः । तेन वैश्यकर्तृकसाप्तदश्याङ्गत्वादध्वरकल्पादौ वैश्यस्यैवाधिकारः । मैवम्—

प्रकृतौ हि श्रुतं वाक्यं ततो नोत्कर्षमर्हति ।
तस्माद्वैश्यानुवादेन साप्तदश्यं विधीयते ॥
तच्च वैश्यनिमित्तत्वात्पाञ्चदश्यस्य बाधकम् ।
वैकृतैर्वचनैः साप्तदश्यं क्रत्वङ्गमुच्यते ॥
तदनैमित्तिकत्वेन त्रयाणां न विशिष्यते ।
तस्मादध्वरकल्पादौ त्रयाणामधिकारिता ॥

इति वैकृतसाप्तदश्यसामिधेनीषु वर्णत्रयाधिकाराधिकरणम् ॥ ७ ॥

इति शास्त्रदीपिकायां षष्ठस्य षष्ठः पादः ॥ ६ ॥

●

---

७

**पुरुषकल्पेन०** । एवं सविशेषं ब्राह्मणाधिकारचिन्तानन्तरं वैश्याधिकारचिन्तेति सङ्गतिः । **दर्शेति** । वैश्योद्देशेनापूर्वसाप्तदश्यविधौ पाञ्चदश्यबाधापत्तेरिति भावः । **तस्मात्** प्रकरणानुग्रहात् । **वैश्यनिमित्तत्वादिति** । वैश्यसम्बन्धित्वेन साप्तदश्यं विधीयते । सम्बन्धश्च वैश्याधिकारिकदर्शपूर्णमाससम्बन्धिसामिधेनीपरिच्छेदकत्वमित्यर्थाद्वैश्यनिमित्तत्वमिति भावः । वैश्यरूपपुरुषकल्पेन साप्तदश्येन विकृतावध्वरकल्पादौ वैश्यकर्तृनियमः स्याद्यज्ञस्याध्वरकल्पादेः साप्तदस्यगुणत्वादितरान्प्रति साप्तदश्याभावादेकस्मिन्वैश्य एवाधिकारः स्यात् सप्तदशो वैश्य इति लिङ्गच्च । इज्याविकारवद्वैश्यस्तोमाख्ययागवदिति सूत्रार्थः ॥

इति वैकृतसाप्तदश्यसामिधेनीषु वर्णत्रयाधिकाराधि० ॥ ७ ॥

इति श्रीमत्तत्सद्वंशावतंसश्रीरामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां षष्ठस्याध्यायस्य षष्ठः पादः ॥ ६ ॥

●

# अथ षष्ठाध्याये सप्तमः पादः

१

स्वदाने० विश्वजिति 'सर्वस्वं ददाती' ति श्रुतम्। तत्र किं ज्ञात्यादीनामपि स्वशब्दवाच्यानां दानम् ? उत धनस्यैव, यत्रास्य स्वामित्वमिति ? संशये सर्वेषां स्वशब्दवाच्यानां दानमविशेषात्। शक्यन्ते च पित्रादयोऽपि परविधेयाः कर्तुम्, परस्वत्वापादनं हि दानम्। अतः पित्रादयोऽपि देयाः।

नैतदेवम्, न हि शक्यन्ते दातुम् स्वत्वत्यागपूर्वकं हि परस्वत्वापादनं दानम्। न च दीयमानोऽपि पिता न पिता भवति। यत्र तु प्रभुत्वयोगेन स्वशब्दप्रवृत्तिः तच्छक्यं दातुम्। तस्मिन् हि दत्ते पूर्वस्य स्वामित्वं निवर्तते। परस्य च स्वामित्वमुपजायते। किञ्चायं स्वशब्दोऽपि भिन्नया

---

## सप्तमः पादः

१

**स्वदाने०** इत्थं कर्तृचिन्ताद्वारेणाधिकारश्चिन्तितः। अत्र तु तद्भिन्नाङ्गद्वारा स चिन्त्यत इति पादभेदः। **तत्रेति**। आदिना धनादिसङ्ग्रहः। **सर्वेषामिति**। आत्मीयत्वेन ज्ञात्यादीनां सर्वेषां स्वशब्दवाच्यत्वादित्यर्थः। ननु स्वत्वत्यागेन परस्वत्वापादनात्मकदानस्य कथं ज्ञात्यादौ सम्भवस्तत्राह—**शक्यन्ते चेति**। **परविधेयाः** पराधीनाः। हिशब्दोऽवधारणे। न तु स्वत्वत्यागोऽपीत्यर्थः। कन्यादानादिविध्यनुसारेण तस्य ददातिवाच्यत्वायोगात्। क्वचिद्धनादौ तस्यार्थिकत्वादिति भावः। स्वत्वत्यागं विना परस्त्वापादनेऽपि दानव्यवहाराभावात्प्रतिग्रहीतुः परस्वत्वोपभोगदोषापत्तेश्च स्वत्वत्यागोऽपि ददात्यर्थः। स्वत्वं च धनादौ निमित्ताधीनत्वात्पदार्थान्तरम्। पित्रादौ तु स्वभाविकत्वात्पितृत्वादिकमेव। अत एव कन्यादाने न ममेति त्यागाननुष्ठानं शिष्टानाम्। तेन तत्र ददातिर्गौण एव न मुख्य इत्याशयेनाह—**नैतदिति**। एवञ्च स्वशब्दस्यात्मीयपरत्वेऽपि ददातिवशेन सङ्कोच इत्याह—**यत्र त्विति**। वस्तुतस्तु नात्मीयत्वेन ज्ञातिधनादिसाधारणी

शक्त्याऽऽत्मात्मीयज्ञातिधनेषु वर्तते। तत्रैकस्मिन् प्रयोगेऽस्यैक एवार्थः तत्र धनस्य दानसम्भवात्, तद्विषय एव स्वशब्दः। तस्माद्धनस्यैव दानं न पित्रादीनाम् ॥

इति विश्वजिति पित्रादीनामदेयत्वाधिकरणम् ॥ १ ॥

२

न भूमिः० येयं महापृथिवी, सा देया नेति। सापि सार्वभौमस्य धनमिति मन्यमानो दानमाह। नासौ कस्यचित् स्वम्। राज्यं हि स्वविषय-परिपालनकण्टकोद्धरणभृतित्वेन कर्षकादिभ्यः करादानम्, दण्ड्येभ्यश्च दण्डदानमित्येतावान् सम्बन्धः, न स्वामित्वम्। अतो न सार्वभौमो महापृथिवीं दद्यात्, माण्डलिकश्च मण्डलम् ॥

इति भूमेरदेयत्वाधिकरणम् ॥ २ ॥

---

एका शक्तिरनात्मीयेऽपि धनादौ प्रयोगादतो न सकृदुच्चारणे सर्वपरता किन्तु ददातिवशेन धनपरतैवेत्याह—**किञ्चेति** ॥

इति विश्वजिति पित्रादीनामदेयताधिकरणम् ॥ १ ॥

२

**न भूमिः०** आतिदेशिकी सङ्गतिः। गृहभूम्यादिषु तत्तत्पुरुषस्वत्वस्य दानविधिवशेन निर्णयात्तद्व्यावर्तनायाह—**येयमिति**। **धनमिति**। करग्रहणस्वामित्वव्यवहारयोर्दर्शनादिति भावः। वनगततृणकाष्ठादौ परिग्रहणमात्रेण स्वत्वप्रतिपादकस्मृतिविरोधान्न राज्ञः स्वत्वमित्याह—**नेति**। कथं तर्हि स्वमित्वापरपर्यायराज्यमत आह—**राज्यं हीति** **कण्टकाश्**चौराद्याः। **भृतित्वेन** प्रत्युपकारत्वेन। एतत्प्रयुक्त एव स्वामित्वव्यवहारोऽपीत्याह—**एतावानिति**। मण्डलाधिपेऽप्येवमित्याह—**माण्डलिकश्चेति** ॥

इति भूमेरदेयत्वाधिकरणम् ॥ २ ॥

३

अकार्य० विश्वजित्येव 'न केसरिणो ददाती'ति हि श्रुतम् । तत्र केसरिणो दानं नेति विहितप्रतिषेधात् पक्षे दानम् । पर्युदासस्त्वयम् 'अपि तु वाक्यशेषः स्यादि' त्यनेन न्यायेन । अयं च तस्यैव न्यायस्य प्रपञ्चः प्रसङ्गादिहोक्तः ॥

इति अश्वादीनामदेयताधिकरणम् ॥ ३ ॥

४

नित्यत्वा० 'सर्वस्वं ददाती'ति किं यत्पुरुषस्योपभोग्यं स्वं कुप्याकुप्यशयनासनगवादि तत्सर्वं ददातीति शास्त्रार्थः । ततश्च यस्यापि यन्नास्ति सोऽपि तदर्जयित्वा दद्यात्? उत यद्यस्य विद्यते, तत्सर्वं ददातीति? संशये यत्सर्वस्वं तद्दद्यादिति श्रुत्यर्थविधिलिप्सया दानविधिं मन्यते । चोदकेन तु दानस्य प्राप्तत्वाद्यस्य यदस्ति, स तस्मिन् द्वादश-

---

३

अकार्यत्वात्० इह स्वत्वादस्तु दानमिति प्रत्यवस्थानात्सङ्गतिः । केसराणि स्कन्धलोमानि तद्वतोऽश्वादीनित्यर्थः । अपि त्वित्यादि दाशमिकसूत्रम् । वाक्यभेदपरिहाराय केसरिव्यतिरिक्तं सर्वस्वं ददातीति पर्युदासेन दानविधितो विशेषत्वमित्यर्थः । अश्वादिदानस्याकार्यत्वात् तत् इतरधनाद्विशेष इति सूत्रार्थः ॥

इत्यश्वादीनामदेयताधिकरणम् ॥ ३ ॥

४

नित्यत्वाच्च० आतिदेशिकी सङ्गतिः । कुप्येति । सुवर्णरजते कुप्यम् तद्भिन्नं मणिमुक्तादि अकुप्यम् । एवञ्च सर्वविधधनदानस्यैव क्रत्वङ्गत्वादविद्यमानमपि सम्पाद्य देयमित्यर्थः । उतेति । सर्वशब्दस्य प्रकृतपरत्वादिति भावः । दानविधिमिति । दानानुवादेन सर्वस्वविधौ तु यस्य दानप्रसक्तिस्तस्य सर्वताविधिरित्यविद्यमानस्य दानप्रसक्त्यभावान्न सम्पादनमित्याशयः । अत एवाह—यस्य यदस्तीति । ननु सर्वशब्द-

शतमात्रं दातुं प्रवृत्तस्सन् सर्वं दद्यादिति सर्वता विधीयते । किञ्चायं सर्वशब्दः प्रसिद्धस्वत्वेष्वेव सर्वेषूपपन्नत्वान्नासिद्धस्वत्वानामाक्षिपत्यर्जनम् । तस्मान्नार्जयित्वा देयम् ॥

इति विश्वजिति विद्यमानसर्वस्वदानाधिकरणम् ॥ ४ ॥

५

शूद्रश्च० धर्मार्थं परिचारकत्वेन यजमानमुपस्थितो यः शूद्रः स किं देयः ? नवेति ? सर्वशब्दानुग्रहात्परविधेयीकरणसम्भवाच्च देयः । स्वत्वाभावादनिच्छया परवश्यत्वानभ्युपगमसम्भवाच्चादेयः । दासस्तु देय एव ॥

इति धर्मार्थसेवकशूद्रस्यादेयत्वाधिकरणम् ॥ ५ ॥

---

बलात्सर्वविधधनवत एवाधिकारोऽस्त्वित्याशङ्क्याह—किञ्चेति । सर्वशब्दो हि परमसर्ववचनः प्रकृतसर्ववचनो वा स्यान्न तु सर्वविधवचनः प्रामाणाभावात् । एवञ्च परमसर्ववचनत्वस्य प्रकृतेऽनाशङ्क्यत्वात्प्रकृतवचनत्वमेवोचितमिति भावः । दानस्य नित्यवादः नित्यैरर्जनीयैर्न सम्बन्ध इति सूत्रार्थः ॥

इति विश्वजिति विद्यमानसर्वस्वदानाधिकरणम् ॥ ४ ॥

५

शूद्रश्च० इहाप्यातिदेशिकी सङ्गतिः । धर्मार्थमिति । धर्म्यशिक्षार्थम् । सेवारूपस्वधर्माचरणार्थं वेत्यर्थः । दासस्त्विति । क्रीतदासो गर्भदासो वेत्यर्थः । त्रैवर्णिकसेवाधर्मस्य शास्त्रं यस्मिन् प्रवृत्तं स यथा तस्य भाव इति सूत्रार्थः ॥ ५ ॥

इति सेवकशूद्रस्यादेयत्वाधिकरणम् ॥ ५ ॥

६

दक्षिणा० किं दक्षिणाकालात्प्रागेव प्राप्तोपयोगमपि धनमनुपयुज्य प्रयत्नेन धारयित्वा देयम्। यदपि भावित्वेन निश्चितं तदसदपि देयम्? उत यद्दक्षिणाकालेऽवस्थितं तदेव देयमिति? संशये, सर्वशब्दानुग्रहाय भूतभाविनोरपि दानम्। दक्षिणाकालीने एव सर्वत्वोपपत्तेर्न धारण-प्रयुक्तिः। भाविनश्च तदानीं स्वत्वाभावादशक्यमेव दानम्॥

इति विश्वजिति दक्षिणाकाले विद्यमानसर्वस्वानामेव
देयताधिकरणम्॥ ६॥

७

अशेषत्वा० प्रकृतौ कर्मारम्भ एव त्रिधा यजमानेनात्मीयं धनं वचनबलाद् व्यवस्थापितम्—इदं मे भक्षार्थम्, इदं क्रत्वर्थम, इदं दक्षिणार्थमिति। तत्र यत् दक्षिणार्थं तन्मध्ये द्वादशशतं दत्तम्। इह तु किं त्रिविधमपि दातव्यं कर्मशेषं चोत्स्रष्टव्यम्? उत यावता क्रतुशेषं निर्वर्तते तावच्छिष्ट्वा अन्यत्सर्वं देयम्? उत यद्दक्षिणार्थं निहितं तदेव सर्वं देयमिति? संशयः।

प्रत्यक्षवचनादिष्टसर्वदानविरोधतः।
चोदकावगतं कर्म शेषं लभ्येत दुर्बलम्॥

---

६

दक्षिणा० सङ्गतिः पूर्ववत्। शेषं स्पष्टम्। दानसंयोगाद्दानयोग्यत्वादिति सौत्र-हेत्वर्थः॥

इति विश्वजिति दक्षिणाकाले विद्यमानसर्वस्वानामेव देयताधिकरणम्। ६॥

७

अशेषत्वात्० आतिदेशिकी सङ्गतिः। इह त्विति। विश्वजितीत्यर्थः। शिष्टा-कोपाधिकरणोक्तप्रमेयबलाबलन्यायेन प्रथमपक्षदूषणपूर्वकं द्वितीयपक्षमुत्थापयति—

प्रधानत्वात्क्रतोर्नैव दानं तद्बाधनक्षमम् ।
किञ्चित्तु क्रतवे शिष्ट्वा सर्वमन्यत्प्रदीयते ॥
दक्षिणार्थेन निर्दिष्टं प्राप्तं द्रव्यमनूद्य तु ।
विधेयं सर्वतामात्रं लाघवं हि तथा विधेः ॥

इति विश्वजिति दक्षिणादानोत्तराङ्गानामनुष्ठानाधिकरणम् ॥ ७ ॥

८

अहर्गणे० अस्त्यष्टरात्रोऽहीनः । तस्य विश्वजित्प्रथममहः, ततोऽभिप्लवः षडहः, ततोऽभिजित् । तत्र विश्वजिति संशयः—किं द्वादशशतं दक्षिणा स्यात् ? उत सर्वस्वं दक्षिणेति ? तत्र—

गणेषु द्वादशाहस्य विध्यान्तः स्थापयिष्यते ।
द्वादशश्च शतं ज्योतिष्टोमादत्रातिदिश्यते ॥
विश्वजित्यपि सैव स्याद्दक्षिणा गणवर्तिनी ।
नामातिदेशप्राबल्यात्सर्वस्वं त्वेव दक्षिणा ॥

इदश्च प्राप्तिमात्रपरमधिकरणम् । प्राप्तं विश्वजिति सर्वस्वं बाधित्वा इतरेषां सप्तानामह्नां द्वादशशतदक्षिणानां भूयसां साधर्म्याद् द्वादशशत-

---

प्रधानत्वादिति । लाघवं हीति । सर्वस्वविशिष्टद्रव्यविध्यपेक्षया देयद्रव्ये सर्वतामात्रविधौ लाघवमित्यर्थः । अशेषत्वात् सर्वदाने सत्यपरिशिष्टत्वात् द्रव्यस्य तदन्तमेव कर्म । तस्य द्रव्यसाध्यत्वादिति सूत्रार्थः ॥

इति विश्वजिति दक्षिणादानोत्तराङ्गानामनुष्ठानाधि० ॥ ७ ॥

८

अहर्गण० अत्र सर्वस्वदक्षिणा आक्षिप्य समाधीयत इति सङ्गतिः । अभिप्लव इति एतन्नामा ज्योतिर्गौरायुः आयुर्गौर्ज्योतिरित्येवंरूप इत्यर्थः । 'पशुकामो ह्येतेन यजेते'ति यजतिश्रवणादहीनत्वम् । विध्यन्तः इतिकर्तव्यता । प्राबल्यादिति । श्रुतनामलक्षणगम्यत्वेनानुमानिकाद्बलवत्त्वादित्यर्थः । प्राप्तिमात्रेति । न तु तदनुष्ठानपरमिति

मेव देयम् । एकैव च तन्त्रेण सर्वेषामेकप्रयोगवर्तिनां दक्षिणा न पृथक् प्रदातव्या । तस्माद् भूयोऽनुग्रहाय द्वादशशतमेव देयम् ॥

इत्यहर्गणस्थेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ॥ ८ ॥

९

विकारः० सर्वस्वदान एव संशयः—किं यस्य द्वादशशतान्न्यूनं सोऽपि तावन्मात्रं सर्वस्वं दत्त्वाऽधिक्रियते ? उत यस्याधिकं स एवेति ?

ततो न्यूनेऽधिके वापि सर्वशब्दोपपत्तितः ।
उभयोरधिकारः स्यात् न्यूनाधिकदायिनोः ॥
इदन्तु प्रकृतेः प्राप्तं सर्वदानं नियम्यते ।
तत्र चानतिसिद्ध्यर्थमधिकं सर्वमीरितम् ॥

ज्योतिष्टोमे हि द्वादशशतं विधाय, पश्चादुक्तं 'यद्यतावता ऋत्विजो न नमेयुरपि, सर्वस्वेने'ति द्वादशशतादसिद्धां चानतिं ततोऽधिकमेव सर्वस्वं साधयितुं शक्नुयात्, न न्यूनम् । अतः प्रकृतौ तावद् द्वादशशताधिकमेव सर्वस्वं यच्च प्राकृतं तस्यैव नियममात्रमिह क्रियते । तस्मादधिकदानेनैवात्राधिकारः ॥

इति विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् ॥ ९ ॥

---

मात्रशब्दार्थः । कुतस्तत्राह—प्राप्तमिति । अहर्गणे विद्यमानो विश्वजित्तद्धर्मा सर्वस्वदानवान्स्यात्सर्वेषां विश्वजितामविशेषादिति सूत्रार्थः ॥

इत्यहर्गणस्थेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ॥ ८ ॥

९

विकारः० सर्वस्वेन द्वादशशतबाधः क्रियते न वेति विशेषचिन्तनादनन्तरसङ्गतिः । प्रकृतितो द्वादशशताधिकस्यैव पक्षप्राप्तस्य नियमनान्न तन्न्यूनदातुरधिकार इत्याह—इदन्त्विति । विकारो द्वादशशतस्थानापन्नसर्वस्वदानरूपः स्यादुभयतः न्यूनेऽधिके च स्यादविशेषादिति सूत्रार्थः ॥

इति विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् ॥ ९ ॥

१०

अपरिमिते० आधाने श्रुतम् 'एका देया षड् देया द्वादश देयाः चतुर्विंशतिर्देया शतं देयम् सहस्रं देयम् अपरिमितं देय'मिति। तत्रापरिमितं देयमिति किं पूर्वोक्तैकादिपरिमाणप्रतिषेधः ? उतायमपि सङ्ख्यान्तरविधिरिति ? संशयः। तत्राऽवयवव्युत्पत्त्या परिमाणशून्यमुच्यते। न च परिमाणशून्यस्य दानं सम्भवति। अतः प्रकृतपरिमाणशून्यमुच्यते।

ततस्तस्य प्रतिषेधः।

उच्यते—बह्वर्थवचनोऽयं समुदायप्रसिद्ध्या। सा चावयवप्रसिद्धेर्बलीयसी। न चालब्धात्मिका रूढिः, सुज्ञातपरिमाणेष्वपि बहुत्वमात्रेणापरिमितशब्दप्रयोगात्। तस्मादयमपि सङ्ख्यान्तरविशिष्टदानविधिः॥

इत्यपरिमितशब्दस्य सङ्ख्यान्तरविधानाधिकरणम्॥ १०॥

११

अनियम० बहुत्वविधिरपरिमितशब्दप्रयोगादिति स्थितम्। किं तत् सहस्रान्न्यूनम् अधिकं वा ? उताधिकमेवेति ? संशये—अर्वागपि बहुत्वसम्भवादनियमः। नैवम्—

---

१०

अपरिमिते० सर्वस्ववदुक्तसङ्ख्याधिकमेव अपरिमितमिति वक्ष्यमाणातिदेशोपोद्घातोऽयम्। तत इति। परिमाणशून्यद्रव्यस्य दानाक्षेपादेव प्राप्तत्वादप्राप्तस्य चाभावस्याविधेयत्वादसूर्यं पश्या राजदारा इतिवदसमर्थसमासाङ्गीकारेण नञः क्रियासम्बन्धादुक्तपरिमाणप्रतिषेधोऽयमिति भावः। सङ्ख्यान्तरेति। षडादिभिन्नसंख्येत्यर्थः। अपरिमाणे अपरिमितवाक्ये शिष्टस्यैकादेर्या सङ्ख्या तत्प्रतिषेध इति सूत्रार्थः॥

इत्यपरिमितशब्दस्य सङ्ख्यान्तरविधानाधिकरणम्॥ १०॥

आपेक्षिको हि बह्वर्थः सहस्रापेक्षया भवेत् ।
तस्यानन्तरनिर्देशात्सहस्राद्धिकस्ततः ॥

इत्याधानेऽपरिमितशब्देन सहस्राधिकदानाधिकरणम् ॥ ११ ॥

१२

परकृति० दर्शपौर्णमासयोः श्रुतम् 'तदु ह स्माह वट्कुर्वार्ष्णि-र्माषान्मे पचते'ति विधिः ? उतार्थवादः ? इति संशये विधेरर्थवत्त्वाद्वादमात्रं ह्यनर्थकमित्यौदुम्बराधिकरणपूर्वपक्षे स्थितम् । तमेव पूर्वपक्षं मनुष्यधर्मः स्यादिति स्मारयित्वा कृत्वाचिन्तयाऽधिकारश्चिन्त्यते । यदा विधिः, तदा किं वर्ष्णिगोत्राणाम् ? उत सर्वपुंसामिति । वार्ष्णिकर्तृकत्वसंस्तवात् तद्गोत्राणामेव स्यात्—

मैवम् । स्तुत्यस्य विधिर्न स्तुत्युपायस्य । न चात्र वार्ष्णिकर्तृको माषपाकः स्तूयते, अन्यस्य स्तावकस्याभावात् । किन्तु वार्ष्णिकृतत्वेन

---

११

अनियमः० सुगममेतत् ॥

इत्यपरिमितशब्दस्य सहस्राधिकदानाधिकरणम् ॥ ११ ॥

१२

परकृति० अत्र विधित्वापवादात्संगऽतिः । वट्कुस्तन्नामा । वार्ष्णिर्वृष्णिगोत्रः । मे मदर्थम् वादमात्रम् अर्थवादमात्रम् । पूर्वपक्षस्यौदुम्बराधिकरणेनैव निरासात्कथं चिन्तेत्यत आह—कृत्वेति । वार्ष्णिकर्तृकत्वेति । स्तुतिसम्बन्धिन एव तत्कल्प्यविधि-विषयत्यौचित्यादिति भावः । तथा चेष्टिकर्तृवृष्णिगोत्रसंस्कारकत्वेन माषपाकविधि-रित्यर्थः । वृष्णिकर्तृकत्वस्य माषपाकस्तावकत्वेन स्तुत्यत्वाभावान्न विधिविषयत्व-

कारणेन माषपाकस्य स्तुतिः । अतो माषपाकमात्रविधानात् सर्वपुंसामाधिकारः स्यात् । अर्थवादो वेति कृत्वाचिन्तोद्घाटनम् ॥

इति परकृतिपुराकल्पानामर्थवादताधिकरणम् ॥ १२ ॥

१३

सहस्र० पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतस्सप्तदशाः, पञ्चपञ्चाशत एकविंशाः विश्वसृजां सहस्रसंवत्सरमि'ति । किमस्मिन् सत्रे ये गन्धर्वादयः सहस्रायुषः तेषामधिकारः ? उत मनुष्याणामेव ? यदा मनुष्याणां तदा किं रसायनादिसम्पादितसहस्रायुषाम् ? उत कुलकल्पः ? उत विश्वसृजामयनं कुर्वतां सहस्रायुष्ट्वम् ? अथवार्द्धतृतीयानां शतानामधिकारः ? उत मासेषु संवत्सरशब्दमाश्रित्य सुखेनायं मनुष्याधिकारः ? उत द्वादशरात्रिषु संवत्सरशब्दः, उत दिवसेष्विति ? पक्षाः ।

तत्र मनुष्याणां सहस्रायुष्ट्वासम्भवात् श्रुतिबलाद् गन्धर्वाणामधिकारः । तेषां त्वग्न्युपसंहारासामर्थ्यान्मनुष्याणामेव रसायनलब्धसहस्रा-

---

मित्याह—**मैवमिति** । **अर्थवादो वेति** । तंदु तथा न कुर्यादारण्यमेवाश्नीयादि'ति विधेरित्यर्थः । एककर्तृकमुपाख्यानं परकृतिः । अनेककर्तृकं तत्पुराकल्पः यथोल्मुकैर्हस्मपूर्वे समाजग्मुरित्यादि । तन्मनुष्यधर्मो विधिः स्याद्धियतोनुकीर्तनमर्थाय प्रयोजनायेति सूत्रार्थः ॥

इति परकृति पुराकल्पानामर्थवादत्वाधिकरणम् ॥ १२ ॥

१३

**सहस्र०** अत्र मनुष्यधर्मत्वस्थापनादापवादिकी सङ्गतिः । **पञ्चेति** । अत्र पञ्चाशच्छब्दः संख्यापरः । संख्येयपरत्वे तत्र पञ्चत्वान्वयानुपपत्तेः । त्रिवृच्छब्दश्च त्रिवृत्स्तोमकक्रतुवृत्तिपरः । संवत्सरशब्दोऽपि तत्साध्यक्रतुवृत्तिपरः । तथा च तादृशक्रतुवृत्तिः । पञ्चत्वसंख्यावच्छिन्ना पञ्चाशत्संख्येति पर्यवसितोऽर्थः । **कुलकल्प इति** ।

युषाम्। रसायनस्यैतावदायुस्सम्पादनासामर्थ्याच्छतायुः पुरुष इति श्रुतेः कुलकल्पः। 'शास्त्रफलं प्रयोक्तरी'ति न्यायात्समग्रकर्मानुष्ठायिनां फलं न विकलानुष्ठायिनाम्। अतो न कुलकल्पः। सत्रारम्भादेव तु सहस्रायुष्ट्वं कल्प्यतामिति। इदमप्यसम्भवादेवानुपपन्नम्।

'तस्मात्पञ्चपञ्चाशतः' इति यजमानाभिप्राया सङ्ख्या। एकोऽपि त्रिवृत्स्तोमकयागयुक्तः सम्वत्सरः पञ्चपञ्चाशत्सङ्ख्याकैः प्रत्येकं कर्तृभूतैः सम्बध्यमानस्तत्सङ्ख्यो भवति, तथा पञ्चदशादयोऽपीति। तेन चतुस्सम्वत्सरमिदं सत्रमर्द्धतृतीयैर्यजमानशतैः क्रियमाणं सहस्रसम्वत्सरमिति कथ्यते। अयमपि पक्षो बुद्धावत्यन्तमनारूढः 'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्नि'ति वचनविरुद्धो दुरभ्युपगमः।

तस्मात्सङ्ख्याशब्दं सम्वत्सरशब्दं वा गौणमाश्रित्य, अत्र मनुष्याधिकारः समाश्रयितव्यः। तत्रापि सङ्ख्याशब्दस्य मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न स्वार्थत्यागः। सम्वत्सरपदन्तु जघन्यत्वात् सौरचान्द्रमासाद्यनेकार्थसाधारण्येनार्थनिश्चयासामर्थ्याद् गौणं भवति। तत्र 'यो मासः स सम्वत्सरः' इति दर्शनान्मासेषु, तत्राप्यशक्तिस्तदवस्थैव। न ह्याधानादूर्ध्वं सहस्रमासानां जीवनं सम्भवति। तस्मात् 'सम्वत्सरप्रतिमा वै द्वादशरात्रयः' इति प्रयोगात् द्वादशरात्रिषु सम्वत्सरशब्दः। प्रतिमाविशेषणं चात्र सम्वत्सरशब्दः, न तस्य द्वादशरात्रिषु प्रयोगः। तस्मात् त्रिवृदादिशब्दसामञ्जस्याद्दिवसेषु सम्वत्सरशब्दः।

---

पित्रारब्धं तत्पुत्रादिभिः समापनीयमित्यर्थः। **अर्धतृतीयानामिति**। अर्धं तृतीयं शतं येषु तादृशानामर्धाधिकद्विशतसङ्ख्याकानामित्यर्थः। एवञ्च पञ्चपञ्चाशत इति यजमानपरमिति भावः। **अर्थासम्भवादिति**। बाधनिश्चयेन तथाविधायुःकल्पनानुपपन्नेत्यर्थः। **प्रतिमेति**। संवत्सरसदृशा न तु संवत्सरात्मिका इति प्रतीतेरित्यर्थः। **अहरुच्यत इति**।

त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते ।
नाहःसङ्घस्ततोऽहस्सु गौणी संवत्सराभिधा ॥
इति सहस्रसंवत्सरशब्दस्य सहस्रदिनपरत्वाधिकरणम् ॥ १३ ॥

इति शास्त्रदीपिकायां षष्ठस्य सप्तमः पादः ॥ ७ ॥

●

---

यद्यपि स्तोम एवाभिधेयस्तद्विशिष्टं त्वहर्लक्षणयोच्यते तथापि प्रयोगप्राचुर्यादह्नि निरूढलक्षणा तत्सङ्घाते तु नेति तात्पर्यम् ॥

इति सहस्रसंवत्सरशब्दस्य सहस्रदिनपरत्वाधि० ॥ १३ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां शास्त्रदीपिका-व्याख्यायां प्रभाख्यायां षष्ठस्य सप्तमः पादः ।

●

# अथ षष्ठाध्याये अष्टमः पादः

१

इष्टि० सन्ति चतुर्होतृसंज्ञका मन्त्राः। तैर्जपहोमाः पुरुषार्थतया विहिताः–'चतुर्होतारं प्रयुञ्जीत, चतुर्होत्रा प्रजाकामो जुहुयादि'ति। ये होमाः, ते किमाहिताग्न्यधिकाराः आहवनीये कार्याः? उतानाहिताग्न्यधिकारा लौकिके अग्नौ स्युः? अथवोभयाधिकारा? इति संशयः। तदर्थमिदं विचार्यते–'एषा वा अनाहिताग्नेरिष्टिरि'ति वचनं जपाभिप्रायमनुवादमात्रम्? अनाहिताग्नेर्वा होमेष्वधिकारप्रदर्शनपरमिति। तत्र विध्यश्रवणादनुवादो जपविषयः, इष्टिशब्दश्च जपविषय एव स्तुत्यर्थतया प्रयुक्तः। तदत्रैषा वचनव्यक्तिः–यैषाऽनाहिताग्नेः क्रिया जपात्मिका सेष्टिरिति।

सत्यम्; एषा वचनव्यक्तिः। इयमपि तु सम्भवति–यैषा चतुर्होतृहोमात्मिकेष्टिः, साऽनाहिताग्नेरिति। पूर्वस्यामाहिताग्न्यधिकारा होमाः। उत्तरस्यामनाहिताग्न्यधिकाराः। न चान्यतरा निर्द्धार्यते। तस्मादुभयाधिकारा इति प्राप्ते उच्यते—

---

## अष्टमः पादः

१

इष्टि० इहाहिताग्न्यादेरधिकारापवादः प्राधान्येन चिन्त्यत इति पादभेदः। **सन्तीति**। 'पृथ्वी होता, द्यौरध्वर्युः, रुद्रोऽग्नीत्, बृहस्पतिरुपवक्ते'ति चतुर्होतृमन्त्रः। उभयाधिकारा इत्यनन्तरमुभयत्रेति शेषः। **तस्मादिति**। निर्धारणाभावादुभयविधवचनव्यक्त्याश्रयणादित्यर्थः। इदं चानिर्धारणमभ्युपेत्योक्तम्। वस्तुतस्त्वनुवादानर्थक्यादप्राप्तार्थत्वाच्च विधिरेवेत्युत्तरैव वचनव्यक्तिरित्याशयः। एवञ्चानाहिताग्नेर्विधानादाहिताग्नेश्चानिषेधादुभयाधिकारत्वमिति तात्पर्यम्। **नार्थप्राप्तमिति**। वैदिकहोमानामाहवनीयसाध्यत्वादर्थादाहिताग्नेः प्राप्तिः प्रत्यक्षवचनेन त्वनाहिताग्नेः प्राप्तौ न सा सम्भवतीत्यर्थः।

वचनस्यार्थवत्त्वाय नाहिताग्नेरधिक्रिया ।
आहत्य च तदर्थास्ते चोदिता नान्यगामिनः ॥

षष्ठीश्रुत्याऽनाहिताग्नेः शेषत्वेन गम्यं नार्थप्राप्तं कर्माहिताग्निमालम्बते । तस्मादनाहिताग्न्यधिकाराः ॥

इति चतुर्होतृहोमेऽनाहिताग्नेरेवाधिकाराधिकरणम् ॥ १ ॥

२

उपनयन० उपनयनाङ्गभूता माणवककर्तृका आचार्यकर्तृकाश्च होमाः किमाहवनीये स्युः ? उत लौकिकाग्नाविति ? संशये, पूर्ववद्वचनाभावादाहवनीये स्युः । माणवकार्थाश्च ते होमास्तदधिकारा अध्ययनाङ्गभूतोपनयनार्थत्वात् । अत एव च ते माणवकाग्नौ कर्तव्या इति माणवकः प्रागुपनयनादादधीत, तदूर्ध्वं च भार्यामुद्वहेत् । या तु 'स्नात्वा भार्यामधिगच्छेदि'ति स्नानोत्तरकाला दारक्रिया साऽपत्यार्था भविष्यतीति प्राप्ते—

आधानस्य विद्वदधिकारित्वाद्विद्यायाश्चोपनयनाधीनत्वान्नोपनयनात् प्रागाधानाधिकारसम्भवः । किञ्च कर्मार्थैरेव दारैरपत्यम्, अपत्यार्थैः

---

अक्रतुशेषः पुरुषार्थो होमः अपूर्वोऽपि दर्विहोमवत् प्रकृतिरहितोऽपि संस्कृतेष्वग्निषु स्यात् । कुतः ? इष्टिपूर्वकत्वादाहवनीयादेः सर्वहोमाङ्गत्वेन पवमानेष्टिं विना तदसम्भवात्तथा आधानस्याग्निद्वारा सर्वहोमशेषत्वादिति सूत्रार्थः ॥

इति चतुर्होतृहोमेष्वनाहिताग्नेरधिकाराधिकरणम् ॥ १ ॥

२

उपनयनम्० प्रत्युदाहरणसङ्गतिं सूचयन्नाह-**पूर्ववदिति**। अनाहिताग्न्यधिकारबोधकवचनाभावादित्यर्थः । **माणवकाग्नाविति** । आचार्याग्नौ क्रियमाणानामाधानगतात्मनेपदविरोधेन माणावकार्थत्वायोगादिति भावः । स्मृतिविरोधाशङ्कां परिहरति—**या त्विति**। कर्मार्था अपत्यार्था चेति द्वे द्वारक्रिये तत्रान्त्यायां स्नानोत्तरत्वविधिर्नाद्यायामित्यर्थः । कर्मभिर्विद्याप्रयुक्तिरस्तीति कृत्वा चिन्तया पूर्वपक्षं तदुद्घाटनेन परिहरति–**आधानस्येति**।

कर्म सिध्यतीति नार्थः पृथग् दारक्रियया। य एव स्त्यपत्यकर्मार्थेन दारसङ्ग्रहः प्राप्तः, तस्यैवायं कालविधिः—'स्नात्वा भार्यामधिगच्छेदि' ति। तस्मान्न प्रागदारसङ्ग्रहः। तदभावे चाधानासम्भवाल्लौकिक एवाग्नौ उपनयनहोमः॥

इति लौकिकाग्नावुपनयनहोमाधिकरणम् ॥ २ ॥

३

स्थपतीष्टिः० 'एतया निषादस्थपतिं याजयेदि'ति स्थपतीष्टिः किमाहितेष्वग्निषु स्यात्? उत लौकिके? इति संशये, प्रकृतेराहवनीयादि-प्राप्तेराहवनीयादीनां चाधानाधीनत्वादसत्यपि स्थपतेराधानविधाविय-मेवेष्टिराधानं प्रयोजयेदिति प्राप्ते—

उच्यते—यदा ह्याधानस्य न साक्षाद्विधिरभविष्यत्, तदा याज्ञिकलोकप्रयोगात् 'नक्तं गार्हपत्यमादधाति, दिवाऽऽहवनीय'मि'त्यादि-वेदवाक्यपर्यालोचनयाऽऽधानक्रियानिमित्तत्वं पाचकादिवदाहवनीयादि-शब्दानामाश्रित्य स्थपतिराहवनीयार्थमाधानमकरिष्यत्। यदा तु वसन्ता-दिविधानानि आधानविधायकानीति द्वितीये स्थितम्, तदा तद्विहिताधान-

---

कृत्वाचिन्तायामप्याह—किञ्चेति। दारक्रिया हि वाक्योपात्तोभार्यार्थी एकैव। भार्या तु प्रजाकर्माद्यनेकार्थेति स्यादेव कालबाध इत्यर्थः॥

इति लौकिकाग्नावुपनयनहोमाधिकरणम् ॥ २ ॥

३

स्थपती० आधानासम्भवरूपपूर्वसिद्धान्तहेतुप्रत्युदाहरणसङ्गतिः। ननु स्वविधि-प्रयुक्तस्यैवाधानस्य ग्रहणात्कथं निषादेष्ट्या तत्प्रयुक्तिरत आह—असत्यपीति। येषा-माधानविधिरस्ति तेषां कर्मभिरप्रयुक्तावपि निषादेष्ट्या तत्प्रयुक्तिर्युक्तेत्याशयः। यदेति। दिवाहवनीयमित्यादिवाक्यानुसारेणाधानमात्र-जन्यस्याहवनीयत्वावगमे हि निषादेनापि

जन्याग्निगतसंस्कारवाचित्वादाहवनीयादिशब्दानां स्थपतिकृतेन चाधानेनाविहितेन तत्संस्कारसिद्ध्यनवगमान्नाधानाक्षेपसम्भवः। तस्माल्लौकिके स्यात् ॥

इति स्थपतीष्ट्यधिकरणम् ॥ ३ ॥

४

अवकीर्णि० 'यो ब्रह्मचार्यवकिरेत्, स नैर्ऋतं गर्दभं पशुमालभेते'ति किमयं याग आहवनीयादिषु? उत लौकिके? इति संशयः। ब्रह्मचारिणस्त्रैवर्णिकत्वात् विद्यावत्त्वाद्भार्याधिगमसम्भवादाधानमुपपन्नम्। अत आधायाग्निं प्रायश्चित्ते प्रवर्तेत।

नैवम्; न ह्यस्यावकरकृतं ब्रह्मचर्यस्य विप्लवमसमाधाय गार्हस्थ्यप्रवेशः सम्भवति, "अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेदि'ति विधानात्। न चापत्नीकस्याधानमस्तीति लौकिकेऽग्नावयं पशुः, लौकिकश्चाचारात्प्राप्तः ॥

इति लौकिकाग्नाववकीर्णिपश्वनुष्ठानाधिकरणम् ॥ ४ ॥

---

स सम्पादयितुं शक्येत। 'वसन्ते ब्राह्मणोऽग्नीनादधीते'त्यादिप्रत्यक्षविधिविहिताधानसंस्कृतस्त्वाहवनीयपदार्थः। कथमत्रैवर्णिककृतेनाधानेन स्यादिति नाधानाक्षेप इत्यर्थः ॥

इति स्थपतीष्ट्यधिकरणम् ॥ ३ ॥

४

अवकीर्णि० आतिदेशिकी प्रत्युदाहरणाच्च सङ्गतिः। अवकिरेत् ब्रह्मचर्यं भ्रंशयेत्। मैथुनमाचरेदिति यावत्। लौकिकश्चेति। श्रौतस्मार्ताग्न्यभावे होमस्य लौकिकाग्नावाचारादिति अर्थः। आपस्तम्बेन त्वप्सु होम इत्युक्तम् ॥

इति लौकिकाग्नाववकीर्णिपश्वनुष्ठानाधिकरणम् ॥ ४ ॥

५

उदगयन० उपनयनचौलादीनि किं सर्वकाले स्युः उतोदगयनादिष्विति संशये अविशेषात् सर्वदैवाधिकारः। स्मृतेस्तु उदगयनादिष्वेव स्युर्दैवानि ॥

इति उपनयनादीनामुदगयनादिकालताधिकरणम् ॥५॥

६

इतरेषु० पित्र्याणि तु श्राद्धादीनि अपरपक्षादिषु, स्मृतेरेव ॥

इति पित्र्यकर्मणोऽपरपक्षादिकालताधिकरणम् ॥ ६ ॥

७

याच्ञा० ज्योतिष्टोमे याच्ञाक्रयणमाम्नातम् 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीते'ति याच्ञा, 'अरुणया पिङ्गाक्ष्या क्रीणाति'इति क्रयः। तत्र संशयः–किं यस्य दक्षिणाद्रव्यं नास्ति सोमश्च, तस्येदं याच्ञाक्रयणम्

---

५

उदगयन० ब्रह्मचर्यप्रसङ्गात्सङ्गतिः। पूर्वपक्षः शुक्लपक्षः। पुण्यं विष्ट्यादिरहितमहः। स्मृतिः प्रसिद्धा। रूपन्तु एतद्वै देवानां रूपं यदुदगयनमिति रूपत्वेन स्तुतिः। पूर्वाह्णो वै देवानामित्यन्यार्थस्य स्तुत्यर्थस्य वाक्यशेषस्य दर्शनम् ॥

इत्युपनयनादीनामुदगयनादिकालताधि० ॥ ५ ॥

६

इतरेष्विति० सूत्रं स्पष्टार्थम्।

इति पित्र्यकर्मणोऽपरपक्षादिकालताधिकरणम् ॥ ६ ॥

७

याच्ञा० पूर्ववदिहापि नियमातिदेशात्सङ्गतिः। तत्रेति। याच्ञाक्रयणं हि सामर्थ्यरूपलिङ्गवशेन द्रव्याभावे निमित्ते क्रत्वपूर्वाङ्गमिति निमित्तवत एव तत्राधिकार इति

उत विद्यमानेऽपीति । तत्र द्रव्यार्थं याञ्चाक्रयणमविद्यमानद्रव्यस्य स्यात्, द्रव्यवतस्त्वनर्थकम् । तस्मान्न तस्य याञ्चादावधिकारः ।

स्यादेवं यदि द्रव्यमात्रप्रयुक्तं स्यात्, अपूर्वप्रयुक्तं त्विदम् । अतोऽनेन विना अपूर्वमेव वैगुण्यान्नोत्पद्यते । तस्मान्नित्यं याञ्चाक्रयणम् ॥

इति याञ्चाक्रयणयोर्नित्यताधिकरणम् ॥७॥

८

तथा० 'पयो ब्राह्मणस्य व्रतमि'ति भक्षः किमविद्यमाने भक्षान्तरे ? उत भक्षसद्भावेऽपि ? तथा 'अग्निदग्नीन्विहरे'ति प्रैषः किमन्यतो अनवबुद्धे प्रैषार्थे, 'अहतं वासः परिधत्ते' इति वासोन्तराभावे ? तथा 'यत्पशुर्मायुमकृते'ति संज्ञप्तहोमो मायुकरणे ? तथा 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति मन्त्रो द्वेष्यसद्भावे ? उत सर्वमिदं नित्यम् ? इति संशये, सामर्थ्यादेषां निमित्तसद्भावेऽनुष्ठानमिति ।

निमित्ताश्रवणात् सत्यपि चान्यस्मिन् नियमाददृष्टसिद्धेरनन्योपायत्वान्नित्यम् ॥

इति पयोव्रतादीनां नित्यताधिकरणम् ॥ ८ ॥

---

भावः । स्यादेवमिति । अवघातादिवत्केवलदृष्टार्थत्वाभावान्नियमादृष्टसिध्यर्थं नित्यवदेवानुष्ठानमित्यर्थः । नैमित्तिकत्वं तु प्रमाणाभावादसिद्धमेवेति भावः ।

इति याञ्चाक्रययोर्नित्यताधिकरणम् ॥ ७ ॥

८

तथा० आतिदेशिकी सङ्गतिः । मायुम् मायुशब्दम् । यत्पशुर्मायुमकृतोरो वा पद्भिराहतः । 'अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वᳬ͡ ह स' इति मन्त्रः । संज्ञप्ते हते पशौ होम इत्यर्थः । निमित्तम् दृष्टप्रयोजनम् ॥

इति पयोव्रतादीनामनित्यताधिकरणम् ॥ ८ ॥

९

अनर्थकं० यदा पुनर्व्रत्यमानं पयो न जीर्यतीत्याशङ्क्यते, तदाऽपि किमवश्यं व्रतयितव्यम्।

नेत्याह। तदा हि यजमानस्य रोगोत्पत्त्या क्रतुविरोध एव सम्भाव्येत। तेन प्रधानविरोधान्न व्रतयितव्यं तदनित्यं स्यादिति॥

इति व्रतस्यानियमाधिकरणम्॥ ९॥

१०

पशुचोदनायाम्० 'अग्नीषोमीयं पशुमालभेते'ति किं यः कश्चित् पशुरालब्धव्यः? उत छाग एव? चोदनायां सामान्यश्रवणान्मन्त्रवर्णे च 'छागस्य वपाया मेदसोऽनुब्रूही'ति छागशब्दश्रवणात् संशयः। तत्र—

समान्यावसिता तावच्चोदना वाक्यभेदतः।
मन्त्रस्तदविरोधेन पाक्षिको यौगिकोऽपि वा॥

विधिस्तुत्योरेकवाक्यत्वात् प्रकृस्तुतेरपर्यवसितोऽञ्जनविधिरर्थवादगतघृतविषय एव पर्यवस्यति। मन्त्रचोदनयोस्तु वाक्यभेदादप्रतिद्वन्द्विविधिवाक्यं पशुसामान्ये पर्यवसितं न मन्त्रानुरोधेन शक्यं विशेषे नेतुम्। मन्त्रस्तु चोदितार्थप्रकाशनात्परतन्त्रवृत्तिश्चोदनावगतं गवाश्व-

---

९

अनर्थकमिति०। स्पष्टम्॥

इति व्रतस्यानियमाधिकरणम्॥ ९॥

१०

पशुचोदनायाम्० अनर्थकं त्वित्युक्तानियमापवादात्सङ्गतिः। वाक्यभेदत इति। मन्त्राद्भिन्नवाक्यत्वादित्यर्थः। अत्राधिकरणवैषम्यपरत्वेन श्लोकं व्याचष्टे-विधीति। ननु छागपदवन्मन्त्रानर्थक्यपरिहाराय विधिगतपशुपदस्य विशेषपरत्वं स्यादत आह—मन्त्र-

जातं निगमादिवशलब्धावयवयोगेन प्रकाशयिष्यति । यदा वा छागः, तदा वा प्रयोक्ष्यते । तस्मादनियमः । उच्यते—

चोदना पशुसामान्यमङ्गत्वेनावबोधयेत् ।
छागेऽप्यविकलं तच्च प्रतिव्यक्ति समाप्तितः ॥
मन्त्रः प्रकरणाम्नानान्नित्यमङ्गं प्रतीयते ।
क्लृप्तया रूढिशक्त्या च यच्छागस्यैव वाचकः ॥
तेन तं तादृशं गृह्णन्विधिरात्माविरोधिनम् ।
विधत्ते छागमेवाङ्गं तस्माच्छागोपसङ्ग्रहः ॥
अधिकृतिरिति सिद्धा भेद-शेष-प्रयुक्ति-
क्रमनियमविचारैरेतया चाधिकृत्या ।
सुविदित उपदेशोऽनन्तरं चातिदेशो
विकृतिषु तत ऊहो-बाध-तन्त्र-प्रसङ्गाः ॥

इति छागस्यैवाग्नीषोमीयपशुताधिकरणम् ॥ १० ॥

इति महामहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां षष्ठाध्यायस्याष्टमः पादः । समाप्तश्चायमध्यायः ॥

---

स्त्विति । जातम् समूहम् । निगमेति । छिदेर्गमेश्च छागशब्दव्युत्पत्या छिन्नगमनवत्वरूपयोगार्थवशेनेत्यर्थः । रूढिबाधितयोगार्थासम्भवादाह—यदावेति । समाप्तितः पर्याप्तत्वात् । तम् मन्त्रम् । तादृशम् नित्यवदङ्गत्वेनावगतम् । गृह्णन् स्वोपकारित्वेनाङ्गीकुर्वन् । कांस्यभोजिन्यायेनेति भावः । विधत्त इति । एतन्मन्त्रप्रकाशितं पशुमालभेतेति प्रयोगविधिवशेनैकवाक्यतापर्यवसानादिति भावः । एतदध्यायार्थोपसंहारपूर्वकमतिदेशादिविचारस्योपदेशोपजीवकत्वात्तदानन्तर्यं शिष्यहितार्थमाह-अधिकृतिरिति । इति एवं प्रकरेण । अधिकृत्या तद्विचारेण । प्रमाणं तु सर्वापेक्षितं प्रधानं चेत्यर्थादेव गम्यमानत्वान्न निर्दिष्टमिति शिवम् ।

इति छागस्यैवाग्नीषोमीयपशुताधिकरणम् ॥ १० ॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञश्रीमत्तत्सद्रामचन्द्रात्मजवैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां षष्ठोऽध्यायः सम्पूर्णः ॥



## सप्तमोऽध्यायः

### अथ प्रथमः पादः

१

श्रुतिप्रमाण० उपदेशविचारे समाप्तेऽधुना तदधीनसिद्धिरतिदेशविचारः प्रस्तोष्यते। तदुपोद्घातत्वेन प्रथममिदं विचार्यते—ये धर्मा दर्शपूर्णमासयोः ज्योतिष्टोमस्य च प्रकरणे समाम्नाताः प्रयाजादयः दीक्षणीयादयश्च, ते किं सर्वयागार्थत्वेनोपदिश्यन्ते ? उत यथाप्रकरणं व्यवतिष्ठन्त ? इति। यदि सर्वार्थाः, ततः सौर्य-श्येनादीनामप्युपदेशत एवाङ्गलाभसम्भवान्नातिदेशविचार आरब्धव्यो भवति। व्यवस्थितेषु तु सौर्यादीनां तदधीनत्वादतिदेशेन धर्मसद्भावः, तद्विशेषतदूहतद्बाधादिविचारार्थमुत्तरोऽध्यायगण आरब्धव्यः। तदर्थमिदं विचार्यते-किं यजिप्रयुक्ता धर्माः यज्यर्थाः प्रथमं यजिभावनोद्देशेन विहिताः सन्तः पश्चात्तत्करणिकयाऽपूर्वभावनया तद्द्वारेण सम्बन्त्स्यन्ते ? उतापूर्वप्रयुक्ता

---

### सप्तमाध्यायस्य प्रथमः पादः

१

श्रुतिप्रमाणत्वात्० पुर्वषट्कोपजीवकत्वमुत्तरषट्के सङ्गतिरित्याह—उपदेशेति। सम्बन्ध्यनिरपेक्षमुपकारबोधनमुपदेशः। सम्बन्ध्यन्तरसापेक्षं च तदतिदेशः। प्रकृतौ हि प्रयाजाद्यन्तरङ्गोपकारबोधनं शेष्यन्तरनिरपेक्षमिति तत्राद्यलक्षणसमन्वयः। विकृतावाग्नेयवदित्याग्नेयादिसम्बन्ध्यन्तरसापेक्षं प्राकृताङ्गोपकारज्ञापनमिति तत्रान्यतिदेशलक्षणसमन्वयः। 'पुरोडाशकपालेन तुषानुपवपती'त्यत्र तुषोपवापोपकारस्य करणतारूपस्य पुरोडाशो न सम्बन्धी, किन्त्वाधारतारूपस्येति तुषोपवापोपकारस्य सम्बन्ध्यन्तरनिरपेक्षस्य बोधनमस्तीत्युपदेशत्वस्य न क्षतिर्नवातिदेशत्वापत्तिः। अत एवाङ्गं विहायोपकारपर्यन्तानुधावनमिति दिक्। तदधीनेति। सम्बन्ध्यन्तरसापेक्षत्वादतिदेशस्येति भावः। बाधादीत्यादिना तन्त्रप्रसङ्गसङ्ग्रहः। तदर्थमिति। सर्वार्थत्वव्यवस्थयो-

अपूर्वार्थाः अपूर्वभावनया प्रथममित्थम्भावेन अन्विताः पश्चात्करणभूतस्य यजेरनुग्राहका भवन्ति ? इति ।

धर्माणां करणाङ्गत्वे विवादो नैव विद्यते ।
भावनान्वयपक्षे च तादर्थ्यं नावकल्पते ॥

अपूर्वभावनया हि सम्बध्यमाने करणेतिकर्त्तव्ये तुल्यकल्पे स्याताम्, न करणाङ्गत्वमितिकर्त्तव्यतायाः स्यात् । तस्मात्करणोद्देशेन विधातव्याः । केन पुनः करणमुद्दिश्यते ? केचिदाहुः-प्रकरणाम्नानानुमितेन वाक्येनेति । ननु तेन प्रकृतस्यैव दर्शपूर्णमासादेरुद्देशात्कथं सर्वार्थता ? उच्यते-प्रकृतस्याप्युद्देशकत्वेन यजतिरेवात्र कल्प्यः । स च स्वसामर्थ्यात्सर्वयागानुपस्थापयन्सर्वयागार्थतां कल्पयति । न चैतस्मिन्पक्षे दर्शपौर्णमासवाक्यस्य समिदादिवाक्यानां चैकवाक्यता सम्भवति, येन सर्वं संहृत्य समिदादिविशिष्टदर्शादिविधानाद्यागान्तरे धर्मा न स्युः । तथा सति करणस्य फलं

---

होपयोगित्वेनेत्यर्थः । यज्यर्थ-वं तत्प्रयुक्तत्वे हेतुः । ननु नवमाद्यन्यायेनापूर्वार्थत्वस्याप्यावश्यकत्वात्तत्प्रयुक्तता स्यादत आह--प्रथममिति । असिद्धस्य करणत्वायोगात्प्रथमतो यागकर्मकभावनाऽवगमात्तदन्वितानां तद्द्वारा तत्करणकापूर्वभावनासम्बन्ध इति प्रथमावगतयागभावनाप्रयुक्तस्यैवापूर्वभावनया ग्रहणमिति भावः। उतेति । यागकर्मकभावनाया निश्चितोपायत्वेन धर्माकाङ्क्षाया अभावादपूर्वभावनेतिकर्तव्यतात्वेन तत्रैवान्वयोत्तरं पाष्ठिकयागसम्बन्धादपूर्वार्थत्वं तत्प्रयुक्तत्वं वेति भावः । एवं च करणान्वयपूर्वकोऽपूर्वभावनान्वयः उतापूर्वभावनान्वयपूर्वकः करणान्वय इति संन्देह इति फलितम् । तत्र यागसम्बन्धस्य तदुद्देशेन विधानाधीनत्वादुद्दिश्यमानस्य च नाम्ना विशेषणायोगाद्धर्माणां सर्वयागार्थत्वमाद्यपक्षे, द्वितीये त्वपूर्वभावनया विधीयमानयैव धर्माणामन्वयात्तस्याश्च शब्दान्तरादिभिर्भेदावगमात्तत्करणेनैवान्वय इति व्यवस्थेति ज्ञेयम् । **धर्माणामिति** । अपूर्वभावनेतिकर्त्तव्यतात्वस्यापि करणानुग्राहकत्वनियतत्वादिति भावः । एवञ्च करणान्वयपूर्वक एव भावनान्वयो वाच्यः। अन्यथा करणनिरपेक्षभावनान्वये करणतुल्यतया तादर्थ्यानुपपत्तेरित्यर्थः । प्रयाजादिवाक्येषु करणवाचकशब्दाभावात्कथं तदुद्देशेन विधिरिति पृच्छति- केनेति । प्रकरणशब्देन यागाकाङ्क्षा विवक्षिता न तु भावनेतिकर्त्तव्यताकाङ्क्षेति न प्राथमिकयागसम्बन्धानुपपत्तिः । **नन्वेवं** सिद्धान्तेऽपि सर्वभावनार्थत्वं शब्दसामर्थ्यादापद्येतेत्याशङ्कानिरासार्थमाह-न

प्रत्युपादानात्, अङ्गानि प्रति उद्देशाद्वैरूप्यं स्यात्। तस्मात्फलवाक्येः फलं प्रति यागं विधाय पर्यवसिते पृथग्वाक्यैः समिदादिभिरनुमितयज्युद्देशक-शब्दयुतैरङ्गानि विधीयन्ते। न च प्रकरणादुद्देश्यो यजिर्विशेष्टुं शक्यते, आकाङ्क्षारूपस्य प्रकरणस्याविशेषकत्वात्। संनिधेश्च यजिश्रुतिजनिता-विशेषप्रत्ययेन बाध्यमानत्वात्। तस्मात्सर्वार्था इति।

भाष्यानुसारिणस्त्वाहुः—दर्शपूर्णमासवाक्यमेव यजीनामुद्देशकम्। न हि तत् यागोत्पत्तिपरम्, अग्नेयादिवाक्यैरेवोत्पन्नत्वात्। न च फलसंयो-गार्थम् 'सर्वेभ्यो दर्शपूर्णमासौ, 'सर्वेभ्यो ज्योतिष्टोमः' इति च स्वर्गकामार्थत्वस्यापि सिद्धत्वात्। तस्मादनन्यार्थत्वादनेन फलवतो यागानुद्दिश्य धर्मा विधीयन्ते। न चोद्देश्यं दर्शपूर्णमासशब्दः स्वर्गकाम-शब्दो वा शक्नोति विशेष्टुम् तस्यादधिकृतमात्रोपलक्षणं स्वर्गकामशब्दः, दर्शपौर्णमासशब्दश्च प्रायेण पर्वकालत्वाद्यागानामनुवादः। न च सन्नि-धेराग्नेयादीनामेवोद्देशः, श्रुतिजनिताविशेषप्रत्ययविरोधादित्युक्तं प्राक्। तस्माद्यजिप्रयुक्ता धर्माः सर्वार्थाः।

किञ्च व्रीह्यादिभिर्द्रव्यैः प्रत्यक्षं यजिर्निर्वर्त्यते, नापूर्वम्। अवघाता-दयोऽपि यजिनिर्वृत्तावेव व्रीह्यादीनामेवोपकुर्वन्ति। तस्मात्ते तावद्यज्यर्थाः, तत्सामान्यादितरेषु तथात्वम्। यद्यपि यजिविशेषं प्रति धर्मविधिः, यद्यपि च भावनया सम्बन्धः, तथाऽपि पारिप्लवः, तद्रूपत्वाद्यागान्तराणाम्

---

**चेति**। **वैरूप्यम्** वाजपेयाधिकरणोक्तं विरुद्धत्रिकद्वयम्। कर्त्तव्यत्वेनोपस्थित एवेतिकर्त्तव्य-तान्वयात्कर्तव्यत्वकारणत्वयोश्च युगपदेकत्रावगन्तुमशक्यत्वादिति भावः। सिद्धान्ते तु करणेतिकर्त्तव्यतोभयविशिष्टभावनाविध्युत्तरं पार्ष्टिककरणत्वान्वयाद्वैषम्यमित्याशयः। **पृथग्वाक्यैः** फलवाक्यैकवाक्यतारहितैः। **समिदादिभिः** तद्वाक्यैः। **अनुमितेति** समिधो यजतीत्थं यजेतेत्येवंरूपैरित्यर्थः। **आकाङ्क्षेति**। सा ह्यन्वयबोधहेतुर्न तु विशेषणसमर्पि-केत्यर्थः। यदि तु साकाङ्क्षं यागमिति विशेष्यते तदापि सर्वयागानां तथात्वेनाव्यावर्त्त-कतैवेति भावः। ननु संनिहितं यागमिति सन्निधानरूपप्रकरणस्य विशेषकत्वं स्यात्तत्राह-**सन्निधेश्चेति**। अधिकृतेति अधिकारिमात्रेत्यर्थः। सन्निधेः स्वयमविशेषणत्वेऽपि तद्वशेन यजिश्रुतेः सङ्कोचमाशंङ्क्य दूषयति-**न चेति**। सन्निपत्योपकारिणां यागस्वरूपार्थत्वस्य प्रत्यक्षत्वेन यागार्थत्वस्यावश्यकत्वादन्येषामप्यङ्गत्वसामान्यात्तदेवोचितमित्याह-किञ्चेति।

भावनान्तराणाञ्च । यथा लोके 'वाहीकोऽयमतिथिर्यवान्नेन परिवेष्टव्यः' इत्युक्ते यद्यपि वाहीकविशेषं प्रति यवान्नं श्रुतं तथाऽप्यन्येषामपि वाहीकानां यवान्नप्रियत्वं गम्यते, तद्वद्यजिरूपस्य व्यक्तिविशेषस्य यजिकरणस्य च भावनाविशेषस्योक्ता धर्मास्तद्रूपाणामन्येषामपि साधारणा इति शक्यमवगन्तुम् । तस्मात्सवार्था धर्मा इत्यनारभ्योऽतिदेश-विचार इति प्राप्ते अभिधीयते—

प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम् ।
अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ॥
भावनान्वयतः पश्चादंशयोरार्थिकोऽन्वयः ।
ततः कर्मान्तरेऽङ्गानां प्राप्तिराशङ्क्यते कुतः ॥
भावनान्वयितामात्रं नांशयोस्तुल्यकल्पना ।
अपरित्यक्तरूपत्वाद्गुणप्राधान्यसम्भवात् ॥

यथा फलं भावनयामप्यन्वीयमानं फलत्वापरित्यागात्प्राधान्यं प्रतिपद्यते, तथा करणमपि करणात्मना सम्बद्धुं फलं प्रति गुणत्वम्, इतिकर्त्तव्यतां प्रति प्राधान्यम् । इदमेव हि करणं यत्फलोद्देशेन प्रवृत्त-कर्त्तृव्यापारेण फलसाधनतामापद्यते । इतिकर्त्तव्यता तु येन व्यापार-विशेषेण करणस्य फलसाधनरूपत्वमुपजन्यते, सा उच्यते । तस्मान्न तुल्यकल्पत्वम् । न च यजिः स्वयमित्थम्भावापेक्षः, नापि यागभावना, निर्ज्ञातप्रकारत्वात् । अपूर्वभावनायास्त्वनिर्ज्ञातप्रकारत्वात् तद्भावना कीदृशीति न ज्ञायते । यागेनापूर्वं कुर्यादित्ययमर्थः—यथा व्यापृते यागादपूर्वं भवति, तथा व्याप्रियेतेति । कीदृशोऽसौ व्यापार इति

---

नन्वनुवादकत्वेन कल्पितस्य यजेः पूर्वमेव सन्निहितपरत्वावसायान्न श्रुतिविरोध इति कथं सवार्थतेत्यत आह-**यद्यपीति** । पारिप्लवः साधारणः धर्मविधिरित्यनुषङ्गः। उक्तन्याये-नापाततो विशेषबोधेऽपि वाहीकवाक्यन्यायेन सवार्थत्व एव तात्पर्यग्रह इत्याशयः । **प्रधानेति** । इदमनेनेत्थं कुर्यादिति त्र्यंशभावनाया एव विधानार्हत्वादाकाङ्क्षावशेनैक-वाक्यता कल्प्येत्यर्थः । **अंशयोः** करणेतिकर्तव्यतयोः । भावनान्वयपक्षे च तादर्थ्यं नावकल्पत इत्युक्तं दोषं परिहरति-**भावनेति** । यागभावना यागकर्मकभावना । यदुक्तं व्रीह्यादिवदन्ये-

भवति व्यापारविशेषापेक्षा तद्विशेषत्वेन समिदादिव्यापारविशेषापेक्षा, तद्विशेषत्वेन समिदादिव्यापारविधानमपेक्षासन्निधि-योग्यत्वैरध्यवसीयते। तस्मात्प्रकृतभावनाशेषत्वात् समिदादीनां न पारिप्लवत्वम्। व्रीह्यादि द्रव्यमपि फलभावनांशेन सम्बध्यते, यया हि क्रियया यागात्स्वर्गापूर्वं भवति, सा फलभावना। यागस्वरूपसम्पादनमपि तद्व्यापार एव, अनिष्फलस्य फलसाधनत्वाभावात्। अवघातादयोऽपि तत्रैव व्रीहीणां योग्यतामादधानाः भावनार्था एव। न च वाहीकयवान्नवत्साधारण्यानुमानम्। लोके हि प्रमाणान्तरवशात् तथाऽवगम्यते। शब्दैकप्रमाणकेषु विशेषान्वये शब्देनावगम्यमाने पारिप्लववाक् साहसमात्रम्। तस्माद्यथाप्रकरणं व्यवस्थिता धर्माः। ततश्चानुपदिष्टधर्मकेषु सौर्यादिषु अतिदेशेन धर्मसद्भावादि विचारयितव्यम्।

अन्यधर्मत्वेनावगतानां तत्सम्बन्धादरेणान्यत्र प्रदेशे प्रापणं येन व्यापारेण भवति, सोऽतिदेशो नाम। तथा चोक्तम्—

'प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः' ॥ इति ॥

अत्रायमन्वयः—प्राकृतात्कर्मणो धर्मप्रदेशो येन स्यात्, सोऽतिदेशः। क्व धर्मप्रदेश इत्यपेक्षायामाह—'यस्मात्तत्समानेष्विति। यस्मात्प्राकृता-

---

षामपि यागार्थतैवेति तत्परिहरति-व्रीह्यादीति। तद्व्यापार एव फलानुकूलव्यापार एव। तथा च स्वरूपसम्पादनार्थत्वेऽपि तस्य फलभावनारूपतया व्रीह्यादिग्राहकत्वमित्यर्थः। तत्रैव. स्वरूपसंपादन एव वाहीकादिवदनुमानं तु न धर्मे प्रमाणमित्याह—न चेति। अतिदेशस्वरूपं दर्शयितुं भाष्योदाहृतं श्लोकमुदाहरति–तथाचेति। ननु प्राकृतात्कर्मणस्तत्समानेषु कर्मसु धर्मविधायकोऽतिदेश इति लक्षणं वाचनिकातिदेशाव्यापकम् तस्य सादृश्यनिमित्तकत्वाभावादेवं यस्मादित्यनन्वयादसंगतं चेत्यत आह-अयमिति। तथा

दाग्नेयादेर्धर्माः प्रदिश्यन्ते तत्समानेषु कर्मसु सौर्यादिष्विति । त्रिविधश्चातिदेशः—प्रत्यक्षवचनान्नामधेयाच्चोदनालिङ्गानुमितवचनाच्चेति ॥

इत्यङ्गानामपूर्वप्रयुक्तताधिकरणम् ॥ १ ॥

२

समाने० तत्र प्रत्यक्षवचनात्तावच्चिन्त्यते । इषावेकाहे ज्योतिष्टोमविकारे 'इषुं विष्टुतिं करोति, सप्ताहं साम भवती'ति प्राकृतानां स्तोत्राणां विकारं विधाय श्रूयते-'समानमितरच्छ्येनेने'ति । तत्र संशयः किमयमनुवादः ? उत श्येनवैशेषिकाणामतिदेशविधिः ? इति । तत्रेतरच्छब्दः सन्निहित वचनत्वाच्छ्येनवैशेषिकाणां चासन्निहितत्वान्न तद्वाचकः । चोदकप्राप्तास्तु ज्योतिष्टोमधर्माः । ते च श्येनेऽपि विद्यमानास्तत्सादृश्यमिषोरापादयन्तीति तदपेक्षोऽयमनुवाद इति प्राप्ते—

---

च तत्समानेष्विति प्रायिकार्थकथनेन न लक्षणान्तर्गतम् । यस्मादिति चेत्थं योज्यमिति भावः । नामधेयं मासमाग्निहोममिति गौणं सन्मुख्यात्रग्निहोत्रधर्मप्रापकं यद्यपि तत्प्रत्यक्षं तथापि न वचनमिति भेदः । चोदनाया विधिवाक्यस्य लिङ्गं सादृश्यं निर्वपतिमत्वादि तेनानुमितेन कल्पितेन वचनेन सौर्यादावाग्नेयादेर्धर्मातिदेशः । मुख्यानामपूर्वभावनानां भेदे सति यथाधिकारं प्रकरणानुसारेण शेषाणां भावो व्यवस्था । कुतः ? श्रुतिप्रमाणकत्वाच्छेषाणामिति सूत्रार्थः ॥

इत्यङ्गानामपूर्वप्रयुक्तताधिकरणम् ॥ १ ॥

२

सामने० इषाविति । 'इषुणाभिचरन् यजेते' ति विहित इत्यर्थः । इषुसादृश्यादिषुरिति यागनाम । विष्टुतिर्गानप्रकारश्चरना तां कुशाख्यैः कीलैर्वाससि इष्वाकारां करोतीत्यर्थः । इषुभिरेव कर्त्तव्येत्यन्ये । सप्ताहाख्यं साम स्तोत्रसाधनं भवतीत्यर्थः । स्तोत्राणामिति । तत्सम्बन्धिविष्टुतिसाम्नामित्यर्थः । वादो विधिः । तथा च इष्वादीतरदप्राकृतं श्येनेन समं यथा श्येने तथात्रापीत्यर्थः ।

ब्रूमः— सत्यमितरच्छब्दः सन्निहितमभिधत्ते, न तु तन्मात्रम्, किन्तु पूर्वनिर्दिष्टसदृशं सन्निहितञ्च यद्द्रव्यं तदभिधत्ते। तदिह यत्सन्निहितं ज्यौतिष्टोमिकं न तत्पूर्वोक्तसदृशम्। अप्राकृतानां सप्ताहादीनां पूर्वमुक्तत्वात्। यत्त्वप्राकृतं लोहितोष्णीषादि श्येनवैशेषिकं तद्यद्यप्यसन्निहितम् तथाऽपि सादृश्यमस्तीत्यवश्यं हातव्येऽन्यतरस्मिन् वचनार्थवत्त्वाय सन्निधिं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणां वादः।

यद्वा चोदकप्राप्तानां विष्टुत्यादीनां विकारः 'इषुं विष्टुतिमि'त्यादिना पूर्वं विहितस्तत इतरच्चोदकप्राप्तमितरच्छब्देनोद्दिश्य तस्य लोहितोष्णीषादिविकारः श्येनादतिदिश्यते। एवं सन्निहितवचनत्वमर्थवत्त्वञ्च वचनस्य भविष्यति॥

इतीषौ श्येनीयविशेषधर्मातिदेशाधिकरणम्॥ २॥

३

पञ्चसञ्चरे० चातुर्मास्येषु चत्वारि पर्वाणि वैश्वदेवं वरुणप्रघासाः साकमेधाः शुनासीरीयमिति। तत्र वैश्वदेविकानामाद्यानां पञ्चानां हविषां

---

एवं भाष्यानुसारिव्याख्यायां प्रसिद्धसन्निहितवाचकत्वत्यागादप्रसिद्धसादृश्यार्थाङ्गीकरणास्वरसाद्वार्त्तिकमतमाह—यद्वेति। चोदकप्राप्तत्वेन बुद्धिस्थाद्विष्टुत्यादेरितरदवशिष्टं श्येनेन समानं तदुक्तलोहितोष्णीषादिविकारवदिति वाक्यार्थः। पूर्वत्रास्वरसन्दर्शयति—एवमिति। एवञ्च प्राकृतसम्बन्धिविकारमात्रस्यैवातिदेशो न त्वाप्राकृतकार्यंकण्टकवितोदनादेः। भाष्यमते तु तस्याप्यतिदेश इति विशेषो ज्ञेयः। समानमिति वाक्ये उत्पन्नानामतिदिष्टानामधिकारोऽनुवादः इषुयागस्य प्रकृतिपूर्वकत्वादिति सूत्रार्थः॥

इतीषौ श्येनीयविशेषधर्मातिदेशाधिकरणम्॥ २॥

३

पञ्चसञ्चरेषु० धर्मातिदेशविचारानन्तरं धर्मबोधकशास्त्रातिदेशस्तदपेक्षया बहिरङ्गविषयश्चिन्त्यत इत्यनन्तरसङ्गतिः। पञ्चानामिति। 'आग्नेयमष्टाकपालं निर्वपति

यद् ब्राह्मणं तद्वारुणप्राघासिकेषु पञ्चस्वतिदिष्टं 'एतद्ब्राह्मणान्येव पञ्च-हवींषी' ति । तत्र संशयः—किं यस्तेषामर्थवादः 'वार्त्रघ्नानि वा एतानि हवींषी'त्यादिः, तन्मात्रस्यायमतिदेशः, सैवैषां प्रशंसेति ? उतार्थवाद-स्याङ्गविधीनाञ्च 'नव प्रयाजा' इत्यादीनामतिदेशः ? इति ।

पूर्वेषां ब्राह्मणं यत्तदुत्तरेष्वतिदिश्यते ।
चोद्यन्ते येन वाक्येन तत्तेषां ब्राह्मणं मतम् ॥

अङ्गविधिभिः स्वाङ्गान्येव विधीयन्ते न हवींषि । सार्थवादकन्तु वाक्यं तेषां विधायकमिति भवत्यर्थवादस्य तत्सम्बन्धः । तस्मात्तन्मात्राति-देशः । नैवम्—

यद्यपि ह्यङ्गविधिभिर्हविषां न विधेयता ।
तथाऽप्यस्त्येव सम्बन्धस्तत्सम्बन्ध्यङ्गचोदनात् ॥

किञ्चाङ्गवाक्यैकवाक्यतामापन्नं प्रधानवाक्यं हविषां समग्राणां विधायकमिति विधायकेनाप्यस्त्येवाङ्गविधीनां सम्बन्धः । तस्मात्सर्वेषा-मतिदेशः ॥

इति पञ्चसञ्चराधिकरणम् ॥ ३ ॥

---

सौम्यं चरुम् सावित्रं द्वादशकपालं सारस्वतं चरुम् पौष्णं चरुम्' इत्येतेषामित्यर्थः । वारुणेति । तत्राप्येतान्येव विधाय एतदित्यादि श्रुतमित्यर्थः । यद्ब्राह्मणानीतराणीति शेषवाक्यम् । यद्ब्राह्मणानीतराणि वैश्वदेविकानि तद्ब्राह्मणान्येवैतानि वारुणप्राघा-सिकानीत्यर्थः । तन्मात्रस्येति । प्रधानविधेः प्रत्यक्षश्रुतत्वादश्रुतमपेक्षितमर्थं वादमात्रं ब्राह्मणपदेनोच्यत इति भावः । अपेक्षितरूपेणान्वयं दर्शयति—प्रशंसेति । अर्थवादव-देकवाक्यतया विधायकत्वमङ्गवाक्येषु तुल्यमित्याह—किञ्चेति । समग्राणाम् परिपूर्णेति कर्त्तव्यानाम् । अनेनैकवाक्यतामूलसाकाङ्क्षत्वमुक्तम् । पञ्चसङ्ख्यानि सञ्च-रन्ति पर्वस्विति तानि हवींषि तेष्विति सूत्रार्थः ॥

इति पञ्चसञ्चराधिकरणम् ॥३॥

४

एककपाले० वैश्वदेवे तावद् 'द्यावापृथिव्य एककपालः' वरुणप्रघासेषु 'काय एककपालः' 'ऐन्द्राग्नो द्वादशकपाल'श्च । ततस्साकमेधेषु श्रूयते 'ऐन्द्राग्न एकादशकपालः' 'वैश्वकर्मण एककपालः' इति । तत 'एतद्ब्राह्मण एककपाल' इति श्रुतम् । तत्पूर्ववत् सार्थवादकस्य साङ्गविधिकस्य कृत्स्न-काण्डस्यातिदेशकमित्युत्तरविवक्षया प्राप्यते ॥

इति सार्थवादविध्यन्तातिदेशाधिकरणम् ॥ ४ ॥

५

एककपालानां० 'एतद्ब्राह्मण एककपालः' इति किं वैश्वदेविकस्यैक-कपालस्य ब्राह्मणमतिदिश्यते ? किं वा वारुणप्राघासिकस्येति ? संशये वारुणप्राघासिकेऽल्पमप्राकृतम् वैश्वदेविके बहु । तस्मात्तदतिदेशोऽयं बहु-वचनस्य बहुफलत्वायेति प्राप्ते—

ब्रूमः-वारुणप्रघासिकस्याव्यवहितत्वाद् 'एतद्ब्राह्मण ऐन्द्राग्नः' इत्यनेन निःसन्दिग्धवारुणप्रघासिकब्राह्मणनिर्देशेन समभिव्याहाराद्वैश्वदेविकस्य तु व्यवहितत्वात्तद्धर्माणाश्च 'स्वरसामैककपालामिक्षमि'ति वक्ष्यमाणादेव

---

४

एककपाले० उत्तरेति । उत्तरविचारेच्छया तं कर्त्तुमिति यावत् ॥

इति सार्थवादविध्यंतदेशाधिकरणम् ॥४॥

५

एककपालानम्० अल्पमिति । 'शमीमय्यः स्रुव' इत्यादिरूपमित्यर्थः । बह्वित्य-नेन पूर्ववद्बहुविषयत्वलाभसाम्यात्प्रत्यवस्थानमिति सङ्गतिः सूचिता । सूत्रार्थस्तु—एककपालानां वैश्वदेविक एककपालः प्रकृतिः । आग्रयणे सर्वहोमस्य पर्यावृत्तेश्च दर्श-

न्यायात्लाभात्तद्विषयत्वे वचनानर्थक्यप्रसङ्गात्, वारुणप्रघासिकस्यैककपाल-ब्राह्मणस्यायमतिदेशः ॥

इति साकमेधे वारुणप्राघासिकैककपालातिदेशाधिकरणम् ॥ ५ ॥

इति शास्त्रदीपिकायां सप्तमस्य प्रथमः पादः ॥ १ ॥



---

नात् । अनुवादादवभृथे च सकृत्तत्रैव द्व्यवदानवचनादन्यत्र सकृदेवावदानमिति प्रतीते-स्तेनैव लिङ्गदर्शनादिति ॥

इति साकमेधे वारुणप्राघासिकैककपालातिदेशाधि० ॥ ५ ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामचन्द्रात्मजवैद्यनाथकृतायां शास्त्र-दीपिकाव्याख्यायां प्रभाख्यायां सप्तमाध्यायस्य प्रथमः पादः ॥ १ ॥



## अथ द्वितीयः पादः

१

साम्नो० 'कवतीषु रथन्तरं गायती' त्यत्रानेन रथन्तरशब्देन किं कवतीष्वतिदिश्यत इति परिज्ञानार्थं रथन्तरादिशब्दाः किं गीतिविशिष्टानाम् 'अभि त्वा शूर नो नुमः' इत्यादीनां वाचकाः ? उत गीतिमात्रस्या ? इति चिन्त्यते । द्वितीये तु मन्त्रलक्षणं कुर्वता गीतिः सामेत्युक्तम्, न तूपपादितम्। इह त्वतिदेशविषयसिद्ध्यर्थं गीतिविषयत्वमेव न्यायेन दृढीक्रियते । तत्र गीतिविशिष्टायामृचि प्रयोगाद्दृश्चवचनत्वम् । विशिष्टवचनत्वे विशेषणभूतगीत्यभिधानस्यावश्यकत्वात्, तदभिधाने च तत एव तदविनाभूतायामृचि प्रतिपत्तिसिद्धेरभिधानशक्तिकल्पनानुपपत्तेर्गीतिमात्रमेषाम-

---

## द्वितीयः पादः

१

साम्न० सङ्गतिं दर्शयति कवतीष्विति । कयानश्चित्र इत्याद्यास्तिस्रः कशब्दवत्वात्कवत्यस्तास्वाम्नानतो वामदेव्यं सामास्ति तद्बाधेन द्वादशाहे रथंतरं अभित्वा शूर इत्यस्यामृच्युत्पन्नं सामातिदिश्यते तदर्थतयास्य सङ्गतिरित्यर्थः । गीतिषु सामाख्येति द्वितीयाध्यायगतेन पौनरुक्त्यशङ्कामपाकरोति—द्वितीये त्विति । नत्विति । प्रयोजनाभावादिति भावः। पूर्वपक्षमाह ।तत्रेति। रथंतरमधीष्वेतिप्रेरितस्य गीतिमन्मन्त्राध्ययने प्रवृत्तेः विशिष्टवाचितेत्यर्थः । आकृत्यधिकरणन्यायेन सिद्धान्तमाह—विशिष्टेति । अत्र पूर्वपक्षे ऽतिदेशासंभवात्कवतीपदलक्षितेऽर्थप्रकाशनरूपे कार्ये अभिवतीनामतिदेशः । अथवा कवतीषु रथंतरं तल्लक्षितसंमीलनादिधर्मं कुर्यादिति जघन्यरथंतरपदे लक्षणेति प्रयोजनम् । सिद्धांते तु गीतिमात्रातिदेश इति स्पष्टमेव । प्रयोजनप्रदर्शनार्थ-

भिधेयम् । अतोऽभिवत्यां यो गीतिविशेषः, तस्य कवत्यादिष्वतिदेशः ॥

इति रथन्तरादिशब्दानां गानविशेषार्थताधिकरणम् ॥ १ ॥

इति शास्त्रदीपिकायां सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥



---

मेव चाकृत्यधिकरणार्थस्य पुनः कथनमिति ज्ञेयम् ॥

इति रथन्तरादिशब्दानां गानविशेषार्थताधिकरणम् ॥ २ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजतत्सद्वैद्यनाथकृतायां शास्त्रदीपिका-
व्याख्यायां प्रभाख्यायां सप्तमाध्यायस्य
द्वितीयः पादः ॥ २ ॥



## अथ तृतीयः पादः

१

उक्तम्० इदानीं नामातिदेशः प्रस्तूयते। कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहुती' ति। तन्नैयमिकाग्निहोत्रात्कर्मान्तरमिति स्थिते संशयः—किमयमग्निहोत्रशब्दः नैयमिकाग्निहोत्रधर्माणामतिदेशकः? उत न? इति।

उभयोरविशेषेण सामानाधिकरण्यतः।
नामधेयमिदं तस्मान्न धर्मानतिदेक्ष्यति॥
एकस्य त्वभिधेयत्वे गौणत्वेनापि सम्भवात्।
नान्यस्याप्यभिधेयत्वमनेकार्थत्वदोषतः॥

न चागृह्यमाणविशेषत्वम्, नैयमिकेऽग्नये होत्रमित्येवं प्रवृत्तिनिमित्तं सम्भवति। इतरस्य त्वग्निदेवत्यत्वं नावगतम्। अधर्मकश्च कौण्डपायिनः तद्वचनत्वे सति न गौणत्वं नैयमिकस्य युज्यते, नैयमिकस्तु धर्मवान्। अतः तन्नामेदं तत्सादृश्यविधित्सयाऽन्यत्र प्रयुज्यते। सादृश्यं च धर्मनिमित्तम्। अतो धर्मातिदेशोऽयं 'मासमग्निहोत्रं जुहुती' ति॥

इत्यग्निहोत्रनाम्ना धर्मातिदेशाधिकरणम्॥ १॥

---

## तृतीयः पादः

१

उक्तं० इदानीमिति। अतिस्फुटतया प्रथममुपस्थितो वचनातिदेशो निरूपितः नामातिदेशस्तु गौणवृत्तिनिमित्तो न स्फुट इत्यतस्तदुत्तरं प्रत्यक्षत्वसाम्याच्चानुमानिकात्प्राङ्निरूप्यत इति भावः। उभयोः नैयमिकमासाग्निहोत्रयोः। नियामकान्तरमाह—अधर्मकश्चेति। कुण्डपायिनः ऋषयस्तत्सम्बन्धी सत्रान्तर्गतो होम इत्यर्थः। नैयमिक इत्यपि पुंल्लिगनिर्देशो होमाभिप्रायः। अग्निहोत्रपदं क्रियाया अभिधानं नामेत्युक्तं तत्प्रख्याधिकरणे। तस्यान्यत्र श्रुतौ विधिप्रदेशोऽतिदेशः स्यादिति सूत्रार्थः॥

इति नाम्ना धर्मातिदेशाधिकरणम्॥ १॥

२

अपि वा० द्वादशाहे प्रथममहः प्रायणीयोऽतिरात्रः। गवामयनेऽपि प्रथमेऽहनि 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवती'ति प्रायणीयशब्दः प्रयुज्यमानः किं द्वादशाहिकधर्मानतिदिशेत् ? उत न ? इति संशये पूर्ववदतिदेशे प्राप्ते, अभिधीयते—

प्रायणीयपदं येन निमित्तेन प्रवर्तते।
प्राथम्येन तदस्त्येव गावामयनिकेऽपि नः॥
तस्मात्सिद्धनिमित्तेन श्रुत्या नामत्वसम्भवात्।
न गौणत्वेन धर्माणामतिदेशोऽवकल्पते॥

इति प्रायणीयनाम्ना धर्मानतिदेशाधिकरणम्॥ २॥

३

विश्वजिति० 'विश्वजित्सर्वपृष्ठो भवति' इत्यत्र संशयः—किमयं सर्वपृष्ठशब्दः अनुवादः ? उत बृहद्रथन्तरयोर्विकल्पेन प्राप्तयोः

---

२

अपिवा० नाम्नोऽतिदेशकत्वस्यापवादात्सङ्गतिः। वैश्वानरदेवताकत्वात्तन्नामा ज्योतिष्टोमस्तद्धर्मवान्। अनेन द्वादशाहिकधर्मविरोधेन बाधितानां ज्योतिष्टोमधर्माणां प्रतिप्रसवः क्रियते। प्राथम्येनेति। प्रयति प्रारभतेऽनेनेति करणे बाहुलिकादानीयर्प्रत्ययः। प्रायणे प्रारम्भे भवमिति छप्रत्ययो वा बोध्यः। यत्र तु चतुर्थादौ प्रायणीयपदप्रयोगस्तत्र योगासम्भवाद्गौण्यातिदेशकत्वमेवेत्युक्तं तन्त्ररत्ने। सूत्रार्थस्तु अपिवेति–पूर्वपक्षव्यावृत्तिः। गुणार्था प्राथम्यगुणनिमित्तेति॥

इति प्रायणीयनाम्ना धर्मानतिदेशाधिकरणम्॥ २॥

३

विश्वजिति० सङ्गतिं स्वयमेव ग्रन्थकृद्वक्ष्यति। षाडहिकानामिति। षडहसाध्ययागसम्बन्धिनामित्यर्थः। अत्र रथन्तरादिशब्दास्तत्साधनकस्तोत्रपराः, पृष्ठशब्दस्य स्तोत्र-

समुच्चयविधिः ? अथवा षाडहिकानां रथन्तरबृहद्वैरूपवैराजशाक्वर-रैवतानामतिदेशः ? इति। तत्र ज्योतिष्टोमे माहेन्द्रादिषु चतुर्षु स्तोत्रेषु 'सप्तदशानि पृष्ठानी'ति पृष्ठशब्दप्रयोगात्सर्वेषां पृष्ठत्वम्। तेषाञ्चेह चोदक-प्राप्तेः सर्वपृष्ठत्वं विज्ञातमेव विश्वजितः। तस्मादयमनुवादः।

नैवम्, बृहद्रथन्तरसाधनकमाहेन्द्रस्तोत्रवचन एव पृष्ठशब्दो लिङ्गसमवायाच्चतुर्षु प्रयुक्तः। तस्मान्न तेषां पृष्ठशब्दवाच्यत्वमित्यप्राप्ता सर्वपृष्ठता चोदकेन। अतो नानुवादः। चोदकेन तु विकल्पेन प्राप्तयो-र्बृहद्रथन्तरयोः पृष्ठयोः सर्वत्वं समुच्चयो विधीयते।

नैवमपि युक्तम्, सर्वशब्दस्य बह्वपेक्षत्वाद् द्वयोरप्रवृत्तेः। तस्मात्षाडहिकानां पृष्ठानां ज्योतिष्टोमविकार एव विश्वजिति वचनादतिदेशः।

कः पुनर्वचनातिदेशस्यात्र सम्बन्धः ? न हि सर्वपृष्ठशब्दः षडहनामधेयं सदिह गुणवृत्त्या प्रयुक्तम्, यतस्तन्निमित्तो निर्देश इति

---

वचनत्वात्। सामपरत्वे लक्षणापत्तेस्तदङ्गीकारे च माहेन्द्रादिषु चतुर्षु पृष्ठैः स्तुवत इत्यादि प्रयोगावगतनिरूढलक्षणाङ्गीकारस्यैव युक्तत्वेनानुवादत्वपक्षनिराकरणानुपपत्तेः। एवञ्च विश्वजित्प्रकरणे रथन्तरं पवमाने कुर्यादित्यादिवाक्येषु रथन्तरादिशब्दाः स्तोत्रलक्षणया तद्व्यवस्थापरा एवेति पृष्ठशब्दस्य लक्षणया स्वसाधनरथन्तरादि-परत्वं तन्त्ररत्नोक्तमयुक्तमिति वदन्ति। द्वितीयं पक्षमाह-चोदकेनेति। 'रथन्तरं पृष्ठं भवति बृहद्वा पृष्ठं भवती'ति वाचनिकेन विकल्पेनेत्यर्थः। न चोक्तवचनेनैकस्मिन्नेव पृष्ठस्तोत्रे रथन्तरबृहत्सामद्वयविकल्पविधिरिति पृष्ठद्वये मानाभाव इति शङ्क्यम्। 'रथन्तरं पृष्ठं भवति' 'बृहत् पृष्ठं भवती'ति वाक्यद्वयेऽपि गुणाम्नानादुत्पत्तिशिष्टगुणावरुद्धे चोत्पन्नशिष्टस्यानिवेशेन गुणादेव भेदसिद्धेः। बृहद्रथन्तरयोः तत्साधनकपृष्ठयोः।

सङ्गच्छेत। सत्यमेवम्, कर्मसमानाधिकरणपदनिमित्तोऽयमतिदेश इति नामातिदेशाधिकारे चिन्तितः। परमार्थतस्तु वाचनिक एवायमतिदेशः॥

इति विश्वजिति षाडहिकपृष्ठातिदेशाधिकरणम्॥ ३॥

४

तथाव० वरुणप्रघासेषु श्रूयते 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती' ति। तत्र किमवभृथशब्देनापां व्युत्सेकं दार्शपौर्णमासिकं चोदकप्राप्तमनूद्य तत्र तुषनिष्कासं विधीयते? अथवा सौमिकावभृथधर्मकं कर्मान्तरं विधीयते? इति संशये, अपां व्युत्सेकेऽप्यवभृथशब्दप्रयोगात्तदनुवादः। ननु तत्र गौणोऽवभृथशब्दः। न चेह गौणग्रहणं न्याय्यम्। तुल्यमिदं तवापि गौणत्वम्। अपि च ममानुवादे गौणः। तव तु विधौ। तस्मादपां व्युत्सेके गुणविधिः।

सत्यम्, ममापि तुल्यत्वमस्ति तत्तु प्रमाणवत्।
कर्मान्तरे प्रयुक्तत्वाद् भवतस्त्वप्रमाणकम्॥

---

**कर्मसमानाधिकरणेति**। तथा चैतत्साहश्याद्‌दुपस्थितः प्रसङ्गादुक्त इति भावः। अत्र च विश्वजिदनुवादेन समासगम्यसर्वत्वविशिष्टपृष्ठरूपैकार्थविधिः प्रथमभक्ष इतिवदिति न वाक्यभेद इति वार्त्तिकानुसारिणः। पृष्ठपदसमभिव्याहाराद्वस्तुतस्तद्गतसर्वतामात्रविधावर्थात्पृष्ठप्राप्तिरिति भाष्यानुसारिणः। सूत्रन्त्वनुवादपक्षप्रतिपादकम्, तत्पूर्वकत्वात् ज्योतिष्टोमप्रकृतिकत्वात् ज्यौतिष्टोमिकानि पृष्ठानि सर्वपृष्ठवाक्येऽनूद्यन्ते यतो माहेन्द्रादिषु पृष्ठशब्दो ऽस्तीति न सर्वशब्दानुपपत्तिरिति योज्यम्॥

इति विश्वजिति षाडहिकपृष्ठातिदेशाधिकरणम्॥३॥

४

**तथावभृथ०** प्रासङ्गिकसमाप्तौ बुद्धिस्थस्य तत्पूर्वाधिकरणस्यातिदेशात्सङ्गतिः। **वारुणी** आमिक्षा। **अपामिति**। 'एष वै दर्शपूर्णमासयोरवभृथ' इति प्रयोगादित्यर्थः। **तवापि**। कर्मान्तरवादिनोऽपि मत इति शेषः। एवञ्च लाघवात्तु निष्कासमात्रविधिरेव युक्त इति भावः। न च वाक्यभेदः, चशब्देन समुच्चितस्यैव विधानादित्याशयः।

गौणत्वं न हि शब्दस्य स्वरसादवगम्यते ।
अर्थान्तरे प्रयोगे तु निश्चिते गौणता भवेत् ॥

न चेहापां व्युत्सेकपरत्वेऽवभृथशब्दस्य प्रमाणमस्ति । 'यन्ती' त्यनेन तु प्रकरणान्तरन्यायेन कर्मान्तरं विधीयते । तत्र प्रयुज्यमानोऽवभृथशब्दो मुख्यावभृथसादृश्यं विदधत् तद्धर्मानतिदिशतीति न्याय्यम् ॥

इति अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

द्रव्यादेशे० यदिदं कर्मान्तरं तत्किं पुरोडाशद्रव्यकम् ? उत तुषनिष्कासद्रव्यकमिति ? विचारः । तत्रावभृथशब्देन प्रत्यक्षेण पुरोडाशादिधर्मप्राप्तेः तद्विशिष्टकर्मविधिपरेण च तुषनिष्कासस्य वाक्यभेदाद्विधातुमशक्तेः पुरोडाश एव द्रव्यं स्यात् ।

अपूर्वकर्मविधिनाऽनेकेषामपि चोदना ।
अन्यथा तुषनिष्कासपदानर्थक्यदोषतः ॥
तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनम् ।
श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते ॥

---

प्रमाणमस्तीति । सामानाधिकरण्येन प्रयोगरूपमित्यर्थः । मन्मते एतदस्तीत्याह–यन्तीति । अग्निहोत्रमितिवदार्थिकसाध्यत्वाभिप्रायो द्वितीयान्तोऽवभृथशब्दः कर्मनामेत्यर्थः । अवभृथशब्दः सोमात्सौमिकादवभृथात्तथातिदेशक इति सूत्रार्थः ॥

इत्यवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम् ॥४॥

५

द्रव्यादेशे० अपवादात्सङ्गतिः । उक्तस्यातिदेशस्य किञ्चिद्‌देशे पूर्वपक्षमाह–तत्रेति । प्राकृतेतिकर्त्तव्यताविशिष्टप्रधानकर्मवाचिनोऽवभृथपदेन कर्मविधौ पदान्तरोपात्तस्य तुषादेर्द्रव्यान्तरस्य निवेशायोगान्निवेशे वा तात्पर्यानेकत्वनिमित्तवाक्यभेदापत्ते-

अवभृथशब्देन तु गौणत्वेन सर्वावभृथधर्मसाधारणेन च पुरोडाशस्य प्राप्तिः । तस्मात्तस्य बाधः ॥

इति वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥५॥

६

गुण० आतिथ्यायां 'वैष्णवो नवकपालो भवती'ति श्रूयते । तत्राश्ववालादयः केचिद्धर्मा विहिताः । राजसूये 'वैष्णवस्त्रिकपालः' इति श्रुतो वैष्णवशब्दः किमातिथ्यादिधर्मानतिदिशति ? नेति संशये, अग्निहोत्रन्यायेनातिदेशं मन्वानस्योत्तरम्—

श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः ।
न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥

इति वैष्णवशब्दस्यातिथ्यागतधर्मानतिदेशकत्वाधिकरणम् ॥ ६ ॥

---

श्च प्रतिपत्यर्थमर्थप्राप्तस्य याने साहित्यस्यानुवादमात्रम् । निष्कासेन तुषैश्चेत्येतदित्याशयः । शेषं स्पष्टम् ॥

इति वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥५॥

६

**गुणविधि०** प्रसङ्गसङ्गतिः । **आश्ववालेति** । आश्ववालः काशमयः । ऐक्षव्यौ काशमूलमये । विधृतिशब्देनास्तृतायां वेद्यां प्रस्तरस्याधस्तिर्यक् निधेयतृणद्वयमुच्यते । **अग्निहोत्रन्यायेनेति** । प्रायणीयन्यायस्त्विह नास्ति । प्रायणीयपदस्य पाठादिप्राप्तप्राथम्यानुवादकत्वेनानतिदेशकत्वात् । वैष्णवशब्दस्य तु विधायकत्वावश्यम्भावेनाधिकार्थलिप्सयातिदेशकत्वौचित्यात् । यद्यप्यत्राग्निहोत्रपदवत्कर्मसामानाधिकरण्यं नास्ति, तथापि द्रव्ये सादृश्यप्रतिपादनद्वारा त्रिकपालद्रव्यको यागो वैष्णवनवकपालद्रव्यकवत्कार्य इति पर्यवसानादतिदेशकत्वमिति भावः । गौणेति बह्वर्थविधिलिप्सया गौणत्वाङ्गीकारेऽतिप्रसङ्गादिति भावः । सूत्रे समत्वादुभयत्रापि वैष्णवशब्दस्य योगशक्तिसाम्यादित्यर्थः । शेषं स्पष्टम् ॥

इति वैष्णवशब्दस्यातिथ्यागतधर्मानतिदेशकत्वाधिकरणम् ॥ ६ ॥

७

निर्मन्थ्या० 'निर्मन्थ्येनेष्टकाः पचन्ति बर्हिषा यूपावटमवस्तृणाति' आज्येन यूपमनक्ती'ति बर्हिराज्यनिर्मन्थ्यशब्दाः पाशुकस्य निर्मन्थ्यस्य, दार्शपौर्णमासिकयोश्च बर्हिराज्ययोर्धर्मानतिदिशेयुः ? नेति संशये, वैष्णवशब्दस्यानतिदेशकत्वेऽपि, इष्टित्वेन दर्शपूर्णमासधर्मलाभात् युक्तमनतिदेशकत्वम् । बर्हिरादिशब्दानां त्वनतिदेशकत्वेऽन्यतोधर्मालाभात्साकाङ्क्षा विधयः स्युः । तस्मादतिदेशका इति विशेषाशङ्का । लोकतोऽपि मन्थनादिप्रकारलाभान्न श्रुत्यर्थविधिसम्भवे गौणत्वं न्याय्यम् ॥

इति निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वाधिकरणम् ॥ ७ ॥

८

सौमिकं० चातुर्मास्येषु चत्वारि पर्वाणि । तत्र श्रूयते 'द्वयोः प्रणयन्ति तस्माद् द्वाभ्यामेती'ति । तत्र भाष्यकारः—'सौमिकन्तु प्रणयनमि' त्यादिभिः सप्तभिः सूत्रैरधिकरणद्वयं व्याचख्यौ । प्रथमं तावदिदं चिन्त्यते—

---

७

**निर्मन्थ्या०** आतिदेशिकी सङ्गतिः । निर्मन्थ्येनेति चयने श्रुतम् । निर्मन्थ्यो मन्थप्रभवोऽग्निः । यूपस्यावटः निघातार्थो गर्त्तः । **पाशुकस्य** । पशावनुष्ठीयमानस्य धर्मा अधिमन्थनशकलनिधानादयः । बर्हिर्धर्मा लवनादयः । आज्यधर्मा उत्पवनादयः । विशेषाशङ्कामाह—**वैष्णवेति** । मन्थनादित्यादिपदेन लवनोत्पवनादि सङ्ग्रहः । तृतीये अप्राकृतकार्यकारित्वान्न प्राकृतधर्माणामतिदेशतः प्राप्तिरित्युक्तम् । इह तु बर्हिःशब्दस्यातिदेशकत्वनिराकरणमिति भेदः ॥

इति निर्मन्थ्यादिशब्दानां धर्मानतिदेशाधिकरणम् ॥ ७ ॥

८

सौमिकन्तु० आतिदेशिक्येव सङ्गतिः । **सप्तभिरिति** । 'उत्तरवेदिप्रतिषेधश्च तद्वत्' प्राकृतं वानामत्वात्' परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वे'ति त्रीणि 'सौमिकमि'त्याद्यमित्येवं चतुर्भिराद्यमधिकरणम् । द्वितीयन्तु 'प्रथमोत्तमयोरि'त्यादिभिस्त्रिभिः । तत्राद्यं 'प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्' इति । मध्यमयोर्वा गत्यर्थवादात्

किं सौमिकमिदं प्रणयनम् ? उत प्राकृतमिति । तत्र प्राकृतस्य चोदकप्राप्तत्वेन वचनानर्थक्यात् प्रणयनमात्रवचनोऽपि शब्दोऽर्थवत्त्वाय सौमिकधर्मवति प्रणयने लक्षणया वर्त्तते । तस्मत्सौमिकमिति प्राप्ते—

ब्रूमः—प्राकृतं स्यात् । न हि प्रणयतिशब्दः सौमिकस्य नामधेयम् येन तदुपस्थापयेत् । प्रणयनमात्रन्तु ब्रूते । तच्च चोदकत एव प्राप्तम् । तस्मात् प्राकृतस्यैवायमनुवादः । स किमर्थः ? परिसङ्ख्यार्थो वा । द्वयोः प्रणयन्ति न चतुर्ष्विति । गुणविधानार्थो वा । परिसङ्ख्यायास्त्रिदोषत्वात् अर्थवादार्थो वा । 'तस्माद् द्वाभ्यामेती'ति गुणाश्रवणात् । अर्थवादस्य प्रयोजनमुत्तराधिकरणे वक्ष्यामः ॥

इति भाष्यमतेन प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणम् ॥ ८ ॥

९

तत्रैव चिन्त्यते-कतरयोरिदं प्रणयनम् ? किमनियमः ? उत

---

औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इति द्वयम् । **प्राकृतस्य** । चातुर्मास्यप्रकृतिभूतदर्शपूर्णमासगतस्य । अग्नेः प्राकृतदेशे नयनं मुख्यार्थस्तस्य प्राप्तत्वाल्लक्षणया सम्भारादिधर्मवति सौमिके प्रणयने वर्त्तत इत्यर्थः । **नामधेयमिति** । धर्मविशेषविशिष्टस्य वाचक इत्यर्थः । तिङन्तस्य नामत्वाप्रसक्तेः । **अनुवाद** इति । च अनु पुनर्वाद इति एवंविधानुवादसाधारणं व्याख्येयम् । अन्यथा 'परिसङ्ख्यार्थोवे'त्युत्तरग्रन्थासङ्गतेः । **गुणेति** । 'उत्तरवेद्यामग्निं निदधाती'ति सन्निधिश्रुतोत्तरवेदिरूपगुणेत्यर्थः । **त्रिदोषत्वादि**त्युपलक्षणम्, पर्वान्तरेऽन्यभावेन यागानुपपत्तेरित्यपि ज्ञेयम् । केचित्तु प्रणयनमेव नाङ्गान्तरमिति परिसङ्ख्यायामभिप्रायः न चतुर्ष्विति प्रदर्शनमात्रपरमित्याहुः । तस्माद्द्वाभ्यामेतीत्यर्थवादार्थ इति योजना । तदर्थता च प्रणयनं यस्मात् द्वयोरस्ति तस्मात्ताभ्यां गमनं यज्ञसमापनं भवतीति स्तुतिनिर्वाहकतयेति भावः । गुणार्थता कुतो नेत्यत्राह—**गुणाश्रवणादिति** । स्ववाक्ये ऽश्रवणादिति भावः ॥

**इति प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणम् ॥ ८ ॥**

९

**प्रथमोत्तमयोः०** ननु द्वयोरित्यस्यार्थवादार्थत्वेन सर्वत्र प्रणयनसत्वात् प्रथमोत्तमयोरित्यनुपपन्नमित्याशङ्कायामाह-**तत्रैवेति** । नात्र प्रणयनं कतरयोर्द्वयोः कार्यमिति

प्रथमोत्तमयोः ? उत मध्यमयोरिति ? विशेषाभावादनियमः । 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति उत्तरवेदिप्रतिषेधस्य प्रथमोत्तमयोर्दर्शनात् तयोरेवेदं प्रणयनम्, प्रणयनाङ्गमुत्तरवेदिः । यद्यदि प्रथमोत्तमयोरिदं प्रणयनं स्यात् ततस्तयोरुत्तरवेदिः प्राप्नोति । प्राप्तौ सत्यां प्रतिषेधो घटते नान्यथा । तस्मात्प्रथमोत्तमयोरिति प्राप्ते—

अभिधीयते—मध्यमयोः स्याद्, गत्यर्थवादवाक्यशेषात् । तस्माद् द्वाभ्यामेतीति गतिसाधनभूतयोरिदं प्रणयनमिति गम्यते । गतिसाधनत्वञ्च मध्यमयोः पर्वणोरूरुसंस्तवादवगतम् । तस्मान्मध्यमयोरिदम् । एतदर्थवादस्य प्रयोजनम् । तद्वशेन हि मध्यमयोः प्रणयनं व्यवतिष्ठते । भवतु व्यवस्थानम्, किमर्थं तु प्राप्तस्य प्रणयनस्य मध्यमयोरनुकीर्तनम् ? गुणार्थमिति ब्रूमः । अस्मिन् हि प्रणयने 'उत्तरवेद्यामग्निं निदधाती'ति श्रुतम् । यदा चैतदर्थवादवशान्मध्यमयोः प्रणयनं व्यवस्थापितं तदोत्तरवेद्यामग्निं निदधातीत्येतदपि मध्यमयोरेव स्यात्, अन्यथा चतुर्ष्वपि स्यात् । तस्मादुत्तरवेदिं मध्यमयोरुपसंहर्तुं सार्थवादकस्य प्रणयनस्य पुनःश्रवणम् । यत्तु 'न वैश्वदेव उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति तद्'पात्रं वपन्तीति'

---

चिन्त्यते किन्तु तत्रैव प्राकृतं पुनःश्रवण इदं चिन्त्यते करतरयोर्द्वयोरिदं प्रणयनं तच्छ्रवणमित्यर्थः। द्वितीयपक्षमाह **न वैश्वदेव** इति। नोपयन्ति न कुर्वन्तीत्यर्थः। अयमाशयः- चातुर्मास्येषूत्तरवेद्यामग्निं निदधातीति वाक्येन प्राकृतप्रणयनानुवादेनोत्तरवेदिर्विधीयते। सा च द्वयोरिति विशिष्य पुनः श्रूयमाणैव प्रणयनेऽङ्गमिति प्रतिषेधोऽपि तद्विषय एव प्राप्तिसापेक्षत्वात्। स च प्रथमोत्तमयोरिति तयोरेव प्रणयनपुनःश्रवणं तदङ्गं चोत्तरवेदिस्तस्याश्च विहितप्रतिषिद्धत्वाद्विकल्प इति। **ऊरुसंस्तवाद् इति**। 'ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासश्च साकमेधश्चे'ति ऊरूत्वेन स्तुतेरित्यर्थः। यदुक्तमर्थवादस्य प्रयोजनं वक्ष्याम इति तदेतदेवेत्याह---**इदमिति**। नन्वर्थवादवशेन प्रणयनपुनःश्रवणस्य मध्यमविषयत्वव्यवस्थायामपि पुनःश्रवणस्य न किञ्चित्प्रयोजनमिति शङ्कते—**भवत्विति**। **अस्मिन् हीति**। अतिदेशापेक्षया शीघ्रोपस्थित इत्यर्थः। **अन्यथेति**। आतिदेशिकोपस्थिश्चतुर्ष्वपि समानत्वादिति भावः। यत्तु न वैश्वदेव इति प्रतिषेधवशात्प्रथमोत्तमविषयत्वमुक्तं तत्राह—**यत्त्विति**। अत्र चातुर्मास्येषु उपवपन्ति उत्तरवेदिं कुर्वन्तीत्यर्थः। प्रतिषेध

वाक्यान्तरेणाप्रकृतितुल्यं विधीयत इति परिशेषविहितोत्तरवेदेः प्रथमोत्तमयोः प्रतिषेधायेति न किञ्चिदनर्थकम् ।

इदं तु व्याख्यानं वार्त्तिककारो नानुमेने । यत्तावदुक्तमर्थवादार्था पुनः श्रुतिरिति, तत् नाविधीयमानेऽर्थवादः सम्भवति । 'विधिना त्वेकवाक्यत्वादि'ति न्यायादविधिशेषस्यानर्थक्यात्, न चोत्तरवेद्युपसंहारः प्रयोजनम्, तदसम्भवात् । सत्यपि हि द्वयोः पर्वणोः सार्थवादप्राकृतप्रणयनानुवादे वाक्यान्तरेणाग्निनिधानानुवादेन विनियुज्यमानोत्तरवेदिश्चतुर्ष्वपि चोदकप्राप्ताग्निनिधानसम्भवात्सर्वेषु स्यात् । अपि च 'उपात्र वपन्ती' त्ययमुत्तरवेद्युत्पत्तिविधिरनारभ्याधीतोऽपि 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये' इत्यनेन प्रथमोत्तमाभ्यां पर्युदस्तो मध्यमयोरेव व्यवस्थितः । उत्पत्त्यपेक्षश्च विनियोग इति 'उत्तरवेद्यामग्निं निदधाती'त्ययमपि विधिर्मध्यमयोरेव व्यवतिष्ठत इति नार्थो 'द्वयोः प्रणयन्ती'त्यस्य ।

यस्तु प्रणयनान्तरमिदं प्रकृतितुल्यं समर्थ्यते, तस्यापि तुल्यमेवानर्थक्यम् । यत्तु 'न वैश्वदेव उत्तरवेदिमुपवपन्ति' इत्येवं प्रतिषेधः, पर्युदासो वा न सम्भवतीति प्रलप्यते, तद्बालसंमोहनमात्रत्वादुपेक्षणीयम् ।

---

शब्दः पर्युदासपरः । अन्यथा विकल्पापत्तेः । **वाक्यान्तरेणेति** । तथा चैकवाक्यत्वाभावेनैतद्वाक्योपात्तप्रणयनमात्रे विनियोगासम्भवात्सन्निधानाच्च प्रकरणस्य प्राबल्याच्चतुर्ष्वप्यग्निनिधानाङ्गत्वं स्यादित्यर्थः । एवं मध्यमयोरुत्तरवेद्युपसंहारस्यान्यथापि सिद्धेर्नप्रयोजनत्वमित्याह—**अपिचेति** । प्राभाकरोक्तं दूषयितुमाह—**यस्त्विति** । **प्रकृतितुल्यम्** अधर्मकत्वेन प्राकृतप्रणयनसदृशम् । तथा च विध्येकवाक्यतयार्थवादत्वोपपत्तिः । **तुल्यमेवेति** । अति देशादेव तादृशप्रणयनलाभादित्यर्थः । अत्र प्राभाकरैरुक्तम्—न वैश्वदेव इत्यस्य प्रतिषेधत्वे पर्वद्वये वैकल्पिकी पर्वान्तरे च नित्योत्तरवेदिः उपात्र वपन्ती'ति विधिना वैरूप्यापत्तिः । पर्युदासत्वे च सामान्यतोऽवगतस्य पर्वचतुष्टयसम्बन्धस्य बाधापत्तिः । बोधनीयेति एवञ्च नित्यानुवाद एवायमिति न व्यवस्थापकः, किन्तु द्वयोः प्रणयन्तीत्येत देवोत्तरवेद्युपसंहारकमिति नार्थकमिति । तन्निराकरोति—**यस्त्विति** । एवंरीत्या प्रतिषेधपर्युदासदूषणे 'न तौ पशौ करोति नार्षेयं वृणीते' इत्यादावपि तयोरसम्भवापत्तेः ।

यदि च कथञ्चिद्द्वयोः प्रणयन्तीत्यनेनोत्तरवेद्युपसंहारः सिध्यति, तत उपात्रवपन्तीत्ययमपि विनियोगापेक्षत्वाद्विनियोगव्यवस्था मध्यमयोरेव व्यवतिष्ठते, न प्रथमोत्तमयोः। ततश्च 'न वैश्वदेव उत्तरवेदिमि'ति वचनमनर्थकं स्यात्। अस्त्विति चेत्? 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इति सूत्रविरोधात्। इदं हि तत्प्रयोजनकथनार्थं सूत्रम्। तस्मात्सर्वमिदमेकमधिकरणमेव वर्णयितव्यम्। 'द्वयोः प्रणयन्ती'ति किम्प्राकृतं प्रणयनम्? उत सौमिकम्? उतापूर्वमिति? त्रेधा संशयः। तत्र प्रणयनमात्रश्रवणात्तस्य चातिदेशतः प्राप्तेस्तस्यैवेयं पुनःश्रुतिः परिसङ्ख्यार्था, गुणार्था, अर्थवादार्था वा। परिसङ्ख्याद्यसम्भवात् आनर्थक्यपरिजिहीर्षया सामान्यवचनोऽपि प्रणयनशब्दः सधर्मकं सौमिकं प्रणयनं लक्षणया प्रतिपादयति। तथा चोत्तरवेदिप्रतिषेधोऽवकल्पते 'न वैश्वदेवे' इति। न चायम् 'उपात्रवपन्ती' त्यस्य प्रतिषेधः, तस्यावान्तरप्रकरणेन केवलवरुणप्रघासविषयत्वात्प्रथमोत्तमयोरप्राप्तेः प्रतिषेधानर्थक्यात्। अस्मिंश्च पक्षे प्रथमोत्तमयोरिदं सौमिकं प्रणयनमुत्तरवेदिप्रतिषेधस्य तद्विषयत्वाद्यदि च मध्यमयोः स्यात्, ततस्तद्वशेनैव मध्यमयोरुत्तरवेदिसिद्धेरुपात्रवपन्तीत्ययं प्रथमोत्तमविषय एव स्यात्। तयोरेव च प्रतिषेध इति व्याघातः स्यात्। तस्मात्प्रथमोत्तमयोः, सौमिकं प्रणयनं पर्युदस्तोत्तरवेदिकं विधीयते इति प्राप्ते अभिधीयते—

---

आद्येऽतिदेशस्यान्याङ्गविषयत्वं नित्यतया, आज्यभागविषयत्वमनित्यतयेति वैरूप्य साम्यात्। द्वितीये ऽप्यार्षेयवरणसङ्कोचापत्तेस्तुल्यत्वादिति भावः। प्रकृतमनुसन्धत्ते— **यदिचेति।** **कथिञ्चत्** अर्थवादद्वारेण मध्यमयोः श्रुत एव प्रणयनेन झटित्युपस्थित एवोत्तरवेदिविनियोग इत्युक्त,कारेण **अयमपी**त्यनन्तरमुत्पत्तिविधिरिति शेषः। **तत्प्रयोजनेति** न वैश्वदेव इति वाक्यस्यानारभ्य विहितोत्तरवेदिपर्युदासरूपप्रयोजनकथनार्थमित्यर्थः। मध्यमयोः प्रणयने सति तत्रैवोत्तरवेदिप्राप्तेः प्रथमोत्तमयोस्तत्प्रसक्त्यभावादानर्थक्याशङ्कायां तदवतारात्। आनर्थक्ये तदनुपपत्तेरित्यर्थः। **तथाचेति।** सौमिके प्रणयने सति तदङ्गतयोत्तरवेदेः प्राप्तायाः प्रतिषेध इत्यर्थः। **व्याघात इति।** विकल्पाङ्गाकारे तु स एव दोष इति भावः। एवञ्च गत्यर्थवाद एवं व्याख्येयः—मध्यमावूरू न ताभ्यां गमनं सम्भवति किन्तु पादरूपाभ्यां प्रथमोत्तमाभ्यामेवेतीत्याशयः। द्वौ अध्वर्युप्रतिप्रस्थारौ

न हि प्रणयतीत्येतत्सौमिकस्याभिधायकम् ।
प्राकृतस्यानुवादे च वचनं स्यादनर्थकम् ॥
तस्मात्प्रणयन्तीत्येतदप्राकृतमसौमिकम् ।
अपूर्वमग्नेर्नयनं वदत्याहवनीयतः ॥

**यद्यपि प्रणयनमात्रं श्रुतम्, तथाऽपि शाखान्तरे 'आहवनीयाद् द्वावग्नी प्रणयतः' इति वचनात्तदेकार्थत्वादनेन वचनेन प्राकृतप्रणयनोत्तरकालमाहवनीयादग्न्यन्तरप्रणयनं पशुबन्धवद्विधीयते । तच्च गत्यर्थवादवशान्मध्यमयोः पर्वणोर्भवति । परिसङ्ख्यार्थमित्यादि सूत्रत्रयं त्रयाणामपि पक्षाणां यथाक्रमेण प्रयोजनकथनार्थम् । उत्तरवेदिप्रतिषेधस्तूपात्रवपन्तीत्यस्य सामान्यविषयस्य पर्युदासार्थः, सामान्यविषयत्वं चास्य भाष्य एव दर्शितम् ॥**

**इति चातुर्मास्येषु मध्यमपर्वणोः प्रणयनाधिकरणम् ॥ ९ ॥**

---

**प्राकृतप्रणयनोत्तरकाल**मित्यनेन प्राकृतस्य गार्हपत्यादानेयत्वादस्य चाहवनीयादानेयत्वान्न प्राकृतबाध इति कथितम्—**यथाक्रमेणेति**। प्रथमपक्षप्रयोजनकथनार्थं परिसङ्ख्यार्थश्रवणगुणार्थमर्थवादो वेति सूत्रम् द्वितीयपक्षस्य प्रयोजनकथनार्थं प्रथमोत्तमयोरित्यादि सूत्रम् । सिद्धान्तस्य प्रयोजनकथनार्थं 'मध्यमयोर्वा गत्यर्थवादादि'ति सूत्रमित्यर्थः । ननु प्रथमोत्तमयोः प्रणयनमि'त्यस्य पूर्वपक्षसूत्रत्वाभावे तत्परिहारार्थम् औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः इति सूत्रमनर्थकमित्याशङ्क्याह—**उत्तरेति**। सौमिकं प्रणयनमिति पक्षसाधकस्योत्तरवेदिप्रतिषेधश्च तद्वदित्यस्यायं परिहार इति भावः । अवान्तरप्रकरणाद्वरुणप्रघासमात्रविषयत्वात्कथमुपात्रेत्यस्य सामान्यविषयत्वमत आह—**सामान्येति**। वरुणप्रघासमात्रविषयत्वे 'न वैश्वदेव' इति नित्यानुवादः स्यात् प्रसक्त्यभावात् । एवञ्चानुवादे त्रयाणामपि कार्यं न स्यान्न द्वयोरेव । आनर्थक्यञ्च नित्यानुवादे स्यात् । अपि चात्र वाक्यभेदपरिहाराय पर्युदासो वाच्यः । स चोपात्रेत्यस्य वरुणप्रघासमात्रविषयत्वे नोपपद्यते वरुणप्रघासेषूत्तरवेदिं कुर्याद्वैश्वदेवशुनासीरीयवर्जमित्ययोगात्, किन्तु चातुर्मास्येषु उत्तरवेदिं कुर्याद्वैश्वदेवशुनासीरीयवर्जमिति तेनावान्तरप्रकरणस्य पर्युदासानुसारेण बाध इति भावः ॥

**इति चातुर्मास्येषु मध्यमपर्वणोः प्रणयनाधिकरणम् ॥ २ ॥**

१०

स्वरसामैक० गवामयने स्वरसामानः 'उक्थ्याः सप्तदश स्वरसामानः' इति । अन्यत्रापि श्रूयते 'पृष्ठ्यः षडहः, द्वौ स्वरसामानावि'ति । किमेतौ स्वरसामानाविति गावामयनिकस्वरसामविकारौ ? उत न ? तथा वैश्वदेवे पर्वणि 'वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपालः' अन्यत्रापि 'मैत्रावरुण्यामिक्षा वारुण एककपालः' इत्यादावेककपालामिक्षा वैश्वदेविकैककपालामिक्षाविकारा ? उत नेति संशये, स्वरसामादिशब्दानां गुणविधित्वाद्वैष्णवशब्दवदनतिदेशकत्वात् न तद्विकारत्वमिति प्राप्ते—

ब्रूमः—अनन्यगतिभ्यो लिङ्गेभ्यः स्वरसामत्वादिचोदनाशब्दोपबृंहितेभ्यस्तद्विकारत्वम् । लिङ्गानि च भाष्य एव दर्शितानि ॥

इति स्वरसामादिशब्दानां धर्मातिदेशकत्वाधिकरणम् ॥ १० ॥

---

१०

स्वरसामैक० नामातिदेशापवादप्रसङ्गात्सङ्गतिः । स्वरसामान इत्यनन्तरं विहिता इति शेषः । तद्विधायकम् उक्थ्या इत्यादि उक्थ्यसंस्थाः सप्तदशस्तोमकाः स्वराख्यसामयुक्ता यागविशेषाः कार्या इत्यर्थः । अन्यत्रापि अष्टरात्रादावित्यर्थः । अन्यत्रापीति । अनूबन्ध्यास्थाने मैत्रावरुण्यामिक्षा । अवभृथे च वारुण एककपाल इत्यर्थः । नामातिदेशाभावेऽपि आनुमानिकचोदनालिङ्गातिदेशोऽस्तीत्याह—अनन्येति । लिङ्गस्य प्रापकप्रमाणसापेक्षत्वादाह—स्वरसामत्वेति । स्वरसामत्वादिना चोदनायां यः शब्दः स्वरसामैककपालामिक्षादिरूपः प्रकृतिसादृश्यरूपश्चोदनालिङ्गाख्यस्तदनुगृहीतेभ्य इत्यर्थः । लिंगानि चेति । पृष्ठ्यः षडहो द्वौ स्वरसामानावित्युक्त्वा षड्हे यत्तृतीयं सप्तदशमहस्तदन्त्यस्य त्रयस्त्रिंशस्तोमकस्य स्थाने'ऽभिपर्याहरन्ति' त्रयाणां सप्तदशानामनूचीनतायै' इति श्रुतम् । तत्र द्वयोः स्वरसाम्नोः सप्तदशस्तोमकत्वे सति त्रयाणां सप्तदशानामनूचानत्वं नैरन्तर्यरूपं भवतीति गावामयनिकसप्तदशस्तोमकस्वरसामातिदेशे लिङ्गम् । तथा एककपालानां वैश्वदेविकविकारत्वे आग्रयणगतैककपाले यत्सर्वहुतं करोति सा त्वेका परिचक्षा' यद्धुतो हुतः पर्यावर्त्तते सा द्वितीयेति वैश्वदेविकैककपालधर्मस्य सर्वहोमस्यापर्यावृत्तेश्च निन्दा । आज्यस्यैव द्यावापृथिव्यौ यजेतेति वैकल्पिकाज्यविधिशेषभूता । वैश्वदेविकैककपाले हि 'सर्वहुतं जुहोति' अपर्यावर्त्तं जुहोती'ति विहितम् यथा न पर्यावर्त्तते अग्नौ हुतो नोत्तानीभवतीत्यर्थः । तत्र सर्वहोमस्य परिचक्षा निन्दा स्विष्टकृदादिलोपात् पर्यावर्त्तने दोषादपरा । तस्मादाज्यमेव प्रशस्तमित्यर्थवादार्थः । एवं मैत्रावरुण्यामामिक्षायां न वाजिनेन प्रचरन्ती'ति निषेधो वैश्वदेविकामिक्षाङ्गवाजिनप्रसक्तिपूर्वकत्वात्तदतिदेशे लिङ्गमिति भाष्ये द्रष्टव्यमित्यर्थः ॥

इति स्वरसामादीनां धर्मातिदेशकत्वाधिकरणम् ॥१०॥

११

कर्मजे० कर्मनामधेयानामग्निहोत्रादीनामुक्तमतिदेशकत्वम् । यौगिकानां प्रायणीयादिशब्दानां गुणविधीनाञ्च वैष्णवादिशब्दानां लिङ्गविशेषशून्यानां नास्त्यतिदेशनिमित्तत्वमित्युक्तम् । कर्मनामवदेव संस्कारनाम्नां यूपादीनां सिद्धमेवातिदेशकत्वम् । इदानीं वासःप्रभृतीनां संस्कारनिमित्तत्वमेवास्ति, नास्तीति चिन्त्यते । 'वासो ददाति अनो ददाती'ति किं वानम्, तक्षणश्च कृत्वा वासोऽनश्च निष्पाद्यैव दातव्यम् ? उत यथासिद्धमेव दातव्यमिति ? संशयः । गुणविधित्वात् तत्र वानतक्षण-क्रियायां सत्यां शब्दप्रयोगात् क्रियानिमित्तो वासःशब्दः अनःशब्दश्च क्रियामेव दानाङ्गतया विधत्तः । तस्मात्साऽनुष्ठेया दानं कुर्वता । एवं प्राप्ते-

ब्रूमः जातिशब्दावेतौ जात्यन्वयव्यतिरेकानुविधाना जातिस्तु क्रियाभिव्यङ्ग्ये ति तदुत्तरकाले शब्दप्रयोगः, न तु शब्दः क्रियावाची । तस्मान्न क्रियातिदेशकत्वं शब्दयोः ॥

इति वासःप्रभृतिशब्दानां जातिवाचित्वाधिकरणम् ॥ ११ ॥

१२

विषये० 'अग्निमुपनिधाय स्तुवीते'ति किमाधानसंस्कृतोऽग्नि-राहवनीयादिरुपनिधेयः ? उत लौकिकः ? इति संशये संस्कृतस्य प्रयोज-

---

११

कर्मजे० प्रसङ्गसङ्गतिप्रदर्शनायाह—कर्मेत्यादि । यूपादीनां यूपादिशब्दानाम् । 'खलेवाली यूपो भवती'त्यादावित्यर्थः । अधिकरणाङ्गसंशयमुक्त्वा फलीभूतं संशयमाह— किं वानमिति । क्रियामेवेत्येवकारो विद्यत एवेति योज्यः ॥

इति वासःप्रभृतीनां शब्दानां जातिवाचित्वाधिकरणम् ॥११॥

१२

विषये० प्रसङ्गसङ्गतिः । गर्गत्रिरात्रे आज्यदोहाख्यानि सामानि प्रकृत्याग्नि-मित्याद्याम्नातम् । संस्कृतस्येति । संस्कृता ह्याहवनीयादयः सकलवैदिककर्मार्थाः

नापेक्षत्वात्सामान्यवचनोऽप्यग्निशब्दस्तद्विषयत्वेन गम्यमानः संस्कारमुपनिधानाङ्गत्वेनातिदिशतीति प्राप्ते ब्रूमः—

वह्निमात्राभिधायित्वान्न संस्कारातिदेशनम् ।
होमादिभिः फलापेक्षा संस्कृतानां निवर्त्तिता ॥

'यदाहवनीये जुह्वति, गार्हपत्ये हवींषि श्रपयती' त्यादिभिराहत्य प्रयोजननिर्देशान्न प्रयोजनान्तरमाहवनीयादयोऽपेक्षन्ते । अग्निशब्दोऽपि जातिमात्रवचनत्वात्तज्जातीयं यत्किञ्चिदाक्षिपन् लोकसिद्धमेवोपादाय कृतार्थो न संस्कृतमपेक्षते । तस्माल्लौकिक उपनिधेयः ॥

इति गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम् ॥ १२ ॥

१३

संस्कृतं० 'उपशयो यूपो भवती' त्यत्र संशयः–किमुपशये यूपसंस्काराः परिव्याणादयः कार्याः, नेति ? तत्र यूपशब्दः उपशये प्रयुज्यमानस्ताननतिदिशेत् । सत्यम्, यदि यूपत्वं विधीयते विधायकाभावाद् । वर्त्तमानापदेशोऽयं 'यूपो भवती'ति । तस्मादनुवादोऽयमुपशयस्तुत्यर्थो न संस्कृतिमपेक्षते । तस्माल्लौकिका यूपधर्माः केचिच्छेदनादय उपशये वचनादनुष्ठीयन्ते । तेन निमित्तेन गौणोऽयं वादः ॥

इति उपशये यूपधर्माननतिदेशाधिकरणम् ॥ १३ ॥

---

'यदाहवनीये जुहोती'त्याहवनीयव्यवस्थार्थमित्याशयः । **न संस्कृतमिति** । विशेषवचनं विना आयतनाच्चालने दोषाय स्यादिति भवः ॥

इति गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम् ॥१२॥

**१३**

**संस्कृतं०** यूपशब्दस्यातिदेशकत्वं क्वचिदपोद्यत इति सङ्गतिः । यूपैकादशिन्यां यूपसमीपे काष्ठनिधानं विधायोपशय इति श्रुतम् । संस्कारवाचियूपशब्दस्य कथमनुवादतयापि प्रयोगस्तत्राह--**यूपधर्मा इति** ॥

इत्युपशये यूपधर्मोननतिदेशाधिकरणम् ॥१३॥

१४

कर्मणः० अग्नौ श्रूयते 'पृष्ठैरुपतिष्ठते' इति। किं पृष्ठशब्दो ज्यौतिष्टोमिकपृष्ठधर्मातिदेशकः–पृष्ठकर्मकाणि कर्माणि कुर्यादिति। तानि पृष्ठसादृश्यादेव स्तुत्यात्मकानि भवन्ति? उत पृष्ठसाधनेषु रथन्तरादिषु पृष्ठशब्दः तैरग्नेरभिधानं चोद्यते? इति। तत्र—

उपतिष्ठतिना तावदपूर्वं कर्म चोद्यते।
पृष्ठशब्दोऽपि तस्यैव विधत्ते पृष्ठतुल्यताम्॥

उपतिष्ठतिधातुः समीपस्थितिवचनः। प्रत्ययो भावनावाचकः। तदयमर्थः–अग्निसमीपे तिष्ठन् पृष्ठसदृशैः कर्मभिः कुर्यादिति। यदि त्वभिधानं विधीयते, तदा उपतिष्ठतिः समीपस्थितिवचनः सन्नभिधानं लक्षयेत्। पृष्ठशब्दोऽपि तत्साधनमित्युभयोर्लक्षणा स्यात्। अस्मत्पक्षे पुनः पृष्ठशब्द एव धर्मलक्षणेति ज्यायानयं पक्षः। उच्यते—

जघन्यवृत्तिता पृष्ठशब्दस्येहोभयोः समा।
उपतिष्ठतिधातुश्च समीपस्थितिवाचकः॥

न वयं धातुनाऽभिधानं लक्षयामः, किन्तु समीपस्थितिरेव धातुना

---

१४

**कर्मणः०** अनुवादतया यूपशब्दस्यानतिदेशकत्वेऽप्यत्र विधिगतत्वात्तस्यादिति-पूर्वपक्षोत्थानात्सङ्गतिः। **ज्यौतिष्टोमिकेति।** पृष्ठशब्दस्य तत्सादृश्यपरत्वेन पृष्ठ-बहुत्वानपेक्षणे तत्सर्वप्रकृतिभूतज्योतिष्टोमगतपृष्ठसादृश्यविधिरेव युक्त इति भावः। यद्यपि पृष्ठधर्मकाणां करणत्वेनैव विधिः, अत एवाग्रे वक्ष्यति'पृष्ठसदृशैः कर्मभिरि'ति तथापि पृष्ठसादृश्यस्य साध्यताबोधनाय द्वितीयान्तनिर्देश इति ज्ञेयम्। ननु तादृशकर्मा-परिज्ञानात्कथं तेषां विधिरत आह—**तानीति। रथन्तरादिषु** तदाश्रयमन्त्रेषु रथन्तरा-दिगीतिभिरभिधानायोगात्। ननु प्रसिद्धपृष्ठशब्दाभिधेयस्तुतिविधानमेवास्त्वित्याशङ्क्य प्रकरणान्तरन्यायेन कर्मान्तरविधिरित्याह---**अपूर्वमिति।** उपतिष्ठतेस्तर्हि कथमन्वय-स्तत्राह—**उपतिष्ठतिधातुरिति।** ननु गौण्यपेक्षयाभिधानलक्षणैव युक्तेत्याशङ्क्याह—**यदि त्विति।** एवञ्च लक्षणाद्वयापेक्षया गौण्येव युक्तेत्यर्थः। **जघन्येति।** पूर्वपक्षे धर्म-लक्षणा, सिद्धान्ते तु मन्त्रलक्षणेति तुल्यमित्यर्थः। ननु तव धातोरप्यभिधानेऽधिका लक्षणेत्युक्तं तत्राह—**न वयमिति।** समीपस्थितेर्मन्त्रकरणकत्वानुपपत्तिमाशङ्क्याह—

अभिधीयते। सा तु समीपस्थितिरभिधानार्थेति ब्रूमहे। कथम्? मन्त्रकरणेऽर्थे वर्त्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं भवति। समीपस्थितिश्चानेनाऽभिधीयते। तेन यथा समीपस्थितौ मन्त्रः करणं तथा यतितव्यम्। न चाभिधानादन्यत्र साक्षान्मन्त्रः करणम्। तद्यदीयं समीपस्थितिरभिधानार्था स्यात्, ततोऽस्याः करणं मन्त्रः सम्पद्यते। प्रधानाधीनं हि तदङ्गानुष्ठानं भवति। अतोऽभिधानार्थत्वम्। समीपस्थानं कुर्वन्मन्त्रः समीपस्थितेः करणमिति शक्यं वक्तुम्। अतोऽभिधानाय समीपस्थितिं वदन् उपतिष्ठतिर्मन्त्रकरणार्थो भवन्नात्मनेपदं लभेतेत्यात्मनेपददर्शनादुपस्थानप्रयोजनभूतमभिधानमनुमीयते। तदयमर्थः—पृष्ठसाधनै रथन्तरादिभिः समीपे स्थित्वाऽग्निमभिदध्यादिति। तस्मादभिधानचोदनेति सिद्धम्॥

इति पृष्ठशब्दस्य मन्त्रवाचित्वाधिकरणम्॥ १४॥

इति शास्त्रदीपिकायां सप्तमस्य तृतीयः पादः॥ ३॥



---

**सा त्विति**। कथमभिधानार्थतानिश्चयस्तमाह—**मन्त्रेति**। आत्मनेपदबलादभिधानप्रयोजनत्वनिश्चय इत्यर्थः। एवमपि कथं समीपस्थितौ मन्त्रस्य करणत्वं तदुपपादयति—**प्रधानाधीनं हीति** नहि अङ्गानुष्ठानमङ्गिस्वरूपमात्रनिष्पादनार्थमपि तु प्रधानमङ्गिनः प्रयोजनं यत्तदधीनमपि भवति। यथा यागफलयोग्यताजनकदीक्षणीयादेर्यागाङ्गत्वमेवं समीपस्थितिफलमभिधानं कुर्वतो मन्त्रस्य तां प्रत्यङ्गत्वमित्यर्थः। ननु कथमश्रुतस्याभिधानस्य विधिरित्याशङ्क्याह—**तदयमिति**। द्रव्यदेवतासम्बन्धानुमितयागवदध्याहृतस्याभिधानमिति भावः। अत्र त्वामिद्धि अभित्वेति सम्बोध्यार्थकयुष्मच्छब्दवतां मन्त्राणां समीपस्थितिं विनानुपपत्तेरर्थतस्तदनुवाद इति बोध्यम्॥ कर्मणोऽपूर्वस्तुतेर्वाचकः पृष्ठशब्दः स्यात्तथाभूतस्य स्तोत्रवाचकस्यात्रोपदेशादिति सूत्रार्थः॥

इति पृष्ठशब्दस्य मन्त्रवाचित्वाधिकरणम्॥ १४॥

इति श्रीमत्तत्सद्रामचन्द्रात्मजवैद्यनाथकृतायां शास्त्रदीपिकाटीकायां प्रभाख्यायां सप्तमाऽध्यायस्य तृतीयः पादः॥ ३॥



# अथ सप्तमाध्याये चतुर्थः पादः ।

१

इतिकर्तव्यता० गतो नामातिदेशः । इदानीमानुमानिकेन वचनेनातिदेश उच्यते । 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्याद्युदाहरणम् । तत्र प्रथमं तावदिदं चिन्त्यते-किमत्र कुतश्चिद्धर्माः प्रदिश्यन्ते ? नेति ? प्रमाणाभावादनतिदेशः । उच्यते-यागेन भावयेद् ब्रह्मवर्चसमिति भावनामितिकर्त्तव्यतापेक्षामुपदिश्य श्रुत्याद्युपदेशेन तस्य इतिकर्त्तव्यताया असमर्पणान्नूनमन्यतः सिद्धेतिकर्त्तव्यताऽत्र शास्त्रेणाङ्गीकृतेति निश्चीयते । अस्ति चान्यत्र लौकिके पार्वणस्थालीपाकादौ, वैदिके च दर्शपूर्णमासादौ । तयोरन्यतरादिह प्रदिश्यत इति स्थिते, इह चिन्त्यते लौकिकी वैदिकी वेति ।

वैदिकी हि निबद्धत्वान्नेतुं नान्यत्र शक्यते ।
लौकिकी त्वनिबद्धत्वात्सर्वत्रैवानुषज्यते ॥

वैदिकीतिकर्त्तव्यता प्रत्यक्षेण शास्त्रेण दर्शपूर्णमासादिषु निबद्धा नान्येन सम्बद्धुं शक्यते । न हि सकृत् श्रुतमितिकर्त्तव्यताब्राह्मणं दर्शपूर्ण-

---

## चतुर्थः पादः

१

**इतिकर्त्तव्यता०** अवसरसङ्गतिं सूचयन्नाह – **इदानीमिति** । करिष्यमाणविचारोपयोगितया विचारान्तरं दर्शयति – **प्रथमं तावदिति** । **निबद्धत्वादिति** । तत्तत्प्रकरणव्यवस्थितत्वादित्यर्थः । ननु दर्शपूर्णमासयोरियमितिकर्त्तव्यतेति विशिष्य न विधीयते किन्तु यागसामान्यस्येत्याशङ्क्याह–**न चेति** । प्रकरणेन दर्शपूर्णमासापूर्वार्थित्वस्यैव व्यवस्थितत्वादित्यर्थः । ननु शास्त्रस्य व्यवस्थितत्वेऽप्याकाङ्क्षाबलादितिकर्त्तव्यताया अन्यत्राप्यन्वयः स्यादत आह – **न चेति** । आकाङ्क्षा हि प्रमाणसहकारिणी न स्वयं प्रमाणमिति भावः । ननु लौकिक्यपि गृह्यसूत्रादिनिबद्धा तत्रत्यकर्मस्वेव स्यादित्याशङ्क्याह–**लौकिकी त्विति** । पार्वणः पर्वणि क्रियमाणः स्थालीपाकः गृह्यादेः स्मृतित्वेन श्रुतिमूलत्वादनेककर्मान्वयदर्शनेन तावत् श्रुतिकल्पने गौरवादेकैव

मासयोरितिकर्तव्यताम् विधाय पुनः सौर्यादावपि विदधातीति सम्भवति। न च साधारण्येन विधानम्, प्रकरणेन व्यवस्थितत्वाद्विधानस्य। न च शास्त्रमन्तरेणेतिकर्त्तव्यतान्वयः सम्भवति। तस्मान्न वैदिकी। लौकिकी तु पार्वणाष्टकादिषु बहुष्वनुवृत्ता साधारणं शास्त्रमनुमापयति। तेन सैव सौर्यादिषु स्यात्। प्रयाजादिदर्शनन्तु यत्र नित्यानुवादवचनानीत्येवं परिहृतम्। तस्माल्लौकिकीति प्राप्ते उच्यते—

वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते।
लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता॥

वैदिकस्य तु कर्मणः कथम्भावापेक्षायां वैदिक एवेत्थम्भावः शीघ्रमुपतिष्ठते। तदतिक्रमेणानुपस्थितलौकिकग्रहणमयुक्तम्।

यद्यप्यनुमिताद्वेदाल्लौकिकोऽपि तु वदिकः।
प्रत्यक्षवेदविरहान्नैवासौ सदृशो मतः॥

ननु सोऽपि वेदः केषाञ्चित्प्रत्यक्ष एव, नित्यानुमेयमूलनिराकरणात्। सत्यम्, तथाऽप्यसदृश एव। कथम्? वैतानिककर्माधिकारे हि त्रयी प्रवर्तते। तन्मध्ये तु प्रसङ्गादवैतानिकं किञ्चिदुच्यते। तेन दर्शपूर्ण-

---

सर्वसाधारणी कल्प्यत इति सौर्यादिष्वपि तत्प्रवृत्तिरित्यर्थः। नन्वेवं सति सौर्यचरौ 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति प्रयाजादिदर्शनानुपपत्तिरत आह— **प्रयाजादीति**। 'अपि वान्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युरि'ति सूत्रम्। अस्यार्थः-लिङ्गस्य न्यायपूर्वकत्वाद्यत्र दर्शपूर्णमासयोः प्रयाजास्तत्र कृष्णलस्य विधिः। पितृयज्ञे 'न होतारं वृणीत' इति नित्यानुवादः गृहमेधीये 'आज्यभागौ यजती'ति वचनमपूर्वविधानमिति प्रयाजे प्रयाज इति प्रयाजानां विशिष्टविधिरिति भाष्ये। लौकिक्या अपि स्मार्त्तत्वेन श्रुतिमूलकत्वाद्वैदिकत्वं तुल्यमित्याशङ्क्य प्रत्यक्षवेदविहितत्वाभावान्न समानत्वंमिति परिहरति — **यद्यपीति**। स्मृत्यनुमिताद्वेदादवगतो लौकिकोऽपि कथम्भावो वैदिक एवेत्यर्थः। **तथापि** प्रत्यक्षवेदविहितत्वेऽपि। **वैतानिकेति**। वितानो गार्हपत्याद्यग्नीनां विस्तारस्तत्र भवानि कर्माणि वैतानिकानि तदधिकारे तन्निरूपण इत्यर्थः। **त्रयी**-वेदत्रयम्। **अवैतानिकम्** मलवद्वाससो व्रतकलापादि। एवञ्च स्वाधिकारप्रवृत्तत्रयीविहितत्वरूपमवान्तरसादृश्यं शीघ्रोपस्थितेतिकर्त्तव्यतानियामकमित्याह—**तेनेति**। वैदिकत्वसाम्ये सत्येव विधानान्तरसाम्यस्य नियामकत्वकल्पनाया निष्प्रामाणिकत्व-

मासादीनां सौर्यादीनाञ्च तदधिकारेण त्रयीप्रवृत्तिर्नामवान्तरसादृश्य-मस्तीति वैदिकस्योपस्थानम्। किञ्च सौर्यादीनि वैतानिकेऽग्नौ प्रवर्त्तन्ते लौकिकी त्वितिकर्त्तव्यता आचारादौपासने कर्त्तव्या। तत्र प्रधानवैदेश्य-मङ्गानामापद्येत। तस्मादपि वैदिकी। न च निबद्धत्वादसौ नान्यत्र नेतुं शक्येति मन्तव्यम्, समानविधानत्वे ह्ययं दोषः स्यात्। अतिदेशेन त्वन्यत्र गतौ निबद्धत्वं गुण एव। न हि क्वचिदनिबद्धान्यन्यान्यत्रातिदेष्टुं शक्यन्ते। न चानुमानेन लौकिकी शक्या कल्पयितुम्, गणयागादिषु तदभावेनानैका-न्तिकत्वात्। तस्माद्वैदिक इत्थम्भावः सौर्यादिष्वतिदिश्यते। स चावघात-प्रयाजादिपदार्थजन्यदृष्टादृष्टोपकारवर्गरूषितस्तेषामुपकाराणां पदार्थानाञ्च प्रापको भवति तद्विधायि च शास्त्रमर्थात्सौर्यादिवाक्यशेषत्वमुपगतं भवतीत्यनेनाभिप्रायेण 'विध्यन्तो वा प्रकृतिवत् चोदनायामि'त्युक्तम्।

अस्तु वा विध्यन्तस्यैवात्रातिदेशः, तथाऽपि प्रकृतिसम्बन्धितया निरूपितरूपस्यातिदेशः, न तु यथापाठमेव शास्त्रं प्रकृतिवद्विकृतेरपि

---

माशङ्क्याह—**किञ्चेति**। **वैतानिके** आहवनीयादौ। **लौकिकी** गृह्योक्ता। **आचारा-दिति**। तेषां तच्छाखिव्यवस्थिताचारमूलत्वादिति भावः। **वैदेश्यं** भिन्नदेशत्वम्। **समानेति**। उपदेशसाधारण्य इत्यर्थः। ननु लौकिकी सर्वसाधारणी, पार्वणाष्टकादि-बहुकर्मप्रवृत्तत्वात्। आचमनादिवदित्यनुमानमाशङ्क्य निराकरोति—**न चेति**। **गणेति**। मातृगणयागादिष्वित्यर्थः। **इत्थम्भावः**। अखण्डः करणोपकारः प्रकारपर्यायः पदार्थानां स्वातन्त्र्येणातिदेश इति प्रभाकरमतनिरासाभिप्रायेणाह – **स चेति**। अतिदिश्यमान इति शेषः। **रूषितो** विशिष्टः। **प्रापक इति**। विशिष्टविधौ विशेषणविधेरार्थिकत्वादिति भावः। तथा चेत्थम्भावविशेषणतयोपकाराणां तद्विशेषणतया च पदार्थानामतिदेशो न स्वातन्त्र्येण। आकाङ्क्षाविरहादिति भावः। ननु विध्यन्ताख्याङ्गशास्त्रातिदेशप्रति-पादकसूत्रविरोध इत्याशङ्क्याह—**तद्विधायि चेति**। पदार्थविधायि चेत्यर्थः। **अर्थादिति**। शास्त्रेण प्रकृतौ पदार्थप्राप्तिं विना तदतिदेशायोगादित्यर्थः। भाष्यकृता विध्यन्तपद-स्वारस्यात्पौरोडाशिकं ब्राह्मणं सौर्यादीनां चोदनायां प्रवर्त्ततेत्युक्तत्वाच्छास्त्रातिदेशमभ्यु-पेत्याह – **अस्तुवेति**। ननु शास्त्रमात्रातिदेशे तद्विहितानां पदार्थानां प्राकृतप्रयोजना-भावेऽपि प्रयोजनान्तरकल्पना स्यात्। एवञ्चोहबाधौ न स्याताम्। अग्निपदस्य सौर्ये देवताप्रकाशकत्वाभावेऽप्यदृष्टार्थत्वसम्भवादेवमवघातस्य कृष्णलचरावित्यत आह— **तथापीति**। न शास्त्रस्वरूपमात्रातिदेशः, किन्तु प्रकृतौ यादृशोपकारजनकपदार्थ-

सम्भवति, यत ऊहबाधौ न स्यातामिति चोद्येत । यत्रापि ब्राह्मणमेव साक्षादतिदिष्टम् 'एतद्ब्राह्मणान्येव पञ्च हवींषी'ति तत्राप्यन्यसम्बन्धिनः सतस्तेनैव रूपेणातिदेशादूहादिसिद्धिः । यदि 'अग्नये जुष्टं निर्वपामी'त्यनेन रूपेण सौर्ये प्राप्यते, ततोऽग्निपदस्य देवतापदस्य चासम्प्रतिपन्नरूपत्वाद्देवतापदविवक्षयैव तत्पठितमग्निपदं रूपन्त्वविवक्षितमिति न शक्यमास्थातुम् । अग्निपदरूपमेव विवक्षितमित्यापद्येत, ततो न सूर्यपदं प्रक्षिप्येत, नाग्निपदं बाध्येत । अतो नोहः सिध्येत्, न बाधः । यदि तु प्रकृतौ निरूपितरूपस्य शास्त्रस्य विकृतिसम्बन्धः, तदा प्रकृतावग्निपदस्य देवतापदरूपसम्प्रतिपत्तेर्देवतापदरूपमात्रं विवक्षितं दृष्टार्थत्वात् । नाग्निपदरूपम्, अदृष्टार्थत्वात् देवतापदाधिजिगांसया नान्तरीयकत्वादग्निपदमधीतमिति निश्चीयते । तत्र सौर्ये तादृग्रूपमन्त्रातिदेशादग्निपदस्य चातद्रूपत्वात्स्वरूपस्य चाविवक्षितत्वात्तन्निवृत्तौ सत्यां देवतावाचिनः सूर्यपदस्य प्रक्षेपादूहबाधौ सिद्धौ भवतः । तस्माद्वैदिकातिदेशः ॥

इति विध्यन्ताधिकरणम् ॥ १ ॥

२

द्वादशाहिकमहर्गणे० इदानीमानुमानिकवचन-नामधेययोर्बलाबलं

---

प्रापकत्वं तादृशोपकारजनकपदार्थबोधकशास्त्रत्वेन प्रकृतिसम्बन्धित्वेनावगतरूपस्यैवेति नोक्तानुपपत्तिरित्यर्थः । एवञ्च सति पूर्वोक्तातिदेशलक्षणमप्युपपद्यत इति भावः । वाचनिकशास्त्रातिदेशेऽप्येवमेवेत्याह – **यत्रापीति** । **असम्प्रतिपन्नेति** । भिन्नार्थत्वादित्यर्थः । **देवतापदेति** । देवताप्रकाशकपदेत्यर्थः । **अधिजिगांसया** अध्ययनेच्छया । **स्वरूपस्य** अग्नय इत्यानुपूर्वीरूपस्य । मुख्यतया प्रकृतमुपसंहरति – **तस्मादिति** । सौर्यादावितिकर्त्तव्यताया अविधेर्यजतेः पूर्ववत्त्वं प्रकृतिपूर्वकत्वमिति सूत्रार्थः ॥

**इति विध्यन्ताधिकरणम्** ॥ १ ॥

२

**द्वादशाह०** अवसरसङ्गतिं सूचयितुमाह—**इदानीमिति** । प्रत्यक्षवचनाति

चिन्त्यते । गवामयने 'ज्योतिर्गौरायुरि'त्यादिसंज्ञायुक्ता यागा उत्पन्नाः । तेषां गणान्तःपातित्वात् 'गणेषु द्वादशाहस्ये' ति द्वादशाहविध्यन्तः प्राप्तः । नामधेयाच्च ज्योतिराद्येकाहविध्यन्तः । तत्राविरुद्धा द्वयेऽपि क्रियन्ते, विरुद्धेषु किं द्वादशाहिकाः कर्त्तव्याः, चोदको बलवान् ? उत नामबलीयस्त्वादैकाहिकाः ? इति संशये, विशेषाभावादनियमः ।

अथवा चोदको बलवान् फलसम्बन्धोत्तरकाला चेतिकर्त्तव्यताकाङ्क्षा प्रयोगवाक्ये च फलसम्बन्धः, न तु तत्र नामानि श्रूयन्ते यान्यपेक्षितं विध्यन्तमतिदिशेयुः । गणसामान्यात्तु द्वादशाहिकधर्मातिदेश एव तत्रावगम्यते । यासु तूत्पत्तिचोदनासु नामानि श्रुतानि, तत्रालब्धफलत्वादसत्यामित्थम्भावापेक्षायां नातिदेशः फलसम्बन्धन्तु प्रतीक्ष्य पश्चादतिदिशदपि नामधेयं पूर्वावगतगणधर्माविरोधेन प्रवर्त्तते । तस्माच्चोदको बलीयानिति प्राप्ते अभिधीयते—

प्रत्यक्षं श्रूयते नाम चोदकस्त्वानुमानिकः ।
न प्रत्यक्षविरुद्धार्थमनुमानं प्रवर्तते ॥

यद्यपि फलसम्बन्धाधीनेतिकर्तव्यताकाङ्क्षा प्रयोगवाक्ये प्रस्तूयते, तथाऽपि प्रयोगवाक्यमुत्पत्तिचोदनावगतरूपाणि कर्माण्यालोच्य फले विनियुङ्क्ते । तानि चालोच्यमानानि संज्ञादिशिष्टान्येवालोच्यन्त इति तन्निमित्तातिदेशः प्रत्यक्षनिमित्तत्वाच्छीघ्रं गम्यते ।

---

देशप्राबल्यं स्फुटमेवेति न विचारितमिति भावः । **गणोऽहर्गणः** । **अनियमो** विकल्पः बलवत्त्वमुपपादयति – **फलेति** । **प्रयोगवाक्ये** 'प्रजाकामा गवामयनमुपेयुरिति वाक्ये । ननु नाम्नोऽप्यतिदेशकत्वमावश्यकम् । अन्यथानर्थक्यादत आह—**फलसम्बन्धन्त्विति** । तथा चाविरुद्धधर्मातिदेशकत्वेन नाम्नोऽर्थवत्त्वमित्यर्थः । **भावनास्वाभाव्यात्** अंशत्रयसाकाङ्क्षत्वरूपात् । **सत्तयेति** । आनुमानिकवचनेन वैदिकेतिकर्तव्यतानिदेशोऽस्तीति सत्त्वमात्रेण सामान्यतो निर्णीतमित्यर्थः । **भाविता** अष्टम इति शेषः । सूत्रार्थस्तु द्वादशाहिकं धर्मजातं द्वादशोपसत्वादि अहर्गणे गवामयने कुतस्तत्प्रकृतित्वादहर्गणत्वसाम्येन द्वादशाहप्रकृतिकत्वात् । कथं तर्हि ज्योतिर्नामकत्वं तत्राह – ऐकाहिकं

किञ्चौत्पत्तिकवाक्येष्वपि भावनास्वाभाव्याज्जायत एवापेक्षा तस्मान्नाम बलीयः ॥

वचनादभिधानतस्तथा विदितं कृत्स्नमिहातिदेशनम् ।
अनुमावचसापि सत्तया भविता तस्य विशेषचिन्तनम् ॥

इति नामातिदेशप्राबल्याधिकरणम् ॥ २ ॥

इति शास्त्रदीपिकायां सप्तमस्य चतुर्थः पादः समाप्तः ।
महामहोपाध्यायश्रीपार्थसारथिविरचितायां
शास्त्रदीपिकायां सप्तमाध्यायश्च
समाप्तः ॥ ७ ॥



---

कर्म ज्योतिष्टोमादधिकानां धर्माणामेकाहज्योतिःसंज्ञकादागमनात्तदाख्यं स्यात्, एकाहवत् एकाहकाण्डपठितज्योतिरादिवदिति ॥

इति नामातिदेशप्राबल्याधिकरणम् ॥ २ ॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सद्रामभट्टाख्यतनूजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां सप्तमोऽध्यायः ॥ ७ ॥



# अथ अष्टमोऽध्यायः

## प्रथमः पादः

१

अथ विशेष० विध्यन्ताधिकरणे सौर्यादिष्वानुमानिकेन वचनेन वैदिकीतिकर्तव्यतास्तीत्युक्तम् । तस्यैवेदानीं विशेष उच्यते—कस्य विध्यन्तः क्व प्रवर्तत इति । प्रथमं तावदिदं चिन्त्यते—किमेकस्मिन्कर्मणि सर्वधर्मातिदेशः, उत नेति ? ननु विध्यन्ताधिकरण एव लौकिकवैदिकविध्यन्तसमुच्चयमाशङ्क्य 'मिथो विप्रतिषेधादि' त्यनेन सूत्रेण कथम्भावापेक्षायामेकेनैवेत्थम्भावपूरणान्न द्वयोः सह प्रवृत्तिरित्युक्तं तेन गतमेतत् । सत्यम्, समुच्चयस्तत्र निराकृतः, इह तु सर्वविध्यन्तानामेकत्र विकल्पेन प्राप्तिरिति पूर्वः पक्षः ।

उत्तरन्तु नियत एव एकस्मिन्नेकः प्रवर्त्तते, अन्यथा ह्यव्यवस्थितः शास्त्रार्थः स्यात् । तस्मान्नियमेनैकस्यैव दर्शपूर्णमासादेर्विध्यन्त एकस्मिन् सौर्यादौ प्रवर्त्तते । सत्यमेवं युक्तम्, कथन्त्विदमवगम्यतेऽस्य विध्यन्तोऽत्र प्रवर्तते, अस्य नेति ? तदभिधीयते ।

इति प्रथमं विशेषातिदेशप्रतिज्ञाधिकरणम् ।। १ ॥

---

## अथाष्टमोऽध्यायः

१

अथ विशेष० उपजीव्योपजीवकभावसङ्गतिं दर्शयति-**विध्यन्तेति**। 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत तथाहि लिङ्गदर्शनमि'ति सप्तमोपान्त्याधिकरणे इत्यर्थः। सर्वधर्मातिदेशे सत्युक्तविचारायोगादाह—**प्रथमं तावदिति** । अस्य विचारस्य गतार्थत्वमाशङ्कते—**नन्विति** । **विन्ध्यन्ताधिकरणे** तत्पूर्वपक्षे 'मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यादि'ति सूत्रेणेत्यर्थः । **एकेनैवेति** । विध्यन्तेनेति शेषः । एवं नियमे उक्ते तद्धेतुप्रतिपादकान्युत्तरसूत्राणीत्याह—**तदिति** नियामकमित्यर्थः ॥

इति विशेषातिदेशप्रतिज्ञाधिकरणम् ॥१॥

२

यस्य० यस्य कर्मणो लिङ्गं चिन्हमुपस्थापकं शब्दगतम् अर्थगतं वा यस्यां विकृतौ दृश्यते, तस्य विध्यन्तस्तस्यां प्रवर्तते । यथाऽऽग्नेयस्य सौर्ये । तथा हि–निर्वपतिः, तद्धितेन देवतानिर्देशः, एकदेवत्यत्वम् , औषधद्रव्यकत्वमित्याग्नेयचोदनया दृष्टसम्बन्धानि सौर्यवाक्ये विध्यन्तापेक्षे दृश्यमानानि तामुपस्थापयन्ति, सा च स्वार्थम् , त्र्यंशा च भावना तस्याः स्वार्थः ततः साध्यसाधनांशाविहानपेक्षितत्वादनादृत्य तृतीयोंऽश इत्थम्भावरूपोऽपेक्षासन्निधि–योग्यत्वैर्वाक्यशेषत्वेनात्र सम्बध्यते । तदयमर्थः- यथाऽऽग्नेयेन स्वर्गः कृतः तथा सौर्येण ब्रह्मवर्चसमिति ।

एवमनेकदेवतेष्वग्नीषोमीयैन्द्राग्नविध्यन्तः, आज्यद्रव्यकेषूपांशुयाजस्य, पयोदध्यामिक्षादिषु दैक्षपशौ च सान्नाय्यस्य, पश्वन्तरेषु दैक्षस्य, ऐकादशिनेषु सवनीयस्य, पशुगणान्तरेषु ऐकादशिनस्य, अव्यक्तेषु सोमस्य, अहर्गणेषु सत्रेषु, अहीनेषु च द्वादशाहस्य, संवत्सरादिषु गावामयनिकस्येत्यादि द्रष्टव्यम् । एवमिह विशेषातिदेशः । उत्तरस्त्वस्यैव प्रपञ्चः ॥

इति सादृश्यविशेषेण धर्मातिदेशाधिकरणम् ॥२॥

---

२

**यस्य लिंग० चिह्नमिति** । सादृश्यमित्यर्थः । शब्दघटितमर्थघटितं वेत्यर्थः । तत्र निर्वपतिमत्वदेवतार्थकतद्धितवत्वादिशब्दघटितम् । एकदेवतत्वाद्यर्थघटितमिति ज्ञेयम् । आग्नेयचोदनाशब्देन सर्वाङ्गविशिष्टाग्नेयविधायिप्रयोगविधिर्ज्ञेयः । तेन 'चतुरश्चतुरो मुष्टीन्निर्वपति' इति वाक्यस्थनिर्वपतेस्तत्सम्बन्धोपपत्तिः । निर्वापरूपार्थसादृश्यन्त्वातिदेशात्प्रागसिद्धत्वादनाशङ्क्यम् । **वाक्यशेषत्वेन** वाक्यार्थशेषत्वेन । **सम्बन्ध्यत** इति । कल्पितवचनेनेति शेषः । तद्दर्शयति—**तदयमिति** । यस्य लिंगमित्येतदेव प्रपञ्चयति **एवमित्यादिना** । अग्नीषोमीयैन्द्राग्न्योर्यथायोगं न तु समुच्चय इति ज्ञेयम् । **अव्यक्तेषु** तद्धितचतुर्थीमन्त्रवर्णैः स्वोद्देशेनाविहितदेवताकेषु । **संवत्सरादिषु** संवत्सरसत्रादिषु । एवमनेनैवाधिकरणेन सिद्धावप्येतत्प्रपञ्चार्थान्येवोत्तराधिकरणानि स्फुटप्रतिपत्यर्थानीति न व्यर्थानीत्याह—**उत्तरास्त्विति** ॥

**इति सादृश्यविशेषेण धर्मातिदेशाधिकरणम् ॥ २ ॥**

३

प्रवृत्तित्वादि० अग्निहोत्रे, दर्शपौर्णमासयोः, ज्योतिष्टोमे च दोहावघाताभिषवादीनि दृष्टार्थान्यङ्गानि निराकाङ्क्षीकरणसमर्थानि, तैश्च निराकाङ्क्षत्वादतिदेशो नास्ति। तथाऽपि सोमे दार्शपौर्णमासिकधर्मातिदेशं केनचिद्धेतुना शङ्क्यमानं निराकर्त्तुमिदमधिकरणम्। कः पुनरसौ हेतुः? दीक्षणीयादिष्ववभृथपर्यन्तास्विष्टिषु पशुषु च दर्शपौर्णमासविध्यन्तोऽतिदेशेन प्राप्यमाणो मनसि विपरिवर्त्तते तन्मध्यवर्त्तित्वाच्च सोमस्य तत्रापि तदन्वयं शङ्कते। 'तस्यैकशतं प्रयाजानुयाजाः' इति च दर्शनमवकल्पते। तस्मादिष्टिः सोमे प्रवर्त्ततेति सोऽयं निराक्रियते। नानपेक्षे प्रवृत्तिर्युक्ता। प्रयाजादिकतुर्दीक्षणीयाद्यङ्गवर्ति वाजपेययूपन्यायेनैकशतशतसङ्ख्यं प्राप्तमनूद्यत इति नास्ति सोमेऽतिदेशः॥

इति सोमे ऐष्टिकधर्मानतिदेशाधिकरणम्॥ ३॥

---

३

प्रवृत्तत्वात्० आपवादिकी सङ्गतिः। अग्निहोत्रदर्शपूर्णमासवदेव सोमस्यापि नैराकाङ्क्ष्यादेवातिदेशशङ्काया अभावात्सत्वे वा त्रयाणामपि तच्छङ्कानिराकरणार्थमुदाहर्त्तव्यत्वात्सोममात्रोपादानं सूत्रेऽनुपपन्नमित्याशङ्क्याह—**अग्निहोत्र** इति। **विपरिवर्त्तत** इत्यनन्तरमितिशब्दाध्याहारेण इतिहेतुरित्यन्वयः। लिङ्गस्याप्युपस्थापकतयातिदेशकत्वादुपस्थितेश्चात्रापि सत्वादिति भावः। ज्ञापकरूपलिङ्गदर्शनमप्याह **तस्येति**। सोमस्येत्यर्थः। इष्टिविकारत्वे सति प्रयाजानामनुवादः सङ्गच्छते नान्यथेत्यर्थः। **सोऽयमिति**। शङ्काहेतुरित्यर्थः। **नानपेक्ष** इति। आकाङ्क्षासत्वे ह्युपस्थितिर्नियामिका स्यादिति भावः। तस्येति लिङ्गदर्शनमुपपादयति-**प्रयाजेति**। 'वाजयेयस्य यूप इति षष्ठीवत्परम्परासम्बन्धे तस्येति षष्ठीत्यर्थः। **अनूद्यत** इत्यनेन यथा प्राप्तस्यानुवादात्परम्परासबन्धाश्रयणं न दोष इति ध्वनितम्॥

इति सोमे ऐष्टिकधर्मानतिदेशाधिकरणम्॥३॥

४

इष्टिषु०— 'सौर्यं चरुं निर्वपेत्यादि'षु निर्वपत्यादिसामान्येन दर्शपौर्णमासविध्यन्तोपस्थापनात्तस्यातिदेशः। इदं च 'यस्य लिङ्गमि'त्यस्य प्रपञ्च इति नातीव पूर्वपक्षे यतितव्यम्। एवं उत्तरत्रापि सर्वत्र॥

इतीष्टिषु दर्शपूर्णमासविध्यन्ताधिकरणम्॥ ४॥

५

पशौ पशावप्यग्नीषोमीये तद्धितेन देवतानिर्देशः, आलभतिश्च दर्शपौर्णमाससादृश्यम्। इष्टावप्यालभतिर्विद्यते 'ईषामालभेते'ति, इष्यते च पशोरालम्भनादिदृष्टार्थाङ्गसिद्ध्येऽतिदेशापेक्षा, तस्मात्तत्रैष्टिको विध्यन्तः॥

इत्यग्नीषोमीये पशौ दर्शपौर्णमासिकधर्मातिदेशाधिकरणम्॥ ५॥

---

४

इष्टिषु० प्रत्युदाहरणसंगतिः॥

इतीष्टिषु दर्शपूर्णमासविध्यतिदेशाधिकरणम्॥ ४॥

५

पशौ च० ईषां लाङ्गलाधारभूतं शकटदण्डम्। ननूपाकरणादि सन्निपातिनामङ्गानामाम्नानान्न पशोर्धर्माकाङ्क्षेत्याशङ्क्याह—इष्यते चेति। आवाहनासादनादिदृष्टार्थाङ्गापेक्षास्त्येवेत्यर्थः। वस्तुतः क्रयसंनिधौ विहितस्य पशोः प्रदेशान्तराम्नातैर्धर्मैर्नैराकाङ्क्ष्याभावात्क्लृप्तोपकारधर्माकाङ्क्षयेष्टिधर्मातिदेश इति बोध्यम्। एकादश प्रयाजान्यजती'त्यादि लिङ्गदर्शनादिति सूत्रार्थः॥

इत्यग्नीषोमीये पशौ दार्शपूर्णिमासिकधर्मातिदेशाधिकरणम्॥५॥

६

दैक्षस्य० इतरेषु सवनीयनिरूढादिषु पशुषु प्राणिद्रव्यकत्वसाम्याद्विशसनादिद्रव्यसंस्कारलाभाच्च दैक्षस्याग्नीषोमीयस्य विध्यन्तातिदेशः ॥

इति सवनीयपशावग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ ६ ॥

७

ऐकादशिनेषु० ऐकादशिनेषु पशुषु सुत्याकालत्वसामान्यातिरेकाद् द्वैरशन्यदर्शनाच्च 'द्वे द्वे रशने यूपमृच्छतः' इति सवनीयस्य विध्यन्तः ॥

इत्यैकादशिनपशौ सवनीयविध्यन्तातिदेशाधिकरणम् ॥ ७ ॥

---

६

दैक्षस्य० 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेते'ति दीक्षासम्बन्धादग्नीषोमीयपशुर्दैक्षपदेनोच्यत इति दर्शयति—**दैक्षस्याग्नीषोमीयस्येति** ॥

इति सवनीयपशावग्नीषोमीयधर्मातिदेशाधिकरणम् ॥६॥

७

**ऐकादशिनेषु०** नन्वैकादशिनेषु दैक्षस्यैवातिदेशो न तु सवनीयस्य। नहि भिक्षुको भिक्षुकान्तरं याचत इति न्यायादत आह—सुत्येति। **सामान्यस्य** साम्यस्यातिरेक आधिक्यम्। सुत्याकालत्वञ्चैकादशिनानां क्रतुपशुभिः सह विकल्प्य विधानादवगन्तव्यम्। **द्वैरशन्येति**। सवनीये हि त्रिवृता यूपं परिवीये'त्येका रशना। द्वितीया च दैक्षात्पशोः प्रकृतितः प्राप्तेत्यस्ति रशनाद्वयं तदनुवादादित्यर्थः ॥

इत्यैकादशिनपशौ सवनीयविध्यन्तातिदेशाधिकरणम् ॥७॥

८

तत्प्रवृत्ति० सौत्रामण्यादिषु पशुगणेषु गणत्वसामान्याधिक्या-दैकादशिनविध्यन्तः ॥

इति पशुगणेषु ऐकादशिनधर्मातिदेशाधिकरणम् ॥ ८ ॥

९

अव्यक्तासु० 'विश्वजिता यजेते' त्यादिष्वेकाहेषु द्वादशाहे च किं दार्शपौर्णमासिको विध्यन्तः ? उत सौमिकः ? इति संशये, विशेषा-भावादनियमे प्राप्ते उच्यते—सौमिकः स्यात् अव्यक्तत्वसामान्यात्। केयम-व्यक्तता ? यागार्थतया विनियुक्ता तद्व्यक्तम्। इतरत्त्वव्यक्तम्। तथा विश्वजिदादयः सोमश्च। ननु 'ऐन्द्रवायवं गृह्णाती'ति तद्धितेनैव देवताऽपि सोमे विहिता। न यागे देवतानेन विधीयते, किन्तु ग्रहणे।

---

८

तत्प्रवृत्ति० सौत्रामण्यादिष्विति। सौत्रामण्यादिषु ये पशुगणास्तेष्वित्यर्थः। **गणत्वेति**। पशुगणान्तर्गतत्वेत्यर्थः। आधिक्यञ्च सुत्याकालत्वापेक्षया। असुत्याकालेषु तु गणेषु गणत्वसाम्येनातिरेकादधिकधर्मलाभादित्यर्थो बोध्यः। 'यत् त्रिषु यूपेष्वालभेत बहिर्धास्यादिन्द्रियं वीर्यं दध्यादेकयूप आलभेते'ति त्रिपशुकायां सौत्रामण्यां यूपानेकत्व-प्रतिषेधः प्रसक्तिपूर्वकत्वादैकादशिनविकृतित्वज्ञापक इति प्रतिपश्चित्यादि सौत्र-हेत्वर्थः ॥

इति पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणम् ॥ ८ ॥

९

**अव्यक्तासु०** अत्रैकाहेष्वित्येव पाठः। एकाहादिष्विति तु लेखकदोषादिति

तद्गतायास्तु पश्चादार्थिको यागसम्बन्धः न तु प्रथममेव यागान्वय इत्यव्यक्तत्वम् । अतः सोमविध्यन्तो विश्वजिदादिषु ॥

इत्यव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् ॥ ९ ॥

१०

गणेषु० द्विरात्रादिष्वहर्गणेष्वव्यक्तत्वम् गणत्वञ्चाधिकं विद्यते । तस्माद् द्वादशाहविध्यन्तः । एवञ्च 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते' इत्यादयः गणधर्मा लभ्यन्ते ॥

इत्यहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ १० ॥

११

गव्यस्य० संवत्सरसत्रेष्वादित्यानामयनप्रभृतिषु संवत्सरसत्रत्व-

---

ज्ञेयम् । द्विरात्रादेर्द्वादशाहविकृतित्वेनादिपदग्राह्यत्वासम्भवात् । आर्थिक इति । यागदेवतयोः परस्पराकाङ्क्षावशात् क्लृप्तयागद्वारा ग्रहणसम्बन्धपर्यवसानमित्यर्थः । सूत्रे स्त्रीलिङ्गनिर्देशश्चोदनाभिप्रायेण ॥

इत्यव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् ॥ ९ ॥

१०

गणेषु० द्विरात्रादिष्विति । नन्वेकादशिनीविध्यन्तो गणत्वसाम्यात्स्यादत आह अव्यक्तत्वमिति । तथा चाव्यक्तत्वे सति गणत्वं द्वादशाह एव नान्यत्रेति भावः । फल-माह—एवं चेति ॥

इत्यहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ १० ॥

११

गव्यस्य च० अत्रायनशब्दवत्त्वसाम्यमपि ज्ञेयम् । संवत्सरनियमेति 'चतुरहे पुरस्तात्पूर्णमासस्य दीक्षेरन्नि'त्यादिनियमलाभायेत्यर्थः । यद्यपि गोपयसोर्यदिति

सामान्यात्संवत्सरनियमलिप्सया च गावामयनिकविध्यन्तः ॥

इति संवत्सरसत्रेषु गावायानिकधर्मातिदेशाधिकरणम् ॥ ११ ॥

१२

निकायिनां० 'साहस्राः साद्यस्क्राः' इत्येकसंज्ञया युगपत्प्रस्तुत्य पश्चात्क्रमेण विहिताः यागा निकायिन इत्युच्यन्ते । तेषां प्रथमो धर्मवानितरेषु किन्ततो धर्माः प्रवर्त्तन्ते ? उत सौमिकाः ? इति संशये अव्यक्तत्वात् सौमिका इति प्राप्ते—

एकनिकायवर्त्तित्वम्, एकनामकत्वञ्चावान्तरसामान्यमधिकमस्तीति पूर्वविध्यान्त उत्तरेषु । तथा 'यावदस्य साहस्रस्ये' त्यादिसाहस्रादिधर्मदर्शनं पूर्वधर्मप्राप्तिं दर्शयति ॥

इति निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ॥ १२ ॥

---

गोविकारवाची गव्यशब्दस्तथापि गवामयने 'गावो वा एतत्सत्रमासते' त्यर्थवादेन गोसम्बन्धावगमात्तन्मात्रेण सूत्रे प्रयुक्तः ॥

इति संवत्सरसत्रेषु गावामयनिकधर्मातिदेशाधिकरणम् ॥ ११ ॥

१२

**निकायिनां०** निकायिपदार्थमाह— **साहस्रा** इति । साहस्रा इत्येकसंज्ञया साद्यस्क्रा इत्येकसंज्ञयेत्यन्वयः । तथा च नाम्नः सर्वत्र मुख्यतयातिदेशकत्वासम्भवः सूचितः । एवं सति पूर्वस्योत्तरेष्विति सिद्धान्तासम्भवादाह – **पश्चात्क्रमेणेति** । **निकायः** सङ्घ एषामस्तीति तथा भूताः । **एकेति** । एतच्च साद्यस्क्रे साहस्रातिदेशव्यावृत्त्यर्थम् । एवञ्च द्वयमपि निरपेक्षमेवातिदेशकम् । लिङ्गदर्शनमाह – **तथेति** । उत्तरस्मिन्निति- शेषः । 'यावदस्य साहस्रस्य उत्तराधरा गौर्गवि समाहिता भवति तावदस्माल्लोकादसौ लोकः' इति सहस्रदक्षिणारूपधर्मानुवादः पूर्वविकृतित्वे भवेन्नान्यथेत्यर्थः । पूर्वस्मिन् तद्विधानात् उत्तराधराभावेन गवां सहस्रसङ्ख्यानामवस्थाने यावानूर्ध्वप्रदेशो व्याप्यते तावदेवान्तरमस्यैतत्फलोपभोगयोग्यदेशस्य चेति स्तुतिः ॥

इति निकायिषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ॥ १२ ॥

१३

कर्मणस्त्व० फलं स्वर्गः, नियमः यावज्जीवकता, कर्ता स्वर्गकामः, समुदायः आग्नेयादीनां षण्णां मिथः साहित्यम्। किमेते विकृतिषु मिथः प्रदिश्यन्ते ? नेति ? सन्देहः।

तत्र प्रकृतिसम्बन्धाद्विकृतावतिदेशनम्।
प्रयाजादिवदेतेषामिति प्राप्तेऽभिधीयते ॥
प्रकृत्यैव निबद्धत्वाद्विकृत्या सह नान्वयः।
न चातिदेशतः प्राप्तिरित्थम्भावान्वयादृते ॥

कथम्भावापेक्षा हि विकृतिभावना यदेव प्रकृतावित्थम्भावेन गृहीतम्, तदेवापेक्षते। न च फलादीनामित्थम्भावान्वयः। फलनियमयोः पुरुषार्थत्वात्। स्वर्गकामोऽपि न कर्मार्थः। कर्मैव तदर्थमित्युक्तं स्वर्गकामाधिकरणे। तथाऽऽग्नेयादीनि षडपि तुल्यवत्फलं प्रति करणत्वेनोपदिष्टानि नान्योन्यस्याङ्गम्। तेन नैकस्योपकारेऽन्यानि प्रवर्त्तन्ते। न चाप्रवर्त्तमानेषु तत्साहित्यं भवति। तस्मान्न फलादीनामतिदेशः। माभूदित्थंभावांशेनातिदेशः, फलापेक्षयैव विश्वजिदादिष्वश्रुतफलेषु फलमतिदिश्यतामिति चेत् नैवम्, तद्धि फलं विकृतावतिदेशेन विधीयमानमङ्गमेव स्यान्न फलम्। न च फलं विकृतिं प्रति विधीयते। फलमेव प्राकृतं यथावस्थितमुद्दिश्य विकृतिर्विधीयतामिति चेन्न तस्य विकृतिः साधनं भवितुमर्हति, प्रकृत्यैव स्ववाक्यावगतयाऽवरुद्धत्वात्। तस्मान्न विकृतेः प्रकृतिफलसम्बन्धः ॥

इति फलादीनामनतिदेशाधिकरणम् ॥ १३ ॥

---

१३

कर्मणः० फलाद्यतिदेशापवादात्सङ्गतिः। तत्रेति। प्रकृतिसम्बन्धित्वं ह्यङ्गातिदेशनिमित्तं फलादावपि तुल्यमित्यर्थः। उपदेशेन तावन्न प्राप्तिरित्युक्तं स्मारयति— प्रकृत्यैवेति। आकाङ्क्षाभावान्नातिदेश इत्याह – न चेति। इत्थम्भावान्वयः इत्यम्भावेनान्वयः ॥

इति फलादीनामनतिदेशाधिकरणम् ॥ १३ ॥

१४

गुणकामे० इह सगुणफलानि 'गोदोहनेन पशुकामस्य प्रणयेदि-त्येवमादीनि तत्साधनभूताश्च गोदोहनादयः किं विकृतिषु प्रवर्त्तन्ते ? नेति ? संशयः। तत्र प्रधानफलं प्रधाननिबन्धनत्वात्तस्य च विकृतिष्व-प्रवृत्तेर्मा नाम प्रावर्त्तिष्ट ? गुणफलन्तु गुणप्रवृत्त्या प्रवर्त्तितुमर्हति। तथा हि प्रणयनं तावदतिदिश्यते तत्साधनभूतञ्च गोदोहनमनङ्गमपि साधनत्वात् चमसवत्प्रवर्त्तते। तत्प्रवृत्त्या च तत्साध्यं फलमपि प्रवर्त्तेत। यथा प्रधाना-श्रितदध्यादिसाध्यमिन्द्रियादि दध्यादेर्होमसाधनत्वेन विकृतिषु प्रवृत्तेः प्रवर्तेत। उच्यते—

न हि गोदोहनादीनामित्थम्भावेन सङ्ग्रहः।
इत्थम्भावातिदेशेन तेषां नातोऽतिदेशधीः॥

न हि यत्किञ्चिद्यथाकथञ्चिदपि प्रकृतेः साधनं तत्सर्वमतिदिश्यते। कथम्भावापेक्षा हि विकृतिचोदना सादृश्योपस्थापितां प्रकृतिचोदनामालोच्य तस्यास्त्र्यंशायाः साध्यसाधनांशावनाकाङ्क्षितत्वादनादृत्य तृतीयमित्थ-म्भावांशं वाक्यशेषत्वेन गृह्णाति। तत्र यत् प्राकृत्यां चोदनायामित्थम्भाव-रूपेणागृहीतं प्रमाणान्तरेण कथंचित्साधनभावमुपनीतं गोदोहनादि तस्य कः प्रसङ्गः। विकृतौ माभूदतिदेशः। प्रणयनस्य त्वाश्रयभूतस्य विकृतावपि सद्भावात् तदाश्रितं गोदोहनमपि पुरुषः कामनावशात्प्रयुङ्क्तामिति चेन्न ? वैगुण्यात्। अतिदिष्टस्याङ्गभूतस्य चमसस्य विना शास्त्रेण पुरुषेच्छा-मात्रेण युक्तो बाधः। तद्बाधे हि वैगुण्यं स्यात्। अवैगुण्ये तु भवतु

---

१४

गुणकामेषु० पूर्ववैषम्येण पूर्वपक्षात्सङ्गतिं सूचयन्नाह – तत्रेति। गोदोह-नस्याक्रत्वर्थस्यातिदेशमुक्त्वा क्रतुपुरुषोभयार्थदध्यादेः प्रवृत्तावसन्देहात्तत्फलप्रवृत्तिमाह तथेति। वैगुण्यादिति। चमसाङ्कप्रणयनलोपेन क्रतुवैगुण्यप्रसङ्गादित्यर्थः। ननु काम्येन बाधादनङ्गत्वाञ्चमसस्येत्यत आह – विनेति। तथा च बाधकप्रमाणाभा-वाद्वैगुण्यमेवेत्यर्थः। ननूभयार्थदधिखादिरत्वादेः फलवृत्तौ न वैगुण्यं बाधकमित्याशङ्क्या-भ्युपगमवादेनाह—अवैगुण्ये त्विति। वस्तुतः क्रत्वर्थतयैव दध्यादेर्विकृतौ प्रवृत्तेः

कामस्यापि प्रवृत्तिः । यथाह भाष्यकारः 'गोदोहने प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तितुमर्हति' इति । किञ्च यद्दर्शपौर्णमासापूर्वसाधनभूतं प्रणयनं तदेवाश्रयः, तादृशस्यैव प्रकृतत्वात् । न च विकृतौ तादृगस्ति । तस्मादाश्रयाभावादपि न गोदोहनतत्फलयोः प्रवृत्तिः ॥

इति गुणकामाधिकरणम् ॥ १४ ॥

१५

एककर्मणि० सौर्यं आग्नेयविकार इति वक्ष्यते । आग्नेयश्च पौर्णमास्यमावास्याकालयोरुत्पन्न उभयसंज्ञः । तेन चतुर्होत्रा पञ्चहोत्रा च तस्य कालद्वयेऽभिमर्शनम् । तत्र सौर्ये मन्त्रद्वयं किं पौर्णमास्यमावास्याकालयोर्व्यवस्थया प्रयोक्तव्यम् ? उताव्यवस्थयेति ?

व्यवस्था प्रकृतौ दृष्टा प्राप्यते विकृतावपि ।
प्रकृतावार्थिकी त्वेषा विकृतौ नातिदिश्यते ॥

'चतुर्होत्रा पौर्णमासीम्, पञ्चहोत्रामावास्यायामि'ति समुदाय-

---

फलार्थतायाञ्च क्रत्वर्थत्वाभावादभ्युपेत्यवादमात्रं भाष्यमिति बोध्यम् । ननु प्रणयनमात्राश्रितत्वेन गोदोहनादेः फलसाधनत्वस्य शास्त्रेणावगमाच्चमसबाधे सति बाधितस्यानङ्गत्वान्न तल्लोपकृतं विकृतेर्वैगुण्यमत आह – **किञ्चेति** । **प्रकृतत्वात्** उपस्थितत्वात् ॥

इति गुणकामाधिकरणम् ॥ १४ ॥

१५

**एककर्मणि०** गोदोहनादिवैषम्येण प्रत्यवस्थानात्सङ्गतिः । **उभयसंज्ञः** पौर्णमास्यमावास्यासंज्ञः । **आर्थिकीति** । **एषा** कालकृता व्यवस्था अर्थसिद्धा न तु शास्त्रकृतेत्यर्थः । आर्थिकत्वमेवोपपादयति – **चतुर्होत्रेति** । पृथिवी होतेत्यादिश्चतुर्होता । अग्निर्होतेत्यादिः पञ्चहोता । **समुदायेति** । पौर्णमासीसंज्ञककर्मसमुदायसम्बन्धि हविः पञ्चहोत्रेति रीत्येत्यर्थः । समुदायस्याभिमर्शनायोग्यतया हविर्लक्षणात् । ननु पौर्णमास्यादिपदस्य काले मुख्यत्वात्सप्तम्यर्थे द्वितीयामङ्गीकृत्य तत्काले यद्धविरिति कालद्वारेणोपदेशः । अथवा पौर्णमासीपदस्यैव तत्कालिकहविर्लक्षकत्वम् द्वितीया तु मुख्यार्थैवेति

**द्वारेण मन्त्रयोरुपदेशः, प्रकृतत्वात् । न कालद्वारेण तस्याप्रकृतत्वात् । अतः समुदायद्वयवर्त्तिन आग्नेयस्यैव मन्त्रावङ्गम् एकार्थत्वाच्च विकल्प्येते । तत्र पौर्णमासीकाले पौर्णमासिकैर्हविरन्तरैः सहाभिमृश्यमानमाग्नेयमविरोधाच्चतुर्होत्राभिमृष्टम्, एवममावास्याकाले पञ्चहोत्रा, न तु कालकृता व्यवस्था तत्र शास्त्रार्थः । तस्माद्विकृतावव्यवस्था ॥**

**इति सौर्येऽभिमर्शनस्य विकल्पाधिकरणम् ॥ १५ ॥**

**१६**

**लिङ्ग० —'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरि' त्युक्तम् । तत्र षण्णामाग्नेयादीनां कस्य क्व प्रवृत्तिः ? विशेषाभावादनियमः । सादृश्यविशेषात्त्वेकदेवत्ये सौर्यादावेकदैवत्यस्याग्नेयस्य प्रवृत्तिः । अनेकदेवतेषु अग्नीषोमी-**

---

कुतो नेष्यते ? तथा च 'वार्त्रघ्नीपौर्णमास्यामि'तिवद्वाचनिकी व्यवस्थेति नार्थिकत्वमत आह—**प्रकृतत्वादिति** । प्रधानसमुदायस्य प्रकृतत्वात्तत्सम्बन्धिहविर्लक्षणायां हविरन्तरे नातिप्रसंगः । कालस्य त्वप्रकृतत्वेन तत्सम्बन्धिहविरन्तरेऽतिप्रसङ्गवारणाय प्रकृतत्वेन हविर्विशेषणीयमिति न तद्द्वारोपदेश इति भावः । अत्र 'चासन्नानि हवींष्यभिमृशती'ति विहितमेकमेव कर्म । तत्रैकार्थ्यान्मन्त्रयोर्विकल्प इति द्रष्टव्यम् । समुदायद्वारकव्यवस्थायां चाग्नेयस्य समुदायद्वयान्तर्गतत्वान्न व्यवस्थाभागित्वमिति तत्र मन्त्रयोर्विकल्प एवेत्याह – **अत** इति । कथं तर्हि प्रकृतावाग्नेये व्यवस्थासिद्धिरतत्राह – **तत्रेति** । **आग्नेयं** हविः । तथा च व्यवस्थितहविरन्तरानुसारेणार्थिकी व्यवस्थेति भावः । एवं पूर्णमास्यमावास्ययोराग्नेयस्यैकत्वमिति स्वमतेनाव्यवस्थोपपादिता । तद्भेदवादिमतेऽपि सौर्यस्य विकल्पेनोभयविकारतयाऽव्यवस्थासिद्धिर्द्रष्टव्येति । सूत्रार्थस्तु एककर्मणि सौर्यमन्त्रविकल्पः हि यतश्चोदनैकत्वादव्यवस्थेति ॥

**इति सौर्येऽभिमर्शनस्य विकल्पाधिकरणम् ॥ १५ ॥**

**१६**

**लिङ्ग०** सौर्यस्याग्नेयविकारत्वं सिद्धवदुक्तमाक्षिप्य समाधीयत इति सङ्गतिः । **विशेषेति** । तद्धितनिर्वपतिप्रयाजादिलिङ्गाविशेषादित्यर्थः । **अनेकेति** । तत्रापि सोमघटितानेकदैवत्ये चतुरक्षरे वाग्नीषोमदेवत्यस्य इन्द्रघटितानेकदैवत्ये त्र्यक्षरे वा ऐन्द्राग्नस्येति व्यवस्था । नन्वाग्नेय इत्यादौ वृत्त्यन्तर्गतस्याग्न्यादेः सङ्ख्याविशेषस्यानवगमात्कथ-

यैन्द्राग्नयोः। आज्यादिद्रव्यकेषु उपांशुयाजादेः। कथं पुनरेकदेवत्यत्व-माग्नेयसौर्ययोः? वाक्यशेषादिति दर्शितं भाष्ये ॥

इति सौर्यचरावाग्नेयविध्यन्तातिदेशाधिकरणम् ॥ १६ ॥

१७

विप्रति० ऐन्द्रे पुरोडाशे किं देवतासामान्यात् सान्नाय्य-विध्यन्तः? उत हविःसामान्यादौषधविध्यन्तः? इति संशये, तथाऽऽग्नेये पयसि देवतासामान्यादौषधस्य, हविःसामान्याद्वा सान्नाय्यस्येति देवतासामान्यहविःसामान्ययोः किं बलीय इति चिन्त्यते। विशेषा भावादनियमः। मुख्यश्रुतत्वप्राधान्याभ्यां वा देवतायाः प्राबल्यं मन्वानस्य। उत्तरम्—

हविषस्त्यज्यमानत्वात्प्रत्यासत्तिर्हि कर्मणि।
उद्देश्यमात्ररूपत्वाद्देवताऽऽरादुपस्थिता ॥

यच्च प्रत्यासन्नं तेनैवोपस्थितं विध्यन्तमासाद्य निराकाङ्क्षं कर्म न बहिरङ्गभूतदेवतोपस्थापितमपेक्षते। यद्यपि प्रातिपदिकार्थत्वाद्देवता

---

मेकदेवत्यत्वनिर्णय इति शङ्कते – **कथमिति**। **वाक्येति**। अग्नयेधिकस्वेत्याग्नेयवाक्य-शेषादमुमेवादित्यमिति सौर्यवाक्यशेषाच्चैकवचनान्तेन तद्धितविग्रहे तात्पर्यनिश्चयादिति दर्शितमित्यर्थः ॥

इति **सौर्यचरावाग्नेयविध्यन्तातिदेशाधिकरणम्** ॥ १६ ॥

१७

**विप्रतिपत्तौ०** एवमतिदेशनियामकनिरूपणे सति तद्बलाबलनिरूपणावसर इति सङ्गतिः। **ऐन्द्र इति**। 'ऐन्द्रमेकादशकपालं निर्वपेदि'ति विहित इत्यर्थः। **तथेति**। बलाबलेत्यादि आग्नेयं पय'इति विहित इत्यर्थः। **सान्नाय्यस्येति**। संशय इत्यनुषङ्गः। **विशेषेति**। यागाङ्गत्वस्योभयत्र साम्यादिति भावः। **मुख्येति**। प्रथमनिर्दिष्टत्वादित्यर्थः। प्राधान्यमुद्देश्यत्वरूपम्, आर्थवादिकफलदातृत्वरूपं वा। **हविष इति**। **त्यज्यमानत्वात्** प्रधानभूतत्यागान्वयित्वाद्धविषः कर्मणि प्रत्यासत्तिरन्तरङ्गता देवता तूद्देशमात्रस्य त्याग-विशेषणस्य रूपं विशेषणमित्याराद् **दूरे उपस्थिता** बहिरङ्गमित्यर्थः। हविषः स्वरूपेण

मुख्या, तथाऽपि तत्स्वरूपवेलायामाकाङ्क्षाविरहादनतिदेशः कर्मविध्युत्तरकालन्तु प्रत्यासत्तेर्हविस्सामान्यं बलीयः। प्राधान्यन्तु देवताया नवमे निराकरिष्यते। किं चौषधे सान्नाय्यधर्माः; तत्र चौषधधर्माः सर्वे बाध्येरन्, असम्भवात्। यथायथन्तु प्राप्तौ न कस्यचिद्बाधः। तस्माद्धविःसामान्यं बलीयः॥

इति द्रव्यघटितसादृश्यस्य प्राबल्याधिकरणम्॥ १७॥

१८

हिरण्य० कृष्णलचरौ आज्यौषधयोः कस्य विध्यन्तः स्यात्? उज्ज्वलत्वसामान्यादाज्यस्य, विशदत्वादौषधवाचिचरुशब्दसंयोगाच्च तद्धर्माः॥

इति कृष्णलचरावौषधधर्मातिदेशाधिकरणम्॥ १८॥

---

यागसम्बन्धो देवतायास्तु वाचकशब्दद्वारेत्यप्यनेन सूच्यते। तत्स्वरूपवेलायां प्रातिपदिकार्थप्रतीतिवेलायाम्। आकाङ्क्षाकालमाह—कर्मेति। तत्र च सान्नाय्ये च। तथा चौषधे दोहातञ्चनादीनां सान्नाय्यधर्माणां बाधः, सान्नाय्ये चौषधधर्माणामवघातपेषणादीनां बाधः स्यादित्यर्थः। यथायथं औषधे तद्धर्माणां सान्नाय्ये च तद्धर्माणां प्राप्तावित्यर्थः कर्मणो हविर्निरूप्यत्वादिति सूत्रार्थः॥

इति द्रव्यघटितसादृश्यस्य प्राबल्याधिकरणम्॥ १७॥

१८

हिरण्य० पूर्ववद्धर्मबाधेन प्रत्यवस्थानात्सङ्गतिः। कृष्णलेति। 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति विहित इत्यर्थः। उज्ज्वलत्वेति। स्निग्धतया दीप्तिमत्वसाम्यादित्यर्थः। अवघाताद्यभावाच्चेति द्रष्टव्यम्। विशदत्वादिति। विशदं विविक्तावयवमिति भक्ष्येण मिश्रीकरणमिति सूत्रे हरदत्त आह। ननु प्रजापतिदेवताकत्वमाज्यसादृश्यमधिकमत आह—चरुशब्देति। तथा च चोदनागतचरुशब्दरूपलिङ्गोपोद्बलितं द्रव्यसादृश्यमेव बलवदिति भावः॥

इति कृष्णलचरावौषधधर्मातिदेशाधिकरणम्॥ १८॥

१६

मधूदके०—'दधि मधु घृतं धानाः तण्डुला उदकमि'त्यत्र मधूदकयोः पयः प्रवर्त्तेत, उताज्यमिति संदेहे स्वाभाविकद्रवत्वसामान्यात्पयः। नैवम्, असत्यपि च स्वाभाविकद्रवत्वेऽग्निसंयोगादाज्येऽपि द्रवत्वसद्भावाद्वर्णसामान्याधिक्यात् पयोधर्माणाश्च दोहनादीनामसम्भवादुत्पवनादीनाश्च सम्भवादाज्यविध्यन्तः।

वर्णसाम्यस्य चाधिक्याद् द्रवत्वस्याविशेषतः।
अनुग्रहाच्च धर्माणामाज्यधर्मं मधूदकम् ॥

इति मधूदकाधिकरणम् ॥ १९ ॥

इति शास्त्रदीपिकायामष्टमस्य प्रथमः पादः ॥ १ ॥



---

१९

मधूदके० दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमि'ति-चित्रेष्टिवाक्ये विचारः। अत्र प्रजापतिदेवताकत्वमप्यधिकं द्रष्टव्यम् ॥

इति मधूदकाधिकरणम् ॥ १९ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिसूनुवैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायामष्टमाध्यायस्य प्रथमः पादः ॥



## अथ अष्टमाध्याये द्वितीयः पादः

१

वाजिने० वाजिनयागे, सौत्रामण्यङ्गभूतेषु किं सौमिको विध्यन्तः? उतैष्टिकः इति संदेहे-'सोमो वै वाजिनम्, सुरा सोमः' इत्यसोमे सोमशब्दस्तद्धर्मातिदेशार्थोऽअग्निहोत्रशब्दवत्। तस्मात्सौमिकः।

प्रशंसार्थस्त्वयं सोमशब्दः न विधानार्थः, विध्यश्रवणात्। तद्धविः-सामान्यादैष्टिके वाजिने पयोविध्यन्तः, सुराग्रहेषु चौषधः॥

इत्यैष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम्॥ १॥

२

पशुः० पशावग्नीषोमीये दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तम्।

---

## द्वितीयः पादः

१

वाजिने० पूर्वपादे तद्धितनिर्दिष्टैकदेवतानिर्वपतिमत्वादिस्पष्टलिङ्गैरतिदेश उक्तः। इह त्वस्पष्टैस्तैरुच्यत इति पादभेद आनन्तर्यश्च ज्ञेयम्। लिङ्गास्पष्टता चानुपदमेव स्फुटीकरिष्यते। वाजिन इति। 'वाजिभ्यो वाजिनमि'ति विहित इत्यर्थः। **प्रशंसेति**। तथा च सिद्धमेव किञ्चित्साद‍ृश्यमादाय स्तुत्युपपत्तेर्विध्युद्देशगताग्निहोत्रादि-नामवत्साध्यसाद‍ृश्यपरत्वाभावान्नातिदेशकत्वमिति भावः। **हविःसामान्याद्विति**। वाजिनसोमयोः पयोव्रीहिजन्यत्वात्तदुपस्थापकतया तद्धर्मातिदेशनियामकत्वमित्याशयः। अत एवात्र सिद्धान्तसूत्रं 'हविषा वा नियम्येत' तद्विकारत्वादिति। इदमेवास्पष्टत्वं लिङ्गस्येति ज्ञेयम्। सूत्रे ताच्छब्द्यादित्यस्य वाजिनसुरयोः सोमशब्दप्रयोगा-दित्यर्थः॥

इत्यैष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम्॥ १॥

२

पशु० इष्टिविकारत्वप्रसङ्गात्तद्विशेषः पशौ चिन्त्यत इति सङ्गतिः। **उक्तमिति**

तत्रदेवता सामान्यादग्नीषोमीये पुरोडाशः प्रवर्त्तते, हविःसामान्यमपि पुरोडाशेनैव विद्यते, द्वयोरपि घनत्वात् ।

सान्नाय्यं वा प्रवर्तते, हविःसामान्यात् । सान्नाय्यं हि पशुतः प्रभवति पशुरपि पशुप्रभवः सम्बन्धित्वाच्च पशुसान्नाय्ययोः पशुः प्रतीतः सान्नाय्यमुपस्थापयति सान्नाय्यपात्रं चोखा पशौ दृश्यमाना तत्प्रकृतित्वं सूचयति ॥

इति पशौ सान्नाय्यधर्मातिदेशाधिकरणम् ॥ २ ॥

३

दध्नः०—तत्रापि दध्नो विकारः स्यात्, घनत्वसामान्यात् । पयसो वा, तद्धि साक्षात्पशुप्रभवम् दधि तु तद्व्यपेतम् पशुरपि साक्षात्पशुप्रभवः गतिमत्त्वश्च पशुपयसोस्तुल्यं तदधिकं दधितः पयसः ॥

इति पशौ पयोधर्मातिदेशाधिकरणम् ॥ ३ ॥

---

'पशौ च लिङ्गदर्शनादि'त्यत्रेत्यर्थः । प्रत्यक्षसादृश्याभावादाह—सान्नाय्यं हीति-अप्रत्यक्षमपि पशुजन्यत्वरूपं सादृश्यं जन्यजनकभावघटितत्वादन्तरङ्गतयोपस्थापकमित्यर्थः । लिङ्गमप्याह—उखेति । 'यदि पशुरुखायां पच्यमानः स्कन्दादि'त्यनुवादादित्यर्थः ॥

इति पशौ सान्नाय्यधर्मातिदेशाधिकरणम् ॥ २ ॥

३

दध्नः० गतिमत्त्वमिति । अन्यचोदनां विना गतिमत्त्वमित्यर्थः ॥

इति पशौ पयोधर्मातिदेशाधिकरणम् ॥ ३ ॥

४

**आमिक्षो०—आमिक्षायागः सान्नाय्यविकार इत्यसंदिग्धम्। दध्नः पयसो वेति चिन्त्यते—**

**दधि क्षीरं च संसृष्टमामिक्षेत्यभिधीयते।**
**उभयोश्च रसस्तस्यां दृश्यतेऽतो द्वयात्मिका॥**
**विशेषाग्रहणात्तस्मादुभयोर्विकृतिर्भवेत्।**
**तप्ते पयसि वाक्ये तु सप्तम्या गुणतः पयः॥**
**दधि द्वितीयानिर्देशात्प्रधानं तेन सापदम्।**
**दध्येव प्रतिनिर्दिश्य तेन बध्नाति देवताम्॥**
**दध्येवातो हविस्तस्मात्सायंदोहविकारता।**
**पयसस्तु प्रधानत्वं तत्र कर्मसमाप्तितः॥**
**दध्ना हि नीयमानेन तदेव व्याप्यते पयः।**
**कर्मतोऽपि प्रधानत्वं तस्य स्यात्सम्प्रदानवत्॥**
**सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्पते।**
**यदेव दधिसंयोगाद्घनीभूतमतो हविः॥**

---

४

**आमिक्षा०** पूर्ववद्दधिविकृतित्वनिरासादातिदेशिकी सङ्गतिः। विध्यन्तसमुच्चयविकल्पयोः पूर्वमेव निरासादुभयविकार इति सूत्रानुपपत्तिमाशङ्क्य तदुपपादयति दधीति। हविष एकत्वे हि विध्यन्तसमुच्चयो निरस्तः। इह तु हविषो द्विरूपत्वाद्विध्यन्तद्वयं युक्तमिति भावः। विशेषं दर्शयन् द्वितीयपूर्वपक्षमाह—**तप्त इति**। **गुणतः** गुणभूतम्। प्रथमान्तात्तसिः। **सापदं** 'सा वैश्वदेवी'ति तत्पदम्।

सिद्धान्तमाह—**पयसस्त्विति**। तत्र पयसि आनयनकर्मणो दध्नः समाप्तितः प्राप्तेः पर्यवसानादिति यावत्। **एतदेवाह-दध्ना हीति**। **सम्प्रदानवत्** 'मैत्रावरुणाय दण्डं

तस्यैव देवतायोग आमिक्षाऽपि तदेव नः ।
प्रातर्दोहविकारत्वमामिक्षायास्ततः स्थितम् ॥

इत्यामिक्षायां पयोधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

**सत्रमहीनश्च०** 'गणेषु द्वादशाहस्ये' त्युक्तम् । द्विविधाश्च गणाः-सत्राणि अहीनाश्च । द्वादशाहोऽप्युभयात्मा तस्योभयविस्धयाप्यनियतात्मना सर्वत्र प्रवृत्तिः, विशेषाभावात् ।

सत्रस्यैव तु सत्रेषु प्रवृत्तिः सत्रसाम्यतः ।
तथाऽहीनेष्वहीनस्य सुसदृक्त्वादिति स्थितम् ॥

इति द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् ॥ ५ ॥

---

प्रयच्छति' इत्यत्र मैत्रावरुणवत् । पयसि काठिन्यासम्भवमाशङ्क्याह—**तदेवेति** । **प्रातरित्यनेन** सद्यस्कालत्वोपपत्तिरुक्ता चतुर्थे । पयःप्राधान्यमत्र सिद्धमेवोक्तम् । दधिप्राधान्येऽप्यामिक्षादध्यायनप्रयोजिका न तु वाजिनमित्यर्थसिद्धेरिति न पौनरुक्त्यम् ॥

इत्यामिक्षायां पयोधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

**सत्रमहीनश्च०** आमिक्षाया अनुभयरूपत्वादव्यवस्थायामपि द्वादशाहस्योभयरूपत्वात्तद्विकृतावव्यवस्थेति शङ्कोत्थानात्सङ्गतिः । आसनोपायिचोदितं सत्रम् । यजतिचोदितो ऽहर्गणोऽहीन इत्यनादिप्रयोगसिद्धम् । द्वादशाहे च द्वयमप्यस्तीति विकृतावव्यस्था धर्माणाम् । न च सत्राहीनसंज्ञाभेदाद्विशेषः, द्वादशाहकर्मण एकत्वेन द्वादशाहवदित्यतिदेशवाक्यस्योभयसाधारण्यादिति पूर्वपक्षाशयः । सिद्धान्तमाह—**सत्रस्यैवेति** । सादृश्यवशात्सत्रेषु सत्रद्वादशाहवदित्यहीनेष्वहीनद्वादशाहवदिति मिश्रवाक्यशेषकल्पनादिति भावः । वस्तुतः सत्रत्वनिमित्तानामहीनेषु आहीनत्वनिमित्तानाञ्च सत्रेषु निमित्ताभावादेवाप्रवृत्तेः फलत इयं व्यवस्थेत्याहुः ॥

इति द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् ॥ ५ ॥

६

अन्यतर० पञ्चदशरात्रस्य कुण्डपायिनामयनस्य च किं सत्रविकारत्वम्? उताहीनविकारत्वमिति? चिन्त्यते तदर्थं च किमनयोरहीनत्वम्? उत सत्रत्वमिति? विचार्यते।

तत्रोपर्यतिरात्रत्वाद् द्विरात्रादिवदेतयोः।
अहीनत्वम्भवेन्नैवमासनोपायचोदनात् ॥
सत्रसंज्ञांतकाण्डे च समाम्नातमिदं द्वयम्।
तस्मात्सत्रमतः सत्रविध्यन्तोऽत्र प्रवर्त्तते ॥

इति पञ्चदशरात्रादौ, गवामयने च सत्रधर्मातिदेशाधिकरणम् ॥ १६ ॥

इति शास्त्रदीपिकायामष्टमस्य द्वितीयः पादः ॥ २ ॥

---

६

**अन्यतरतः०** सत्रधर्मातिदेशः क्वचिदाक्षिप्य समाधीयत इति सङ्गतिः। **पञ्चदशेति**। 'त्रिवृदग्निष्टोमः त्रिरात्रः दशरात्रः उदयनीयोऽतिरात्र' इति पञ्चदशरात्रस्याहःक्लृप्तिः कुण्डपायिनामयनेऽप्येते उदयनीयोऽतिरात्र इत्युक्तम्। पूर्वपक्षमाह—**तत्रेति**। **उपरि** अन्ते। यत्रान्तेऽतिरात्रस्तत्राहीनत्वं द्विरात्रादिवदित्यनुमानमित्यर्थः। यदन्यतरतोऽतिरात्रस्तेनाहीना इति वाक्यशेषस्योपलक्षणमिदम्। सिद्धांतमाह— **नैवमिति**। तेनाहीन इत्यर्थवादत्वान्न नियामकमिति भावः सूत्रे तद्भूतेष्वन्यतरतोऽतिरात्रेषु अहीनत्वदर्शनात्तेनाहीन इति वाक्य इत्यर्थः ॥

इति पञ्चदशरात्रादौ गवामयने च सत्रधर्मातिदेशाधिकरणम् ॥ ६ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायामष्टमस्य
द्वितीयः पादः ॥

# अष्टमाध्याये तृतीयः पादः

१

हविर्गणे० 'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सारस्वतश्चरुम्, बार्हस्पत्यश्चरुमि'ति। तत्र सन्देहः किं प्रथमस्याग्नेयविध्यन्तः, तृतीयस्याग्नीषोमविध्यन्तः, उत विपरीतमिति। स्थानसामान्यात् प्रथमतृतीययोः प्रथमतृतीयविध्यन्तप्राप्तौ,

उच्यते—प्रथमस्य द्विदेवत्यत्वादग्नीषोमीयविध्यन्तः, तृतीयस्य चैकदैवत्यत्वादाग्नेयविध्यन्तः। देवतासामान्यमुत्पत्तिवेलायामेव शीघ्रं गम्यते, स्थानसामान्यन्तु न्यायापेक्षत्वाद्विलम्बितत्वाद् दुर्बलम्। तस्माद्देवतासामान्यात्प्रथमतृतीययोस्तृतीयस्य प्रथमविध्यन्तः॥

इत्यध्वरकल्पेष्टौ आग्नावैष्णवे अग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ १ ॥

---

## तृतीयः पादः

१

**हविर्गणे०** अत्र गणविशेषविषयविचारात्पादभेदः। चरुमित्यनन्तरमध्वर कल्पायां श्रुतमिति शेषः। **स्थानेति**। क्रमस्य हविः सम्बन्धितया देवतासामान्यात्प्राबल्यमिति भावः। **देवतेति**। शब्दत्वान्निरपेक्षत्वाच्चेत्यर्थः। प्राथम्यादिकन्त्वर्थगम्यमितरनिरूप्यतया सापेक्षञ्चेति दुर्बलमित्यर्थः। परं हविरुत्तरस्य एवमाद्यस्य देशसाम्यादिति सूत्रार्थः॥

इत्यध्वरकल्पेष्टावाग्नावैष्णवे अग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ १ ॥

२

गण० जनकसप्तरात्रे श्रूयते 'चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानी'ति। तत्र किमेषु पार्ष्णिकस्याद्यस्याह्नस्त्रिवृतो विध्यन्तश्चतुर्ष्वप्यावर्त्तते ? उत त्रिवृदादीनां चतुर्णामपि प्रवृत्तिश्चतुर्षु क्रमेणेति ? संशये, पूर्ववत्सङ्घातसामान्यस्य च दुर्बलत्वात्, त्रिवृत्त्वसामान्येनैवाद्यस्यैव प्रवृत्तिः।

नैवम्, इह सह चोदितानां सङ्घातोऽपि शाब्दः, त्रिवृत्त्वमपि, तत्र सङ्घातसामान्यं प्रधानगतं तदङ्गभूतस्तोत्रीयागतात् त्रिवृत्त्वाद्बलीय इति तद्वशेन चतुर्णामपि पृष्ठ्याद्यानां चतुर्षु प्रवृत्तिः। एवञ्च 'अग्निष्टोममुखानी'त्येष वादो युज्यते आद्यस्याग्निष्टोमत्वात्। अन्यथा सर्वेषामग्निष्टोमत्वं स्यात्। तत्राग्निष्टोममुखानीति न घटते ॥

इति जनकसप्तरात्रे त्रिवृत्स्वहस्सु द्वादशाहधर्मातिदेशाधिकरणम् ॥ २ ॥

३

कालाभ्यासे० षट्त्रिंशद्रात्रे श्रूयते 'षडहा भवन्ति, चत्वारो

---

२

**गणचोदनायां०जनकेति**। 'जनकसप्तरात्रेण यजेतेति। पूर्ववदिति विहित इत्यर्थः। **त्रिवृन्ति** त्रिवृत्स्तोमकानि। अग्निष्टोमसंस्थाकं मुखे आदौ येषां तानि। **त्रिवृदादीनामिति**। त्रिवृत् पञ्चदशः सप्तदशः एकविंश'इति चतुर्णामित्यर्थः। **पूर्ववदिति**। पूर्वत्र प्रथमत्वादिकं यथा प्रचयलभ्यत्वादशाब्दतया दुर्बलं तद्वत्सङ्घातोऽपीत्यर्थः। **नैवमिति**। चत्वारीत्येकपदबोध्येषु समूहप्रतीतेर्व्युत्पत्तिसिद्धतया शाब्दत्वमित्यर्थः। एतदुपोद्बलकं लिङ्गमाह **एवञ्चेति**। आद्यस्य षड़हगताद्यस्याह्नः। अत्र चतुर्णां प्रवृत्तावपि वाचनिकत्रिवृत्वे नबाधात्पञ्चदशादीनामप्रवृत्तावपि तदतिरिक्तधर्मातिदेशो ज्ञेयः॥

इति **जनकसप्तरात्रे त्रिवृत्स्वहस्सु द्वादशाहिकधर्मातिदेशाधिकरणम्**॥ २ ॥

३

**कालाभ्यासे०** पूर्वत्र चत्वारीत्यस्येव 'चत्वारो भवन्ती'त्यस्यापि पृथकत्वनिवे-

भवन्ती'ति। तत्र विचार्यते—किमेतेषु चतुर्विंशत्यामहस्सु द्वादशाहिकस्य दशरात्रविध्यन्तस्य प्रवृत्तिः ? उत षडहस्यैव चतुरावृत्तिः ? इति । तत्र—

चतुर्विंशतिरेतानि चत्वारः षडहा इति ।
चोद्यन्तेऽहानि तेनैषु द्वादशाहः प्रवर्तते ॥
चतुर्विंशतिसङ्ख्योऽत्र गणः साक्षान्न चोद्यते ।
चतुःसंख्यैस्तु षडहैरनुमानेन गम्यते ॥
चतुःसङ्ख्यास्तु षडहाः प्रत्यक्षेणैव चोदिताः ।
तस्मात्षडहविध्यन्तः शीघ्रमत्रावगम्यते ॥

इति षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥ ३ ॥

४

संस्था० 'शतोकृथ्य' भवति, शतातिरात्रं भवति' इति श्रुतम् ।

---

शितया आवृत्त्ययोगाच्छङ्कोत्थानमिति सङ्गतिः । **चतुर्विंशत्यामिति** । अन्हां चतुष्ट्वे चतुर्विंशत्यहानि भवन्तीत्यर्थः । एतच्च पूर्वपक्षकोट्यन्तर्गतमेव न तु धर्मिनिर्देशकम् । सिद्धान्ते षडहस्यैकस्यावृत्त्या चतुर्विंशतेरन्हामभावात् । **तत्रेति** । **चत्वारः षडहा** इति यतश्चोद्यन्ते ऽतश्चतुर्विंशतिरित्यर्थः । सङ्ख्यायाः पृथकत्वनिवेशित्वेनावृत्त्ययोगात् । तथासति चतुःषडहः इति सुच् प्रत्ययापत्तेश्चेति भावः । **साक्षादिति** । चतुर्विंशतिसङ्ख्याया अश्रुतत्वादित्यर्थः । प्रत्यक्षेण श्रुतेनैव षडहशब्देन चोदिताश्चतुःसङ्ख्याविशिष्टतया विहिता इत्यर्थः । न च संख्यायाः पृथक्त्वनिवेशित्वादन्हां चतुर्विंशतित्वम् पृथगाख्यातश्रवणेन भिन्नवाक्यत्वात्षट्सङ्ख्याविशिष्टतया निर्णीतेषु चतुःसङ्ख्याया आवृत्तिसम्पाद्यत्वस्य प्रयाजैकादशत्ववन्न्यायसिद्धत्वात् । एकवाक्यत्वेऽपि च षट्त्वविशिष्टचतुष्ट्वान्वयेन विशेष्यतावच्छेदकषट्त्वस्य प्रथमावगतत्वादुक्तन्यायेनावृत्तिसिद्धेः । एवञ्च मानान्तरेणावृत्त्यवगतेर्न सुच् प्रत्ययापेक्षेति भावः । **शीघ्रमिति** । षड्हशब्दवत्वरूपलिङ्गादित्यर्थः ॥

**इति षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥ ३ ॥**

**४**

**संस्थागणेषु०** चतुः शब्दवच्छतशब्दोऽप्यावृत्तिपर इति शङ्कोत्थानात्सङ्गतिः ।

तत्र संशयः—किं ज्योतिष्टोमस्य शतकृत्वोऽभ्यासः ? उत द्वादशाहप्रवृत्तिरिति । तत्रोक्थ्यादिशब्दानां ज्योतिष्टोमनामत्वं मन्वानस्तमेव दूरस्थमप्यनूद्य शताभ्यास उपादेयो गुणो विधीयत इति मन्वानस्तस्यैवाभ्यासमाह—

संस्थानिमित्तास्त्वेते न क्रतोः कस्यापि वाचकाः ।
सन्निध्यभावतः संस्थाविशिष्टगणचोदना ॥

तस्माद्द्वादशाहविध्यन्तः ॥

इति संस्थागणेषु द्वादशाहधर्मातिदेशाधिकरणम् ॥ ४ ॥

५

गणात्० 'शतोक्थ्यं भवती'त्यत्र द्वादशाहिको दशरात्रो दशकृत्वः प्रवर्त्तते इत्युक्तम् । तस्मिंश्च दशरात्रेऽभितो द्वावग्निष्टोमौ । तत्र शतोक्थ्ये प्रतिदशकं द्वावग्निष्टोमौ उक्थ्यसंस्थया वर्द्धयितव्यौ । तत्रागम्यमानेषूक्थ्यस्तोत्रेषु संशयः—किं द्वादशाहिकोक्थ्यस्तोत्रविकारास्तेषु हि

---

**तमेवेति** । ज्योतिष्टोममेवोक्थ्यातिरात्रशब्दाभ्यामनूद्य शतावृत्तिरूपगुणमात्रविधानं लाघवान्न तु सङ्ख्यासंस्थोभयविशिष्टापूर्वकर्मविधिर्गौरवादिति भावः । **उपादेय** इत्यनेन प्रकरणान्तरन्यायाभावः सूचितः । सिद्धान्तमाह—**संस्थेति** । उक्थादिस्तोत्रकृतसमाप्तिवाचिका इत्यर्थः । **संनिध्यभावतः** पूर्वकर्माप्रत्यभिज्ञानात् अपूर्वकर्मविधिरित्यर्थः । **द्वादशाहेति** । तद्गतदशरात्रविध्यन्तो दशकृत्वः प्रवर्त्तत इत्यर्थः । सूत्रे कृतलक्षणस्य कृतोक्थादिसञ्ज्ञस्य ग्रहणादित्यर्थः ।।

इति संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ।। ४ ।।

५

**गणात्०** इत्युक्तमिति । दाशमिकन्यायेनोक्तप्रायमित्यर्थः । अनेन पूर्वाधिकरणोपजीवनप्रवृत्तेः सङ्गतिः सूचिता । तस्मिंश्चेति । द्वादशाहगत इत्यर्थः । **अभितः** प्रथमदशमस्थानयोः मध्ये त्वष्टावुक्थ्याः । **उक्थ्य संस्थयेति** । अग्निष्टोमस्तोत्रोत्तरमनुष्ठीयमानया वृद्धिं प्रापणीयौ । सर्वेषामुक्थ्यसंस्थताया औपदेशिकत्वादित्यर्थः ।

केचिद्विशेषाः प्राकृतेभ्यः स्तोत्रेभ्यो विद्यन्ते ? उत ज्योतिष्टोमोक्थ्य-विकाराः ? इति। तत्र द्वादशाहविकारत्वादस्य गणस्य तदीयेषूक्थ्याहस्सु यान्युक्थ्यस्तोत्राणि, तद्विकारत्वमेवास्मिन्नागन्तूनामुक्थ्यस्तोत्राणां युक्तम्।

नैतद्युक्तम्। ज्योतिष्टोमे ह्युक्थ्यस्तोत्राणामुत्पत्तिः। द्वादशाहे त्वतिदेशप्राप्तानां तेषामेव विशेषा विहिताः। यत्र चोत्पत्तिः, तत एवागमनं युक्तम्। न यत्रातिदिष्टानि। न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके। तस्माज्ज्यौतिष्टोमिकानामेवोक्थ्यादीनां प्रवृत्तिः॥

इति शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम्॥ ५॥

६

गायत्रीषु० बृहस्पतिसवे प्रकृतितो ज्योतिष्टोमात् गायत्र-त्रैष्टुभादिषु नानाछन्दस्सु प्राप्तेषु छन्दोऽन्तराणि व्युदस्य गायत्री नियता 'गायत्रमेतदहर्भवती'ति। तत्र संशयः--किं त्रिष्टुबादिष्वेव चोदकप्राप्तेषु अक्षरलोपं कृत्वा गायत्री सम्पादयितव्या ? उत दाशतयीभ्य उत्पत्तिगायत्र्य आनेतव्याः ? इति। तत्र सङ्ख्यामात्रवाचकत्वाद् गायत्रीशब्दस्य

---

विकारा इत्यत्र स्तोत्राणीति शेषः। अत्र फलमाह—तेष्विति। प्राकृतेभ्यः ज्यौतिष्टोमिकेभ्यः। अस्मिन् शतोक्थ्यादौ। नैतदिति। उक्थ्यशब्देन प्रकृत्यनपेक्षाणां ज्योतिष्टोमगतानामेव प्रथममुपस्थितिर्न तु प्रकृतिसापेक्षाणां द्वादशाहगतानामित्यर्थः। तदाह नहीति। न यत्रातिदिष्टानीति। न यत्रातिदेश इति वा पाठः। अतिदिष्टा इति पाठे तु पदार्थाभिप्रायपुंस्त्वमवगन्तव्यम्॥

इति शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम्॥ ५॥

६

गायत्रीषु० अत्र सङ्गतिमधिकरणान्ते वक्ष्यति। सङ्ख्यामात्रेति। आकृत्यधिकरणन्यायेनेत्यर्थः। चोदकेत्यनेनात्यन्ततद्बाधाभावोऽपि हेतुरुक्तः। गायत्रीशब्दस्य

प्राकृतीष्वेव चोदकप्राप्तास्वक्षरलोपो न विरुध्यते। तस्मात्ताष्वेवाक्षरलोपः। तथा च 'तिस्रोऽनुष्टुभः, चतस्रो गायत्र्यः' इत्याद्युपपद्यते। अत्रोच्यते—

सङ्ख्यामात्राभिधायित्वे सर्वत्रैव प्रसज्यते।
मन्त्रान्तरे घटादौ च तस्मात्सङ्ख्यान्वितामृचम्॥
अष्टाक्षरैस्त्रिभिः पादैर्युक्तामभिदधात्यसौ।
तिस्रोऽनुष्टुभ् इत्यत्र गौणः शब्दो न मुख्यतः॥

तस्मादुत्पत्तिगायत्र्य आनेयाः। पूर्वाधिकरणे उपचयश्चिन्तितः। तत्प्रसङ्गादपचयोऽयं चिन्तितः॥

इत्युत्पत्तिगायत्रीणामतिदेशाधिकरणम्॥ ६॥

इति शास्त्रदीपिकायामष्टमाध्यायस्य तृतीयः पादः॥ ३॥



---

सङ्ख्यामात्राभिधायित्वे लिङ्गमप्याह—तथाचेति। द्वात्रिंशदुत्तरास्तिस्रोऽनुष्टुभस्तत्रैकैकस्या अष्टावक्षराण्यपोद्धृत्य चतस्रः चतुर्विंशत्यक्षरा गायत्र्यो भवन्तीत्यर्थः। सर्वत्रैवेत्यस्यार्थकथनम् मन्त्रान्तर इति। असौ गायत्री शब्दः। गौण इति अनुष्टुप्शब्दसामानाधिकरण्यात्सङ्ख्यासाम्येन तत्स्तुत्यर्थो गौण इत्यर्थः। मुख्यत इति। प्रथमान्तात्तसिः। सूत्रार्थस्तु—गायत्रीषु विहितासु प्राकृतीनामवच्छेदोऽक्षरलोपः प्राकृतीनामधिकारात्संनिधानात् यथा शताग्निष्टोममित्यत्र द्वादशाहिकानामन्हामुक्थ्यावलोपः सङ्ख्यायाश्चाव्यतिरेकाद्गायत्रीशब्दवाच्यत्वमिति॥

इत्युत्पत्तिगायत्रीणामतिदेशाधिकरणम्॥ ६॥

इति श्रीमत्तत्सदुपाख्यरामचन्द्रसूरिवरात्मजवैद्यनाथ
कृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्याया-
मष्टमाध्यायस्य तृतीयः पादः॥



# अथाष्टमाध्याये चतुर्थः पादः

१

दर्विहोमो:० प्रपञ्चितेऽतिदेशे ह्यपवादविवक्षया दर्विहोमा हृदयमागताः। तत्प्रसङ्गेन च 'यदेकया जुहुयाद्दर्विहोमं कुर्यादि' त्यर्थवादगतो दर्विहोमशब्दो हृदयामागतः किं गुणविधिः, नामधेयं वा। नामापि लौकिकानामेव ? उत वैदिकानामपि ? किं यज्युत्पत्तीनामपि ? किं वा जुहोत्युत्पत्तीनामेव? इति प्रसङ्गाच्चिन्त्यते। तत्र होमशब्दसंयोगात्तस्य च कर्मवचनत्वात्तत्प्रधानत्वाच्च समासस्य कर्मनामत्वम्।

तत्र लौकिकानां स्थालीपाकादीनां कर्त्तरि दार्विहोमिकशब्दप्रयोगात्तेषां स्यात् वैदिकेऽपि वास्तुहोमे प्रयोगाद्धोमत्वाविशेषाच्च वैदिकानामपि। तत्र यज्युत्पत्तीनामपि 'चतुरवत्तं जुहोती' त्यादिना होमत्वापत्तेस्तेषामपि। न यागस्य होमत्वापत्तिः, यागात् कर्मान्तरं प्रोक्षणादिवत्संस्काररूपं विधीयते। अतो जुहोत्युत्पत्तीनामेवाग्निहोत्रादीनां नाम स्यात्। यत्तु गुणविधित्वमाशङ्कितं तच्चोद्यमात्रम्। तत्र तत्प्रख्यन्यायसिद्धमेवोत्तरमुपसंहृतम्॥

इतिं दर्विहोमस्य कर्मनामधेयताधिकरणम्॥ १॥

---

## चतुर्थः पादः

१

दर्वि० सङ्गतिमाह— प्रपञ्चित इति। तत्प्रधानत्वात् दर्व्याहोम इति तत्पुरुषस्य होमप्रधानत्वात्। वास्तुहोम इति। यदेकयेति तदर्थवाद इत्यर्थः। होमत्वापत्तेः। यत्त्विति। 'गुणाभिधानं स्यात् द्रव्योपदेशादि'ति सूत्रेणेत्यर्थः। चोद्यमात्रमिति। न तु युक्तिसहमित्यर्थः। तदाह तत्रेति। 'त्वग्बिलया मूलददण्डया दर्व्या जुहोती'ति लौकिकेषु प्राप्तिः। वैदिकेऽपि दर्व्या ब्रह्मौदनादुद्धृत्य प्रवेधसे कवये मेध्यायेति जुहोतीति दर्वीप्राप्तिरिति तत्प्रख्यन्यायेन सिद्धं नामत्वम्। तदेव च 'लौकिकानामाचारग्रहणादि'ति सूत्रेणोपसंहृतमित्यर्थः। आद्यसूत्रोक्तत्वादुपसंहारोक्तिः॥

इति दर्विहोमस्य कर्मनामताधिकरणम्॥ १॥

२

तस्मिन्० तस्मिन् प्रासङ्गिकं परिसमाप्य किं दर्विहोमाः पूर्ववन्तः ? उतापूर्वाः ? इति विचार्यते । तत्राश्रुतेतिकर्तव्यताकत्वाद व्यक्तत्वाच्च सौमिको विध्यन्तः प्रवर्तेत । यागत्वेन होमत्वेनात्यन्तविसदृशत्वात् होमानामेवाग्निहोत्रनारिष्ठादीनां धर्मवतां सम्भवान्न तदतिक्रमेण सोमयागाश्रयणं युक्तम् । अस्तु तर्हि तत्प्रकृतित्वमेव । नैवम्, नारिष्ठाङ्गभूतानामिध्मादीनां त्र्यम्बकहोमेष्वभावहेतुदर्शनात् । लिङ्गान्तराणि च दर्शितानि दर्विहोमानामपूर्वत्वं सूचयन्ति तस्मादपूर्वाः ।

सङ्क्षेपविस्तारकः साण्वादः सदृक्त्वानुमानात्तथा नामधेयात् ।
अधीताच्च वाक्यात्प्रसिद्धोऽतिदेशः करिष्यामहेऽतः परन्तूहचिन्ताम् ॥

इति दर्वीहोमाधिकरणम् ॥ २ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायामष्टमाध्यायस्य चतुर्थः पादः समाप्तः ॥

समाप्तोऽष्टमोऽध्यायः ॥

---

२

तस्मिन्० इध्मादीनामिति । 'अप्रतिष्ठिता वै त्र्यम्बका इत्याहुर्नेध्मार्बर्हिः संनह्यते' इतीध्मादीनामभावस्यार्थवादे सिद्धवदनुवादादित्यर्थः । इध्मादीनामङ्गप्रधानसाधारण्यान्नारिष्ठहोमाङ्गतोक्तिः । लिङ्गान्तराणि चेति । सोमाद्यविकृतित्व इत्यर्थः । यथौदुबर्यामाज्यहोमे भूमिगते स्वाहाकारं करोति' इति स्वाहाकारदर्शनं सोमविकारत्वेऽनुपपन्नं वषट्कारस्य सोमात्प्राप्तेरित्यादीनीति सङ्क्षेपः ॥

इति दर्विहोमाधिकरणम् ॥ २ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथ
कृतायां शास्त्रदीपिकाव्याख्यायां
प्रभाख्यायामष्टमाध्यायस्य
चतुर्थः पादः ॥



# अथ नवमोऽध्यायः

१

यज्ञकर्म० सिद्धेऽतिदेशे, अधुनाऽतिदिष्टानां पदार्थानां मन्त्र-साम-संस्काराणां द्वारान्तरसम्बन्धनिमित्तोऽन्यथाभावात्मक ऊहश्चिन्त्यते। तस्य चातिदिष्टिविषयत्वादतिदेशोत्तरकालमारम्भः। अतिदेशाधीनत्वमेव दर्शयितुं सप्तमाद्यसिद्धमपूर्वप्रयुक्तत्वं धर्माणामनेन सूत्रेण स्मारयति। यजिप्रयुक्तत्वे हि पारिप्लवा धर्माः सर्वत्रोपदिष्टा नान्यथा कर्त्तुं शक्यन्ते। अपूर्वप्रयुक्तत्वे तु प्रतिप्रकरणं व्यवस्थिता धर्माः दशमाद्यन्यायेन कार्यमुखेनातिदिष्टा युक्तं यदूहं भजन्ते। तस्मादूहविवक्षयाऽपूर्व-

---

## नवमोऽध्यायः

१

**यज्ञकर्म०** सङ्गतिं दर्शयन्नूहचिन्तनं प्रतिजानीते—**सिद्ध इति। मन्त्रः** 'अग्नये जुष्टं निर्वपामी'त्यादिः। **साम**रथन्तरादि **संस्कारः** प्रोक्षणादिः। साम्नां मन्त्र-संस्कारात्मकत्वेऽपि वक्ष्यमाणसामोहस्योभयविलक्षणत्वात्पृथगुक्तिः। ऊहलक्षणमाह—**द्वारान्तरेति**। द्वारञ्च प्रकाश्यमभिव्यङ्ग्यं संस्कार्यञ्च क्रमेण ज्ञेयम्। तथा च यस्य पदार्थस्योपदेशतो यद्द्वारत्वेनावगतं तस्य तद्भिन्नद्वारं सम्बन्धप्रयुक्तोऽन्यथाभाव ऊह इति लक्षणम्। मन्त्राणां द्वारत्वेनावगताग्न्यादिभिन्नसूर्यादिद्वारसम्बन्धात्सूर्यादिपदघटितत्व-रूपान्यथाभावः। प्रोक्षणादीनाञ्च द्वारत्वेनावगतव्रीहीयवभिन्ननीवारादिद्वारसम्बन्धा-दन्यथाभावः। कर्मकारकभेदेत निरूपणीयक्रियावैलक्षण्यात्। साम्नामपि यत्स्थानगताक्षराभिव्यञ्जकत्वमवगतं तदन्यस्थानगताक्षराभिव्यञ्जकत्वेनान्यथाभाव इति लक्षण-समन्वयः। प्रकृतौ यवानां तादृशव्रीहिभिन्नत्वेऽपि तेषामपि द्वारत्वेनावगतत्वान्नतादृशावच्छिन्नभेद इति नातिप्रसङ्गः प्रतिनिधित्वेनोपात्तानां नीवाराणां तादृशभेदवत्त्वेऽपि तद्गतव्रीह्यवयवानां द्वारत्वावगमान्नतादृशभेदवत्वमिति तत्सम्बन्ध्यवघाते नातिप्रसङ्गः। व्रीहिद्रव्यकविकृतौ तादृशभेदवतवस्य व्रीहिष्वभ्युपगमेऽपि तत्सम्बन्धादवघातस्य नान्यथाभाव इति तत्रापि नातिप्रसङ्ग इति दिक्।

अन्ये तु येन सम्बन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतं तस्य तेन सम्बन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वमूहः। प्रोक्षणादेर्हि व्रीहित्वावच्छिन्नवृत्तित्वं संस्कारकतया प्रकृतौ श्रुतम्। विकृतौ तु तद्भिन्ननीवारादिवृत्तित्वम्। तथा मन्त्राणां

प्रयुक्तिः स्मारिता। तदीयौ पूर्वोत्तरपक्षौ तत्रैव प्रदर्शिताविति नेह प्रदर्श्येते।

तथाऽन्यदिह चिन्त्यते—किमवघातमन्त्रादयो विवक्षितव्रीह्यग्न्यादिद्वारा अपूर्वस्योपकुर्वन्ति? उताविवक्षिततत्स्वरूपाः साधनविशेषमात्रद्वारा? इति। स्वरूपविवक्षायां हि तदभावान्नीवारादिषूहो न स्यात्, अविवक्षितत्वे तु नीवारादावपि साधनविशेषसद्भावात्सिध्यत्यूहः। ननु साधनस्यापि दार्शपौर्णमासिकस्य द्वारत्वात् विकृतौ च तदभावात्कथमूहः?। यस्यापूर्वस्यावघातोऽङ्गं तदीयं साधनं द्वारमिति चेत् तथा सत्यौषधाज्यसान्नाय्यानां धर्मसङ्करः स्यात्, त्रयाणामपि प्रदेयसाधनत्वात्। अथा-

स्मारकतयाग्न्यादिवृत्तित्वं प्रकृतौ, विकृतौ तद्भिन्नसूर्यादिवृत्तित्वम्। एवं साम्नामपीति लक्षणसमन्वय इत्याहुः। अत्रेदं विचार्यते—'यूपे पशुं नियुञ्जीते'ति प्रकृतौ नियोजनस्य यूपवृत्तित्वं श्रुतम्। विकृतौ तु तद्भिन्नपरिधिवृत्तित्वम् 'परिधौ पशुं नियुञ्जीतेति वचनादिति तत्रोहलक्षणातिव्याप्तिः। अथ यद्धर्मावच्छिन्नद्वारवृत्तित्वमिति वाच्यम्' यूपादि तु न नियोजनादेर्द्वारमिति नातिप्रसङ्ग इत्युच्यते, तथा सति 'देवस्यत्वे'ति मन्त्रस्याग्निवृत्तित्वं श्रुतमिति स्वोक्तिविरोधः,आग्नेयनिर्वापस्यैव द्वारत्वेनाग्नेरतथात्वात्। विकृतावग्नित्वावच्छिन्नभिन्नाग्नेयनिर्वापवृत्तित्वादूह लक्षणातिप्रसङ्गश्चेति सङ्क्षेपः। पौनरूक्त्यपरिहारायाह—**अतिदेशाधीनत्वमिति**। **कार्यमु**पकारः। **तदीयाविति**। धर्मविधाबुद्दिश्यमानस्य यागस्य दर्शपूर्णमाससंज्ञया विशेषणायोगात्सर्वयागार्थतयैवोपदेश इति पूर्वपक्षः। करणेतिकर्त्तव्यताविशिष्टापूर्वभावनाविधौ पार्ष्टिकान्वयदशायां तद्भावनाकरण एव तदितिकर्त्तव्यतावगमात्कर्मान्तरेति देश एवेति च सिद्धान्तस्तत्रैवोक्त इत्यर्थः।

भाष्यकारीयवर्णकान्तरं दर्शयति—**तथेति**। अवघातश्च मन्त्रश्च आदिना सामोक्तम्। **व्रीहीति**। व्रीहित्वादिविशिष्टेत्यर्थः। **स्वरूपं** व्रीहित्वादि। **साधनविशेषेति** तण्डुलनिर्वृत्तिप्रणाडिकयापूर्वसाधनेत्यर्थः। । **नीवारादावपि सिध्यत्यूह** इत्यन्वयः। **साधने**त्यादिर्हेतुः। **दार्शपूर्णमासिकस्य** दर्शपूर्णमासापूर्वसम्बन्धिनः। गुरुमतेन समाधानं शङ्कते—**यस्येति**। धर्मसाकाङ्क्षतया ग्राहकाख्यस्य यस्यापूर्वस्यावघातोऽङ्गं तदपूर्वसाधनमित्यर्थः। 'व्रीहीनवहन्तीत्याख्या, तेन सन्निहितापूर्वमवघातान्वितं प्रतीयते। अवघातस्य च न साक्षादपूर्वाङ्गतेति तत्साधनद्वारा तदङ्गतेति पर्यवस्यति। तेन ग्राहकीयसाधनमवघातद्वारमिति व्रीहीनित्युपदेशशास्त्रार्थः प्रकृतौ। दार्शपूर्णमासिकत्वादिविशेषस्तु नान्तरीयकतया न विवक्षित इति भावः। तदेतत् दूषयति—**तथा सतीति**। प्रदेयतया ग्राहकापूर्वसाधनत्वाविशेषादित्यर्थः। **अथेति**। औषधादेः साक्षादपूर्वसाधनत्वा-

ऽऽग्नेयादिद्वारभेदेन साधनत्वभेदाद् व्यवस्था, ततो विकृतौ तदद्वाराभावादवघातादेरप्रवृत्तिः।

उच्यते—अवहतैरपूर्वं कुर्यादिति शास्त्रार्थः। साधनप्रयुक्तिपक्षे तद्वत्कुर्यादित्यतिदेशे अवहतैः कुर्यादित्यर्थो भवति। तस्मात्सिध्यति विकृतावघातः। तेन यस्यापूर्वस्यावघातोऽङ्गमित्यादि कुशकाशावलम्बनमनर्थकम्, यदि परं धर्मसाङ्कर्याय स्यादित्यास्तां तावत्।

एवं 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामि'त्यत्र 'अगन्म सुवः, सुवरगन्मे'त्यत्र चाऽवहन्तिस्वरूपं स्वर्गस्वरूपञ्च संस्कार-मन्त्रयोरपूर्वार्थयोर्द्वारम्, उतापूर्वसम्बन्धिविशेष इति तुल्यो विचारः। तत्र व्रीह्यादीनां श्रुतानामविवक्षाकारणाभावात् तद्द्वारेणैवापूर्वार्थत्वम्, साधनरूपस्यावर्जनीयत्वात्। अन्यथाऽवघातादेरानर्थक्यात्तन्मात्रमेव विवक्षितमिति सिद्धान्तः।

---

दाग्नेयादिद्वरा साधनता द्वारभेदाद्भिन्नेति सैवौषधादिधर्माणां द्वारमतो व्यवस्थेत्यर्थः। **द्वाराभावात्** आग्नेयद्वारकापूर्वसाधनरूपद्वाराभावात्।

स्वमतेन समाधत्ते—**उच्यत इति**। **अवहतैरित्यनन्तरं** हविःप्रकृतितयेति शेषः। अवघातेनापूर्वसाधनतासम्पत्तिर्हि साधनतावच्छेदकतापन्नेनैवेति द्वारसम्बन्धबोधकवाक्यस्य प्रकरणकल्पितप्रधानवाक्यैकवाक्यतयाऽयमर्थः पर्यवस्यतीति भावः। न चैवं सति नीवारादावप्युदेशत एव धर्मप्राप्तिः स्यादिति शङ्कनीयम्, उपदेशकालेऽवगतापूर्वसाधनत्वानां सन्निहितानाञ्च व्रीह्यादीनामेवापूर्वसाधनत्वसामान्यरूपेणाप्युद्देश्यतयान्वयात्। अतादृशानाञ्च नीवारादीनामनन्वयादित्याशयात्। **अपूर्वसम्बन्धिविशेष इति**। अपूर्वाय फलत्वेन स्वर्गस्य तण्डुलनिवृत्तिद्वारापूर्वसाधनव्यापारत्वेन च हन्तेर्द्वारत्वमित्यर्थः। एवं श्रुतिलिङ्गवाक्यविनियुक्तेषु विचारमुपदर्श्य पूर्वपक्षसिद्धान्तौ संक्षेपतो दर्शयति—**तत्रेति**। उद्देश्यस्वरूपस्य चमसाधिकरणन्यायेन विवक्षोपपत्तेर्वाक्यभेदादेश्चाविवक्षाहेतोरभावादित्यर्थः। **अवघातादेः** अवघातादिविधेः। **आनर्थक्यात्** व्रीह्यादिस्वरूपस्य तेन विनापि सिद्धत्वेन वैय्यर्थ्यात्। **तन्मात्रमेवेति**। साधनतामात्रमित्यर्थः। व्रीहित्वादि तु तल्लक्षणोपक्षीणत्वाद्युगपद्वृत्तिद्वयविरोधाच्च न विवक्षितमिति भावः। सप्तमाद्ये तु धर्माणां पारिप्लवत्त्वनिवृत्त्यर्थमपूर्वार्थत्वमात्रमुक्तं न तु व्रीहित्वादिद्वाररूपादिवक्षणमित्यपौनरुक्त्यमिति ज्ञेयम्। पौनरुक्त्यपरिहारायाह—**तदेतदिति**। द्वितीयवर्णकस्यैव

तदेतदिह संक्षिप्तमुपरितनैस्त्रिभिरधिकरणैः प्रपञ्चयिष्यते । सेयं-द्वितीयस्य वर्णकस्यैका व्याख्या । तथाऽन्यापि । सप्तमाद्ये हि यज्यर्थत्वेऽपि धर्माणामपूर्वविशेषनिमित्ततामात्रेण व्यवस्थासिद्धेनैकान्ततोऽपूर्वार्थत्वं व्युत्पादनीयम् । इह त्वपूर्वार्थत्वमन्तरेणोहासिद्धेरपूर्वार्थत्वम्प्रतिपाद्यते । यजिस्वरूपार्थत्वे हि तुल्यन्यायत्वादवघातादीनां व्रीह्यादिस्वरूपार्थत्वं स्यात् तदभावाच्च नीवारादावूहो न स्यादिति ।

तस्यैवापरा व्याख्या सप्तमाद्ये साधारण्येनापूर्वार्थत्वम्, इह त्वारादुपकारकाणामपूर्वार्थत्वम्प्रकरणात्स्यात् । सन्निपातिनान्तु श्रुत्यादिसंयुक्तव्रीह्याद्यर्थत्वावगमात् न तत्प्रयुक्तत्वमित्याशङ्क्य तेषामपि व्रीह्यादिस्वरूपपर्यवसायिनामानर्थक्यात्तद्द्वारेणापूर्वार्थतेति प्रतिपाद्यते । तदेतेषु त्रिष्वपि पक्षेषु अथवेत्यादिभाष्यन्तन्त्ररत्न एवास्माभिर्व्याख्यातम् ।

अथवाऽन्यामित्यादिना भाष्येण पुनर्वर्णकान्तरमारब्धम् । तदुच्यते सप्तमाद्ये पूर्वार्थत्वं सिद्धम् इह तु किमपूर्वार्थानां धर्माणां यजिर्निमित्तम् ? उतानिमित्तम् ? अथापूर्वमेवेति चिन्त्यते । न च निमित्ताप्रवृत्तिः, कादाचित्कत्वात्, येन विचार एव न स्यात्, तत्रापूर्वस्य साध्यत्वान्निमित्तता न युक्ता तस्माद्यजिरेव निमित्तम्, तत्तुल्यन्यायत्वाच्चावघातादीनामपि

---

व्याख्यान्तरमाह **तथेति** । अपूर्वविशेषो निमित्तं येषां तत्रेत्यर्थः । एवञ्च भेदने सति होमवदपूर्वविशेषे सति धर्मा विहितास्तदभावेन सौर्यादावुपदिष्टा इति व्यवस्थासिद्धि, रित्यर्थः । **तस्यैवेति** । द्वितीयवर्णकस्यैवेत्यर्थः । अपूर्वार्थत्वमुक्तमिति शेषः । नन्वेकस्यैवाथवेत्यादिभाष्यग्रन्थस्य पक्षत्रये कथं योजनेत्याशङ्क्याह--**तदेतेष्विति** । **निमित्तं** अनुष्ठानप्रयोजकम् । ननु निमित्तत्वबोधकयच्छब्दाद्यभावान्निमित्तस्यैवासिद्धौ-कस्य निमित्तत्वमिति विचारोऽसङ्गत इत्यत आह-**न चेति** । यच्छब्दाद्यभावेऽपि कादाचित्कप्रवृत्त्यनुरोधेन तत्कल्पनमावश्यकमित्यर्थः । **साध्यत्वात्** तत्वेन प्रतीयमानत्वात् । तथा च निमित्तत्वभाव्यत्वयोर्युगपदेकत्र विरोधान्नापूर्वस्य निमित्ततेत्यर्थः । नन्वेवमप्यूहे किं बाधकमत आह—**तत्तुल्येति** । **न स्यादित्यनन्तरमूह** इति शेषः । साध्यत्वं निमित्तता-

व्रीह्यादिस्वरूपमेव निमित्तमिति, तदभावान्नीवारादिषु न स्यादिति प्राप्ते ब्रूमः—

यजेस्तावन्निमित्तत्वं न केनचिदिहोच्यते ।
अपूर्वस्यापि तन्नोक्तमर्थात्तस्य निमित्तता ॥

साध्यं हि साधनानुष्ठाने निमित्तम् । अनिष्पन्नमपि मनसि साध्यतया विपरिवर्तमानम् । तस्मादपूर्वार्था धर्माः, तन्निमित्ताश्च । विकृत्यपूर्वमपि तेषां धर्माणामतिदेशेन साध्यमवगतं तत्साधनभूतनीवाराद्यङ्गत्वेनावघातादीननुष्ठापयतीति सिध्यत्यूहः ।

इति धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ॥ १ ॥

२

संस्कारे० पूर्वाधिकरणे धर्माणामपूर्वार्थत्वं सप्तमाद्यसिद्धं स्माश्रितम् । तत एव च द्रव्यसंस्कारोऽपि तत्प्रयुक्त इति संक्षेपतः प्रतिज्ञामात्रेणोक्तम् । इदानीन्तु तदेव श्रुत्यादिविरोधान्न सम्भवतीत्याशङ्क्योपपाद्यते । तत्रेह वाक्यसंयुक्तानां 'फलदेवतयोश्चे'त्यत्र लिङ्गसंयुक्तानां 'द्रव्य-संख्या-हेतुसमुदायमि'त्यत्र श्रुतिसंयुक्तानामपूर्वार्थत्वम्प्रतिपाद्यते । दर्शपूर्णमासयोः श्रूयते-'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, प्रोक्षि-

---

यामनुकूलं न तु विरुद्धमित्याह—साध्यं हीति । असिद्धस्य कथं निमित्तत्वं तत्राह—अनिष्पन्नमिति । परिवर्त्तमानं अनुसन्धीयमानम् । नन्वेतावतापि प्रकृत्य पूर्वस्य निमित्तता न तु विकृत्यपूर्वस्येति कथमूहस्तत्राह—विकृत्यपूर्वमिति । व्रीह्यादिस्वरूपं तु न निमित्तमानर्थक्यादिति भावः । सूत्रार्थस्तु—यज्ञकर्मापूर्वं प्रधानं हि यस्मात्तच्चोदनाभूतं प्राप्तं भाव्यतायेति शेषः, तस्य साधनेषु व्रिव्यादिषु संस्कारस्तन्निमित्तकस्तदर्थत्वादिति ॥

इति धर्माणामपूर्वप्रयुक्तताधिकरणम् ॥ १ ॥

२

संस्कारे० सङ्गतिं दर्शयन् पौनरुक्त्यं परिहरति--तत एव अपूर्वार्थत्वादेव । सङ्क्षेपत इत्यस्यैवार्थकथनम्-प्रतिज्ञेति । आक्षेपसमाधानात्मिकां सङ्गतिमाह—इदानीमिति । अधिकरणत्रयस्य प्रयोजनमाह—तत्रेति । विपरीतक्रमश्च दुर्बलवाक्यबाधे-

ताभ्यां दृषदुपलाभ्यां पिनष्टी'ति। तत्र प्रोक्षितशब्देन विशेषणप्रधानेन तृतीयान्तेनान्यसाधनभूतयोरुलूखलमुसलयोः दृषदुपलयोश्च संस्कारकं गम्यमानं प्रोक्षणं यत्तयोः साध्यम्, तदर्थमित्यविवादम्। इदन्तु चिन्त्यते यत्तयोर्हन्तिपिषिसाधनत्वं तदर्थं सत्प्रोक्षणं हन्तिपिष्यर्थम्? उत यदपूर्वसाधनत्वं तदर्थत्वादपूर्वार्थम्? इति॥ तत्र—

अवहन्तिश्रुतेस्तावदवघातः प्रतीयते।
तत्साधनत्वमेवातस्तृतीयातोऽवगम्यते॥
सामानाधिकरण्याच्च प्रोक्षणं तद्विशेषणम्।
एवं हन्त्यर्थताऽपूर्वशेषत्वं प्रक्रियावशात्॥

न च वाक्यसंयुक्तस्य प्रकरणमीष्टे, हन्तिपिषिद्वारेणाऽपूर्वार्थत्वात्। उभयमविरुद्धमिति चेत् न, उभयान्वयासम्भवात्। न हि प्रकरणाधीतत्वमात्रेण प्रकृतार्थता सम्भवति, किं तर्हि प्रकृतेनैकवाक्यतां कल्पयित्वा। न चावहन्तिपदेन प्रधानवाक्येन च युगपदेकवाक्यता सम्भवति। तत्रान्यतरेऽवहातव्ये प्रकरणं बाधित्वा हन्तिनैवान्वयमध्यवस्यामः। न च प्रोक्षणस्यानर्थक्यम्, हन्तेरपूर्वार्थत्वात्। तदर्थमपि प्रोक्षणमपूर्वस्योप-

---

ऽपि ततः प्रबलाल्लिङ्गाच्छङ्कोत्थानाय। एवं लिङ्गबाधेऽप्यतिप्रबलश्रुतिकृतशङ्कोत्थानायेति ज्ञेयम्। यद्यपि द्वितीयवर्णकप्रथमव्याख्यानोक्तं व्रीह्यादिस्वरूपानादरेण साधनविशेषार्थत्वमेवोपरितनैस्त्रिभिरधिकरणैः प्रपञ्चयिष्यत इति तत्रोक्तम्। अत्र तु तदीयतृतीयव्याख्यानोक्तमपूर्वार्थत्वमप्रपञ्चचत इत्युच्यते, तथाप्यपूर्वार्थत्वेऽपि व्रीहिस्वरूपाविवक्षाया अपि सत्वान्न विरोधः। उलूखलादिविशेषणत्वेन श्रुतस्य प्रोक्षणस्य हन्त्यर्थत्वमपूर्वार्थत्वं वेति संशयानुपपत्तेराह—**तत्रेति**। उलूखलादेर्वाक्यान्तरेणार्थाच्च प्राप्तस्तद्विशेषणप्रोक्षणमेव विधेयतया प्रधानम्। **यत्तयोरिति**। साधनसंस्कारस्य तद्द्वारा तत्साध्यार्थत्वमित्यर्थः। **इदन्त्विति**। उलूखलादेर्हन्त्यादावपूर्वे च साधनत्वात्सन्देह इत्यर्थः। पूर्वपक्षमाह—**तत्रेति, एवं** श्रुतिवाक्यानुगुण्यात्। हन्त्यर्थतेति च छेदः। **उभयं** हन्त्याद्यर्थत्वमपूर्वार्थत्वञ्च। **उभयेति**। हन्त्यपूर्वोभयान्वयस्यापूर्ववाचकपदोभावेनासम्भवादित्यर्थः। तदाह—**न हीति। न चेति**। सकृच्छ्रुतस्योभयार्थत्वे वाक्यभेदापत्तेरिति भावः। क्लृप्तैकवाक्यतया शीघ्रं विनियोगे चाकाङ्क्षाविरहान्न प्रकरणकल्प्यविनियोगावसर इत्याह—**बाधित्वेति**। 'आनर्थक्यप्रतिहतानां विपरीतं बलमि'ति शङ्कामपाकरोति—**न चेति**। ननुपकारकत्वे सति कथं न तादर्थ्यमत आह—**यथेति**।

करोत्येव । यथाऽऽधानमग्निद्वारेण क्रतूनामुपकारकमपि क्रतुविधिभिर्न गृह्यते, तथा प्रोक्षणमपूर्वार्थस्य हन्तेरङ्गमपि तत्स्वरूपपर्यवसायित्वेन विधीयमानं न क्रतुविध्येकवाक्यतां गच्छति । यच्च प्रधानवाक्यशेषभूतं तदेव विकृतिष्वतिदिश्यते । ततश्चावघातः क्रत्वङ्गत्वादतिदिश्यते न प्रोक्षणम्, अतच्छेषत्वात् । अवघातस्तु गच्छन्स्वाङ्गभूतं प्रोक्षणमपकर्षतीति कृत्वा, विकृतिषु प्रोक्षणमनुष्ठीयते । नखनिर्भिन्ने तु चरावघाताभावान्न प्रोक्षणस्याकर्षणमस्तीति न नखेषु प्रोक्षणमूहितव्यम् । अथाप्यवघातद्वारेण क्रत्वङ्गं प्रोक्षणं तथाऽपि तत्स्वरूपमेव द्वारमिति तदभावान्नखेषु नास्ति प्रोक्षणमिमि प्राप्ते । अभिधीयते—

अवघातावसायं सत्प्रोक्षणं स्यादनर्थकम् ।
विनापि प्रोक्षणं हन्तेः रूपनिष्पत्तिदर्शनात् ॥

तद्द्वारेण त्वपूर्वार्थं भवन्नानर्थकं भवेत् ।
न हि तेन विना तस्य निष्पत्तिरवगम्यते ॥

तेनावघातमात्रेण प्रयोजनानवाप्तेर्वाक्यसंयुक्तमप्यवघातमतिक्रम्यापूर्वार्थतां प्रकरणादर्थ्यते । न च तदेकवाक्यतामन्तरेण तादर्थ्यं सम्भवति । न च हन्तिना, अपूर्वेण च पृथक् पृथगेकवाक्यता सम्भवति· प्रोक्षिताभ्यां हन्ति, प्रोक्षिताभ्यामपूर्वं भावयेदिति । वाक्यं हि तथा भिद्येत । तस्मादेवं द्रष्टव्यम् हन्तेर्द्वे रूपे हन्तिरूपं तण्डुलनिर्वृत्तिप्रणाड्या चापूर्वजननव्यापारविशेषता । तत्र वाक्यात्प्रोक्षणं प्रति प्राधान्यमापद्यमानोऽवघातः श्रौतस्य स्वरूपस्यान्यथाऽपि सम्भवात् । तेनात्मना

---

न गृह्यते नाङ्गत्वेन स्वी क्रियते । पूर्वपक्ष प्रयोजनमाह—नखेति । कृष्णानां व्रीहीणां नखनिर्भिन्ना'मित्यादिना विहिते राजसूयान्तर्गते चरावित्यर्थः । अभ्युपेत्यवादेनाह—अथापीति अवताघावसायं अवघातस्वरूपमात्रशेषतापन्नम् । तद् द्वारेणत्विति । वक्ष्यमाणापूर्वजनकव्यापारविशेषत्वेन विवक्षितावघातद्वारेणेत्यर्थः । अन्यथावघातत्वेन द्वारत्वे सत्यानर्थक्यतादवस्थ्यात् न हीत्यादेरसङ्गत्यापत्तेः । तेन प्रोक्षणेन तस्य अपूर्वस्य

प्राधान्यासम्भवादपूर्वजनव्यापारात्मना प्राधान्यं प्रतिपद्यते। तद्रूपस्य विना प्रोक्षणेन निष्पत्त्यनवगमात्तत्स्वरूपप्रतिपत्तिपरश्च हन्तिशब्दः। एवमुलूखलमुसलयोरपि द्रष्टव्यम्। स्वरूपं हन्तिसाधनरूपञ्च विनापि प्रोक्षणं सम्भवतीति यत्तयोर्हन्तिशब्दावगतापूर्वव्यापारविशेषं प्रति साधनत्वम् तेनात्मना प्रोक्षणसंस्कार्यत्वं गम्यते। तदेवं वाक्यार्थः—येन व्यापारेण तण्डुलनिर्वृत्तिप्रणाड्याऽपूर्वं क्रियते, तं व्यापारम्प्रोक्षितेन साधनेन कुर्यादिति। तत्र नखनिर्भिन्ने चरौ दलनस्यावघातवत्तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वजननव्यापारत्वात् नखानाञ्च तत्साधनत्वात् प्रोक्षणं सिध्यति। नन्वेवमवहन्तिशब्दः उलूखलमुसलशब्दौ च लक्षणावृत्त्या स्युः। सत्यम्, आनर्थक्याद्वरं लक्षणा। तस्मादपूर्वप्रयुक्तं प्रोक्षणम्।

एवं वा 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयादि'ति श्रुतः स्वरविशेषः किं ज्योतिष्टोमापूर्वप्रयुक्तः? उत दीक्षणीयापूर्वप्रयुक्त? इति विचारः॥ तत्र—

फलवत्परमापूर्वं तच्छेषत्वं ततो भवेत्।
स्वापूर्वं क्रतुशेषत्वान्न स्वयं फलवद्यतः॥
फलवच्छेषता युक्ता न तु निष्फलशेषता।
तस्मात्तत्साधने रूपे स्वरभेदो विधीयते॥

---

**तद्रूपस्येति** अपूर्वसाधनताविशेषस्येत्यर्थः। अलौकिकत्वादिति भावः। नन्ववघातत्वमपि श्रुतत्वादस्तु विवक्षितम्। तथा च नखनिर्भिन्ने तदभावान्नेह इत्यत आह—**तत्स्वरूपेति**। युगपद्वृत्तिद्वयविरोधात् साधनताविशेषलक्षणोपक्षीणत्वाच्च न स्वरूपपर इत्यर्थः। नन्वेवमप्यूलूखलसंस्कारद्वारेण साधनविशेषार्थत्वान्नखेषु प्रोक्षणं न स्यादत आह—**एवमिति**। तदेव दर्शयति—**स्वरूपं** उलूखल स्वरूपम्। **हन्तिसाधनरूपं**। अवघातसाधनत्वम्। **अपूर्व व्यापारेति**। अपूर्वजनकव्यापारेत्यर्थः। तथा च तादृशव्यापारसाधनसंस्कारद्वारा प्रोक्षणस्य तादृश व्यापाराङ्गत्यमित्यपूर्वाङ्गतायां पर्यवसानम्। नखनिर्भिन्ने च नखानां निर्भेदनस्य च तादृशद्वारत्वेन प्रोक्षणसिद्धिरित्याह—**तदेवमिति**।

सिद्धस्यैवापूर्वप्रयुक्तत्वस्य विशेषविचारार्थतया वर्णकान्तरमाह—**एवं वेति**। **यावत्या** मन्दमध्यादियादृशस्वरया। **स्वापूर्वं** दीक्षणीयापूर्वम्। **तस्मादिति** दीक्षणीयापदलक्षिते दीक्षणीयावान्तरापूर्वद्वारा ज्योतिष्टोमापूर्वसाधने स्वरविशेषविधिरित्यर्थः।

उच्यते—

एवमाश्रीयमाणे हि भवेल्लक्षितलक्षणा ।
स्वापूर्वे लक्षणामात्रे तस्मात्तच्छेषता वरम् ॥
तच्छेषत्वेऽपि धर्मस्य नानर्थक्यं प्रसज्यते ।
तस्याप्यदृष्टरूपत्वात्फलापूर्वोपयोगतः ॥

फलवत्परमापूर्वोपयोगित्वाद्यजमानसंस्काररूपं दीक्षणीयापूर्वं फलवदेव । न तादर्थ्येऽप्यानर्थक्यम् । अदृष्टरूपत्वाच्च तद्रूपस्य विना धर्मैरवघातादिवत्सिद्ध्यनवगमात्सम्भवति प्रयोजकत्वमिति तादर्थ्यमेव युक्तम् । दीक्षणीया हि केनात्मना धर्मं गृह्णातीत्यपेक्षायां स्वापूर्वसाधनत्वं शीघ्रं गम्यते । तद्द्वारन्तु परमापूर्वसाधनत्वं विलम्बितम् । तस्मादवान्तरापूर्वप्रयुक्ताः एवञ्जातीयकाः । एतेन प्रोक्षणाद्यङ्गानामुत्पवनादीनान्तज्जन्यव्रीह्यादिसमवेतापूर्वप्रयुक्तत्वं व्याख्यातम् । आरादुपकारकप्रयाजाद्यङ्गानान्तदपूर्वप्रयुक्तत्वम् ।

संस्कारोऽपि ह्यदृष्टत्वादपूर्वमिति गीयते ।
प्रयाजापूर्ववत्तस्मादुभयं स्यात्प्रयोजकम् ॥

इति प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणम् ॥ २ ॥

---

**उच्यत इति** । स्वापूर्वद्वारा परमापूर्वसाधनत्वलक्षणायां हि **लक्षितलक्षणा** । स्वापूर्वसाधनत्वलक्षणामात्रेणोपपत्तौ न युक्तेत्यर्थः । न च परमापूर्वसाधनत्वमात्र एव लक्षणयोपपत्तिः । तस्यातिप्रसक्ततया द्वारविशेषलक्षणाया आवश्यकत्वादिति भावः । **एवञ्जातीयकाः** 'मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायामित्याद्यः । **एतेन** स्वापूर्वसाधनत्वस्य शीघ्रोपस्थितत्वेन । **तज्जन्येति** । प्रोक्षणजन्येत्यर्थः । **आरादिति** । अभिक्रमणादीनामित्यर्थः । **तदिति** । प्रयाजेत्यर्थः । ननु प्रोक्षणजन्यव्रीहिनिष्ठसंस्कारस्य नापूर्वपदवाच्यत्वमिति कथं तत्रापूर्वप्रयुक्ततेत्याशङ्क्याह—**संस्कारोऽपीति** । प्रयोजनं पूर्वपक्षे वायव्यादिस्वतन्त्रपशुष्वग्नीषोमीयपशुधर्माणामनतिदेशः । सिद्धान्ते त्वतिदेशः । एवं भिन्नजातीयेषु छागस्य वपाया इति मन्त्रानतिदेशादनूहः सिद्धान्ते त्वतिदेशोहाविति द्रष्टव्यम् ।

**इति प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणम् ॥ २ ॥**

३

फलेदेव० 'अगन्म सुवः सुवरगन्म अग्नेरहमुज्झितिमनूज्जेषमिति' दर्शपूर्णमासप्रकरणपठितौ मन्त्रौ किं स्वर्गस्वरूपाग्निस्वरूपप्रयुक्तौ ? उत यद्दर्शपूर्णमासापूर्वसाध्यं स्वरूपं फलस्य, अग्नेश्च तदीयदेवतास्वरूपं तच्छेषौ सन्तौ मन्त्रावपूर्वप्रयुक्तौ इति ।

तत्र स्वर्गादिशेषत्वं भवेल्लिङ्गेन मन्त्रयोः ।
फलस्यादृष्टरूपत्वात्प्रधानत्वाच्च सर्वतः ॥
अग्न्यादेर्याच्यमानस्य फलदायित्वसम्भवात् ।
तादर्थ्यमेव मन्त्रस्य युक्तं नापूर्वशेषता ॥
सत्यं फलस्य सर्वस्मात्प्राधान्यं न तु तावता ।
मन्त्रस्तद्रूपशेषः स्यादानर्थक्यप्रसङ्गतः ॥

न हि मन्त्रेण प्रकाशितमात्रं फलं भवतीति प्रमाणमस्ति। तेन क्रतुमतिलङ्घ्य स्वर्गार्थत्वं तावन्मन्त्रस्यानाशङ्क्यम् । प्रकरणाम्नानात्प्रकृतक्रतुशेषः संस्कारद्वारेण फलार्थः स्यात् । ततश्च क्रत्वपूर्वप्रयुक्ततामेवापद्यते । न हि क्रत्वङ्गं तदपूर्वातिलङ्घनेन फलं यावन्नेतुं युक्तम् । एवमग्न्यादेरपि फलदायित्वे सत्यपि मन्त्रेण प्रकाशितमात्रात्फललाभो निष्प्रमाणक एवेति क्रत्वन्वयित्वेनैव प्रकाश्यत्वमङ्गीकर्त्तव्यम् । तस्मादेवं वक्तव्यम् । मन्त्रप्रकाशितफलदेवतः क्रतुः स्वापूर्वं साधयतीति ।

---

फलदेवतयोश्च । पूर्वोक्तप्रधानापूर्वार्थत्वाभावादपवादात्सङ्गतिः । अगन्मेति । सुवः स्वर्गः । अगन्मेत्यस्यैव हर्षे पुनरुक्तिः । अग्नेरुज्जितिमूर्ध्वलोकगतमैश्वर्यमहमनुसृत्वोर्ध्वं जपेयमिति देवताप्रार्थनम् । आनर्थक्यशङ्कामपाकरोति—फलस्येति । सर्वतः अपूर्वादेरप्यपेक्षया । अग्न्यादेरित्यादिनाग्निस्वरूप आनर्थक्याभाव उक्तः । ऐश्वर्ययोगात् लोकेऽपि याच्यमानस्यैव राजादेः फलदातृत्वदर्शनादिति याच्यमानस्येत्यनेनसूचितम् । मन्त्रप्रकाशनमात्रेण फलसिद्धेः प्रमाणं विना कल्पनाऽयोगाद्यागस्यैव तत्साधकत्वस्य विधिवशेनावगमात्तत्प्रकरणपाठेन च मन्त्राणां तदपूर्वार्थतयैवार्थवत्त्वमिति सिद्धान्तमाह सत्यमिति । सत्यमीत्यभ्युपेत्यवादसूचनम् । अग्रिमाधिकरणे निरसिष्यमाणत्वात् ।

ततश्च विकृतौ फलान्तरवत्याम् अगन्म ब्रह्मवर्चसम्, ब्रह्मवर्चसमगन्म, सूर्यस्याहमुज्जितिमनुज्जेषमित्यूहनीयम् । तथासति प्रकृतिवत्कृतं भवतीति ॥

इति फलदेवताधिकरणम् ॥ ३ ॥

४

देवता० एवं तावत्फलदायित्वेऽपि न देवतायाः प्रयोजकत्वं स्वरूपेणेत्युक्तम् । इदानीन्तु नास्याः फलदायित्वं नापि प्राधान्यमिति प्रतिपाद्यते । सर्वपूर्वोक्ताक्षेपेणेदमारभ्यते अपूर्वापह्नवात् । तदिहैतद्विचार्यते किं यागो देवताराधनार्थः ? अस्याश्चाराधितायाः फलम् ? उतापूर्वद्वारं यागस्य साधनत्वम् ? इति । तत्र—

इन्द्रादेः सम्प्रदानत्वात्कर्मणोऽपि प्रधानता ।
यागः पूजा तदङ्गं स्यादतिथेर्भोजनं यथा ॥

कर्मकारकं हि क्रियये्प्सिततमम्प्रधानम् । तेनापि व्याप्यमानं सम्प्रदानं ततोऽपि प्रधानम् । सम्प्रदानं च देवता तस्मात्प्रधानं, यागश्च

---

प्रयोजनमाह—ततश्चेति । सूत्रार्थस्तु-फलदेवतयोश्च प्रयुज्यमानानां मन्त्राणां तादर्थ्यात्तत्प्रयुक्तत्वं स्यादिति पूर्वसूत्रपदानुषङ्गेण ज्ञेयः ॥

इति फलदेवताधिकरणम् ॥ ३ ॥

४

देवता वा० आक्षेपिकीमनन्तरसङ्गतिमाह-एवमिति । देवतात्वेनैव प्रयोजकत्वम् । देवतात्वन्तु पूज्यत्वरूपं न त्वपूर्वसाधनतारूपमत उक्तप्राधान्यान्न मन्त्राद्यूहः । पूज्यत्वरूपदेवतास्वरूपप्रयुक्तत्वात्तस्यैव देवतान्तरेऽसत्त्वादित्याक्षेप इति भावः । प्रकृतसङ्गतिमप्याह-सर्वेति । अपूर्वतत्प्रयुक्तत्वादीत्यर्थः । अस्याः देवतायाः सकाशादित्यर्थः । साधनत्वमित्यनन्तरं देवता तु तदर्थेति शेषः । तत्रेति । कर्मण इति पञ्चमी । एतच्च यजेर्दानार्थत्वमभिप्रत्योक्तम् । पूजार्थत्वमवलम्ब्याप्याह याग इति । तदङ्गं पूज्यमानदेवताङ्गम् देवतायाः सम्प्रदानत्वे सत्येवंस्यात्तदेवत्त्वसिद्धमित्याशङ्क्याह सम्प्रदानञ्चेति । विष्णवे शिपिविष्टायेत्यादौ चतुर्थीश्रवणाण्दन्यत्रापि यागानुष्ठानकाले

देवतापूजा सा च लोके पूज्यमानार्था अतिथिभोजनादिवत् । अतो देवताराधनार्थो यागः, सा चाराधिता फलमाराधयित्रे ददातीति युक्तम् । एवञ्च लौकिकप्रसिद्धपदार्थस्वभावो नातिक्रान्तो भवति । अवश्यञ्च यागस्यापि फलसाधनत्वं केनचिद् द्वारेणाश्रयितव्यं स्वरूपस्य भङ्गुरत्वात् । तत्र रात्रिसत्रन्यायेन वाक्यशेषमन्त्रवर्णाद्यवगता देवतातृप्तिरेव द्वारमिति कल्पयितुं युक्तम् । न त्वत्यन्ताप्रतीतापूर्वकल्पनम् । श्रूयते हि "तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयती"ति 'दधत्पोषं रयिं मयि' इति शब्दैकगम्यत्वाच्च देवताप्रसादस्य स एवापूर्ववद्धर्माणां प्रयोजकः, फलसाधनं चेत्येवं प्राप्ते । ब्रूमः—

यागस्यैव पदश्रुत्या फलसाधनतोच्यते ।
देवतायाश्च तादर्थ्यं तन्निर्वृत्त्युपयोगतः ॥

यागश्च साध्यरूपत्वात्साधनत्वेन देवताम् ।
गृह्णाति सिद्धरूपा च देवता तस्य साधनम् ॥

प्रत्ययाभिहिता हि भावना पुरुषार्थं भाव्यमपेक्षमाणा पदगतमपि यागमयोग्यत्वादुपेक्ष्य वाक्यादुपनीतं स्वर्गादि गृहीत्वा, तस्य साधनमाकाङ्क्षन्ती समानपदश्रुत्युपनीतं यागमविरोधात्करणं गृहीत्वा, इत्थम्भावापेक्षायां द्रव्यदेवतं भूतं भव्ययागनिर्वर्तनसमर्थं तादर्थ्येन

---

चतुर्थ्येव देवतोद्देशादिति भावः । पूजात्मकयागस्य देवतार्थता च तत्प्रीतिजनकतयेत्याह—**अत इति** । ननु देवतायास्तदाराधनस्य वा फलजनकत्वे मानाभावः किन्तु समानपदश्रुत्या यागस्यैव तच्च्याब्दमत आह—**अवश्यञ्चेति** । प्रसादार्थत्वेऽपि न धर्माणामानर्थक्यमित्याह—**शब्दैकेति** । साधनत्वेन देवतां गृह्णातीत्यन्वयः । साधनत्वयोग्यतामाह—**सिद्धेति** । क्रियान्वयं विना विध्यन्वयायोगात्तदाकाङ्क्षासंनिधियोग्यत्वैर्यागेन स्वर्गं कुर्यादिति वाक्यार्थावगतावितरस्य द्रव्यदेवतादेर्यागार्थत्वावगमात्सम्प्रदानस्यापि कारकतया क्रियाङ्गत्वाल्लोकेऽप्यतिथिप्रभृतेः फलजनकशक्त्यभावेन तत्पूजाया एव फलसाधनत्वावगमाना देवताप्रसादस्य फलसाधनत्वकल्पना युक्तेतिसिद्धान्तश्लोकौ व्याचष्टे **प्रत्ययेति** । अनेन प्राधान्यं सूचितम् । प्रवाहणादित्वेन वेदप्रतिपाद्यता स्यादत

गृह्णन्तो देवतां यागार्थां करोति । न च प्रागवगतं देवतायाः फलार्थत्वं येन तदाराधनाय यागविधिः स्यात् । एवं शब्देन तावत् यागात्फलं गम्यते ।

यत्त्वतिथिवदित्युक्तम्, युक्तं तत्र प्रमाणान्तराद्भोजनस्य तादर्थ्यावगमात् । अपि च तत्रापि नातिथिर्भोजयितुः फलं ददाति प्रीयमाणोऽपि । न ह्यसौ स्वर्गादिप्रदानायेष्टे । तस्माद् यागवद्भोजनादेव फलम् । एवं विशिष्टसम्प्रदानकदानेऽपि । तथा यागेऽपि । यद्यपि देवता विग्रहवती प्रतिगृह्य भुक्त्वा तृप्यति प्रसीदति च, तथापि यागादेव फलम् । विग्रहवती चानित्या स्यात्ततश्च नित्यवेदविषयत्वं न स्यात् । सत्यपि विग्रहे प्रत्तस्य हविषो देवताया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुम् । न चाभुञ्जाना प्रसीदतीति युक्तम् । अत एवाप्रतिपन्नापूर्वत्यागेन देवताप्रसादादेव फलमित्येतदपि निरस्तम् । न हि तस्याः प्रसादस्सम्भवतीत्युक्तम् । यत्त्वस्याः यागसाधनद्वारा फलनिर्वृत्त्युपयोगित्वं तदभिप्रायादेव देवतायाः फलदायित्ववादः सेनापतिना ग्रामो दत्त इत्यादिवत् । तत्तन्मन्त्रार्थवादेतिहासपुराणेष्वपि देवतानामपि तपश्चरण-क्रत्वनुष्ठानब्रह्मास्त्रादिमन्त्रतश्च समीहितसिद्ध्यनुकीर्तनात्कर्मणः एव फलं गम्यते । मन्दधियस्तु श्रद्धालवस्तात्पर्यमजानाना भ्राम्यन्तु नाम ।

किञ्च स्तेग-मण्डूकादीनां तिरश्चाम्, अचेतनानां चौषधि-वनस्पतीनाम्, अश्वानां गवां च हनुदन्तानाम्, अश्वरूपाणाञ्च कृष्णश्वेतादीनाम्, अश्वचरितानां चेङ्कार-शकृत्करणादीनां देवतात्वेन होमेषु श्रूयमाणानां को नाम फलदायित्वं श्रद्दधीत ।

किञ्च सैवाग्निहोत्रदेवता दध्ना पूज्यमानेन्द्रियं ददाति, पयसा पशुमिति, को हेतुरन्यदतो वस्तुस्वभावात्, यावकभोजनानशनादिभिश्च

---

आह—सत्यपीति । प्रत्तस्य दत्तस्य । तृप्रएवैनमित्यद्यार्थवादालम्बनं दर्शयति—यत्त्विति । श्रूयमाणानामित्यस्याश्वमेध इत्यादिः । न तु तेषामप्यधिष्ठात्री देवता स्यादतः किंचेति । सिद्धान्ते हि चोदनाप्रमाणकस्तत्तद्द्रव्यकक्रियास्वभावो हेतुः । पूर्वपक्षे तु लोकविरुद्धाप्रमाणकस्वभावकल्पनेति भावः । यावकः यवचरुः ।

किमिति देवतास्तृप्यन्ति, किमिति वा सुरापानादिभिः कुप्यन्ति, येनाभ्युदयं, प्रत्यवायञ्च कुर्वन्ति कर्त्तुः। अथैवमादिषु कर्मण एवापूर्वद्वारं फलम्, तथा सर्वत्रास्तु। तस्मादपूर्वप्रयुक्ता धर्माः।

इति देवताधिकरणम् ॥ ४ ॥

---

**तस्मादिति**। विग्रहहविः प्रतिगृह्भोजनतृप्तिप्रसादरूपपन्चकाभावेन देवताप्रयुक्तत्वायोगादित्यर्थः। प्रयोजनमूहानूहरूपं सिद्धान्तपूर्वपक्षयोर्ज्ञेयम्।

**इति देवताधिकरणम् ॥ ४ ॥**

५

द्रव्यसङ्ख्या० वाक्यसंयुक्तानां लिङ्गसंयुक्तानाञ्चापूर्वप्रयुक्तिर्व्याख्याता। यत्त्वत्यन्तबलीयस्या श्रुत्या संयुक्तं तस्य प्रकरणादपूर्वार्थत्वमत्यन्तान्याय्यमिति मन्यमानान्प्रति श्रुतिसंयुक्तानामप्यपूर्वार्थता प्रतिपाद्यते। अथवा स्वरूपातिक्रमेण साधनसम्बन्धे स्रुवादिष्वतिप्रसङ्गमाशङ्क्य निराक्रियते। दर्शपूर्णमासयोः श्रूयते 'व्रीहीन्प्रोक्षती'ति। तत्र संशयः—किं व्रीहिद्रव्यप्रयुक्तं प्रोक्षणम्? उतापूर्वप्रयुक्तम्? इति। यद्व्रीहिपदाभिधेयं स्वरूपं तन्मात्रपर्यवसितं प्रोक्षणं विधीयते, तन्मात्रञ्च क्रत्वङ्गम्? उत यत्तेषां साधनरूपं 'व्रीहिभिर्यजेते'त्यनेनावगतं तेन प्रोक्षणं सम्बध्यते—प्रोक्षितैर्यजेतेति। स्वरूपपरत्वे प्रधानविधिविशेषणत्वाभावादतद्विशेषणस्य तद्विकारेष्वतिदेशाभावान्न प्रोक्षणस्य विकृतिष्वतिदेशः; व्रीहिमात्रं त्वतिदिश्यते, तदतिदिष्टं स्वाङ्गभूतं प्रोक्षणमनुष्ठापयतीति विकृतिष्वपि सत्सु व्रीहिषु प्रोक्षणं स्यादेव। नीवारादिभिस्तु विनिवर्त्तितेषु व्रीहिषु प्रोक्षणमुपदेशातिदेशयोरभावान्नीवारादिष्वननुष्ठेयं भवति। यदा तु साधनविशेषद्वारेण प्रधानविधेरेव विशेषणं प्रोक्षणम्, तदाऽयमर्थः—प्रोक्षितैर्व्रीहिभिः साध्यमानेन यागेनापूर्वं कुर्यादिति।

---

६

द्रव्यसङ्ख्या० आक्षिप्य समाहिताया अपूर्वार्थताया अतिदेशात्सङ्गतिं दर्शयन्नधिकाशङ्कामाह—**वाक्येति**। उक्तशङ्कायास्तुच्छत्वादाह-**अथवेति**। **साधनसम्बन्धे**—अपूर्वसाधनसम्बन्धे। आज्यौषधसान्नाय्यधर्माणामुत्पत्त्यपूर्वसाधनत्वकृतां तेषामर्थाधिकरणोक्तां व्यवस्थामङ्गीकृत्यापि स्रुवाद्यतिप्रसङ्गपरिहारार्थतोक्त्या तेनागतार्थत्वं सूच्यते। सिद्धान्तेऽप्यपूर्वसाधनत्वेन रूपेण प्रोक्षणस्य व्रीहिद्रव्यप्रयुक्तत्वादुक्तसंशयानुपपत्तेस्तत्तात्पर्यार्थमाह—**यदिति**। **तन्मात्रञ्च**—व्रीहिमात्रञ्च। न तु प्रोक्षणविशिष्टमित्यर्थः। पक्षद्वयेऽपि प्रयोजनमाह—**स्वरूपेति**। प्रधानविधावितिकर्त्तव्यतात्वेन विशेषणत्वाभावादित्यर्थः। ननु प्रोक्षणस्यानतिदेशेऽप्यतिदिष्टव्रीहिभिस्तदपेक्षणाद्विकृतौ प्रोक्षणं स्यादेवेत्याशङ्क्यैवमपि व्रीह्यभावे तत्प्राप्तिर्न स्यादिति प्रयोजनमित्याह-**व्रीहिमात्रं चे**त्यादिना।

ततः-नैवारहविष्कायां भावनायां तद्वच्छब्देन प्राकृतभावनेत्थम्भावे सकलेऽतिदिश्यमाने नीवारैर्व्रीहिमात्रे निवर्तितेऽन्यस्य तद्रूपस्यैवावस्थानान्नीवाराणां च व्रीहिस्थाने निवेशादेषोऽर्थो भवति—प्रोक्षितैर्नीवारैर्यजेतेति। ततश्च नीवारेषु प्रोक्षणं सिद्धं भवति।

तथा 'त्रीन्परिधीनि'ति मन्त्रः किं त्रित्वसंङ्ख्याप्रयुक्तः? उतापूर्वीयपरिधीयत्ताप्रकाशनार्थः सन्नपूर्वप्रयुक्तः? इति। इदन्तु लिङ्गविनियोगत्वादिहानुदाहरणम्। अतिप्रसङ्गनिराकरणपक्षे तु भवत्येवोदाहरणम्। तथा'चतुर्होत्रा पौर्णमासीमभिमृशेत, पञ्चहोत्राऽमावास्यामि'त्यभिमर्शनं पौर्णमास्यामावास्यासमुदायप्रयुक्तम्? उतापूर्वप्रयुक्तम्? इति।

तथा चातुर्मास्येषु श्रूयते-'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इति। किमन्नकरणप्रयुक्तो होमोऽन्नकरणानां शूर्पदर्वीपिठारादीनामङ्गम्? उताराद्रुपकारकोऽपूर्वार्थ? इति विचारः। ननु तृतीयानिर्देशादिह द्रव्यस्य न तत्संस्कारार्थता होमस्य शङ्कितव्या। उच्यते—'तेन ह्यन्नं क्रियते' इति हेतुनिर्देशोऽयं हिशब्दश्रुत्या गम्यते। व्याप्यश्च हेतुर्भवति प्रधानञ्चाङ्गेन व्याप्यते नाङ्गं प्रधानेन यत्र प्रधानं तत्राङ्गम्,

---

अन्यस्य प्रोक्षणाद्यङ्गजातस्य। तद्रूपस्य। प्रकृत्यवगतरूपस्य।

द्रव्यमुदाहृत्य सङ्ख्यामुदाहरति तथेति। त्रीन् परिधीन् तिस्रः समिध इत्यादिमन्त्र इत्यर्थः। सिद्धान्ते परिधिद्वयवति महापितृयज्ञादावूहः फलम्। इदं त्विति। मन्त्रस्य प्रकाशनसामर्थ्यरूपलिङ्गेन विनियोगादत्र तु श्रुतिविनियोज्यस्योदाहरणत्वोक्तेरित्यर्थः। कथं तर्हि सूत्रे तदुपादानमत अह—अतिप्रसङ्गेति। तत्पक्षे वाक्यादिविनियोज्यानां सर्वेषामप्युदाहरणत्वसम्भवादिति भावः। यद्यप्यपूर्वीयमात्रे लिङ्गविनियोगेनातिप्रसङ्गः अन्यत्र मन्त्रस्यासामर्थ्यात्तथा च तन्निराकरणेऽपि नोदाहरणाता युक्ता, तथाप्यनेन मन्त्रेणापूर्वीयं प्रकाशयेदित्येव लिङ्गेन श्रुतिः कल्प्या न त्वपूर्वीयं परिधित्रित्वं प्रकाशयेदिति। विशिष्टानुवाददोषादत ऐन्द्रीन्यायेन गौणेऽप्यर्थेऽतिप्रसङ्गात्तन्निराकरणं युक्तम्। तच्च परिधिपरिच्छेदद्वारकापूर्वसाधनताविशेषस्योद्देश्यतावच्छेदकत्वाङ्गीकरणेनेति। ज्ञेयम्। सूचीकटाहन्यायेन प्रथमं समुदायमुदाहरति—तथेति। समुदायप्रयुक्तत्वे तस्य

**यत्राङ्गं न तत्र प्रधानम्। तस्माद्धेतुश्रुत्या व्याप्यत्वेन धूमवदवगम्यमान-मन्नकरणं प्राधान्येनावसीयत इति होमस्तदर्थ इत्याशङ्का।**

**तत्र श्रुतिबलीयस्त्वाद् व्रीह्यादिद्रव्यशेषता।**
**प्रक्रियाऽवगताऽपूर्वशेषत्वस्यावबाधिनी ॥**
**व्रीह्यादिरूपशेषत्वे स्यादानर्थक्यमापतेत्।**
**प्रोक्षणस्य विनाऽप्यस्मात्तत्स्वरूपस्य सिद्धितः ॥**
**तस्मात्साधनरूपं यद्व्रीहीणां शास्त्रचोदितम्।**
**तेन रूपेण सम्बन्धः प्रोक्षणादेर्विधीयते ॥**

**शक्नुवन्ति व्रीहयः शास्त्रान्तरावगतमात्मीयमपूर्वसाधनत्वं हवीरूपत्वञ्च लक्षणया ऽवगमयितुम्। तेनात्मना प्रोक्षणं गृह्णन्ति। हवीरूपस्य च**

---

विकृतावनतिदेशादभिमर्शनस्यानूहः सिद्धान्ते तूह इति प्रयोजनं ज्ञेयम्। **इत्याशङ्के**-त्यनेन क्रतुव्याप्यस्यापि जुह्वादेः क्रत्वङ्गत्वदर्शनात्तुच्छत्वमाशङ्काया दर्शितम्। ईदृगा-शङ्कानिरासेनारादुपकारित्वे सति हेत्वधिकरणे दर्व्यादिविकल्पमात्रनिरास इति न पौनरुक्त्यमित्याशयः। हेतुभिन्नोदाहरणेषु साधारणं पूर्वपक्षं व्रीहिवाक्यमुपलक्षणीकृत्याह-**तत्रे**ति। **प्रक्रिया** प्रकरणम्। सिद्धान्तमाह—**व्रीह्यादी**ति। **रूपं** स्वरूपम्। **प्रोक्षणस्येति** पूर्वान्वितम्। **अस्मात्** प्रोक्षणात्। **तत्स्वरूपस्य** व्रीह्यादिस्वरूपस्य। **शास्त्रेति** 'व्रीहीभिर्यजेते'ति शास्त्रबोधितमित्यर्थः। ननु 'व्रीहीन्प्रोक्षती'ति वाक्ये साधनत्वेन व्रीहीणामनभिधानात्कथं तेन रूपेण प्रोक्षणस्य सम्बन्ध इत्यत आह - **शक्नुवन्तीति**। **हवीरूपत्वं** हविःप्रकृतित्वम्। **तेनात्मना** तेन रूपेण। एवञ्च स्रुवादिष्वतिप्रसङ्गरूपद्वितीय-पूर्वपक्षोऽपि निरस्त इत्याह—**हवीरूपस्य चे**ति। यवानामपि तादृशत्वात्तत्साधारण्य-मिष्टमेवेति भावः। न च व्रीहित्वस्यापि विवक्षा, सकृदुच्चरिते व्रीहिपदे युगपद्वृत्तिद्वय-विरोधात्। ननु 'व्रीहीणां मेध सुमनस्यमान' इति मन्त्रस्यापूर्वसाधनीभूतान् प्रकाशये-दित्युक्तरीत्या विनियोगे स्रुवादिव्यावृत्तावपि यवव्यावृत्तिः कथं लभ्येतेति चेत् सत्यम्, तत्र विधेयमन्त्रस्य व्रीहिप्रकाशकत्वसामर्थ्यवशेन व्रीहिजन्यापूर्वव्यक्तिसाधनत्वेनोद्देश्यता-स्वीकारात्तस्य च यवेष्वभावेन तद्व्यावृत्तिसिद्धेः। लिङ्गकल्प्यवाक्ये व्रीहित्वस्याप्युक्त-सामर्थ्यवशेन विवक्षाङ्गीकारे सकृदुच्चरितस्योभयपरत्वासम्भवदोषस्याप्रसक्तेश्च। तदुक्तम्।

श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने।
लक्षणा वाक्यभेदादिदोषो नानुमिते ह्यसौ॥ इति।

विवक्षितत्वान्नातिप्रसङ्गः। यदि पुनरेकेनैव वाक्येन संस्कारः द्रव्यञ्च विधीयते—प्रोक्षितैर्व्रीहिभिर्यजेतेति, तदापि किं सिध्यति साधनरूपान्वयः? प्रोक्षणस्य सुतरां सिध्यतीति ब्रूमः। न हि तत्र व्रीहिसम्बन्धः प्रोक्षणस्य। साधनत्वेनैवोपदिश्यमानं द्रव्यं सस्कारेण, व्रीहित्वेन च विशेष्यत इति व्यक्तः साधनसम्बन्धः। अयं हि तत्रार्थः—व्रीहिजातीयम्प्रोक्षणसंस्कृतञ्च यत् तेन यजेतेति। ततश्च यवनीवारादिषु विरोधाद्व्रीहिसाधनत्वे निवर्तितेऽपि प्रोक्षितसाधनता न निवर्त्तत इति सिद्धं तत्रापि प्रोक्षणम्।

यत्र तर्हि संस्कारवाक्ये द्रव्यं निर्दिश्य सर्वनाम्ना च तद् द्रव्यं परामृश्य यागे विनियुज्यते 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'ति तत्र कथम्? तत्रापि यद्यपि न प्राक् पयसः साधनत्वं विदितं नापि संस्कारवेलायां गम्यते, तथाऽपि भाविविनियोगावगम्यसाधनत्वा

---

विवक्षितार्थबोधनसमर्थस्यैव वाक्यस्य कल्पनादिति हि शब्दार्थः। अवहननादौ त्वपूर्वसाधनत्वमेव प्रकृतित्वेन लक्ष्यते। तावतैवानर्थक्यपरिहारात् नापूर्वविशेषसाधनत्वपर्य्यन्तम्, तद्गमकमङ्गसामर्थ्यवदिह गमकाभावादिति दिक्। ननु शास्त्रान्तरेणापूर्वसाधनत्वावगमे व्रीह्यादिपदेन तल्लक्षणयास्तु विनियोगः। एकेनैव वाक्येन द्रव्यसंस्कारयोर्विधावपूर्वसाधनत्वस्य प्रागवगत्यभावात्कथं तेन रूपेण संस्कारविनियोग इति पृच्छति–**यदि पुनरिति**। उत्तरमाह–**सुतरामिति**। लक्षणां विनैवेत्यर्थः। एतदेव दर्शयति **नहीति**।

व्रीहिसम्बन्धे हि साधनान्वयाभावादानर्थक्यं स्यात्स तु कारकाणां मिथः सम्बन्धस्याव्युत्पन्नत्वान्न भवति। एवञ्च प्रोक्षितैर्यजेत व्रीहिभिश्चेति द्वयोः क्रियान्वयोत्तरं व्रीहिजातीयं प्रोक्षितं साधनमिति पार्ष्ठिकान्वय इति स्पष्ट एव साधनान्वय इत्यर्थः। प्रोक्षणस्येत्यत्र छेदः। एतत्फलमाह—**ततश्चेति**। अत्र **यव**ग्रहणं वैकृतयवाभिप्रायम्। प्रोक्षितैरित्यादिवाक्ये प्राप्तयागानुवादेन द्रव्यसंस्कारोभयविध्यसम्भवेन विशिष्टकर्मविधाने सति यवानां तत्र निवेशायोगेन तद्वाक्ये यागान्तरविध्यापत्तौ प्रोक्षणस्य यवसाधारण्यासम्भवादित्याहुः। यत्रोक्तप्रकारद्वयमपि नास्ति तत्रापूर्वसाधनान्वयः कथमिति व्युत्पादयितुं पृच्छति–**यत्रेति**। 'सा वैश्वदेवी'ति वाक्येन भावी यो विनियोगस्तदवगम्यं यत्साधनत्वं तदपेक्षस्तदर्थ इत्यर्थः। **अन्यथा** पयस्स्वरूपमात्रार्थत्वे। ननूद्देश्यवाचकपयःपदस्य लक्षणां विना कथं साधनरूपान्वय इति शङ्कते—**नन्विति**। सिद्धान्ती स्वाभि-

पेक्ष एवायं संस्कारविधिः, अन्यथाऽऽनर्थक्यात् । ननु साधनत्वं पूर्वानवगतं कथं पयसा लक्षयितुं शक्यते ? न पदं प्रवृत्तिवेलायामेव स्वार्थं हित्वा साधनविशेषं लक्षयित्वा संस्कारान्वयं प्रतिपादयतीति ब्रूमः। किन्तर्हि प्रथमं पयश्शब्दः स्वार्थस्य संस्कारान्वयितारूपं वाक्यार्थं प्रतिपादयति, तद्रूपस्य च कार्यान्तरौपयिकतामन्तरेणानुपपत्तेस्तदाकाङ्क्षायामुपरितनेन वाक्येन संस्कारविशिष्टस्यैव पयसस्तच्छब्दपरामृष्टस्य कार्ये विनियोगः क्रियते। तदर्थञ्च पूर्वं विहितः संस्कार इति पश्चादवगम्यते। तदयमर्थः—दध्यानयनसंस्कृतं पयो वैश्वदेवमिति। न ह्यवश्यं पूर्वलक्षित एव साधनरूपे संस्कारा विधातव्याः साधनरूपार्थाः संस्कारा इत्येतावन्नः प्रतिपाद्यम्। तच्चैवंविधेष्वयत्नेनैव सिध्यति, श्रुत्यैव संस्कारस्य साधनरूपान्वयात्। व्रीहीनित्यादिकन्तु लाक्षणिकं रूपम्।

नन्वेवं श्रुत्यर्थस्यैव पयसः संस्कारात्कथं लक्षणावाचोयुक्तिः ? सत्यम्, व्रीहि-पयःप्रभृतीनां द्रव्याणामेव संस्कारः, स तु साधनरूपसिद्ध्यर्थः, न स्वरूपसिद्ध्यर्थः। तत्तु रूपमशाब्दमित्येतावता लक्षणावाचोयुक्तिः। तच्च रूपं यवेषु नीवारादिषु चाविशिष्टमिति तत्रापि प्रोक्षणादयः सिद्धा भवन्ति। तस्मात्सर्वेषामेव भूतभवद्भाविविनियोगानां द्रव्यादीनां संस्कारा अपूर्वभावनाशेषभूतास्तद्विकृतिषु प्राकृतार्थकरेषु

---

प्रायमाह—न पदमिति। पयःपदमित्यर्थः। प्रवृत्तिवेलायामेव संस्कारान्वयबोधवेलायामेव। किं तर्हीति। अयोग्यतानिश्चयाभावादिति भावः। तद्रूपस्य संस्कारान्वयित्वस्य। 'सा वैश्वदेव्यामिक्षे'त्यस्यार्थं दर्शयति—तदयमिति। श्रुत्यैव तच्छब्दश्रवणेनैव। ननु व्रीहीन् प्रोक्षतीत्यत्राप्येवंरीत्या लक्षणा न स्यादित्याशङ्क्याह—व्रीहीनित्यादिकन्त्विति। तत्र संस्कारविशिष्टव्रीहिपरामर्शकशब्दाभावेन साधनरूपान्वयार्थं व्रीहिपदे लक्षणावश्यकीति भावः। अशाब्दं—पयःशब्दानभिधेयम्। वाचोयुक्तिर्व्यवहारो ग्रन्थकृतामिति शेषः। विचारप्रयोजनमाह—तच्चेति। अधिकरणार्थमुपसंहरति—तस्मादिति। भूतविनियोगत्वं वाक्यान्तरावगतविनियोगत्वम्। 'व्रीहीन् प्रोक्षती'त्यादौ। भवद्विनियोगत्वं संस्कारवाक्यावगम्यमानविनियोगत्वम् 'प्रोक्षितैर्व्रीहिभि'रित्यादौ। भाविविनियोगत्वं संस्कारान्वयोत्तरकालावगम्यसंस्कारविशिष्टविनियोगत्वम्। यथा

**द्रव्यान्तरेषूहितव्याः। शूर्पहोमस्तु तृतीयानिर्दिष्टद्रव्यकरणकत्वादारादुपकारक इति दूरापास्तं तस्य द्रव्यप्रयुक्तत्वम्। अन्नकरणत्वं त्वर्थवादः, न हेतुरित्युक्तम्॥**

**इति प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम्॥ ५॥**

**६**

**देशबद्धं० ज्योतिष्टोमे श्रूयते 'त्सरा वा एषा यज्ञस्य, तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ती'ति। तत्र संशयः- किमिदमुपांशुत्वं सोमयागस्य यः प्राग् भागः, तद्धर्मः सन्परमापूर्वप्रयुक्तम्, ततश्च विकृतिषु तद्भागारम्भके अप्राकृतेऽपि पदार्थ ऊहितव्यम्? उताग्नीषोमीयात्पशोर्ये प्राचीनाः पदार्था दीक्षणीयादयः तेषां धर्मः, तदवान्तरापूर्वप्रयुक्तम्। ततश्चाप्राकृते पदार्थे यूपावटस्तरणबर्हिर्धर्मवन्नोहितव्यम्? इति।**

**तत्र वाग्यमनपूर्वपक्षोऽभिधीयते यज्ञस्येति शब्दः प्राचीनशब्दस्य विशेषणम्। व्यवहितोऽपि प्रवृत्तिविशेषकरत्वं विधिविशेषणशेषत्वे स्यात्।**

---

'तप्ते पयसी'त्यादावित्यर्थः। हेतूदाहरणेऽप्याह–**शूर्पेति**। सङ्ख्यासमुदाययोरपि द्रव्यन्यायेनैवाप्रयोजकत्वसिद्धेः पृथगनुपसंहार इति ज्ञेयम्॥

**इति प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम्॥ ५॥**

**६**

देशबद्धं० प्रधानापूर्वार्थत्वापवादादनन्तरसङ्गतिः। **त्सरेति**। यज्ञस्यैषा उपांशुकृतिः त्सरा छद्मगतिः। त्सरच्छद्मगताविति धात्वनुसारात्। यथा कश्चिच्छद्मगत्या शकुनिं वशीकरोति तथा यज्ञः फलमिति स्तुतिः। संशयकोटिं तत्प्रयोजनञ्चाह– **किमिति**। **विकृतिषु** राजसूयादिषु। **तद्भागारम्भके** प्राग्यागारम्भके 'पुरस्तादुपसदां सौम्यैनं प्रचरन्ती' त्यादावित्यर्थः। **यूपेति**। प्रकृतौ यूपगर्त्तास्तरणबर्हिषोऽभावात्तद्धर्मा लवनादयो यथा न भवन्ति तथेत्यर्थः। सूत्रानुसारात्सिद्धान्तेनोपक्रमते–**वाग्यमनेति**। प्रणीताः प्रणेष्यन् वाचं यच्छती'ति वाग्यमो यथा प्रणयनोत्तरभावि प्रोक्षणाद्यवान्तरापूर्वार्थस्त-

त्सराशब्दविशेषणत्वे हि अप्रवृत्तिविशेषकरः स्यात्। तस्माद्यज्ञस्य यत्प्राचीनं तदुपांश्विति सम्बन्धः। ततश्च यज्ञभागधर्मता। प्राचीनशब्दोऽपि देशं निमित्तीकृत्य पदार्थेषु वर्त्तते। तथा च सति प्रथमं देशे वर्तितुमर्हति, तदतिक्रमे कारणाभावात् तद्धर्म एवोपांशुत्वम्। वाग्यमनन्तु यज्ञसंयोगाभावादवान्तरापूर्वप्रयुक्तम्। तदिदमुक्तं 'प्रणीतादि तथेति चेत्? न यज्ञस्याश्रुतत्वादि'ति।

अथवाऽनेन सूत्रद्वयेनाधिकरणान्तरं प्रस्तुताधिकरणसिद्धान्तस्य दृष्टान्तसिद्ध्यर्थं तदीयपूर्वपक्षन्यायेन च पूर्वपक्षं वक्तुमन्तरागर्भिणीन्यायेन विचार्यते। दर्शपूर्णमासयोः श्रूयते'यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः, यदध्वर्युयजमानौ वाचं यच्छतः तत्प्रजापतिभूयङ्गतौ यज्ञं तन्वाते, तस्मात्प्रणीताः प्रणेष्यन्वाचं यच्छती'ति। तत्रायं वाग्यमः किं परमापूर्वप्रयुक्तः? उतावान्तरापूर्वप्रयुक्तः? इति संशयः।

---

थेत्यर्थः। **प्रवृत्तीति**। उद्देश्यविशेषणसमर्पकत्वे हि विकृतावूहरूपानुष्ठानविशेषप्रयोजकतया प्रयोजनवत्तरत्वं स्तुतिस्त्वल्पं प्रयोजनमित्यर्थः। तेनोपांशु चरन्तीति विधौ विशेषणं प्राग्भागः। तच्छेषत्वं विशेषणत्वमित्यर्थः। अग्नीषोमीयो ह्यवधित्वेन विशेषणम्। प्रयोगद्वारकसम्बन्धित्वेन च यज्ञः। प्राग्भागस्य ससम्बन्धिकत्वेन तेन विना पर्यवसानाभावादिति भावः। न तु प्राचीनशब्दस्य भागवचनत्वमसिद्धं किन्तु तद्गतपदार्थवचनत्वमेवेति शङ्कामाकृत्यधिकरणन्यायेन निराकरोति—**प्राचीनेति**। **वर्त्तते** इत्यनेन सिद्धांतेऽपि भागस्योद्देश्यतावच्छेदकत्वमावश्यकमिति सूचितम्। **तद्धर्म एवेति**। भागधर्म एवेत्यर्थः। भागधर्मत्वञ्च साक्षादसंभवात्तदारम्भकपदार्थाङ्गमन्त्रद्वारेति ज्ञेयम्। एवं भागजन्यापूर्वे मानाभावेन भागसम्बन्धियज्ञापूर्वसाधनत्वमेव भागनिष्ठं लक्षणीयमिति परमापूर्वप्रयुक्तत्वमुपांशुत्वस्य बोध्यम्। दृष्टान्तवैषम्यमाह—**वागिति**। एतच्चानुपदमेव स्फुटीकरिष्यति। उक्तं सूत्रकृतेत्यर्थः। प्रणीतां संयोगेन विहितं वाग्यमादि यथावान्तरापूर्वार्थं तथोपांशुत्वमित्याद्यसूत्रार्थः। उत्तरसूत्रं स्पष्टार्थः।

प्रस्तुताधिकरणमध्य एव कथमधिकरणान्तरमत आह—**प्रस्तुतेति**। दृष्टान्तसिद्धार्थत्वादन्तराचिन्तेत्यर्थः। **तदीयेति**। प्रस्तुताधिकरणसम्बन्धीत्यर्थः। **प्रजापति भूयं** प्रजापतिरूपत्वम्। तस्य तूष्णीं धर्मत्वादित्यर्थवादः। उक्तसंशयमेव सोपपत्तिकं विवृणोति—

किं यज्ञभागधर्मोऽयं परमापूर्वप्रयुक्तः ? उत प्रणीताप्रणयनादूर्ध्वं हविष्कृदाह्वानात्प्राग्ये पदार्थाः प्रोक्षणादयस्तदपूर्वप्रयुक्तः ? इति। यज्ञसंयोगाद् यज्ञार्थत्वे प्राप्ते—

ब्रूमः—यज्ञस्यात्र विस्तारेण संबन्धः, न वाग्यमविषयविशेषणत्वं यज्ञस्य यो भागस्तत्र वाग्यम इति, किं तर्हि ? यज्ञन्तनितुं वाचं यच्छेदिति वाग्यमश्च प्रणिधानेनाविकलानुष्ठानार्थोऽङ्गम्। तदङ्गैरपि चाविकलैर्यज्ञस्य विस्तारो भवतीत्युपपन्नोऽङ्गार्थत्वेऽपि यज्ञसंयोगः। अतस्तद्देशानां पदार्थानां साक्षाद्वैकल्यकरणेनोपकुर्वन्वाग्यमस्तदङ्गमेव स्यात्। भाष्येऽपि प्रथमं यदुक्तमित्यादिना नात्र यज्ञशब्दः श्रूयते इत्यन्तेन। तत्प्रत्युभाषणत्वेन तत्परिहारत्वेन सूत्रद्वयं व्याख्याय, 'नन्वित्यादिनाऽन्तरागर्भिणीत्वेन व्याख्यातम्। एवं हि स्थितादुत्तरमित्यादि भाष्यमुपपद्यते, नान्यथा। तत्र नन्वित्यादिना पूर्वव्याख्योक्तयज्ञसंयोगाभावाक्षेपेणान्तरागर्भिणीत्वेन पूर्वपक्षमाह यज्ञ-

---

**किं यज्ञभागेति**। प्राचीनशब्दवद्भागवाचिपदाभावेऽपि प्रणेष्यन्निति लृट्श्रुत्या केवलप्रणयनार्थत्वे तदपवर्गेऽपवर्गत्तां सहहविष्कृता विसृजतीत्यवधिविधेरदृष्टार्थत्वापत्तेस्तद्वारणाय प्रणयनलक्षितयज्ञभागोद्देशेनैव विधिर्युक्त इत्याशयः। **उतेति**। प्रणेष्यन्निति शत्रभिहितकर्तृसंस्कारकत्वेनावगतस्य वाग्यमस्योक्तावधिवशेन कर्तृद्वारा प्रणयनहविष्कृदाह्वानमध्यवर्तिपदार्थाङ्गत्वमिति भावः। **वाग्यमस्य विषयः** उद्देश्यरूपः। द्वितीयान्तयज्ञपदस्य तनिष्यन्तावित्यत्रैवान्वयसामर्थ्यम्। न तु भागविशेषणतायामित्यर्थः। ननु यज्ञस्य विस्तारविशेषणत्वेऽपि विस्तारार्थत्वमेव वाग्यमस्य स्यादत आह—**वाग्यमश्चेति**। दृष्टार्थतयाङ्गार्थस्य तत्साकल्यरूपविस्तारार्थत्वमप्यार्थिकमतोऽर्थवादस्यापि तदेवालम्बनमित्यर्थः। **अत इति**। **तद्देशानां** यज्ञभागगतानाम्। भागाङ्गत्वस्यापि पदार्थद्वारैव वक्तव्यत्वात्पदार्थाङ्गत्वमेव युक्तमित्यर्थः। उक्तव्याख्यानद्वयपरतां भाष्यस्य दर्शयति—**भाष्येऽपीति**। **प्रथममित्यस्य** **व्याख्यायेत्यनेनान्वयः**। अन्तरागर्भिणीत्वेन व्याख्यायां गमकमाह—**एवं हीति**। प्राक्तनाधिकरणसिद्धान्तमाह—**स्थितादिति**। ननूक्तं प्रवृत्तिविशेषकरत्वाय व्यवहितेनाप्यन्वय इति तत्राह—**अपि चेति**। यत्किञ्चिच्छब्दस्य 'यच्चकिंचिज्जगत्यस्मिन्' इत्यादौ साकल्यार्थत्व एव दर्शनादित्यर्थः। प्राचीनत्वस्यावधिसाकाङ्क्षत्वादग्नीषोमीयस्य तत्समर्पकत्वेन विवक्षणेऽपि न वाक्यभेद इति

संयोगोऽत्राप्यस्तीति । उच्यते इत्यादिना सिद्धान्तं दर्शितवान् । स्थितादुत्तरमुच्यते–यज्ञशब्दोऽत्र त्सराशब्दविशेषणम्, अव्यवधानात्, न प्राचीनशब्दस्य विशेषणं व्यवधानात् । अपि च भागस्यैकत्वाद्यत्किञ्चिदित्यनेकापेक्षः शब्दो नावकल्पते । तस्मादग्नीषोमीयात्प्राचीनानामङ्गानामुपांशुत्वम् ॥

इत्युपांशुत्वस्य पदार्थधर्मत्वाधिकरणम् ॥ ६ ॥

७

अग्निधर्मः० अग्नौ श्रूयते 'हिरण्यशकलैरग्निं प्रोक्षती'ति किं प्रोक्षणं सकृदेव स्यात्? उत प्रतीष्टकं भेदेनेति? यदीष्टकातिरिक्तोऽवयव्यग्निशब्दाभिधेयः, ततः सकृत् । अथेष्टका एव संहता अग्निधारणार्थेन स्थापिता अग्निशब्देनाभिधीयन्ते, ततस्तदर्थं प्रोक्षणं प्रतीष्टकं कर्तव्यम् । यत्रैकावयवाकर्षणेनावयवान्तरमाकृष्यते सन्धिश्च न दृश्यते, तत्रैव देवदत्तघटादावयव्यभ्युपगम्यते । न चेहैकैकेष्टकाकर्षणेऽन्यासामाकर्षणम् । सन्धिश्चात्र पुरीषच्छन्नानामापीष्टकानामनुमानेन दृश्यते । तस्मान्नास्त्यवयवी । पक्वामसंयोगे च न द्रव्यान्तरारम्भ इति काश्यपीयाः । तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात् ।

---

सूचयन्नुपसंहरति–तस्मादिति । सूत्रार्थस्तु प्राग्देशसम्बद्धमुपांशुत्वं तेषां तद्देशवर्त्तिनामङ्गं स्यात् यत्किञ्चिच्छब्दरूपश्रुतिसंयोगात् तस्य चापूर्वस्य तत्र भावात्तत्प्रयुक्तमुपांशुत्वमिति ॥

इत्युपांशुत्वस्यपदार्थधर्माधिकरणम् ॥ ६ ॥

७

अग्निधर्मः० अत्र सङ्गतिमधिकरणान्ते वक्ष्यति । नन्वतिरिक्तावयव्यनङ्गीकारे इष्टकानामपि परमाणुसङ्घरूपत्वापत्त्या प्रतिपरमाणु च प्रोक्षणाशक्त्या प्रोक्षणविधिरनर्थकःस्यादत आह–यत्रैकेति । तथा च न सर्वत्रावयव्यपन्हवः क्रियत इति नोक्त दोष इति भावः । पुरीषंमृत्तिका । पक्वामेति । पक्वा इष्टकाः । आमं पुरीषम् । अत्राप्यत्यन्तसं-

नैवम्। एकबुद्धिरेव हि देशकालादिभेदेऽपि अबाधितावयविद्रव्यसाधनी। सा चेहापि विद्यते। वृक्षादिषु चावयविसद्भावेऽप्याकर्षणं न दृष्टमित्यतन्त्रं तत्। अवयविसद्भावेऽपि सन्धिदर्शनं च पटादावनैकान्तिकम्। तस्मात्प्रत्यक्षबलात् पक्वामसंयोगेऽप्यस्त्यग्न्यवयवीति तस्येदं प्रोक्षणं सकृदेव कर्त्तव्यम्। पूर्वाधिकरणे ग्रहयज्यभ्याससमुदायात्मकज्योतिष्टोमप्रयुक्तिर्विचारिता। समुदायप्रसङ्गात् प्रोक्षणं विचार्यत इति प्रासङ्गिकी सङ्गतिः॥

इति हिरण्यशकलप्रोक्षणाधिकरणम्॥ ७॥

८

पत्नीसंया० द्वादशाहे श्रूयते 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते न बर्हिरनुपहरति, असंस्थितो हि तर्हि यज्ञः' इति। तत्र संशयः-किं सर्वेषामप्यन्हां पत्नीसंयाजान्तत्वम्? उतोत्तमवर्जम्? इति।

तत्राविशेषात्सर्वेषां पत्नीसंयाजसंस्थितिः।
असंस्थावचनं गौणं यज्ञस्य चिरसंस्थितेः॥

---

श्लेषसन्ध्यभावविरहावेव बीजम् न चैवं व्रीहिष्वपि प्रत्येकं प्रोक्षणापत्तिः, 'अग्नये वो जुष्टमि'ति मन्त्रे बहुवचनेन तन्त्रतावगमात्। प्रकृते च तादृशगमकाभावादित्याशयात्। सूत्रार्थस्तु अग्निधर्मः प्रोक्षणादिः प्रतीष्टकं स्यात्सङ्घातरूपत्वादग्नेः। 'चतुर्होत्रा पौर्णमासीमभिमृशेदि'तिवदिति॥

इति हिरण्यशकलप्रोक्षणाधिकरणम्॥ ७॥

८

पत्नी० समुदायप्रसङ्गादहःसमूहात्मकद्वादशाहधर्मचिन्तेति सङ्गतिः। सन्तिष्ठन्ते समाप्यन्ते। तर्हि तदा। हि यस्माद्यज्ञोऽसमाप्त इति पत्नीसंयाजान्तत्वे हेतुः। उत्तमेति० अन्त्येत्यर्थः। असंस्थावचनं असंस्थितो हीत्यादि वचनम्। उत्तरार्धं व्याख्यातुमा-

स्यादेतत्। 'असंस्थितो हि तर्हि यज्ञः' इति यज्ञस्यासंस्था पत्नीसंयाजान्तत्वे हेतुः, सा च नोत्तमे ऽहनि। तस्माद्धेतुवशात्पूर्वेषामेव स्यात्। अथाप्ययमर्थवादः, तथाऽपि वाक्यशेषवशादेवान्त्यवर्जं पत्नीसंयाजान्तता व्यवस्थाप्यते, अञ्जनमिव घृत इति। नैवम्, असंस्थितशब्दस्य चिरसंस्थाभिप्रायत्वेनोपपत्तेर्नाविशेषप्रवृत्तो विधिः सङ्कोचमर्हति। यथा लोके यश्चिरेण भुङ्क्ते तत्र वक्तारो भवन्ति नास्य भोजनं परिसमाप्यत इति, तथेहापि दीर्घकालोऽसौ यज्ञो न सन्तिष्ठते इति यावत्। अतो लाघवार्थं पत्नीसंयाजात् परं शेषं लुप्यते, समग्रानुष्ठाने ह्यतिविलम्बः स्यादित्येतावानभिप्रायः। तस्मात्सर्वेषां पत्नीसंयाजान्ततेति प्राप्ते, ब्रूमः।

अपेक्षितविधानाय प्रागुत्तममयं विधिः।
मुख्यत्वसम्भवाद्वाक्यशेषस्य न च गौणता॥

द्वादश यागाः सह कर्त्तव्याः। तत्र पूर्वमहःकस्मिंश्चित्पदार्थे व्यवस्थाप्य परमुपक्रमितव्यम्। तत्र कुत्र पदार्थे अवस्थानमित्यपेक्षायां पत्नीसंयाजान्तानि पूर्वपूर्वाण्यहानि कृत्वोत्तरमुत्तरमारभेतेत्येवं विधीयमानेऽपेक्षितविधिः भवति। चोदकश्च न बाध्येत। शेषलोपस्तु चोदक-

---

शङ्कते **स्यादेतदिति**। ननु 'तेन ह्यन्नं क्रियत' इतिवदयमर्थवाद इत्यत आह—**अथापीति**। निरालम्बनस्तुतेरयोगाद्विधिस्तुत्योः समानविषयत्वेन यत्रासंस्था तत्रैव विधिर्व्यवस्थाप्यते। यथा तेजो वै घृतमि'ति वाक्यशेषादञ्जनं करणतया घृते व्यवस्थाप्यते तद्वदित्यर्थः। अञ्जनविधिवदिह सन्देहाभावेनार्थवादवशेन सङ्कोचायोगात्स्तुतेश्चान्यथोपपत्तेर्नोक्तव्यवस्थेत्याह—**नैवमिति**। अपेक्षिते विधित्वमुपपादयति—**द्वादशेति**। 'द्वादशाहेन प्रजाकामं याजयेदि'त्यनेन द्वादशयागानां तृतीयया करणत्वेन श्रुतानां साङ्गानां साहित्यावगमादेकैकस्य साङ्गस्य पृथगनुष्ठाने तद्बाधापत्तेरग्नीषोमीयान्तपूर्वाङ्गानामवभृथाद्युत्तराङ्गानाञ्च तन्त्रेणैवानुष्ठानादङ्गसाहित्यसिद्धिः। मध्यवर्त्तिग्रहयागाभ्यासानान्तु साहित्यं मध्यवर्त्तिपदार्थे कस्मिंश्चित्पूर्वपूर्वमहरवस्थाप्योत्तरानुष्ठाने स्यादतः कस्मिन् पदार्थेऽवस्थाप्यमित्यपेक्षायां पत्नीसंयाजान्तत्वनियमविधिर्लाघवादित्यर्थः। एवं चातिदेशप्राप्तपत्नीसंयाजोत्तरपदार्थानामुत्तमेऽह्न्यनुष्ठानान्न बाध इत्याह—**चोदकश्चेति**। पूर्वपक्षे

बाधेनानपेक्षितश्च विधीयेत। तस्मादयमर्थः—पत्नीसंयाजान्तान्यहानि सर्वाणि कृत्वा हारियोजनाद्यहःशेषं तन्त्रेण सर्वेषामुपरिष्टादनुष्ठेयमिति। तस्मात्प्रागुत्तमात्पत्नीसंयाजान्तता। तथा चासंस्थितशब्दोऽपि मुख्यो भवति। अविशेषप्रवृत्तोऽपि हि विधिर्वाक्यशेषस्य मुख्यत्वाय विशेषे स्थाप्यते। किमुत यदा तस्यापि न्यायादेव विशेषविषयत्वम्। कः पुनरूहोपयोगश्चिन्तायाः? पूर्वपक्षे विकृतिषु नोहः, सिद्धान्ते हि सत्रादिषु द्वादशाहविकारेषु यदन्त्यमहर्द्वितीयं तृतीयं वा तत्प्रकृतौ पत्नीसंयाजान्तमपि अनुष्ठितमूहित्वा सकलमनुष्ठीयते॥

इति द्वादशाहे पत्नीसंयाजान्तत्वाधिकरणम्॥ ८॥

९

अभ्यासः० दर्शपूर्णमासयोः सामिधेनीः पञ्चदश विधाय एकादशर्चः पठित्वा 'त्रिःप्रथमामन्वाह त्रिरुत्तमाम् ताः पञ्चदश सम्पद्यन्ते' इति श्रुतम्। तत्र संशयः किमयं त्रिरभ्यासः प्राथम्यलक्षिताया ऋचः

---

वैपरीत्यमाह—**शेषेति**। पत्नीसंयाजोत्तराङ्गानां द्वादशस्वप्यहस्सु लोप इत्यर्थः। **उपरिष्टात्** द्वादशेहनि। उत्तरार्धं व्याचष्टे—**तथा चेति**। **विधिः** अक्ताः शर्करा उपदधातीति। घृतशब्दस्य घृताघृतलक्षकत्वमञ्जनसाधनतैलादिसाधारणविधौ स्यात्। घृतमात्रविधौ तु मुख्यार्थत्वमित्यर्थः। **तस्यापि** विधेरपि अध्यायासङ्गतिमाशङ्कते **कः पुनरिति**। शेषलोपविचारो हि बाधलक्षणे सङ्गतो नात्रेत्यर्थः। **पूर्वेति**। **द्विरात्रादि**-विकृतिषु यथाप्रकृत्येवानुष्ठानादित्यर्थः। सिद्धान्ते तु द्वितीयस्यान्त्यत्वान्न पत्नीसंयाजान्तत्वमपि तु सकलानुष्ठानमित्यूह इति नासङ्गतिरिति भावः। सूत्रं स्पष्टार्थम्॥

इति द्वादशाहे पत्नीसंयाजान्तत्वाधिकरणम्॥ ८॥

९

**अभ्यासः**—प्रासङ्गिकाधिकरणद्वयसमाप्तौ यत्किञ्चित्प्राचीनमित्येतदपवादेन स्थानधर्मत्वसाधनात्सङ्गतिः। **पञ्चदशेति**। पञ्चदश सामिधेनीरनुब्रूयादिति वाक्येनेत्यर्थः। आकृत्यधिकरणन्यायेन प्रथमाशब्दस्य प्राथम्यमात्रवाचित्वादाह—**लक्षिताया इति**।

प्रवो वाजीयायाः धर्मः तत्कार्यार्थः। ततश्च यत्र तत्रस्था प्रवो वाजीया त्रिरभ्यसितव्या ? उत प्रथमस्थानधर्मः, तत्स्थानगतकार्यप्रयुक्तः। ततश्च प्रवो वाजीयाया अन्यापि या विकृतिषु प्रथमं पठ्यते, साऽप्यूहेन त्रिरभ्यसितव्येति।

तत्र स्त्रीलिङ्गनिर्देशादाद्याऽनेनाभिधीयते।
तस्य एव त्रिरभ्याससम्बन्धोऽत्र विधीयते॥

उच्यते—

श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते।
ऋक् तु लक्षणयोच्येत तस्मात्प्राथम्यधर्मता॥

प्राथम्यैकार्थसमवेतस्त्रिरभ्यासो विधीयते-यत्प्रथममुच्यते तत्त्रिरिति। तच्च प्राथम्यमृगाश्रयत्वेनैव प्राप्तम् 'गुणवचनानाञ्च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ती'ति नित्यानुवादः स्त्रीलिङ्गनिर्देशः। न च प्राथम्यसम्बद्धपदमात्रस्य, पादमात्रस्य वा त्रिरभ्याससम्बन्धसम्भवान्न नित्यानुवादत्वं स्त्रीलिङ्गस्येति मन्तव्यम्। ऋच एव कार्यसमर्थाया वचनस्य प्राप्तत्वात्। 'ताः पञ्चदश सम्पद्यन्त' इति च वादात्। तस्मात्स्थानधर्मः॥

इति त्रिरभ्यासस्य स्थानधर्मताधिकरणम् ॥ ९ ॥

---

'प्रवो वाजेति शब्दवती **प्रवोवाजीया ऋक्तत्कार्यमपूर्वम्**। **यत्र तत्रस्था** यत्किञ्चित्स्थानगता। **तत्स्थानगतेति**। तत्स्थानगताया ऋचो यत्कार्यं तत्प्रयुक्त इत्यर्थः। **तत्रेति**। **अभिधीयते** लक्ष्यते। स्त्रीत्वान्वयसिद्धार्थमित्यर्थः। अयमाशयः। प्रथमास्वरूपे आनर्थक्यादग्निसमिन्धनप्रकाशनद्वारेणापूर्वसाधनं प्रथमाशब्देन लक्षणीयम्। तत्र च मन्त्रान्तरेऽतिप्रसङ्गवारणाय स्त्रीलिङ्गावगतप्रवो वाजा इत्याद्यृक्त्वं विशेषणं न तु प्राथम्यं लक्षणोपक्षीणत्वादिति। **श्रुत्येति**। तथा च शक्त्युपस्थितेन प्राथम्येनैवापूर्वसाधनं विशेषणीयं न तु प्रवोवाजीय ऋक्त्वेन लक्षणा गम्येतेत्याशयः। **प्राथम्यैकार्थेति**। प्राथम्यसमानाधिकरणेत्यर्थः। लिङ्गोपपत्तिमाह **गुणेति**। कार्यसमर्थाया अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशनसमर्थायाः। **ता इति**। सामिधेनांपाञ्चदश्यस्यैकदेशावृत्तावसम्भवादिति भावः। सूत्रं स्पष्टार्थम्॥

इति सामिधेनी त्रिरभ्यासस्य स्थानधर्मताधिकरणम् ॥ ९ ॥

१०

इष्ट्या० दर्शपूर्णमासप्रकरणेऽन्वारम्भणीया आम्नातानाम् 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः, सरस्वत्यै चरुं, सरस्वते चरुमि'ति। सा किं दर्शपूर्णमासावृत्तावावर्तेत ? उत सकृदेवादौ स्यात् ? इति संशयः।

उच्यते—

आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया।
दर्शाद्यङ्गमियं तस्मादावर्तेत प्रयाजवत्॥
आरम्भद्वारकं त्वेतदङ्गं साधारणश्च सः।
तस्य साधारणत्वेन सापि साधारणी भवेत्॥

आरप्स्यमानसंयोगादारम्भाङ्गमिष्टिः, न साक्षाद्दर्शपूर्णमासाङ्गम्। आरम्भश्चेदं मया कर्तव्यमित्यध्यवसायः। स च सर्वप्रयोगसाधारणः। सर्वो ह्यग्नीनाधायैवमध्यवस्यति यावज्जीवं मया दर्शपूर्णमासौ पर्वणि पर्वणि कर्तव्याविति। तस्मादारम्भसाधारण्यात्तदङ्गभूताऽन्वारम्भणीयाऽपि साधारणी न प्रतिप्रयोगमावर्तनीयेति।

एवं वृत्तिकारमतेनाधिकरणं व्याख्याय तत्रापरितोषाद् व्याख्यान्तरं भाष्यकारेण कृतम्। कस्य हेतोरपरितोषः ? नाध्यवसायवचनोऽयमारम्भशब्दः, प्रथमप्रवृत्तिवाची हि लोके प्रसिद्धः। यद्यपि चाध्यवसाय-

---

१०

इष्ट्यावृत्तौ० त्रिरभ्यासस्य प्रथमस्थानधर्मत्वोक्तौ तत्प्रसङ्गादारम्भणीयायाः प्राथम्यप्रयुक्तत्वचिन्तेति सङ्गतिः। आवृत्तौ हीति। असंशया सन्देहरहिता। नन्वारम्भाङ्गमियं न देशाङ्गमत आह—दर्शेति। दर्शपूर्णमासारम्भोद्देशेन विधौ विशिष्टोद्देशकृतवाक्यभेदापत्तेर्दर्शाद्यङ्गत्वेनैव विधिः। आरम्भस्तु प्राप्त एवानूद्यत इत्याशयः। आरम्भोद्देशेनैवेष्टिविधिः। सा च प्रकरणात्तद्द्वारेण दर्शाङ्गमिति दर्शपूर्णमासपदं प्रकरणप्राप्तानुवादकं न त्वारम्भविशेषणपरमित्याशयेन व्याचष्टे आरप्स्यमानेति। क्रियार्थायां क्रियायां लृटो विधानादिति भावः। साधारण्यमुपपादयति। सर्वो हीति वृत्तिकारः उपवर्षाख्यः प्राचीनः। अभ्युपेत्यापि दोषमाह—यद्यपि चेति तथापीत्यस्य न सिद्धान्त-

वाची स्यात्, तथापि यद्यदा कार्यमुपस्थितं तस्यैव तदाऽध्यवसायः। न च यावज्जीविकाः प्रयोगा युगपदुपस्थिताः। न ह्ययमेकः प्रयोगोऽभ्यस्तरूपः, पर्वकालीनन्तु जीवनं दर्शानुष्ठाने निमित्तम्। तस्मिन्नागते नैमित्तिकं समाप्तं कृत्वा चरितार्थे पुरुषे पुनस्तादृशनिमित्तवशात् नैमित्तिकमापतितमिति पुनः क्रियते। यथैकस्मिन्पुत्रे जाते वैश्वानरीं निरूप्य पुत्रान्तरजन्मन्यपि पुनर्निर्वपति, तादृगेतत्। तस्मात्प्रतिप्रयोगमध्यवसायभेदात्तदङ्गमारम्भणीयाप्यावर्तेतेति तत्सिद्धान्तसिद्धिरिति।

तस्मादेवं व्यवस्थायते—किं प्रथमस्याग्न्यन्वाधानात्मकस्य पदार्थस्याङ्गमियम्? उत दर्शपूर्णमासावारप्स्यमाणस्य प्रथमं प्रवर्तमानस्य पुरुषस्याङ्गमिति? तत्र—

पुरुषार्थत्वपक्षे हि फलक्लृप्तिः प्रसज्यते।
तेनान्वाधानमेषः स्यात्स ह्यारम्भोऽनयोर्यतः॥
तस्याऽऽवृत्तौ तदङ्गत्वादेषाप्याऽऽवृत्तिमश्नुते।
प्रधानवशवर्तित्वादेवं प्राप्तेऽभिधीयते॥
न खल्वारम्भशब्देन पदार्थः कश्चिदुच्यते।
यदेव ह्यप्रवृत्तस्य कर्तुराद्यं प्रवर्तनम्॥
तत्रायं वर्तते शब्दस्तद्योगात्तु पदार्थधीः।
आरप्स्यमानशब्दस्तत्कर्तुः श्रुत्यैव वाचकः॥
लृट्प्रत्ययोऽपि श्रुत्यैव तदर्थस्याभिधायकः।
आद्या प्रवृत्तिरेकैव बह्वयो नैकस्य कर्मणः॥

प्रथमप्रवृत्तिविषयतया ह्यन्वाधानमनेन प्रतिपाद्यते, न श्रुत्या। न च श्रुतिसम्भवे लक्षणा युक्ता। तस्मान्नाग्न्यन्वाधानेन सम्बन्धः।

---

सिद्धिरित्यग्रेतनेनान्वयः उपस्थिताः सङ्कल्पविषयाः। ननु यावज्जीवाभ्यस्तकर्मविधानात्तादृशसङ्कल्पविषयता स्यादत आह—न हीति। यावज्जीवाभ्यस्तकर्मविधेर्द्वितीये निरासादिति भावः। निमित्तपरस्य यावज्जीवपदस्य पौर्णमास्यादिवाक्यैकवाक्यतालभ्यमर्थमाह—पर्वेति। एवञ्च प्रयोगभेदान्न सङ्कल्पसाधारण्यमित्याह—तस्मादिति। किमिति।

दर्शारम्भकर्त्तुः पुरुषस्य शानचाऽभिहितस्य संस्कारिकेयम्, आरम्भार्थतया लृट्प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहितेनेयं प्रतिपाद्यते। अतो न पुरुषार्थत्वेऽपि फलकल्पना। न चैकस्य कर्मणो बह्वयः प्रथमप्रवृत्तयः सम्भवन्ति, किन्त्वेकैव। ननु द्वितीयादीनापि प्रयोगानसावारभत एव? सत्यम् प्रयोगानारभते न तु दर्शपूर्णमासावारभते। दर्शपूर्णमासारम्भाङ्गं त्वियम्। प्रथमप्रवृत्तिश्चारम्भः। न च द्वितीयादिप्रयुञ्जानः प्रथमं प्रयुङ्क्ते इति शक्यते वक्तुम्। तस्मादारम्भाङ्गत्वात् तस्य चावृत्त्यभावादारम्भणीया नावर्तते ॥

इत्यन्वारम्भेष्ट्यधिकरणम् ॥ १० ॥

११

अर्थाभिधान० दर्शपूर्णमासयोर्निर्वापमन्त्रः 'देवस्य त्वा सवितुः प्रसवे अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी'ति। तत्र सवित्रश्विपूषशब्दाः किं समवेतदेवताप्रकाशनार्थाः, ततश्च विकृतावूहितव्याः? उतासमवेतवचना निर्वापविशेषणमात्रार्था नोहितव्याः? इति।

तत्र दृष्टार्थतालाभाद्देवतावाचिता भवेत्।
निर्वापस्य प्रशंसार्थाः सन्तोऽदृष्टार्थतामियुः ॥

---

एतद्धेतुसंशयस्त्वारम्भशब्दः प्रथमानुष्ठीयमानाङ्गवचन उताद्यप्रवर्त्तनवचन इति ज्ञेयः। **अनयोः** दर्शपूर्णमासयोः। **तस्य** अन्वाधानस्य। **श्रुत्यैव** शानच्प्रत्ययश्रुत्यैव। तथा चारम्भकर्तृसंस्कारद्वारेण दर्शाङ्गमित्यर्थः। **एकस्येत्यनेन** प्रयोगभेदेऽपि कर्मैकत्वान्न तदारम्भभेद इति सूचितम्। **अनेन** आरम्भशब्देन ॥

**इत्यन्वारम्भेष्ट्यधिकरणम्** ॥ १० ॥

११

**अर्थाभिधान०** ऊहोपोद्घातसमाप्तौ ऊहः चिन्त्यत इति सङ्गतिः। **असमवेतेति**। कर्माङ्गाप्रकाशका इत्यर्थः। **अदृष्टार्थतामिति**। प्रशंसाया दृष्टप्रयोजनाभावादिति भावः।

सवित्रादिपदैस्तास्मादग्न्यादिरभिधीयते ।
अग्निना वा विकल्प्येत सविता मान्त्रवर्णिकः ॥
उत्पत्तौ तद्धितोक्तेन न मन्त्रोक्तो विकल्प्यते ।
वैषम्यान्न सवित्रादिपदमग्नेश्च वाचकम् ॥
मन्त्रवाक्यानि चैतानि भिद्येरन् प्रतिदैवतम् ।
जुष्टनिर्वापशब्दौ च भतेजामनुषङ्गिताम् ॥
सर्वश्च निर्वपाम्यन्त एकमन्त्रः प्रतीयते ।
जुष्टादिः सकृदाम्नातो न सहेतानुषञ्जनम् ॥

तस्मान्निर्वापमेवैते प्ररोचयितुमनुष्ठानकाले प्रशंसितुं प्रकाशयन्तीति नोहितव्याः ॥

इति निर्वापमन्त्रे सवित्रादिपदानामनूहाधिकरणम् ॥ ११ ॥

---

**अभिधीयत इति** । सूत्र इति सवितेत्यादियोगेनेत्यर्थः । सवित्रादिपदानां रूढत्वादाह **अग्निनावेति** । सिद्धान्ती दूषयति— **उत्पत्ताविति** । उत्पत्तिवाक्य इत्यर्थः । **तद्धितोक्तेन** तद्धितोक्तदेवतात्वेनाग्निना । **वैषम्यादिति** पूर्वान्वितम् । प्रथमावगतत्वेन प्राबल्यादित्यर्थः । पक्षद्वयसाधारणं दूषणमाह—**मन्त्रेति** । सावित्रादि पदानामग्निपरत्वेऽपि स्वशब्दाभिहितस्याग्नेः पुनः प्रकारान्तरेणाभिधानानपेक्षणान्मन्त्रभेद आवश्यकः । तथा च देवस्य त्वा सवितुः प्रसवे जुष्टं निर्वपामि अश्विनोर्बाहुभ्यां त्वा जुष्टं निर्वपामि पूष्णो हस्ताभ्यां त्वा जुष्टं निर्वपामि 'अग्नये त्वा जुष्टं निर्वपामीति चत्वारो मन्त्राः स्युरित्यर्थः। चशब्देन च त्वाशब्दस्याप्यनुषङ्गः सङ्गृहीतः। इष्टापत्तिमाशङ्क्य बाधकमाह—**सर्वश्चेति** । जुष्टादिशब्दः प्रशंसितुं स्तोतुम् । तत्फलञ्च प्ररोचयितुमिति दृष्टार्थतैवेति भावः । सूत्रार्थस्तु-अर्थाभिधानरूपलिङ्गसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्र मन्त्रे ऽचोदितार्थकं सवित्रादिपदमूहमप्राप्तं चोदितस्यैव मन्त्रेण मुख्यतयाभिधानादिति ॥

इति निर्वापमन्त्रे सवित्रादिपदानामनूहाधिकरणम् ॥ ११ ॥

१२

गुणशब्द० तस्मिन्नेव मन्त्रे 'अग्नये जुष्टं निर्वपामी' त्यग्निशब्दोऽपि किमसमवेतवचनो नोहितव्यः ? उत समवेतवचन ऊहितव्यः ? इति ।

तत्रायं समवेतोऽग्निरस्मिन् कर्मणि यद्यपि ।
मन्त्रे त्वत्राग्निशब्दो न समवेताभिधायकः ॥

जुष्टमिति भूतकालनिर्देशादग्निना यत्सेवितं तदुच्यते । न च निर्वापवेलायामग्निना सेवितं द्रव्यम् । तस्माज्जुष्टशब्दस्तावदसमवेतवचनः । तद्विशेषणश्चाग्निपदम् । अतोऽसमवेतवचनं सवित्रादिपदवत्प्रशंसार्थं कीर्तितमित्यनूहः । उच्यते—

नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते ।
निर्वापकरणात्त्वत्र कीर्त्यते जुष्टभावना ॥

नायमर्थः—यज्जुष्टम् तस्य निर्वापं करोमीति । किं तर्हि निर्वापेणाग्नये जुष्टं करोमीति । यथा जुष्टं भवति तथा करोमीत्यर्थः । तस्मात्समवेतवचनत्वादग्निशब्दस्योहः ॥

---

१२

**गुणशब्दः०** पूर्वन्यायेनाग्निशब्दस्याप्यनूहप्राप्तौ तदपवादात्सङ्गतिरिति सूचयन्नाह—**तस्मिन्नेवेति** । मन्त्रे कथं न समवेतवचनस्तदुपपादयति **जुष्टमितीति** । यद्यप्यग्निनेति तृतीया न श्रूयते तथापि तादर्थ्ये चतुर्थ्या अग्न्यर्थं यज्जुष्टमित्यवगतावर्थादग्निनेति प्रतीयत इत्यर्थः । सम्प्रदानचतुर्थीत्वे हि कारकत्वादग्नेर्निर्वापान्वयान्नजुष्टेनान्वय इति नासमवेताभिधानं स्यात्, नतु सास्ति ददातियोगाभावादिति भावः । **निर्वापकरणेति** । निर्वापः करणं यस्याः सेत्यर्थः । तथा च निर्वापेण जुष्टं करोमीति मन्त्रार्थ इत्यर्थः । **जुष्टमिति** क्रियाविशेषणम् । 'निष्ठा त्वाशंसाया भूतवच्चे'त्यनुशासनादाशंसायां न तु भूत इति भावः । सूत्रार्थस्तु-जुष्टगुणम्तीऽग्निशब्दोऽपितथा नोह्य इति ॥

इत्यग्निशब्दोहाधिकरणम् ॥ १२ ॥

## वर्णकान्तरम्

एवं वा—यस्तु मुख्यवृत्त्या समवेतं न वदति, यथा 'धान्यमसि धिनुहि देवानि'ति तण्डुलेषु धान्यशब्दस्सतुषद्रव्यवचनः, स किमसमवेतवचनत्वानूह्यः ? उतोह्यः ? इति संशये, समवेतप्रकाशनासामर्थ्याददृष्टार्थोऽयम् । तस्मादनूह्यः ।

लक्षणया तु प्रकृतिवदुपचाराद्विकृतिं प्रकाशयन्नादृष्टार्थः कल्पयितुं न्याय्यः । तस्मात्तण्डुलानेव प्रकृतिशब्देन 'शालयो भुज्यन्त' इतिवत्प्रकाशयतीति तरसमये हविषि शाक्त्यानामयने 'मांसमसी' त्यूहितव्यम् । आर्थिकी च प्रकृतौ धान्यशब्दाम्नानाल्लक्षणा । न तु सैव विव-

---

## वर्णकान्तरम्

**एवं वा०** सूत्रे गुणशब्दपदस्य गौणशब्दपरतया विषयान्तरबोधनार्थं तद्वर्णकान्तरमिति सूचयन्नाह—**यस्त्विति** । किन्तु गौण्येति शेषः । 'धान्यमसि धिनुहि देवानिति दृषदि तण्डुलानावपती'ति विनियोगात्तण्डुलेषु प्रयुक्तो धान्यशब्द इत्यर्थः । तण्डुलानामनुख्यत्वप्रदर्शनाय सतुषेत्युक्तम् । व्रीहिरूपेत्यर्थः । धान्यं व्रीहिरित्यादित्रिकाण्डीस्मरणात् । पूर्वपक्षमाह **समवेतेति** । न च लक्षणया सामर्थ्यमस्तीति वाच्यम् । अदृष्टार्थतयाम्नानोपपत्तौ लक्षणायां प्रमाणाभावादित्याशयः । सिद्धान्तमाह—**लक्षणयेति** । एतस्यैव विवरणं **प्रकृतिवदिति** । इति करणेन तण्डुलावापे विनियोगस्यैव लक्षणातात्पर्यग्राहकत्वात् । अतएवेषेत्वेति छिनत्तीति विनियोगाद्यथा तव नादृष्टार्थतैवमत्रापीति भावः । ऊहस्थलमाह—**तरसेति** । षट्त्रिंशत्संवत्सरे शाक्यानामयनाख्ये सत्रे श्रुतम् 'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति स तत्र यान् मृगान् हन्ति तेषां तरसमयाः सवनीयाः पुरोडाशा भवन्ती'ति तत्रेत्यर्थः । ननु प्रकृतौ धान्यशब्देन प्रकृतिवाचिना विकृतिभूततण्डुलप्रकाशनवदिहापि प्रकृतिवाचकमृगशब्देनैव विकृतिभूतमांसप्रकाशनं युक्तम् । धान्यशब्दाम्नानबलेन लक्षणया विकृतिप्रकाशनस्यैव शास्त्रार्थत्वावगमादतो मृगोऽसीत्यूह एव युक्त इत्याशङ्क्याह **आर्थिकी चेति** । धान्यशब्दाम्नानाद्धि तद्युक्तमन्त्रस्याङ्गत्वमित्येतावन्मात्रम् । लक्षणा तु विनियोगवशादार्थिकी न शास्त्रार्थः । न च प्रकृतौ क्लृप्तधान्यविकृतित्वरूपा लक्षणा

क्षिता विकृतौ लक्षणाकारणाभावान्मुख्य एव मांसशब्दः प्रयोक्तव्यः, न मृगशब्दः ॥

इति वर्णकान्तरम् ॥ १२ ॥

१३

'चोदिते॰ दर्शपूर्णमासयोरिडानिगदे श्रुतम् 'उपहूता मनुष्याः ये यज्ञपतिं वर्धानि'ति । किमेतत् यज्ञपतिवृद्धिप्रकाशनेन प्रोत्साहकरणेन तत्संस्कारार्थं सदनेकयजमानकेषु कर्मसूहितव्यम् ? उतेडास्तुत्यर्थो यज्ञपतिशब्दो नोहितव्यः ? इति ।

इडामन्त्रैकवाक्यत्वादिडास्तुत्यर्थता भवेत् ।
स्वामिवृद्ध्यर्थता त्वस्य सामर्थ्येनावगम्यते ॥
वाक्याच्च बलवल्लिङ्गं दृष्टं चेह प्रयोजनम् ।
उत्साहकरणात्स्तुत्यामदृष्टार्थत्वमापतेत् ॥

---

वैकृततण्डुलेष्विवात्र सम्भवतीति तन्निवृत्तौ वाचकमांसपदोह एव युक्तो न तु लाक्षणिकमृगपदोह इत्यर्थः । इदञ्च मांसस्याप्यधिवापोऽस्तीति कृत्वाचिन्तयोक्तम् । मांसे पेषणाभावात्तु नाधिवापतन्मन्त्रौ स्त इति बोध्यम् ॥

इति वर्णकान्तरम् ॥ १२ ॥

१३

**चोदिते तु॰** लाक्षणिकस्यापि धान्यशब्दस्योहे मुख्यार्थयज्ञपतिशब्दस्य सुतरां तत्प्रसक्तावपवादः क्रियत इति सङ्गतिः । **इडानिगदः** इडोपहूतेत्यादिरिडोपाह्वानमन्त्रः । अत्र 'दैव्या अध्वर्यवे उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये च यज्ञपतिं वर्द्धानि'ति मन्त्रपाठेऽपि 'दैव्या अध्वर्यव उपहूता' इत्यस्य'य इमं यज्ञमवानि'त्यनेनान्वयः । 'उपहूता मनुष्या' इत्यस्य च ये यज्ञपतिं वर्धानित्य'नेनेति वाक्यभेदाभिप्रायेणैवमुदाहृतम् । **एतदिति** सामान्याभिप्रायो नपुंसकनिर्देशः । 'स्योनं त' इत्यादिवल्लिङ्गेन वाक्यबाधात्पूर्वपक्षमाह—**इडेति** । **सामर्थ्येन** लिङ्गेन । **उत्साहेत्यादेः** पूर्वेणान्वयः **अदृष्टार्थत्वमिति** । 'मानवी घृतपदी'त्यादिभिरेव प्ररोचनार्थस्तुतिसिद्धेरस्यास्तुतेरदृष्टार्थतैव

यजमानेषु बहुषु सर्वसंस्कारसिद्धये ।
ऊहो यज्ञपतीन्वर्द्धानित्येवं प्राप्त उच्यते ॥
प्रत्यक्षादेव वचनादिडोपह्वानशेषता ।
कृत्स्नस्य निगदस्योक्ता तन्मध्यापतितं ततः ॥
न पृथग् भवितुं शक्यमतः स्तुत्यर्थता वरम् ।
वृद्धिप्रकाशने कल्प्यं लिङ्गेन विनियोजनम् ॥
यच्छब्देन च पारार्थ्यं वृद्धेः श्रुत्याऽभिधीयते ।
लिङ्गादपि ततो वृद्धेर्न स्वार्थेन प्रकाशनम् ॥

**सत्रेषु चैकयजमानवृद्धिप्रकाशनेनेडास्तुतिसिद्धेर्नोहः । यत्र पुनर्यजमानस्य प्राधान्यं न पारार्थ्यम्, यथा सूक्तवाके 'आयुराशास्तेऽयं यजमानः' इति, तत्र भवत्येवोहः । तदिदमुक्तं 'विकारस्तत्प्रधाने स्यादि'ति । तदिदं पूर्वस्य परार्थग्रहणस्य प्रत्युदाहरणार्थं सूत्रम् ॥**

**अथवाऽधिकरणान्तरम् । सूक्तवाके 'अयं यजमान आयुराशास्ते' इति यजमानशब्दः किं सत्रेषूहितव्यः ? न ? इति । प्रहरणाङ्गत्वात्सूक्तवाकस्य तद्गतमायुरादिकीर्तनं यज्ञपतिवृद्धिवत्स्तुत्यर्थम्, अतो नोहः ।**

---

स्यादिति भावः । **प्रत्यक्षादेवेति** । 'इडोपहूतेतीडामुपह्वयते' इति वचनादित्यर्थः । 'स्योनन्त'इत्यादौ तु प्रत्यक्षविनियोगाभावाल्लैङ्गिको भेदेन विनियोग इति वैषम्यमिति भावः । पूर्वपक्षे कल्पनागौरवमाह—**वृद्धीति** । न केवलं विनियोजकश्रुतिकल्पनमात्रमपि तु वृद्धेरपि मन्त्रलिङ्गाद्विधिः कल्पनीय इत्यपि ज्ञेयम् । लिङ्गेनापि वृद्धेर्न प्राधान्येन प्रकाश्यत्वावगम इत्याह—**यच्छब्देन चेति** । ये यज्ञपतिं वर्धान्वर्धयेयुस्ते मनुष्या उपहूता इतीडोपाह्वनार्थं मनुष्योपाह्वान विशेषणं वृद्धिस्तद्विशेषणं यज्ञपतिरित्यर्थः । **स्वार्थेन** स्वप्रधानतया । फलमाह—**सत्रेषु चेति** । सूत्रार्थस्तु-चोदिते आम्नाते यज्ञपतिशब्दे पदार्थत्वादिडास्तुत्यर्थत्वादविकारोऽनूहः स्याद्विधिवत् 'शुक्रं यजमानोऽन्वारभत' इति यजमानविधौ यथैकेनापि तत्सिद्धिरेवमिहापीति ।

**इति यज्ञपतिशब्दस्यानूहाधिकरणम् ।**

भाष्यानुरोधादधिकरणान्तरत्वेन व्याचष्टे—**अथवेति** । पूर्वपक्षमाह—**प्रहरणेति** । यद्यपि सूक्तवाकोक्तदेवतासम्बधात्प्रहरणं याग इति तृतीय उक्तम्, तथापि तस्य पदार्थ-

उच्यते—सर्वाण्येतान्यायुरादीनि श्रुतिविनियुक्तसकलसूक्तवाककरणत्वान्यथानुपपत्त्या प्रस्तरप्रहरणस्य फलानि कल्प्यन्ते। क्रियाम् तत्सम्बन्धि वा प्रकाशयतो मन्त्रस्य करणताऽवकल्पते। तस्मात्प्रहरणसाध्यं यजमानफलप्रकाशनमस्य कार्यम्। सत्रेषु यस्यैव यजमानस्य फलं नोच्यते, तस्यैव न सूक्तवाकः करणं स्यात्, न च फलं प्राप्नुयात्। तस्मादूहः॥

इति भाष्यमतेन यजमानशब्दस्योहाधिकरणम् ॥१३॥

१४

असंयोगा०—ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगदः 'इन्द्र आगच्छ, हरिव आगच्छे' त्यादिः। सोऽग्निष्टुत्यतिदिष्टः। तत्र 'अग्नेयी सुब्रह्मण्ये'ति वचनादिन्द्रपदस्थानेऽग्निपदं निक्षिप्यते। हरिवदा-

---

त्वान्न फलाकाङ्क्षेत्यायुरादिकीर्त्तनं स्तुत्यर्थमिति भावः। **सकलेति**। कृत्स्नस्य हि करणत्वं कृत्स्नस्य प्रहरणप्रकाशकत्वं विनानुपपन्नम्। न च साक्षात्तत्सम्भवतीति विशेषणप्रकाशनद्वारेण वाच्यमतो देवतावत्फलमपि प्रहरणान्वयीत्यर्थः। **मन्त्रस्येति**। शब्दस्य साक्षादुत्पादकत्वासम्भवेन प्रकाशनद्वारा तत्पर्यवसानादिति भावः। नन्वेवमप्यायुराशासने कर्तृत्वेन गुणभावादेकयजमानकर्तृकत्वेन प्रकाशनेऽपि सर्वेषामायुरादिफलोत्पत्तिसम्भवात्कथमूह इत्यत आह—**सत्रेष्विति**। आयुरादीनां फलत्वेन प्रकाशनस्य यजमानप्राधान्यं विनाऽयोगात्फलितया प्राधान्येनैव यजमानः प्रकाशनीय इति य एव तथा न प्रकाश्यते तदीयप्रहरणे सूक्तवाकस्याकरणत्वमिति वैगुण्यान्न फलं स्यादिति भावः। **तस्यैव** तदीयप्रहरणस्यैव।

इति भाष्यमतेन यजमानशब्दस्योहाधिकरणम् ॥ १३ ॥

१४

**असंयोगात्०** यजमानपदवद्धरिवदादीनामूहप्रसक्तौ तदपवादात्सङ्गतिः। **देवतेति**। शुक्रमन्थिग्रहद्वयसहितचमससाध्यसवनमुखीययागाभ्यासदेवताभूतेन्द्रप्रकाशनार्थ इत्यर्थः। **अग्निष्टुति** 'त्रिवृदग्निष्टुदग्निष्टोमः' इति विहितेऽग्निष्टुत्संज्ञके याग इत्यर्थः। **आग्नेयीति**। एतच्च वचनं 'आग्नेया ग्रहा भवन्ति', इत्यग्निष्टुत्प्रकरण गत-

दिशब्दा अपि किमूहितव्याः ? नेति संशयः। तदर्थं च किं समवेतवचनाः, नेति ? तत्र 'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी' इत्यादिभिरेते गुणा इन्द्रे सन्तीति गम्यते। सन्ति चेत्स्वगुणद्वारेणेन्द्रमेव प्रकाशयितुममीषामुच्चारणं दृष्टार्थं भवति। तेनाग्निरपि स्वगुणद्वारेण प्रकाश्यत इति हरिवदादिशब्दानपोद्धृत्य रोहिताश्वादिशब्दा ऊहितव्या इति प्राप्ते, ब्रूमः—

सत्स्वेतेषु गुणेष्वेवं तत्सद्भावे तु न प्रमा।
वाक्यशेषास्त्वदुक्ता ये स्तुतिमात्रपरा हि ते॥

तस्माददृष्टार्थमेवाविद्यमानैरेव गुणैः सम्बध्येन्द्रः प्रकाश्यत इति, अग्निरपि तैरेव गुणैः सम्बद्धव्य इत्यनूहः॥

## वर्णकान्तरम्

एवं वा। अथेदमन्यदुदाह्रियते। ज्योतिष्टोमे एकहायन्या मन्त्रः 'तस्यै शृतं, तस्यै दधी'त्यादिः। साद्यस्क्रे त्रिवत्सेऽतिदिष्टः किमूहितव्यः, नेति संशये ? यद्यप्येकहायन्यवस्थायां न विद्यन्ते शृतादयः, तथापि

---

वचनेन ग्रहयागाभ्यासेष्वेवाग्निदैवत्यत्वविधानात्सवनमुखीयचमसयागेष्विन्द्रस्यैव देवतात्वेन तत्र सुब्रह्मण्याया अनूहेनैव प्राप्ताया निवृत्त्यर्थम्। तेन शुक्रमन्थिसंज्ञकग्रहद्वयसाध्यसवनमुखीययागाभ्यासयोरेव सुब्रह्मण्येति सिध्यतीति ज्ञेयम्। **पूर्वेति**। हरी- इत्यनन्तरं 'ताभ्यां ह्येष सर्वं हरतीति शेषो ज्ञेयः। **हरिवदादीति**। हरिवन्निति सम्बुद्धौ। नकारस्य 'मतुवसो रु सम्बुद्धौ छन्दसी'ति विधानादादेशिन इह निर्देशः। आदिना 'मेधातिथेर्मेष कौशिके'त्यादिसङ्ग्रहः। एवञ्च 'अग्न आगच्छ रोहित वः बृहद्भानो' इत्याद्यूह इत्यर्थः। **सम्बध्य** आरोपेणेत्यर्थः। एवञ्चादृष्टार्थत्वान्नोह इति भावः। सूत्रार्थस्तु-हरिवदादीनामसम्बन्धादर्थेष्विन्द्रादिषु तद्विशिष्टं हरिवदादिविशिष्टमेवाग्न्यादिकमपि प्रतीयेतेति॥

## इति वर्णकान्तरम्

भाष्योक्तवर्णकान्तरमाह— **अथेदमिति**। अत्राग्निष्टुति सुब्रह्मण्यानिगदस्योहितस्यैव पाठोऽस्तीति पूर्ववर्णकस्य कृत्वाचिन्तारूपत्वेनास्वरसविषयत्वं ज्ञेयम्। **तस्यै इति**। तस्या एकहायन्या इत्यर्थः। **साद्यस्क्रे** यज्ञे। **त्रिवत्से** 'त्रिवत्सः

भावित्वेनापि तावत्सम्भवद्भिः स्वगुणैरेकहायन्यैव प्रकाश्यते, दृष्टार्थत्वात् । त्रिवत्से तु अभावादूहः ।

नैतदेवम्, कर्माङ्गभूतायामेकहायन्यवस्थायां तावन्न सन्त्येव । भावित्वमपि नैकान्तिकम्, मरणसम्भवात् । अतो यथाकथंचित्प्ररोचनार्थं कीर्त्यन्ते । तावच्च साण्डेऽपि सम्भवति, साण्डादपि या गौर्जनिष्यते, तस्या एतेऽवाप्यमानाः साण्डादेवावाप्ता भवन्तीति । तस्मादनूहः ॥

इति वर्णकसहितं सुब्रह्मण्यानिगदे हरिवदादि-
शब्दानामनूहाधिकरणम् ॥ १४ ॥

१५

लिङ्ग० ज्योतिष्टोमे सवनीयाः पशवः 'आग्नेयमजमग्निष्टोम आलभेत, ऐन्द्राग्नमुक्थ्ये द्वितीयम् ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषीं चतुर्थीमतिरात्रे, इति । तत्र पशुधर्मा यदा सर्वेषां साधारणाः तदाकिमध्रिगुवचनं मेष्यां भवति ? उत नेति ? संशये, प्रकरणाविशेषात् 'प्रास्मा अग्निं भरते'ति पुंलिङ्गस्यास्मैशब्दस्य नियतलिङ्ग-

---

साण्डः सोमक्रयणः' इत्येकहायनीस्थाने विहिते इत्यर्थः । त्रिवत्सः त्रिवर्षः । अत्र सिद्धान्तेऽपि तस्येति पुंल्लिगोहोऽस्त्येव, परन्तु शृतादीनामनूह इति ज्ञेयम् । ऊह इति । त्रिवत्सगतगुणानां तस्य शुक्रं तस्य बलमित्येवमूह इत्यर्थः । तावच्च प्ररोचनामात्रञ्च । तस्मादिति । असमवेतार्थकत्वादित्यर्थः । एवञ्च शृतादीनां हरिवदादिवैषम्याशङ्कोत्थानात्सङ्गतिर्ज्ञेया । शृतादीनामुक्तरीत्या सद्भावादिति ॥

इति हरिवदादीनामनूहाधिकरणम् ॥ १४ ॥

१५

लिंग० पूर्वत्र लिङ्गोहवदिहापि प्रसक्तस्याक्षिप्यसमाधानात्सङ्गतिः । ननु पश्वन्तराणामग्नीषोमीयविकृतित्वादतिदेशेन प्राप्तमध्रिगुवचनं मेष्यामपि लिङ्गोहेन भवत्येवेति कथमयं विचारस्तत्राह पशुधर्मा इति । अध्रिगुः देवानां शमिता । 'अध्रिगुश्चापापश्चोभौ देवानां शमितारावि'ति श्रुतेः । तत्सम्बोधनेन प्रवृत्तः 'प्रास्मा अग्निं भरते'ति

पशुशब्दाभिधेयपशुत्वाभिप्रायेण प्रास्मै पशव इत्येवं स्त्रियामप्युपपत्तेर्लिङ्ग विरोधाभावात्, तस्यामपि स्यादध्रिगुवचनमिति प्राप्ते, अभिधीयते—

पशुशब्दश्रुतावेवं भवेन्न त्विह स श्रुतः ।
तस्मात्प्रयोगकाले यदपरोक्षतया स्थितम् ॥
द्रव्यं तत्र प्रयुक्तोऽयं पुंल्लिङ्गं वदितुं क्षमः ।
न स्त्रीद्रव्यमतो मेष्यामशक्तेर्न प्रवर्त्तते ॥

तेन सामानविध्यपूर्वपक्षेऽध्रिगोर्मेष्यामप्रवृत्तिः, सिद्धान्ते त्वग्नीषोमीयार्थत्वाद्धर्माणामतिदेशेन पश्वन्तरगमनादूहेन प्रवृत्तिः ॥

इति मेषीयागेऽध्रिगुवचनस्यानूहाधिकरणम् ॥ १५ ॥

१६

आम्नाता० साम्नामिदानीमूहमारिप्सिष्यन् तदुपोद्घातं चिन्तयति । तानि ह्यक्षरान्तरेषु समाम्नातानि अक्षरान्तरेषूह्यन्ते । तत्रेह गिरापदगीतेरिरापदस्थानापत्त्या प्राप्तिं वक्तुं स्थानापत्तिमेव चिन्तयति । ज्योतिष्टोमे यज्ञायज्ञीये श्रूयते 'न गिरा गिरेति ब्रूयात् ऐरं कृत्वोद्गेयमि'ति किमिरा-

---

प्रेषोऽध्रिगुवचनपदार्थः । तथा च सामानविध्यं कृत्वाचिन्त्येयमित्यर्थः । अयं अस्मा इतीदं शब्दः । एवञ्च तृतीयाध्यायाधिकरणपूर्वपक्षप्रयोजनकथनमिदमित्याह-तेनेति । सूत्रार्थस्तु समानविधानेषु पशुषु सत्सु सारस्वतीमेष्यध्रिगुवचनमप्राप्ता स्त्रीत्वादिति ॥

इति मेषीयागेऽध्रिगुवचनस्यानूहाधिकरणम् ॥ १५ ॥

१६

आम्नातात्० सङ्गतिमाह-साम्नामिति । इदानीं तदुपोद्घातं चिंतयतीत्यन्वयः । 'सामप्रदेशे विकार' इत्युत्तरपादगतसूत्रमारभ्य 'सामोहो वक्ष्यते' इत्येतत्पर्यन्तमुपोद्घात इत्यर्थः । प्रकृताधिकरणस्योपोद्घातत्वमुपपादयति तानि हीति । तथा चोहोपयोगिना प्राप्तिरुतराधिकरणे तदुपयोगितया च स्थानापत्तिरत्रोच्यत इत्यर्थः । यज्ञायज्ञीय इति । 'यज्ञायज्ञा वो अग्नये गिरा गिराच दक्षसे' इत्यस्यामृच्युत्पन्नमग्निष्टोम साम, तदवान्तरप्रकरण इत्यर्थः । ननु 'ऐरं कृत्वोद्गेयम्' इत्यनेनाग्निष्टोमस्तोत्रापूर्व-

पदस्य गिरापदस्थानापत्तिः पाक्षिकी गिरापदम् इरापदं वा प्रयोक्तव्यम्? उत नियता स्थानापत्तिः इरापदमेव प्रयोक्तव्यम्? इति।

तत्रेरापदमात्रं वचनेन विधीयते, नोद्गानसम्बन्धः स्तोत्रसम्बन्धो वा। प्रकरणात्तु स्तोत्राङ्गता भवति। तदङ्गभूतस्य च तत्साधनभूतयज्ञायज्ञीयगानसम्बन्धः प्राप्त एवानूद्यते। ततश्च काल्पनिकमेव स्तोत्राङ्गत्वम् गानसम्बन्धश्च गिरापदस्यापि चास्त्येव काल्पनिकमङ्गत्वमिति, अविशेषादुभयोर्विकल्पः।

नैतदेवम्। इरापदस्य हि प्रकरणसनाथया श्रुत्याऽग्निष्टोमस्तोत्रसाधनभूतोद्गानसम्बन्धित्वेन विधीयमानस्य श्रुत्या गानसम्बन्धः, प्रकरणाच्च स्तोत्राङ्गत्वम्। गिरापदस्य तु प्रगाथैकवाक्यतया गानसम्बन्धः स्यात्, क्रमाच्च स्तोत्राङ्गत्वम्। स्तोत्रक्रमेण हि ज्योतिष्टोमप्रकरणे पठ्यमानासु ऋक्षु यज्ञायज्ञीयप्रगाथोऽग्निष्टोमस्तोत्रक्रमे पठ्यत इति, तदेकदेशस्य गिरापदस्यापि क्रमात्तदङ्गत्वं क्रमाच्च प्रकरणं बलीयः। श्रुतिश्च वाक्यात् बलीयसी।

अपि च गिरापदस्याम्नानमात्रं न विधिः। इरापदन्तु प्रत्यक्षविहितमतोऽपि बलवत्। ननु च 'यज्ञायज्ञीयेन स्तुवीते' ति प्रत्यक्षमेव यज्ञायज्ञीयं

---

साधनोद्गानोद्देशेनेरापदविधानात्तस्य गानस्तोत्रोभयसम्बन्धप्रतीतिर्गिरापदस्य तु कल्प्येति तुल्यबलत्वाभावात्कथं विकल्पकोटिरतस्तदुपपादनपूर्वकं पूर्वपक्षमाह—**तत्रेति**। कथं तर्हि उद्गायेदित्यनुवादः कथं वा इरापदविधेरर्थवत्त्वं तत्राह—**प्रकरणात्त्विति**। स्तोत्रसम्बधादेव गानसम्बधोऽपीत्याह—**तदङ्गेति**। 'यज्ञायज्ञीयेन स्तुवीतेति' स्तोत्रसाधनत्वं साम्नोऽवगतम्। तच्च स्तोत्रसाधन ऋगभिव्यक्तिरूपदृष्टद्वारेणैवेत्यर्थप्राप्तो गानसम्बध इत्यर्थः। **गिरापदस्यापीति**। यज्ञायज्ञीयस्य स्वाश्रय ऋगभिव्यञ्जकतया साधनत्वस्य ऋचः स्तोत्राङ्गत्वं विनाऽयोगादिति भावः। **श्रुत्या** इरापदकृत्वापदरूपया, विकारार्थकतद्धितरूपया वा। गिरापदस्य दौर्बल्यमाह—**गिरेति**। ऋक्द्वयस्य त्रित्वसम्पत्त्यर्थं प्रग्रथनं 'पादं पुनरारभते' इत्येवं रूपं प्रगाथः। यत्त्विरा पदोत्पत्तिमात्रपरत्वमैरं कृत्वेति वाक्यस्योक्तम् तदयुक्तम्; इरापदस्वरुपस्य दध्यादिवल्लौकिकत्वेनोत्पत्तिविध्यनपेक्षतया विनियोगपरत्वस्यैव युक्तत्वादित्याशयः। गिरापदस्यापि प्रत्यक्षो विधिरिति शङ्कते—**नन्विति**। यज्ञायज्ञीय शब्दस्य सामविशिष्टप्रगाथ परत्वा-

स्तोत्राङ्गत्वेन विहितम्। सत्यम्, साम्नः प्रत्यक्षम्, ऋचस्त्वनुपपत्त्या कल्प्यम्। एतदेव हि साम्नः स्तुतिसाधनत्वं-यद्गुणाभिधानपराणामृगक्षराणामभिव्यक्तिः। 'यज्ञायज्ञीयेन स्तुवीते'त्यस्यायमर्थः—यज्ञायज्ञीयाभिव्यक्तैर्ऋगक्षरैः स्तुवीतेति। तत्रापि समाम्नानसिद्धाक्षराभिव्यक्तिरेव सति सम्भवेऽङ्गीकरणीया, नान्यकल्पनं युक्तमिति यज्ञायज्ञीयप्रगाथस्यैवायं स्तुतौ विनियोग इति प्रकल्प्यते। तत्रापि सर्वपदानां साधारण्येन विनियोगः, न विशेषतो गिरापदस्यैव। इरापदस्य तु साक्षाद्विशेषरूपेण विनियोग इति बलवत्ता॥

इति यज्ञायज्ञीये गिरापदस्थाने इरापदस्य कर्तव्यत्वाधिकरणम्॥ १६॥

१७

अप्रगाणा० नियतमिरापदमिति स्थिते, किं तदप्रगीतं प्रयोक्तव्यम्? उत प्रगीतम्? इति संशयः। तत्र—

न प्रगाणं भवेत्कस्मादप्रगीतस्य चोदनात्।
प्रगीतात् तद्धितोत्पत्तावायीरीयं प्रसज्यते॥

यदि तावदैरमिति स्वार्थे तद्धितः, तत इरां कृत्वोद्गेयमित्ये-

---

दिति भावः। आकृत्यधिकरणन्यायेन साममात्रवाचित्वान्न यज्ञायज्ञीयशब्देन ऋगुपादनमित्याह—सत्यमिति। एतदेवेति। अभिधानात्मकस्तुतौ साम्नः साक्षात्करणत्वासम्भवादिति भावः। एवमपि प्रागाथघटकतया विनियोगो न साक्षाद्गिरापदस्येत्याह—तत्रापीति। सूत्रार्थस्तु स्तोत्राधिकारे आम्नानाद्गिरापदादन्यदिरापदं वचनात्तद्बाधकं स्यादिति॥

इति यज्ञायज्ञीये गिरापदस्थाने इरापदस्य कर्तव्यत्वाधिकरणम्॥ १६॥

१७

अप्रगाणात्० ननु साम्नः स्तुतिसाधनस्य ऋगक्षराभिव्यक्तिद्वारकत्वादिरापदस्य च गिरापदस्थानापन्नत्वात्कथमप्रगाणमिति पूर्वपक्षस्तत्राह-तत्रेति। चोदनात् विधेः।

तावानर्थः स्यात् । अप्रगीतात् खल्विरापदादयन्तद्धितः, प्रगीतात्तु तदुत्पत्तौ 'वृद्धं तालव्यं प्रथमस्वरं चे'त्येवमिकारस्यायीभावे सति 'वृद्धाच्छः' इति छप्रत्ययोत्पत्तेरायीरीयमिति रूपं स्यात् । ऐरमिति रूपमप्रगीतादुत्पत्तौ सिध्यति । तस्मादप्रगीतस्यैवोपदेशादप्रगाणं स्यात् । अथापि विकारार्थोऽयन्तद्धितः, तथाऽपि प्रगाणाप्रगाणयोरुभयोरप्यक्षर-विकारत्वादन्यतरावधारणप्रमाणमन्यन्मृग्यम् । ततश्चेरापदे विहिते यत्प्राप्तं प्रगाणमप्रगाणं वा तस्यैवायमनुवाद इत्यापद्यते । तद्विधिना चाप्रगाणमेव प्राप्तं तथाभूतस्योपदेशात् । तस्मादप्रगाणम् । उच्यते—

गिरापदस्य यत्स्थानं तत्र हीदं विधीयते ।
इरापदमतस्तस्य या गीतिस्तां लभेत तत् ॥

सत्यमप्रगीतात्तद्धितः, न त्वप्रगाणं विधीयते । पदान्तरविधिपरं हीदं वाक्यं नाप्रगाणं प्रगाणं वा स्पृशति, तत्तु पदान्तरं गिरापदस्थाने

---

तथा चाप्रगीतेरापदविधिना न्यायप्राप्तगानबाध इत्यर्थः । अप्रगीतविधिमुपपादयति—**प्रगीतादिति** । अप्रगीतात्स्वार्थेऽयं तद्धितः प्रगीताद्वा, उताप्रगीताद्विकारार्थे वेति विकल्पान्मनसि निधायाद्यपक्ष आह—**यदीति** । अप्रगीतपदस्वरूपमात्रप्रतीतेरित्यर्थः । तदाह—**अप्रगीतादिति** । द्वितीयं दूषयति—**प्रगीतादिति** । तालव्यं प्रथमस्वरञ्च वृद्धं प्लुतं भवतीति छन्दोगसूत्रादिकारस्य तालव्यस्य गिरापदगतमध्यमापरपर्यायप्रथम-स्वरयुक्तस्य प्लुतरूपवृद्धौ सत्यां 'वृद्धं तालव्यमपि भवती'ति वचनान्तरेणायीभावे 'वृद्धाच्छ'इति छप्रत्यये सतीत्यर्थः । तृतीयपक्षे त्वाह—**अथापीति** । अत्र प्रगाणाभावस्या-विकारत्वात्तत्सहचरितचातुःस्वर्यादिविवक्षितमिति वदन्ति । स्तोत्रसाधनर्गक्षराणां गीतिमत्वस्यौत्सर्गिकत्वात्तदभावस्य विकारत्वमित्यपि तु शक्यं वक्तुम् । विनिगमकमाह—**ततश्चेति** । प्रगाणाङ्गीकारे विशिष्टविधिगौरवात्तद्धितस्यानुवादकत्वमेव युक्तमित्यर्थः । **गिरापदस्येति** । 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमि'ति गिरापदनिषेधानुवादबलाद्गिरा-पदस्थाने इरापदं विधीयते । अन्यथा हि निषेधोऽपि विधेयः स्यादिति वाक्यभेदापत्तिरिति भावः । यत्त्वप्रगीतविधिर्बाधक इत्युक्तं तत्राह—**सत्यमिति** । अप्रगाणस्य स्वार्थतद्धित-पक्षेऽशाब्दत्वादेव विध्यसम्भवादित्यर्थः । विकारार्थकतद्धितपक्षेऽप्याह—**पदान्तरेति** । गिरापदभिन्नेरापदेत्यर्थः । विशिष्टविधौ च गौरवमिति प्राप्तप्रगाणानुवादकत्वमेव युक्तमित्या-

विहितं स्थानापत्त्या तद्गीतिं लभमानं न केनचिद्वार्यते । यज्ञायज्ञीयसाध्या हि स्तुतिः, समस्तञ्च साम यज्ञायज्ञीयम् नैकदेशविकलम् । तत्र गिरापदे पदान्तरोपदेशान्निवृत्तेयस्तद्गतो गीत्यंशः, स गेयमपेक्षते । इरापदमपि सामसाध्यस्तुतौ सामसंस्कार्यतामन्तरेण साधनीभवितुमशक्तं संस्कारकं सामांशमपेक्षते । तयोर्नष्टाश्वदग्धरथवत्सम्बन्धः । तस्मात्प्रगीतं प्रयोक्तव्यम् ॥

इतीरापदस्य प्रगीतताधिकरणम् ॥ १७ ॥

इति शास्त्रदीपिकायां नवमस्य प्रथमः पादः ।



---

शयः । स्थानापत्तिमेवोपपादयति--यज्ञायज्ञीयेति । नष्टाश्वेति । कश्चिद्रथी नष्टाश्वः कश्चिच्च नष्टरथस्तयोर्यथा परस्पराकाङ्क्षया सम्बन्धस्तथेहापीत्यर्थः । सूत्रार्थस्तु शब्दान्यत्वे गिरापदभिन्नेरापदे अप्रगाणात्तथाभूतस्यैवोपदेशात्तद्रूप एव विकारः स्यादिति पूर्वसूत्रगततद्विकारपदानुवृत्त्या बोध्यः ॥

इतीरापदस्य प्रगीतताधिकरणम् ॥ १७ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिसूनुतत्सद्वैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां
नवमाध्यायस्य प्रथमः पादः ।



# अथ द्वितीयः पादः ।

१

सामानि० सामशब्दः, तद्विशेषवचनाश्च रथन्तरादिशब्दा न प्रगीतस्य मन्त्रस्य वाचकाः, किन्तु गीतिमात्रस्यैवेति सप्तमे यदुक्तं तदेवेदमुत्तरविवक्षया स्मार्यते ॥

## वर्णकान्तरम्

एवं वा । योऽयमूहो नाम ग्रन्थविशेषश्छन्दोगैः पठ्यते, 'कया नश्चित्रा' 'आभुवो वा' इत्यादिः, स किं नित्यः ? अथानित्यो वा पौरुषेयः ? अपौरुषयो वा ? इति । कर्तृस्मरणाभावादध्यायानध्याया-द्याचाराच्छुश्रूषाराधितगुरुमुखाच्च प्रतिपत्तेर्वेदत्वप्राप्तौ—

उच्यते—ऊहसमाख्यानादनित्यत्वम्, न ह्यध्ययनसिद्धस्योहत्वं घटते । किञ्च 'यद्योन्यां तदुत्तरयोर्गायती' त्यतिदेशवचनाद्योनावध्ययन-सिद्धस्योत्तरयोरनुष्ठानावगमात् पौरुषेयत्वं विस्पष्टम् । न हि तिसृष्वप्य-धीतस्य 'यद्योन्यां तदुत्तरयोरि'ति वादो घटते, कर्तुस्तु अस्मरणमना-दरादप्युपपद्यते । न ह्यत्र पुरुषप्रत्ययाधीनमनुष्ठानं वचनादेवोत्तरयोर्गा-

---

# द्वितीयः पादः

१

**सामानि०** सामोहचिन्तनात्पादान्तरत्वम् ! **उत्तरेति** । ऋक्सामयोर्वक्ष्यमाण-गुणप्रधान्यविचारार्थमित्यर्थः । गीतिविशिष्टमन्त्रवाचित्वे ऋचः सामाभिन्नत्वेन तदनुपपत्ते-रिति भावः । **स्मृतिरध्यापकप्रसिद्धिः** । उपदेशः 'अहे बुध्निय मन्त्र मे गोपाय यमृषय-स्त्रयी विदा विदुः । ऋचः सामानि यजूंषी'ति वर्णात्मक ऋग्यजुस्सहचारस्ताभ्यामिति सौत्रहेत्यर्थः ।।

## वर्णकान्तरम्

**एवंवा० विशेषइति** । यत्रैकं साम तृचे पठ्यमानं स इत्यर्थः । **नित्य** इत्यस्य वेद

नसिद्धेः, ऋक्सामानाञ्च पृथक् पृथक् वेदत्वात्। सत्यपि संसर्गस्य पौरुषेयत्वेऽध्यायाद्यादरः। तस्मात् पौरुषेयत्वान्न्याय्यं संगृह्य अन्याय्यं त्यक्तव्यमिति न्यायतः कीदृशमनुष्ठानं भवतीति चिन्तनीयम्॥

इति वर्णकसहितं सामशब्दादीनां गीतिवाचित्वाधिकरणम्॥ १॥

२

कर्मवा० सामानि किमृचं प्रति प्रधानभूतानि? उत तत्संस्कारार्थानि—गुणभूतानीति? विचारः। तत्राकर्मकालप्रयोगात् प्राधान्यम्। संस्कारार्थत्वे ह्यक्षराभिव्यक्तिरेषां कार्यं स्यात्। सा च कर्मकाल एवोपयुज्यत इत्यकर्मकाले प्रयोगो न स्यात्। ननु वचनादकर्मकाले गानं भविष्यति 'गर्भाष्टमे वर्षे उपनयीत श्रावण्यां पौर्णमास्यामुपाकृत्य स्वाध्यायमधीयीते'ति। एवं तद्यदृष्टार्थतैव बलादापद्यते। न ह्यकर्मकाले प्रयुक्तं साम कर्मौपयिकीमभिव्यक्तिमलं भवति कर्त्तुम्। अथादृष्टरूपः संस्कारः, ततोऽकर्मकाले संस्कृतानां कर्मकाले पुनः संस्कारोऽनर्थक इति क्रतुमध्ये सामानि न प्रयुज्येरन्। अथाकर्मकाले प्राधान्यं कर्मकाले तु

---

इत्यर्थः। विचारफलमाह—**तस्मादिति**। अस्मिन् पक्षे सूत्रार्थस्तु ऊहसामानि मन्त्रं वेदं एके आहुः। उहश्चिकीर्षित इति ब्राह्मणेन कर्त्तुमिष्टत्वोक्तेः पौरुषेयत्वेऽप्रामाण्येन तदसम्भवात्तदयमुपदेशः स्मृतिः प्रसिद्धिरिति॥

**इति सामशब्दस्य गीतिवाचित्वाधिकरणम्॥ १॥**

२

**कर्मवा०** नित्यत्वानित्यत्वरूपसामधर्मप्रसङ्गाद्गुणप्रधानत्वरूपतद्धर्मचिन्तेत्यनन्तर सङ्गतिः। **तत्रेति**। अकर्मकाले सामाध्ययनादित्यर्थः। एतदुपपादयति—**संस्कारेति**। **नन्विति**। साम्नां प्राधान्ये सत्यदृष्टार्थत्वापत्तेः ऋगभिव्यक्त्यर्थत्वमेव। अभिव्यक्तिस्तु वचनबलादकर्मकालीनापि स्मृत्यादिद्वारा कर्मोपयोगिनीत्याशयः। कर्मकालविप्रकर्षातिशयबोधनायोपनयनवाक्यप्रदर्शनम्। **एवमिति**। अकर्मकालाभिव्यक्तेरानर्थक्यादौदुम्बरीं स्पृष्टोद्गाये' दित्यादिभिः कर्मकाले गानविधानाच्चादृष्टार्थत्वमनिवार्यमित्यर्थः।

संस्कारः तदाऽर्थवैशसम् । तस्मात्प्रधानकर्म साम । बहिःप्रयोगः फलार्थः, क्रतुमध्ये तु क्रतोरारादुपकारक इति प्राप्ते, उच्यते—

अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम् ।
अक्षरैश्चाप्यभिव्यक्तैः स्तुतिः क्रत्वङ्गचोदिता ॥
एवं दृष्टे फले लब्धे नादृष्टफलकल्पना ।
ननु चाविनियुक्तत्वादक्षराणां न संस्क्रिया ॥
सक्तूनामिव होमेन नैवं दृष्टफलत्वतः ।
प्रयोजनं न सक्तूनां दृश्यते श्रूयतेऽपि वा ॥

यथोक्तं भाष्यकारेण 'न होमसंस्कृतानां सक्तूनामन्यत् प्रयोजनं श्रूयते, नापि दृश्यते' इति । दृश्यते त्वक्षराणां प्रयोजनमिति वैषम्यम् । प्रयोजनवत्त्वं संस्कार्यत्वे हेतुः न विनियोगः । तथा च ग्रहणावेक्षणसम्यग्जरणानामविनियुक्तानामपि मन्त्रप्रकाशनसंस्कार्यत्वमिष्टम् । अपि चोत्तराग्रन्थे क्रत्वर्थेन स्तोत्रक्रमेणर्चां पाठादस्त्येव विनियोगः । तस्मात्संस्कारकर्माणि सामानीति । यत्त्वकर्मकाले गानं वाचनिकं तच्छिक्षार्थतया रथहस्त्यादियोगवत् ॥

इति साम्नामृक्संस्कारकत्वप्रतिपादनाधिकरणम् ॥ २ ॥

---

**तस्मादिति** । एवञ्च 'ऋच्यध्यूढं साम गायति' 'कवतीषु रथन्तरम्' 'यद्योन्यां तदुत्तरयोः' इत्यादौ सप्तमीश्रुत्या ऋचां गुणत्वप्रतीतिरपि युक्तेति भावः । **अक्षराणामिति** । 'साम्ना स्तुवीते'ति स्तुतिसाधनत्वं दृष्टद्वारा सम्भवे नादृष्टद्वारा कल्पयितुं युक्तमित्यर्थः । **ननु चेति** । अक्षराणां स्तुतावविनियुक्तत्वाद्गीतिस्तत्संस्कारो न भवत्यानर्थक्यादिति भावः । **दृष्टफलत्वतः** दृश्यमानफलत्वात् । सक्तुवैषम्यमाह–**प्रयोजनमिति** । ऋच्यध्यूढमिति सप्तमी त्वर्थप्राप्तसामाधारत्वानुवादिकेति ज्ञेयम् । बहिः प्रयोगमध्ययनन्त्वभ्यासरूपदृष्टप्रयोजनार्थमेवेत्याह–**यत्त्विति** । **रथेति** । **योग्यशिल्पशिक्षा** तदर्थं यथा रथादेर्भूमौ लेखनं तथेत्यर्थः । सूत्रार्थस्तु साम प्रधानकर्म यतः प्रधानकर्मविधेर्लक्षणं लिङ्गमकालाध्ययनरूपमस्तीति ॥

**इति साम्नामृक्संस्कारकत्वप्रतिपादनाधिकरणम् ॥ २ ॥**

३

तृचे० 'एकं साम तृचे क्रियते स्तोत्रीयमि'ति श्रूयते। तत्र संशयः—किं व्यासज्य तिसृषु गानम्? उत प्रत्यृचं परिसमाप्तम्? इति। तदर्थञ्च विचार्यते किमिदं त्रित्वं सामनिर्वृत्त्यङ्गम्? उत स्तोत्राङ्गम्? इति। तत्र—

साम क्रियते इत्येवं सामनिर्वृत्तिरुच्यते।
तामुद्दिश्य ऋचां त्रित्वमङ्गत्वेन विधीयते॥

प्रधानभूतानामप्यृचामार्थिकं सामसाधनत्वमस्त्येवेति तद्गतस्य त्रित्वस्य युक्तमेव सामाङ्गत्वम्। वचनबलाच्च प्रतिप्रधानावृत्तिं बाधित्वा व्यासज्य गेयम्।

न हि प्रत्यृचं गीयमानस्य त्रित्वमङ्गं सम्पादितं भवति। क्रियत इत्यनेनाभ्यासलक्षणा च स्यात् प्रत्यृचं गाने। तस्माद् व्यासज्येति प्राप्ते, उच्यते—

स्तोत्रीयस्य हि साम्नोऽथ तृचसम्बन्ध उच्यते।
स्तोत्रसाधनभूतश्च स्तोत्रीयमिति भण्यते॥
साम्नः स्तोत्राङ्गभावश्च स्तोत्रसाधनसंस्कृतेः।
स्तोत्रसाधनता चर्चां प्रत्येकं न तु सङ्घशः॥

यदि त्रित्वसम्पादनाय व्यासज्य गीयते, ततो 'रथन्तरं पृष्ठं

३

**तृचे स्यात्**० ऋगभिव्यञ्जकत्वरूपपूर्वसिद्धान्तप्रयोजनस्य प्रत्यृचं गानस्याक्षिप्य-समर्थनात्सङ्गतिः। ननु ऋचां संस्कार्यतया सामसाधनत्वाभावात्तद्गतत्रित्वस्य कथं सामाङ्गत्वमत आह—**प्रधानेति**। साधनमात्रस्य द्वारत्वादृचां चार्थिकस्य साधनत्वस्य सत्वादित्यर्थः। ननु ऋचां प्राधान्यस्योक्तत्वात्प्रतिप्रधानं गुणावृत्तिन्यायेन प्रत्यृचमेव गानं युक्तमत आह—**वचनेति**। सामाङ्गत्वेन त्रित्वविधिबलादित्यर्थः। एतदुपपादयति—**न हीति**। प्रत्यृचं गानसमाप्तौ कस्याञ्चिदपि गानव्यक्तौ ऋक्त्रयसाध्यत्वासम्भवादित्यर्थः। नन्वभ्यासाभिप्रायं त्रित्वमत आह—**क्रियत इति**। तथा सति लक्षणैव दोष इत्यर्थः। करोतेरभूतप्रादुर्भाववचनत्वादिति भावः। **रथन्तरमिति**। रथन्तराख्यसामसाधनकं

भवति' 'यज्ञायज्ञीयेन स्तुवीते' त्यादिभिर्यत्साम्नां स्तोत्रसाधनत्वं विहितं तन्न घटते। स्तोत्रसाधनभूतशब्दाभिव्यक्त्या च साम्नः स्तोत्राङ्गत्वम्। वाक्यञ्च स्तुतिबुद्धेः साधनं न वाक्यसमुदायः। तस्मात्प्रत्यृचं गेयम्। एवञ्च त्रित्वं सामाङ्गत्वेनाघटमानं स्तोत्रसाधनपरिच्छेदेन विधीयमानं स्तोत्रस्यैवाङ्गत्वेन विधीयते। तद्विधानेन प्राप्तं तिसृषु गानं 'तृचे क्रियते' इत्यनेनानूद्यते। अनुवादत्वाच्च करोतेरभ्यासलक्षणा न दोषः॥

इति तृचगानाधिकरणम्॥ ३॥

४

तदभ्यासः० तिसृषु प्रत्येकं गीयमानं किमनियमेन समासु विषमासु वा गेयम्? उत समच्छन्दस्कास्वेवेति? संशये विशेषाश्रवणादनियमः। संशरविलेशपरिहाराय तु समास्वेव स्यात्॥

इति साम्नां समासु ऋक्षु गानाधिकरणम्॥ ४॥

---

पृष्ठनामकं स्तोत्रं कुर्यादित्यर्थः। **एवञ्चेति**। प्रधानभूतसामविधिविरोधात् स्तोत्रीयपदादुपसर्जनत्वेनोपस्थितेऽपि स्तोत्र एव ऋक्परिच्छेदकत्वेन त्रित्वविधानमित्यर्थः। **न दोष इति**। अनुवादस्यैव तात्पर्यग्राहकत्वादिति भावः। सूत्रार्थस्तु तृचे व्यासज्यगानं स्यात् तृचे क्रियत इति श्रुतिनिर्देशादिति॥

इति तृचगानाधिकरणम्॥ ३॥

४

**तदभ्यासः**० गान एव विशेषचिन्तनात्सङ्गतिः। **समेति**। योनिसमच्छन्दस्केत्यर्थः। **संशरेति**। **संशरः** साम्नो हिंसा। शॄ हिंसायामित्यस्मात् ऋदोरपि तन्निष्पत्तेः। **विलेशो**ऽल्पत्वम्। लिश अल्पीभावे इत्यतो घञि तन्निष्पत्तेः। यदि हि योनिं न्यूनच्छन्दस्कयोरुत्तरयोर्गीयते तदावशिष्टसामभाग आश्रयाभावाद्ध्वंसेत्। यदि च योन्यधिकच्छन्दस्कयोर्गीयेत तदा साम्नोऽल्पतयावशिष्टाक्षराणां सामसंस्कार्यता न स्यादतो दोषद्वयपरिहाराय समास्वेव गेयमिति भावः। इदञ्च यस्य साम्न उत्तराग्रन्थे उत्तरे नाम्नाते तद्विषयम्। यस्य त्वाम्नाते तत्र 'यद्योन्यां तदुत्तरयोर्गायती' ति वचनबलेन विषमास्वपि गानस्यावश्यकत्वादिति बोध्यम्॥

इति साम्नां समासु ऋक्षु गानाधिकरणम्॥ ४॥

५

नैमित्तिकं० 'यद्योन्यां गायति तदुत्तरयोर्गायती' त्यत्र संशयः— किं योन्युत्तरयोः, उत्तराग्रन्थाधीतयोर्वा गेयम्? उतोत्तराग्रन्थाधीतयोरेवेति। तत्रोत्तराशब्दस्य सम्बन्धिशब्दत्वाद्यैव योनेः परतः पठिता सैवोत्तरा। ततश्च योनिपाठापेक्षया रथन्तरयोनेः परतो बृहद्योनेः पठितत्वात्तस्यां गानम्। उत्तराग्रन्थे तु रथन्तरस्य योनेः परतो 'न त्वा वामन्यो दिवः' इत्यस्याः पाठात्तस्यां गानम्। अतो विकल्पः। द्वयोरपि रथन्तरयोन्यपेक्षयोत्तरत्वादिति प्राप्ते—

ब्रूमः—यद्यप्ययं सम्बन्धिशब्दो लोके, तथाऽप्युत्तराग्रन्थे संज्ञारूपेण प्रसिद्धः। तत्र संज्ञाशब्दस्यान्यानपेक्षवृत्तित्वात्सापेक्षवृत्तेः सम्बन्धिशब्दाद्बलीयस्त्वम्। प्रकरणपाठाच्चोत्तराग्रन्थः क्रत्वङ्गम्। तस्मादुत्तराग्रन्थाधीतास्वेव गेयम्॥

---

५

**नैमित्तिकं०** तृचगानविशेषस्य क्वचित्समास्वित्येतदपवादस्य च चिन्तनात्सङ्गतिः। **उत्तराग्रन्थेति**। छन्दोगानां हि रथन्तरादिसामयोनीनामेव पाठात्मक एको ग्रन्थश्छन्दोगनामकः, एवमेकस्य साम्नो योनिपाठोत्तरमयोनिभूत ऋग्द्वयपाठस्ततः सामान्तरयोनिपाठ इत्येवं योनितदुत्तरऋक्पाठात्मकोऽपरः स उत्तराग्रन्थ इत्युच्यते। तेन 'उत्तरयोर्गायती'त्यत्र संशय इत्यर्थः। पूर्वपक्षमाह—**तत्रेति**। ग्रन्थभेदेन योन्युत्तरं द्वयोरपि पाठाद्विकल्प इत्यर्थः। **संज्ञेति**। उत्तरा अध्यापयाम इत्यादिप्रतिसम्बन्ध्यनपेक्षप्रयोगप्रतीतिभ्यां पृथक् शक्तेरावश्यकत्वान्निरपेक्षतया च शीघ्रमर्थोपस्थापकत्वाच्च तस्या बलवत्त्वमित्यर्थः। एवञ्च सति प्रकरणानुग्रहोऽपीत्याह—**प्रकरणेति**। सूत्रार्थस्तु नैमित्तिकं संज्ञानिमित्तमेवोत्तरात्वं आनन्तर्यात्। सम्बन्धिप्रतीतिव्यवधानाभावादिति॥

**इत्युत्तरयोः उत्तराग्रन्थगतयोरेव ग्रहणाधिकरणम्॥ ५॥**

## वर्णकान्तरम्

एवं वा—द्वादशाहे 'पार्ष्ठिकं चतुर्थमहः, एकविंशः शोडशी—वैराजं सामे'ति श्रुतम् । तत्र च 'त्रैशोकं नाम ब्रह्मसामातिजगतीषु स्तुवत' इति श्रूयते । तच्चातिजगत्यामुत्पन्नम् 'विश्वाः पृतना' इति । उत्तरे द्वे बृहत्यौ 'नेमिं नयन्ति चक्षते' त्याद्ये । तत्र तृचे गाने क्रियमाणे संशयः—किमतिजगत्यौ द्वे आनीय समासु गानम् ? उत बृहत्यावेवादाय विषमासु गानमिति संशरविलेशपरिहारार्थं 'अतिजगतीषु स्तुवते' इति चातिजगतीबहुत्वानुग्रहाय समासु गानम् । बृहत्योस्तूत्तराग्रन्थपठितयोः क्रत्वर्थत्वात् तत्परित्यागे तयोरानर्थक्यादेकविंशसम्पत्तये च एकैकस्यामृचि सप्तकृत्वोऽभ्यस्यमानायामभ्यासापेक्षयाऽतिजगतीबहुत्वादनुवादसरूपस्य वर्तमाननिर्देशस्योपपत्तेर्विषमासु गानम् ॥

इति वर्णकान्तरम् ॥ ५ ॥

---

## वर्णकान्तरम्

**एवंवा** समासु गानमित्यस्यापवादात्सङ्गतिः । **पार्ष्ठिकं** पृष्ठ्यषडहसम्बन्धि एकविंशस्तोमकः षोडशिसंस्थः वैराजाख्यपृष्ठसामेत्यर्थः । ब्रह्मसाम प्रकृत्येति शेषः । **संशरेति** । विलेशग्रहणन्तु न प्रकृताभिप्रायम् । बृहत्योरतिजगत्यपेक्षया न्यूनत्वेन विलेशस्यासम्भवात् । किन्तु संशरविलेशयोरन्यतरप्रसङ्गस्य सामान्यतो विषमासु गाने दूषणत्वात्समासु गाने तत्परिहारस्य हेतुत्वमिति सामान्याभिप्रायेणेति ज्ञेयम् । सिद्धान्तमाह—**बृहत्योस्त्विति** । **एकविंशसम्पत्तये** एकविंशस्तोमसम्पत्तये । 'अत्र ह्येवावपन्ती'त्यनेनागमस्य पवमानस्तोत्रातिरिक्ते परिसङ्ख्यानान्न ऋगन्तराणामागमः । किन्त्वभ्यासेनैव एकविंशतिसङ्ख्यासम्पादनमित्यर्थस्य दशमे निर्णयादित्यर्थः । सूत्रार्थस्तु—बृहत्योरेवोत्तराग्रन्थपाठनिमित्तमुत्तरात्वम् आनन्तर्यात्प्रकरणात्प्रतीयेतेति ।

इत्युत्तरयोः उत्तराग्रन्थगतयोरेव ग्रहणाधिकरणम् ॥ ५ ॥

६

**प्रागाथिकं० ज्योतिष्टोमे बृहद्रथन्तरे बृहत्योरुत्पन्ने ‘अभित्वा शूर नो नुमः, त्वामिद्धिहवामहे’ इति तयोः पङ्क्ती उत्तरे ‘नत्वा वामन्यो दिव्यो न पार्थिवः, स त्वं नश्चित्रे’ति । तत्र श्रूयते ‘न वै बृहद्रथन्तरमेकच्छन्दो यत् तयोः पूर्वा बृहती ककुभावुत्तरे’ इति । तत्र किं पङ्क्ती परित्यज्य द्वे ककुभावानेतव्ये ? उत योनिमुत्तराश्च प्रग्रथ्य ककुभावुत्तरे सम्पादनीये ? इति संशयः । तत्र प्रग्रथनेन मुख्यककुप्सम्पत्त्यभावादक्षरसामान्यमात्रेण गौणत्वापत्तेः, तृचगानस्य च त्रयमन्तरेणासामञ्जस्यादन्यासां ककुभामानयनम् ।**

**उच्यते—प्रगाथस्मरणात्प्रगाथसमाख्यानात्पङ्क्तेश्चोत्तरात्वेन**

---

६

**प्रागाथिकं०** विषमासु गाने विशेषचिन्तनात्सङ्गतिः । **ज्योतिष्टोम इति ।** ज्योतिष्टोमाङ्गभूते बृहद्रथन्तरे इति बृहत्योरुत्पन्ने इत्यन्वयः । बृहतीच्छन्दश्च षट्त्रिंशदक्षरं भवति । किञ्चिदक्षरन्यूनत्वेऽपि तच्छन्दस्कत्वव्यवहारान्न दोषः । ‘अभित्वे’त्यस्यां रथन्तरम्, ‘त्वामिद्धि’ इत्यस्यां बृहदिति ज्ञेयम् । **पङ्क्ती ।** चत्वारिंशदक्षरपङ्क्तिच्छन्दस्के । आद्या रथन्तरस्य, अन्त्या बृहतः । **नवै इति ।** बृहद्रथन्तराख्यसामद्वयम् एकच्छन्दस्कऋक्साध्यं न भवतीत्यर्थः । ककुप्छन्दोऽष्टाविंशत्यक्षरम् । **प्रग्रथ्येति ।** ‘अभित्वाशूर नो नुमो दुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः’ इति पठितायां बृहत्यामादौ रथन्तरं गेयम् । सैका स्तोत्रीया ऋक् । तत एतामेव योनिं न त्वावां इत्यादिकां पङ्क्तिञ्च प्रग्रथ्य गेयमित्यर्थः । तत्प्रकारस्तु ‘ईशानमिन्द्रतस्थुष’ इति पादं पुनः पठित्वा नत्वावां अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यत इत्यर्धेन सह पुनर्गेयम् । एवमष्टाविंशत्यक्षरा ककुप् द्वितीया । पुनश्च ‘न जातो न जनिष्यत’ इति पादं पठित्वा ‘अश्वायन्तो मघवन्निन्द्रवाजिनो गव्यन्तस्त्वा हवामह’ इत्यर्द्धेन सह गेयम् । इयञ्च तृतीया ककुप् । एवं प्रकारेण ‘एकं साम तृचे क्रियते’ इति विहिततृचसम्पादनं प्रग्रथनविधिवशादित्यर्थः । एवं बृहत्यपि बोध्यम् । **प्रगाथेति ।** **स्मृतिर्याज्ञिकानाम् ।** **समाख्या** वैदिकी । प्रकृष्टं गानं प्रगाथः । प्रकर्षश्च पादस्य पुनरादानादिति ‘पादं पुन-

**पाठस्यात्यन्तानर्थक्यापातात् 'पादं पुनरारभते' इति च दर्शनात्, तृचगानस्य च सामान्येन विहितस्यात्र प्रगाथेऽप्यत्यन्तदोषाभावात्प्रग्रथनम् ॥**

## वर्णकान्तरम्

**एवं वा। रौरव-यौधाजये बार्हते तृचे भवतः, तयोश्च पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिरि'ति तत्रापि पूर्ववदुत्पत्तिबृहत्यावानीय तृचसम्पादनम्, उत पठितयोरेव प्रग्रथनमिति संशये, तत्रैव विशेषतः 'तृचे भवतः' इति तृचश्रवणादन्यागमनं प्रगाथस्मरणसमाख्योत्तरापाठलिङ्ग-**

---

रारभेते' इति लिङ्गदर्शनाच्चेत्यर्थः। पादात्पादमिति क्वचित्पाठः। अत्यन्तेति। विशेषविधिना बाधितस्य गौण्याप्युपपत्तेरन्यथा पङ्क्तेरानर्थक्यप्रसङ्गादिति भावः। प्रगाथनिमित्तकं गानं स्यादिति सूत्रार्थः॥

इति प्रगाथाधिकरणम् ॥ ६ ॥

## वर्णकान्तरम्

**एवंवा०** विशेषाशङ्कामाह—**तत्रैवेति**। एवञ्चातिदेशिकी सङ्गतिः सूच्यते। सिद्धान्तमाह—**प्रगाथेति**। बार्हते तृच इति त्वेकं साम तृच इति सामान्यप्राप्तानुवादः। रौरवयौधाजययोस्त्वप्राप्तयोर्विधिरिति पूर्ववत्प्रग्रथनमेवेति भावः। अत्रादौ पुनानः सोमेत्यादिकां षट्त्रिंशदक्षरां बृहतीं पठित्वा तदन्त्यपादद्विरावृत्या 'दुहा न ऊधर्दिव्यमि'ति विष्टारपङ्क्तेश्चत्वारिंशदक्षरायाः प्रथमार्द्धेन सह द्वितीया बृहती। पुनर्विष्टारपङ्क्तेरन्त्यपादद्विरावृत्या द्वितीयार्धेन सहापरेति तृचसम्पत्तिः। सर्वत्र चाल्पान्तरत्वात्किचिदक्षरन्यूनाधिकभावेऽपि न छन्दोविघात इति ज्ञेयम्। अत्र लिङ्गदर्शनम्—'षष्ठिस्त्रिष्टुभो माध्यन्दिनं सवनमि'ति। माध्यन्दिनसवने पवमानस्तोत्रमेकं चत्वारि पृष्ठस्तोत्राणीति। तत्र पवमाने पञ्चदशस्तोमः पृष्ठेषु सप्तदश। एवं त्र्यशीतिः स्तोत्रीयाः। तासु काश्चित्पठिताः काश्चित्प्रग्रथनलब्धाः काश्चिदावृत्तिलभ्याः। तत्र द्वादश ककुभः अष्टाविंशत्यक्षराः त्रयोविंशतिर्गायत्र्यः चतुर्विंशत्यक्षराः बृहत्यः पञ्चचत्वारिंशत् षट्त्रिंशदक्षराः, तिस्रस्त्रिष्टुभश्चतुश्चत्वारिंशदक्षराः। तत्र द्वादशापि ककुभो द्वादशभिर्गायत्र्यर्धैः संयोजिताः सत्यो द्वादश त्रिष्टुभः सम्पद्यन्ते। एवञ्च त्रिपादा अष्टौ गायत्र्यो व्ययिताः। अवशिष्टाः

दर्शनैस्तु प्रग्रथनम् ॥

## वर्णकान्तरम्

एवं वा । 'श्यावान्धीगवे आनुष्टुभे तृचे भवतः तयोः पूर्वानुष्टुप्, उत्तरे द्वे गायत्र्यौ' तत्राप्य न्ययोरनुष्टुभोरागमनं, पठितानामेव वा प्रग्रथनेनानुष्टुप्त्रयं सम्पाद्यमिति विचारः । लिङ्गान्तरप्रदर्शनार्थं त्विदं व्याख्यान्तरं न तु काचिदधिका शङ्काऽस्ति ॥

## वर्णकान्तरम्

एवं वा । गवामयने श्रूयते 'चतुःशतमैन्द्रा बार्हताः प्रगाथाः' इति । तत्र किं तिसृषु ऋक्षु गानम् ? उत द्वयोर्द्वयोः प्रग्रथनेनेति ? संशये

---

पञ्चदशगायत्र्यस्तासां पञ्चचत्वारिंशत्पादाः तावद्भिः पादैः पञ्चचत्वारिंशद्बृहत्यः संयोजिताः पञ्चचत्वारिंशत्त्रिष्टुभः सम्पद्यन्ते । पूर्वोक्ताभिर्द्वादशत्रिष्टुभिः सह सप्तपञ्चाशत् आम्नाताभिस्तिसृभिः षष्ठिस्त्रिष्टुभः सम्पन्नाः । इयञ्च संख्योक्तप्रगाथे सत्येव घटते । अन्यथा पठितानां ऋचां न्यूनत्वात् माध्यन्दिनसवनपठितानां श्रूयमाणात्रिष्टुप् षष्ठिसङ्ख्यानुपपन्ना स्यादिति ॥

## इति द्वितीयं वर्णकम् ॥

## वर्णकान्तरम्

**एवंवा०** लिङ्गान्तरेति-चतुर्विंशतिर्जगत्यस्तृतीयसवने एका च ककुबिति लिङ्ग दर्शनं पूर्ववत्प्रगाथे सत्येव घटते नान्यथेति दर्शयितुमित्यर्थः । तृतीयसवने आर्भवपवमानस्तोत्रं सप्तदशस्तोमकं यज्ञायज्ञियमेकविंशस्तोमकं तयोः ऋचोऽष्टत्रिंशत् । तत्र षड्गायत्र्यः षडनुष्टुभः, तिस्रो जगत्यः एका उष्णिक्, पञ्चदश ककुभः, सप्त बृहत्यः, ताश्चाक्षरगणनया चतुर्विंशतिर्जगत्योऽष्टाचत्वारिंशदक्षरा एका ककुप् च सम्पद्यत इति बोध्यम् ॥

## इति तृतीयं वर्णकम् ॥

## वर्णकान्तरम्

**एवंवा चतुःशतमिति** । चतुरधिकं शतमित्यर्थः । **ऐन्द्राः** इन्द्रदैवत्याः । **बार्हताः** बृहतीच्छन्दस्कऋक्साध्याः । प्रग्रथ्यन्त इति **प्रगाथाः** द्व्यर्चा इत्यर्थः । विशेषाशङ्का-

तृचप्रापिचोदकानुग्रहाय तिसृषु स्यात् । प्रग्रथने हि न समञ्जसं तृचत्वम् । असति प्रग्रथने कथं प्रगाथवचनम् 'ऐन्द्रा बार्हता प्रगाथाः' इति । ऋक्प्रग्रथनाभिप्रायमिति ब्रूमः । प्रथमे तृचे गीत्वा तस्मात्तृचादेकैकामृचमुपादाय, अपरे द्वे ऋचौ गृहीत्वा गीयते । पुनरप्येवम् । तथा सति तृचगानं प्रगाथशब्दश्चोभयमनुगृहीतम्भवति ।

नैतदेवम् । 'अन्या अन्या ऋचो भवन्ती' ति वचनान्नैकस्यामृचि द्विर्गानं सम्भवति । तस्माद् द्वयोः प्रग्रथनम् ॥

इति वर्णकचतुष्टयसहितं प्रग्रथनाधिकरणम् ॥ ६ ॥

७

अर्थैक० छान्दोग्ये तलवकारादिसहस्रसामशाखागतानां गीतिप्रकाराणामेकार्थत्वाद्युगपत्प्रयोगासम्भवात्तदनुरोधेन च सामावृत्तेरन्याय्यत्वात्सिद्ध एव विकल्पः सामप्रसङ्गाद्विस्पष्टीकाराय दर्शितः ॥

इति सामविकाराणां विकल्पाधिकरणम् ॥ ७ ॥

---

माह—ऋगिति । प्रादग्रथने तु ऋक् त्रित्वबाध उक्त इति भावः । अन्या इति । प्रगाथान्तरापेक्षया प्रगाथान्तरे ऋग्भेदविधानादित्यर्थः ॥

इति चतुर्थं वर्णकम् ॥

७

अर्थैकत्वात्० गीतिप्रकाराणामिति । अक्षरविकारो विकर्षणमभ्यासो विरामस्तोभ इत्येवं रूपाणामित्यर्थः । तदनुरोधेन चेति । गुणभूत प्रकारानुरोधेनेत्यर्थः ॥

इति सामविकाराणां विकल्पाधिकरणम् ॥ ७ ॥

८

अर्थैक० क्वचिद्विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि । तेषाञ्च न प्रकृतितः किञ्चित्साधनं प्राप्नोति । प्राकृतानां गायत्ररथन्तरादिसाम्नां प्राकृतीषु बहिष्पवमानादिस्तुतिषु निबद्धानामप्राकृतेषु प्राप्त्यभावात् । तेन तानि साकाङ्क्षाणि । तत्रेदं श्रूयते 'यद्दचा स्तुवते तदसुरा अन्ववायन् । यत्साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीते'ति । तत्र ऋग्ग्रहणमप्रगीतऋक्परम्, प्रगीतायाः सामोपदेशेनैव सिद्धत्वात् । साम्ना ह्यक्षराभिव्यक्तिद्वारैव स्तुतिः क्रियते, न साक्षात् । तेन 'साम्ना स्तुवीते' ति सामाभिव्यक्तैर्ऋगक्षरैः स्तुवीतेत्यर्थः । एवञ्चेदमप्रगीतपरमृक्पदम् । तत्र संशयः—किमृचा साम्ना वा स्तोतव्यम् ? उत साम्नैवेति । द्वयोर्वचनाद्विकल्पप्राप्तौ—

उच्यते । साम्नामुपसंहारे विस्पष्टप्रशंसावचनेन विधेयत्वावगमात् ऋक्कीर्त्तनमसुरागमनिन्दया सामप्रशंसार्थम् । तस्मात्साम्ना स्तोतव्यम् ॥

---

८

अर्थैकत्वात्० विकल्पापवादात्सङ्गतिः । तेषाञ्चेति । यद्यपि तेषां प्राप्तावपि तद्बाधेन वैकृतविधिः शक्यस्तथाप्यर्थवादकल्प्यविधेराकाङ्क्षाधीनत्वात्प्राकृतप्राप्तौ च तदसम्भवादाकाङ्क्षोपपत्यर्थं प्राकृतसाधनाप्राप्त्यभावप्रतिपादनं युक्तमिति ध्येयम् । अप्राकृतेष्विति । यूपावटस्तरणबर्हिषि बर्हिर्द्धर्माणामिवेत्यर्थः । अन्ववायन् आगतवन्तः । अत्रासुरागमनहेतुत्वेन ऋक्स्तुत्या ऋचः साधनत्वं सामरहितायाः कल्प्यत इति विकल्पपूर्वपक्षं वक्तुमाह—तत्रेति । विस्पष्टेति । असुरागमनहेतुत्वस्य निन्दागमकत्वात्तद्वशीकारहेतुत्वेन ऋक्प्रशंसा न स्पष्टा । असुरनिरासकत्वेन सामस्तुतिस्तु स्पष्टा । ऋङ्निन्दा तु नहि निन्दान्यायेन साम प्रशंसैवेति भावः। सूत्रे तत्परत्वादित्यस्य स्तुतिसाधनत्वादित्यर्थः ॥

वर्णकान्तरम्

एवं वा। सामवेदे किञ्चित्प्रकृत्य 'अयं सहस्रमानव' इतीयं प्रगीतापि पठिता अप्रगीतापि। तत्र श्रूयते 'अयं सहस्रमानवः' इत्येतया- ऽऽहवनीयमुपतिष्ठते' इति। तत्र प्रगीतया, अप्रगीतया वोपस्थातव्यम्? उत प्रगीतयैवेति? विचारे, विशेषाभावादनियमः। अप्रगीतायाः प्रगाणार्थ एव पाठः। न ह्यनवधारितस्वरूपायां सुखं गानं सम्भवति। प्रगीता त्वनन्यार्था। तेन सा प्रयोजनमपेक्षमाणा क्रतुना गृह्यते। उपस्थाने च विनियुज्यते। एतयेतिसर्वनाम्ना परामृश्यते। तस्मात्प्रगीतैव ग्राह्या॥

वर्णकान्तरम्

एवं वा। सामप्रसङ्गान्मन्त्राणां स्वरश्चिन्त्यते। मन्त्रा हि क्वचित्त्रैस्वर्येणाधीताः, क्वचिच्चातुःस्वर्येण। तत्र कर्मसु किं त्रैस्वर्यचातुः स्वर्ययोः समुच्चयः? विकल्पो? वा। अथोभयहानेनैकश्रुत्या प्रयोग इति संशयः। तत्र समुच्चय इत्युपक्रममात्रं गीत्युपायवन्निरस्तत्वात् तद्वदेव तु विकल्प इति—पूर्वः पक्षः—

'तानो यज्ञकर्मणी' ति स्मृत्यनुमिताद्वचनादैकश्रुत्यम्। अर्थावग-

---

वर्णकान्तरम्

एवं वा। **किञ्चिदिति**। कर्मेति शेषः। सिद्धान्तमाह—**अप्रगीताया** इति। अप्रगीतापाठस्य ऋक्स्वरूपावधारणद्वारा प्रगाणार्थत्वेनोपक्षीणत्वादनन्यार्था प्रगीतैव साकाङ्क्षेति सैव सर्वनाम्नोऽपि तात्पर्यविषय इत्यर्थः।

वर्णकान्तरम्

एवं वा० **त्रैस्वर्यं** उदात्तादित्रयम्। चातुः स्वर्यम्। प्रचयारव्यस्वरान्तरमादाय। **उपक्रमेति**। सर्वशाखाप्रत्ययन्यायेनापातत इत्यर्थः। दृष्टार्थानां समुच्चयस्य गीत्युपाया- नामिव निरस्तत्वादिति भावः। **तान** इति पूर्वाचार्याणामैकश्रुत्यस्य संज्ञा। ननु स्वरा- ध्ययनं स्वरस्य कर्माङ्गत्वं विनानुपपन्नमत आह—**अर्थेति**। कार्यान्तरोपक्षीणत्वान्न स्वरा-

मार्थन्तु स्वराध्ययनं स्वरविशेषाधीनत्वादर्थविशेषाणाम्। 'बहुव्रीहौ प्रकृत्या पूर्वपदमि' त्यादिवचनात्। तस्मात्तानेन प्रयोगः ॥

इति प्रगीतायास्तोत्रसाधनत्वाधिकरणम् ॥ ८ ॥

९

सामप्रदेशे० उपोद्घातं समाप्य, प्रकृतमिदानीं साम्नामूहं विचारयति 'रथन्तरमुत्तरयोर्गायती'त्यादिभिः। ऋगन्तरे गीयमानानि किमूहितव्यानि? उत नेति। यदि योनिवर्णवशेन गानम्, यस्मिन् प्रदेशे योनावायीभावः, तस्मिन्नेवासत्यपि सन्ध्यक्षरे उत्तरयोरायीभावः, ततो नोहः। अथ तूत्तरावर्णवशेन गाने यस्मिन् प्रदेशे सन्ध्यक्षरवशेन योनावायीभावो योनौ, ततः प्रदेशान्तरे यत्र सन्ध्यक्षरम् तत्रायीभावः, तत ऊहः। किं प्राप्तम्? योनिवर्णवशेन। कुतः? योनावेकारं निवर्त्य, अकार ईकारश्चोच्चारितः। तत उत्तरयोरपि तद्भागपतितं वर्णं निवर्त्याकारेकावुच्चार्यौ। किं च नात्र कार्यमुखेन साम्नः प्राप्तिः। रथन्तरादिस्वरूपस्यैवातिदेशात् तेन दशमाद्यपूर्वपक्षन्यायेन सामस्वरूपमुत्तरयोः प्रापि-

---

ध्ययनस्य कर्मार्थत्वं किन्त्वैकश्रुत्यस्यैवेति भावः। 'बहुव्रीहौ पूर्वपदं प्रकृत्या स्वकीयस्वरेणैव प्रयोज्यं न तु समासनिमित्तेनान्तोदात्तेनेत्यर्थः ॥

इति प्रगीतायास्तोत्रसाधनत्वाधिकरणम् ॥ ८ ॥

९

**सामप्रदेशे०** इत्यादिभिर्वचनैरिति शेषः। **योनिवर्णवशेने**त्यस्य विवरणं **यस्मिन्नित्यादि**। यत्सङ्ख्याक्षर इत्यर्थः। सन्ध्यक्षरमकारेकारसन्धिनिष्पन्नमेकारादि। **नोह इति**। योनिवदेव गानाद्विकाराभावादित्यर्थः। **ततः प्रदेशान्तर** इत्यनन्तरमुत्तरयोरिति शेषः। **योनिवर्णवशेने**त्यनन्तरं गानमित्यनुषङ्गः। नन्वक्षराभिव्यक्त्यर्थत्वेन सामविधानादभिव्यञ्जनीयोत्तरावर्णवशेन गानं स्यादत आह-**किञ्चेति**। 'यद्योन्यां तदुत्तरयो'रिति सामस्वरूपमात्रातिदेशात्तदनुरोधेनाक्षराभिव्यक्तिरूपकार्यस्य योनिमात्रविषयत्वेन सङ्कोच इति भावः। **दशमेति**। अङ्गातिदेशोत्तरं यथसम्भवं दृष्टादृष्टोपकार-

तमविकृतस्वरूपमेव सत्प्राकृतमप्राकृतं दृष्टमदृष्टं वा कार्यं कुर्यात्। तस्मान्नोहः साम्नामिति प्राप्ते—

ब्रूमः—यदि ह्येकारं लुप्त्वाऽवर्णवर्णावुच्चारितौ ततो भवेत्, यथात्रभवानाह। न त्वेतत्, किं तर्हि? एकारो नाम न वर्णान्तरम्। अवर्णवर्णौ संहतावेकभावमापन्नावायीभावेन विश्लेषितौ दर्शितौ। प्रत्यक्षं ह्यवर्णेवर्णावेकारे प्रत्यभिज्ञायेते। तस्मादुत्तरयोरप्येकार एव यत्र तत्रस्थोऽप्यायीभावेन विश्लेषणीयः। एवमृगक्षराभिव्यक्त्या स्तोत्रं साम्ना सम्पाद्यते नान्यथा। यद्यपि च सामस्वरूपस्यातिदेशः, तथाऽपि स्तोत्रसाधनतयाऽतिदिश्यते 'एकं साम तृचे क्रियते स्तोत्रीयमि'ति वचनात्। स्तोत्रसाधनता चाक्षराभिव्यक्तिद्वारा। न च सन्ध्यक्षरादन्यस्यायीभावः क्रियमाणोऽक्षराभिव्यक्तिं करोति। एवं सर्वत्र। तस्माद्योनिवर्णवशेन गानादस्त्यूहः साम्नाम्॥

इत्युत्तरावर्णवशेन गानाधिकरणम्॥ ९॥

---

कल्पनेति न्यायेनेत्यर्थः। तदीयसिद्धान्तस्तूपकारपृष्ठभावेन पदार्थातिदेशरूपः कल्प्यातिदेशविषयो न वाचनिकेऽस्मिन् प्रवर्तत इति भावः। **यदि हीति**। योनिवर्णवशेन गानेऽनूह इति यत्त्वयोक्तं तत्तदा स्यादित्यर्थः। वस्तुतस्तु योनावपि सन्ध्यक्षरविश्लेषप्रदर्शकस्यायीभावस्योत्तरयोरपि तथात्वमित्यूह एवेत्याह—**किन्तर्हीति**। यदुक्तं सामस्वरूपमात्रमतिदिश्यत इति तत् दूषयति **एवमिति**। तथाच दृष्टार्थत्वाय यद्योन्यां तदुत्तरयोरित्यक्षराभिव्यक्तिरूपोपकारातिदेशकमिति भावः। अभ्युपेत्याह—**यद्यपि चेति**। स्वरूपमात्रातिदेशेऽपि स्तोत्रीयमित्युक्तस्तोत्रसाधनत्वस्याक्षराभिव्यञ्जकत्वं विनानुपपत्तेरूहसिद्धिरित्यर्थः। योनिगानापेक्षया क्रमभेदस्तु प्रधानभूताक्षरानुरोधेन जायमानो न दोष इत्याशयेनोपसंहरति—**तस्मादिति**। सूत्रार्थस्तु साम्नः प्रदेशेऽतिदेशे सति विकार आयीभावादिर्योन्यपेक्षः, 'यद्योन्यामि'ति शास्त्रकृतत्वादिति॥

इत्युत्तरावर्णवशेन गानाधिकरणम्॥ ९॥

१०

स्तोभस्यैकं० सामातिदेशे किं स्तोभानामतिदेशः अस्ति ? नेति ? संशये सामभ्योभिन्नत्वात्स्तोभानामृगक्षराणामिव नातिदेशः भिन्नानामपि गीतिकालपरिच्छेदकत्वेन सामाङ्गत्वात् तदतिदेशादेवातिदेशः। सामानि हि योनौ येनांशेनाक्षराण्यभिव्यञ्जयन्ति, तेन दृष्टमेव स्तुतेरुपकारं कुर्वन्ति स्तोभाक्षराभिव्यक्तिनिर्वर्त्येन स्वांशेन स्तुत्यौपयिकमेवादृष्टं कुर्वन्ति। तद्यदि स्तोभाः नातिदिश्येरन्, तन्निर्वर्त्यस्य गीत्यंशस्य लोपात् तत्कृतोपकारस्य हान्या वैगुण्यं स्यात्। तस्मादतिदिश्येरन्। ऋगक्षराणान्तु प्रधानत्वान्न सामवशादतिदेशः॥

इति स्तोभातिदेशाधिकरणम्॥ १०॥

११

अधिकं० प्रसङ्गात्स्तोभलक्षणमुच्यते-यदृगक्षरेभ्यो अधिकं विवर्णं च

---

१०

**स्तोभस्य०** सामातिदेशप्रसङ्गात्सङ्गतिः। भिन्नानामपीति 'रथन्तरमुत्तरयो'रित्यादिभिः स्तोभानां सामभिन्नत्वेनानतिदेशेऽपि प्रधानातिदेशात्तदङ्गस्तोभानामप्यतिदेश इत्यर्थः। नन्वेवं स्तोभानामृगक्षरानभिव्यञ्जकसामभागनिष्पादकतयोपकारकत्वम्। स च सामभागोऽर्थलोपान्नातिदिश्यत इति तदङ्गस्तोभानामपि नातिदेश इत्यत आह— **सामानि हीति**। तथा च स्तोभनिष्पाद्यस्य साम्नो योनावपि स्तुतौ दृष्टोपकाराभावाददृष्टस्य चोत्तरयोरपि सत्वादतिदेशोपपत्तिरित्यर्थः। **ऋग्वदिति** दृष्टान्तेन वैषम्यमाह— **ऋगिति** द्रव्यान्तरे ऋगन्तर इति सूत्रपदार्थः॥

इति स्तोभातिदेशाधिकरणम्॥ १०॥

११

**अधिकं० विवर्णं** ऋगक्षरविलक्षणम्। 'अग्न आयाही'त्यादावोग्नायीति नीयमाने ओकारादिविकारे विवर्णत्वसत्वादतिव्याप्तिवारणाय **अधिकमिति**। ऋगक्षरेभ्योधिकमित्यर्थः। एतावन्मात्रञ्च हृर्यश्वादिः श्वाद्रिरित्यभ्यासातिप्रसक्तमतो **विवर्ण-**

किञ्चित्, तत्स्तोभशब्देनोच्यते ॥

इति स्तोभलक्षणाधिकरणम् ॥ ११ ॥

१२

धर्मस्यार्थ० प्रकृतौ व्रीह्यादिषु श्रुताः प्रोक्षणावघातादयो न तत्स्वरूपप्रयुक्ताः तन्मात्रपर्यवसायिनः किं तु 'व्रीहिभिर्यजेते'त्यादि· विहितसाधनविशेषद्वारेणापूर्वभावनार्थाः। तथा हि 'आग्नेयोऽष्टाकपालः' इति पुरोडाशद्रव्यकोऽग्निदेवत्यो यागो विहितः। तदनुवादेन व्रीहयो विहिताः पुरोडाशप्रकृतित्वम्प्रतिपद्यन्ते। तदयमर्थः— व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति। ततःपुनराह यैर्यजेत तान्व्रीहीन्प्रोक्षत्यवहनीति। ततश्च सर्वैरुपसंह्रियमाणैरयमर्थः सम्पद्यते—प्रोक्षणसंस्कृतैरवघातवितुषीकृतैश्च व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति। अयमेव च वाक्यार्थः पारमार्थिकः। व्रीह्यादिवाक्यार्था अस्यैवोपायभूताः पदार्थस्थानीयाः। एवं चेदाग्नेयादिभावनायाः शेषभूतः प्रोक्षणादीत्थम्भावस्तद्विकारेष्वतिदेशेन नीयते। तत्र नैवारे चरौ पुरोडाशस्थाने चरोर्निवेशात् व्रीहिस्थाने च नीवारनिवेशात् इतरस्य समस्तस्य यथाऽतिदेशमवस्थानात् 'नैवारं चरुं निर्वपेदाग्नेयवदि'त्यस्य श्रुतानुमितैकदेशनिष्पन्नस्य नैवारचरुविधेरयमर्थो

---

मिति। सूत्रार्थस्तु—उक्तलक्षणं यत् स स्तोभ इति जैमिनिराह, कुतः? स्तोभशब्दस्य तत्र प्रयोगादिति ॥

इति स्तोभलक्षणाधिकरणम् ॥ ११ ॥

१२

**धर्मस्य०** अत्र भाष्ये नीवारेषु व्रीहिधर्मा भवन्ति न वेति विचारः कृतः। स तु स्थानापत्त्यधीनत्वात्फलीभूत इति स्थानापत्तिरेवात्र विचार्येति दर्शयितुं धर्मप्राप्तेः स्थानापत्तिफलत्वप्रदर्शनाय धर्माणामपूर्वसाधनप्रयुक्तत्वमध्यायादावुक्तमेवानुवदति—**प्रकृतावित्यादि**। **उपसंह्रियमाणैः** प्रकरणवशेन वाक्यैकवाक्यतामपद्यमानैः। **अयमेव चेति**। अकाङ्क्षितप्रयोजनवशेनाङ्गवाक्यानां प्रधानवाक्यैकवाक्यतया महावाक्यार्थप्रतीत्यर्थत्वात्स एव पारमार्थिकः परमतात्पर्यविषय इत्यर्थः। **निवेशादिति**। पुरोडाशस्य व्रीहीणाञ्च

भवति—प्रोक्षितैरवघातवितुषीकृतैर्नीवारैश्चरुं कृत्वा तेन यजेतेति। तेन व्रीह्यादिस्थानापन्नेषु नीवारादिषु सिद्ध ऊहः।

स्थानापत्तिस्तु कथमवगम्यते-इदमस्य प्राकृतस्य कार्ये वर्त्तते, इदमस्येति ? तत्प्रदर्शनार्थमिदमधिकरणम्। तत्र पूर्वपक्षवादी नीवारमध्वशननखपरिधीशपदानां व्रीहिषडहोलूखलमुसलयूपगिरापदस्थानापत्तौ प्रमाणमपश्यन्न तेषु तद्धर्मा भवन्तीति मन्यते।

सिद्धान्तस्तु—नीवाराणां तावत्प्रत्यक्षमेव व्रीहिकार्ये तण्डुलनिर्वृत्तौ सामर्थ्यम्, सामर्थ्यानुसारी च शब्द इति। नैवार इति तद्धितो विकारार्थ इति निश्चीयते। चरुश्च देवतासंयोगात् पुरोडाशस्थानापन्न इति तत्प्रकृतिभूताः नीवारा व्रीहिस्थानापन्ना भवन्ति।

तथा—मध्वशनं षडहाभावे तत्कार्यस्य साधनापेक्षायां विधीयमानं कार्यापेक्षं सत् षडहकार्यमेवावलम्बते। इदञ्च षडहाभावे मध्वशनं विधीयते इति कृत्वा चिन्तितम्। तेनाभावे विधिरपि कार्यापत्तौ प्रमाणम्।

---

निवृत्तिरिति शेषः। एवञ्च स्थानापत्तावर्थसिद्धं धर्मानुष्ठानमिति सैवात्र विचार्येति प्रकृतमाह—**तेनेति**। उक्तरीत्या स्थानापत्तेरपि निर्णयात्कथं तद्विचारोऽपीत्याशङ्क्याह—**तत्रेति**। नीवारादीनां व्रीह्यादिस्थानापन्नत्वबोधकस्पष्टशब्दाभावादिति भावः। **सामर्थ्यं** योग्यता। विकारार्थकतद्धितरूपशब्दादेव कार्यापत्तिर्न तु प्रत्यक्षादित्याशङ्कामपाकरोति—**सामर्थ्येति**। तथा च प्रत्यक्षमूलकत्वाद्विकारार्थस्य प्रत्यक्षमेव स्थानापत्तिनिमित्तमत्रेति भावः। नन्वेवमपि न नीवाराणां व्रीहिकार्यपुरोडाशकरत्वं किन्तु चरूपकार्यकरत्वमत आह—**चरुश्चेति**। **देवतेति** यागोपलक्षणम्। यागहविष्ट्वेनैव पुरोडाशस्य ब्रीहिकार्यतया चरोरपि तत्कार्यतावच्छेदकाक्रान्तत्वान्नीवाराणां व्रीहीकार्यकरत्वमित्यर्थः। एवञ्च तत्कार्यजातीयकार्यकरित्वं तत्स्थानापन्नत्वमित्यवधेयम्। तेन चरुनीवारनखादीनामवान्तरकार्यभेदेऽपि न क्षतिः। ब्रह्मवर्चसादिफलस्यापि स्वर्गकार्यप्रधानयागप्रवृत्तिकारितया स्थानापत्तिः। कामनाविषयत्वेन स्वर्गादेः प्रवृत्तिप्रयोजकत्वात्। एवं सौर्यादेरप्याग्नेयकार्यजातीयफलापूर्वजनकतया स्थानापत्तिरूहनीया॥

**तथा 'नैर्ऋतश्चरुर्नखावपूतानामि'ति किं नखैरवपवनमन्यत्तुषविमोचनात् अतो नखानामुलूखलमुसलकार्यापत्तिः। 'परिधौ पशुं नियुञ्जीते'ति तु विस्पष्टमेव यूपकार्ये नियोजने परिधिर्विधीयते। तथा यत्प्रतिषिध्य यद्विधीयते 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयामि'ति तस्यापि तत्कार्यापत्तिः। गिरापदेऽपि हि निवृत्ते तत्कार्यसाधनम-**

---

**तथेति**। द्वादशाहे श्रुतम्–'संस्थिते षडहे मध्वाशयेत् घृतं वे'ति। षडहे संस्थिते षडहाभावे सतीत्यर्थः। एवञ्च केनापि प्रतिबन्धेन षडहाभावे मध्वशनं विधीयमानं प्रयोजनापेक्षायां षडहकार्यमेव साधनाकाङ्क्षमवलम्बत इत्यर्थः। एवञ्च मध्वशनेन षडहकार्यं कुर्यादिति विध्यनुमानात्कार्यापत्तिरियमित्यर्थः। ननु संस्थिते समाप्ते षडहे तत्कर्तृसंस्कारकतया षडहाङ्गत्वेनैव मध्वशनविधिः संस्थाशब्दस्य समाप्तिवचनत्वादविद्यमानस्य तदयोगादत आह–**इदञ्चेति**। भाष्य इति शेषः। स्थिरमुदाहरणन्तु'यः सत्रायागुरते स विश्वजिता यजेते'ति द्रष्टव्यम्। **तेनेति**। उक्तरीत्या तत्कार्ये विधेरनुमेयत्वेनेत्यर्थः। **प्रमाणं** प्रत्यक्षवचनातिरिक्तमिति शेषः।

अनुमानतः कार्यापत्तिं दर्शयति–**तथेति**। राजसूये श्रुतम्–**नैर्ऋतः** निर्ऋतिदैवतः। **नखेति**। नखावेदलितानामित्यर्थः। **किमिति**। नखैरवपवनं विदलनं तुषविमोकानुकूलव्यापारादन्यत्किम्। तुषविमोकानुकूलव्यापारात्मकमेवेत्यर्थः। अयमर्थः–यद्यपि नखानां नोलूखलकार्यावघातजनकत्वं किन्तु निर्भेदनजनकत्वमेव, तथापि निर्भेदनावघातयोस्तुषविमोकानुकूलव्यापारत्वेन नखोलूखलसाध्यत्वावगमात्तेन रूपेणैक्यमवगत्य नखानामुलूखलकार्यकारित्वप्रतीतिः। अनुमानन्तु नखा उलूखलकार्यजनकाः अवघातकार्यतुषविमोकानुकूलनिर्भेदनकारित्वादिति बोध्यम्। नीवाराणां व्रीहिकार्यतण्डुलनिष्पादकत्ववन्नखानामुलूखलकार्यावघातनिष्पादकत्वस्याप्रत्यक्षत्वान्नात्र प्रत्यक्षगम्यत्वशङ्कावसर इति। स्वशब्दगम्यां कार्यापत्तिमाह–**परिधाविति**। चातुर्मास्येषु हि प्रकृतितः प्राप्तं यूपकार्यं पशुनियोजनमुद्दिश्य परिधेर्विधानं स्पष्टमेव। अपूर्वनियोजनान्तरविधौ गौरवादिति भावः। यद्यप्यत्र यूपीयत्वं नियोजनस्य न श्रुतं तथाप्यनुवादस्य पुरोवादसापेक्षत्वात्तत्र च 'यूपे पशुं नियुञ्जीते'ति यूपश्रवणात्प्रत्यक्षवचनगम्येयं कार्यापत्तिः। प्रतिषेधानुमितशब्दगम्यां कार्यापत्तिमाह–**तथेति**। अत्र हि गिरापदनिषेधस्यापि विधौ वाक्यभेदापत्तेस्तदनुवादत्वाय गिरापदकार्ये विधिरिरापदस्योभयाकाङ्क्षया कल्प्यत इत्यर्थः। यद्यपि गिरापदस्य स्तोत्रसाधनत्वमक्लृप्तमिति तत्कार्याभावे कथं तत्रेरापदविधिः, तथापि स्वरूपयोग्यतया गिरापदेन कर्त्तुं शक्ये तस्मिन्निरापदविधिर्नानुपपन्न इति बोध्यम्। सूत्रार्थस्तु-धर्मस्य कार्यप्रयुक्तत्वात्तत्सम्बन्धात् द्रव्ये नीवा-

पेक्षते इरापदमपि विधीयमानं कार्यापेक्षं गिरापदकार्येण साधनापेक्षेण सम्बध्यत इति गिरापदस्थानापन्नमिरापदं तत्संस्कारिकां गीतिं लभते ॥

इति स्थानापत्त्यधिकरणम् ॥ १२ ॥

१३

तदुत्पत्तेस्तु० परिधौ पुनराक्षेपः। नीवारादयो हि कार्यार्थतया विधीमाना युक्तं यत्कार्यार्थान् व्रीहिधर्मान् लभन्ते परिधिः पुनरग्निपरिधानार्थेनोत्पन्नः न नियोजनार्थेन। परिधानार्थ एव तु तस्मिन् वचनात्पशुर्नियुज्यते। प्रकृतौ च कार्यार्था धर्मास्तच्छेषभूते साधनेऽनुष्ठिता नाशेषभूते परिधौ भवितुमर्हन्ति। यूपोत्पत्त्यर्थाश्च परिव्याणादयः। न चेह यूपोऽस्ति। अयूप एव हि परिधौ पशुर्बध्यते। तेनार्थलोपादपि न परिधौ खलेवाल्यामिव यूपधर्माः कर्तव्या इति प्राप्ते—

ब्रूमः—यद्यपि परिधानर्थेन परिधिरुत्पादितः, तथाऽपि नियोजने विनियोगात्पुरोडाशकपालस्येव तुषोपवापशेषत्वमस्त्येव। यद्यपि तादर्थ्यं

---

रादौ गुणे संस्कारे मध्वशनादौ विकारे च नखावपवनादौ व्यतिक्रमे यूपव्यतिक्रमेण विहिते परिधौ प्रतिषेधे सति विहिते इरापदादौ च चोद्यमानधर्मसम्बन्ध इह इति ॥

इति स्थानापत्त्यधिकरणम् ॥ १२ ॥

१३

तदुत्पत्तेः० अनन्तरसङ्गतिमाह—**आक्षेप इति**। **वचनादिति**। अन्यार्थस्यान्यशेषत्वायोगात्साधनत्वमात्रं वचनार्थ इत्यर्थः। ननु कार्यार्था धर्माः साधने भविष्यन्तीत्यत आह—**प्रकृतौ चेति**। प्रकृतिवदनुष्ठानस्यातिदेशशास्त्रार्थत्वात्तस्य चाशेषभूते परिधावसम्भवादित्यर्थः। प्रकृतौ शेषत्वमुद्देश्यतावच्छेदकं धर्मविधाविति तात्पर्यम्। किञ्च प्रकृतौ यूपधर्मविधौ न कार्यलक्षणा यूपपदेऽस्ति। आधानविधावाहवनीयपद इव स्वरूपार्थत्वेऽप्यानर्थक्याभावात्। अतो नियोजनार्थत्वाभावान्न तदर्थं परिधौ कार्या इत्याशयेनाह—**यूपोत्पत्तीति**। ननु यूपत्वार्थमेव धर्माः स्युस्तत्राह—**नचैहेति**। सकलयूपधर्मानुष्ठानं विना यूपत्वायोगात्परिधित्वविरोधेन च सकलधर्माऽसम्भवान्न यूपत्वरूप-

नास्ति, तथापि नियोजनसाधनत्वात्साधननिवेशिनो धर्मान् लभेतैव। न हि तादर्थ्यप्रयुक्तधर्माः, किन्तु साधनत्वप्रयुक्ताः। 'व्रीहिभिर्यजेत, यूपे पशुं बध्नाती'त्यादिभिर्हि साधनत्वेन विधीयमाना व्रीह्यादयो धर्मैः प्रोक्षण-परिव्याणादिभिः सम्बध्यन्ते। तादर्थ्यन्तु सदप्यशाब्दं न धर्मान्वयं भजते। न चोपयुज्यते तादर्थ्यम् धर्माणां कार्यं गच्छतां तत्साधनमेव द्वारमपेक्षितम्। अस्ति च परिधेरपि साधनत्वम्। न च यूपाख्यमेकं किञ्चदस्ति, यदुत्पत्त्युपयोगिनः परिव्याणादयः परिधौ लुप्तार्थाः स्युः। छेदनादिविधयो हि सर्वे परस्परानपेक्षाः काष्ठगतं दृष्टम् अदृष्टं वा यथायथं कार्यं गमयन्ति। सर्वाणि च तानि कार्याणि नियोजनस्याङ्गम्। तत्र परिधावसम्भवतां छेदनादीनां लोपेऽपि सम्भवन्तः परिव्याणादयो न लोपनीयाः। खलेवाल्यामप्यञ्जन-परिव्याणादयो भवन्त्येवेति वक्ष्यते। तस्मात्परिधौ यूपधर्माः कर्त्तव्याः॥

इति परिधौ यूपधर्मानुष्ठानाधिकरणम्॥ १३॥

---

प्रयोजनमस्तीति तल्लोपाद्बाध इति भावः। यथा 'खलेवाली यूपो भवती'ति क्षेत्रमध्यगतस्थूणायां यूपत्वासम्भवान्न यूपधर्मानुष्ठानं तद्वदिति दृष्टान्तार्थः। **शेषत्वमिति**। तत्प्रयुक्तत्वाभावेऽपि तदुद्देश्यक—कृतिकारकत्वमात्रस्य शेषलक्षणत्वादित्यर्थः। एतच्च सुहृद्भावेनोक्तम्। वस्तुतस्तु धर्मविधौ साधनत्वमेवोद्देश्यतावच्छेदकं शब्दावगतत्वान्न तु शेषत्वमशाब्दत्वादित्याह—**यद्यपीति**। ननु धर्मविधौ साधनत्वमपि लक्ष्यमेवेति शेषत्वमेव कुतो न लक्ष्यतेऽत आह—**नचेति**। यदुक्तं यूपत्वरूपार्थलोपाद्धर्मबाध इति तत्परिहरति—**न च यूपाख्यमिति**। यदि हि छेदनादिसंस्कारैरवान्तरव्यापारद्वारा करणोपकारवदेकं यूपत्वाख्यमदृष्टं जन्यत इत्युच्येत तदा परिधौ सर्वसंस्काराभावाद्यूपत्वाख्यकार्यलोपान्न परिव्याणादयः स्युः। न चैवमिष्टम्। अदृष्टान्तरे मानाभावेन छेदनादिसंस्काराणामेव दृष्टादृष्टरूपाणां समुदायस्य समूहालम्बनबुद्धिविषयत्वेन यूपपदार्थत्वात्। 'यूपे पशुं बध्नातीति' च संस्काराणां यूपपदवाच्यानां पशुनियोजनाङ्गत्वात्तत्तदृष्टरूपद्वारसम्भवाच्च न लोप इत्यर्थः। 'यूपं छिनत्ती'त्यादौ तु यूपपदं समुदायसमुदायिनोरभेदविवक्षयौपचारिकमिति भावः। **वक्ष्यत इति**। दशम इति शेषः। सूत्रार्थस्तु-तदुत्पत्तेः परिधानार्थं तयोत्पत्तेर्निवृत्तिर्यूपधर्माणाम्, कुतः? तत्कृतत्वात् नियोजनाङ्गताप्रयुक्तत्वादिति॥

इति परिधौ यूपधर्मानुष्ठानाधिकरणम्॥ २१॥

१४

परार्थेन० अभ्युदयेष्ट्यां दधिशृतयोः किं प्रणीताधर्माः कर्त्तव्याः ? नेति ? चिन्तायां प्रणीताकार्ये श्रपणे तयोः परिधेरिव नियोजने विनियोगाभावादकरणम् । उत्पवनादीनामसत्यपि विनियोगे, अर्थादपि तावत्साधनत्वमस्तीति साधननिवेशिनो धर्माः कर्त्तव्याः ॥

इति दधिशृतयोः प्रणीताधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

१५

एकार्थ० ज्योतिष्टोमे बृहद्रथन्तरे पृष्ठसाधनत्वेन विहिते । तयोर्धर्माः 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्' 'बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेदि'त्यादयः । किमुभयेऽपि धर्माः उभयत्र कर्त्तव्याः ? उत यथाश्रुतीति ? संशये—

उभयोरेककार्यत्वात्कार्यसाधनगोचराः ।
धर्माः द्वयोर्द्वयेऽपि स्युर्व्रीहिधर्मा यवेष्विव ॥

---

१४

पदार्थेन अत्रातिदेशिकी सङ्गतिः । **प्रणीताः** प्रणयन संस्कृता आपः । 'शृते चरुं दधंश्चरुमि'ति सप्तमीश्रवणेऽपि शृतदध्नोः प्रदेययोः सह श्रहपणप्राप्ताधारतानुवादकतया न प्रणीताकार्ये तयोर्विनियोगः । आर्थिकसाधनत्वन्तु न धर्मसम्बन्धनिमित्तमित्यधिकाशङ्केति भावः । **अर्थादपीति** । साधनत्वमात्रेणाविहितेनापि द्वारत्वोपपत्तेरिति भावः । सूत्रार्थस्तु-पदार्थे शृतादावार्थिकं सामान्यं प्रणीतावत्साधनं न तु वैधम् । अतस्तत्र नोत्पवनादीति शेषः । संस्कारस्य तदर्थत्वात् । श्रपणशेषार्थत्वादिति ।

**इति दधिशृतयोः प्रणीताधर्मानुष्ठानाधिकरणम्** ॥ १४ ॥

१५

**एकार्थत्वात्०** अपवादादनन्तरसङ्गतिः । अध्यायसङ्गतिस्तु प्रासङ्गिकी ।
३२

ननु चान्यथा रथन्तरेण स्तुतिः साध्यते शूरादिप्रकारेण, अन्यथा च बृहता चित्रादिप्रकारेण। तेन साधनभावप्रकारभेदात् साधननिवेशिनो धर्मा न सङ्कीर्यन्ते। यथा व्रीहिधर्माः स्रुवादिष्वेककार्येष्वपि न सम्भवन्ति, कारकभेदात्। एवमिहापि।

नैतदेवम्, यदेव हि 'रथन्तरं पृष्ठं भवती'ति शास्त्रविहितं साम्नोऽक्षराभिव्यञ्जकत्वेन साधनत्वं तेनांशेन सम्मीलनादिधर्माः सम्बध्यन्ते। साधनविधिना हि सम्बध्यमाना धर्मविधयो यदेव विधौ विवक्षितं साधनरूपं तेनैव सम्बध्यन्ते। शूरादिप्रकारभेदस्तु अविवक्षितो वस्तुस्वभावकृतो न धर्मव्यवस्थायां हेतुर्भवितुमर्हति। किं चायमभिव्यज्यमानानामृचां भेदः यच्छूरादिरूपता, साम्नोस्त्वक्षराभिव्यक्त्यात्मकमेकरूपमेव साधनत्वम्। तस्मात्सङ्कर एवात्र युक्तो व्रीहियवादिधर्माणामिव संमीलनादीनामिति प्राप्ते। ब्रूमः—

साम्नोर्व्यवस्थया यस्मान्निर्देशो मीलनादिषु।
तस्मान्न सङ्करो युक्तो न त्वेवं प्रोक्षणादिषु॥

व्रीहिग्रहणं कारकविशेषोपलक्षणमिति कृत्वा यवेष्वपि प्रोक्षणादयः क्रियन्ते। तदिहापि यदि रथन्तरग्रहणं साधनमात्रोपलक्षणं स्यात्, तत् एकमेव रथन्तरं बृहद्वा सर्वधर्मविधिषु गृह्येत। यतस्तु क्वचिद्रथन्तरं क्वचिच्च बृहद्गृह्यते। तन्नूनमिह रथन्तरादिस्वरूपमपि विव-

---

**एककार्यत्वादिति**। पृष्ठस्तोत्ररूपैककार्यजनकत्वादित्यर्थः। **ननु चेति**। साम्नो ऋगभिव्यक्तिद्वारा स्तुतिसाधनत्वादृक्साध्यशूरत्वादिप्रकारकस्तुतिहेतुत्वमित्यर्थः। **शूरादीति** भावप्रधानम्। धर्मविधिषु शास्त्रतात्पर्यविषयीभूतं यादृशसाधनत्वं तदेव निमित्तम्। प्रकृते च रथन्तरादेः ऋगभिव्यञ्जनद्वारकसाधनतामात्रे शास्त्रतात्पर्यम्। शूरत्वादिप्रकारभेदस्त्वाधारभूतर्क्स्वभावकृत आर्थिक इति न व्यवस्थाहेतुरित्याह—**नैतदिति**। वस्तुतः सामसाधनतायामक्षराभिव्यक्तेरेव योग्यतया निवेशो न तु शूरत्वादिप्रकारस्य। तस्य गीतिरूपसामायोग्यत्वादृचामेव तत्र सामर्थ्यादित्याह—**किञ्चेति**। **शूरादिरूपता**। शूरत्वादिप्रकारेणाभिधायकता। **व्रीहीति**। यथा व्रीहियवयोः कठिनकोमलतण्डुलद्वारकसाधनतावैचित्र्येऽपि हविः प्रकृतित्वसाधारण्यं वैचित्र्यन्त्वार्थिकं तथेहापीत्यर्थः। ननु स्वरूपविवक्षायां कण्वरथन्तरादौ न मीलनादयः स्युरित्यस्वरसात्पृष्ठभेदाश्रयणेन व्यव-

क्षितमिति गम्यते। तस्माद्व्यवस्था। किञ्च नानयोरेककार्यत्वम्, अन्यद्धि पृष्ठं रथन्तरेण साध्यते, अन्यच्च बृहता। ननु 'पृष्ठैः स्तुवते' इति वाक्योत्पन्नपृष्ठानुवादेन बृहद्रथन्तरयोर्विधानादेककार्यत्वमनयोः। नैवम्, यदि 'पृष्ठैः स्तुवते' इत्युत्पत्तिः स्यात्, तत् उत्पत्तिगतया बहुत्वसङ्ख्यया बहूनि पृष्ठानि स्युः। तत्र सप्तमे यत्सूत्रभाष्यकाराभ्यां ज्योतिष्टोमे पृष्ठबहुत्वं नास्तीत्युक्तं तद्विरुध्येत। तस्मात् 'रथन्तरं पृष्ठं भवती'ति रथन्तरविशिष्टं पृष्ठं विधीयते। पृष्ठशब्दस्य स्तुतिवाचित्वं वाक्यशेषाद्, गुणवाक्यैश्चावगम्यते। तस्माद्भिन्नस्तोत्रसाधनत्वात्साम्नोस्तन्निबन्धनानां धर्माणामाज्यौषधादिधर्माणामिव व्यवस्थासिद्धिः। स्तोत्रयोश्चादृष्टार्थत्वात् प्रयाजादेरिव नैकार्थ्यम्। नानाकार्ययोश्च स्तोत्रयोर्वचनबलाद्विकल्पः। तस्मान्न धर्मसङ्करः।

इति बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् ॥ १५ ॥

१६

अप्राकृते० वैश्यस्तोमे श्रूयते 'कण्वरथन्तरं पृष्ठं भवती'ति। तत्र संशयः किं कण्वरथन्तरं बृहद्रथन्तरयोः स्थानापन्नं कार्यप्रयुक्तान् रथन्तरधर्मान्, बृहद्धर्मांश्च गृह्णद्विकल्पेन गृह्णाति ? उत समुच्चयेनेति ?

---

स्यामाह—**किञ्चेति**। ननु 'रथन्तरं पृष्ठं भवती'त्युत्पत्तिविधौ पृष्ठशब्दस्य स्तुतिवाचित्वे किं मानमत आह—**वाक्यशेषादिति**। माहेन्द्रादिस्तुतेस्तत्र सङ्कीर्त्तनात्सप्तदशानि पृष्ठानीति स्तोमरूपगुणविधिवशाच्चेत्यर्थः। स्तोत्रीयसङ्ख्याया एव सप्तदशादिपदैर्डप्रत्ययान्तैरभिधानादिति भावः। **वचनेति**। 'रथन्तरं पृष्ठं भवति बृहद्वा पृष्ठं भवती'ति प्रसिद्धादित्यर्थः। सूत्रं स्पष्टार्थम् ॥

इति बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् ॥ १५ ॥

१६

**अप्राकृते० वैश्येति**। एतत्संज्ञके वैश्याधिकारिके यज्ञ इत्यर्थः। कण्वरथन्तराख्यसामसाधनकत्वं प्रकृतिप्राप्तपृष्ठस्तोत्रे विधीयते। तच्चाक्षराभिव्यक्त्याख्यबृहद्रथन्तर-

विकल्प एव तेषां स्यात् प्रकृतावसमुच्चयात् ।
मिथोऽनपेक्षैस्तैर्धर्मैः प्रकृतौ साधिता स्तुतिः ॥

उच्यते—

पृथङ्निर्देशसामर्थ्याद्व्यवस्था प्रकृतौ कृता ।
इदन्त्वप्राकृतं साम द्वयोः कार्यं विधीयते ॥

तच्च द्वयोरपि कार्यं कुर्वद्धर्मानपि समुच्चयेन गृह्णातीति भाष्यकारः ।

वार्तिककारस्तु विकल्पमेव मन्यते । तथा हि-यद्यपि तावत्प्रकृतावेकैव पृष्ठस्तुतिर्धर्माणां प्रयोजिका, तथाऽपि तेषां सामद्वारत्वात् साम्नोश्च वैकल्पिकत्वाद्धर्माणाञ्च पृथक्निर्देशेन व्यवस्थितत्वात् केचिद्धर्मा रथन्तररूपसाधनद्वारेण स्तुत्यपूर्वं साधितवन्तः, केचिद्बृहद्द्वारेण । एवमेव विकृतावप्यतिदेशेन कदाचिद्रथन्तरं स्वधर्मयुक्तं पृष्ठसाधनं कदाचिद्बृहत् । एवं प्राप्ते—

कण्वरथन्तरं तयोः कार्ये विहितमपि यथाप्राप्तयोः कार्ये विधाना-

---

कार्यकारितया तत्स्थानापन्नम् । तत्र धर्मसमुच्चयमते आपवादिकी सङ्गतिः । पूर्वाधिकरणे व्यवस्थाया उक्तत्वात् । विकल्पसिद्धान्तिमते त्वातिदेशिकी सङ्गतिरिति । भाष्यानुसारेण पूर्वपक्षमाह—**विकल्प इति** । प्रकृतौ धर्माणां व्यवस्थितत्वात्समुच्चयाभावेनात्राप्यसतिसमुच्चये विकल्प इत्यर्थः । ननु प्रकृतौ सामभेदाद्व्यवस्थावशेनासमुच्चयेऽप्यत्र सामैक्यात्समुच्चयः स्यादत आह—**मिथ इति** । प्रकृतौ निरपेक्षतया स्तुतिसाधनत्वेनावगतानां विकृतावप्यतिदेशतस्तथात्वमेव युक्तमित्यर्थः । **पृथगिति** । एकपृष्ठस्तोत्रापूर्वप्रयुक्तत्वेनान्याय्यापि व्यवस्थानिर्देशभेदवशादार्थिकी प्रकृतौ, विकृतौ तु नार्थिकमतिदिश्यत इत्युभयकार्यापन्ने कण्वरथन्तरे उभयधर्माणामविरोधात्समुच्चय एव युक्त इत्याशयः । एतद्दूषणपूर्वकं वार्तिकसिद्धान्तं दर्शयति—**वार्तिकेति** । भाष्यसम्मतपृष्ठस्तोत्रैक्याभ्युपगमेनापि समुच्चयदूषणं तावदाह—**यद्यपीति** । **तेषां**—धर्माणाम् । **व्यवस्थितत्वादिति** । निर्देशभेदान्यथानुपपत्त्या बृहद्रथन्तरशब्दाभ्यां धर्मविधिगताभ्यां तत्तन्नियमापूर्वसाधनत्वलक्षणया धर्मविधानाच्छास्त्रत एव व्यवस्था न त्वार्थिकीति भावः । एतदेवाभिप्रेत्य भाष्यकृतोक्तम् 'साम्नापि हि दृष्टमदृष्टञ्च क्रियते' इति । ननु प्रकृतौ सामविकल्पाद्धर्मविकल्पेऽप्यत्र सामैक्यात्समुच्चयः स्यादत आह—**एवमिति** । प्रकृतिवद्विकल्पेन प्राप्तयोः कार्ये कण्वरथन्तरं विधीयमानं यदा यत्कार्यार्थं तदा तद्धर्मवदिति विकल्प एव युक्त इत्यर्थः । न च कण्वरथन्तरतदाश्रयऋक्स्तोमरूपसामग्न्य-

त्कदाचिद्रथन्तरकार्ये कदाचिद्बृहत्कार्ये विहितम्भवति । न सर्वदा द्वयोः कार्ये । ततश्च कदाचित्कस्यचिद्धर्मान् गृह्णाति, न सर्वदा सर्वान् । स्तुतिरपि प्रकृतावन्योन्यनिरपेक्षैर्धर्मैः साधिता, विकृतावपि न समुच्चयमपेक्षते किमुत यदा द्वे स्तुती प्रकृतौ वचनादनुष्ठिते विकृतावपि तथैव प्राप्ते । तयोश्च वचनाद्विकल्पेनानुष्ठीयमानयोः साधनत्वेन विधीयमानं कण्वरथन्तरमन्यतरधर्मानेव गृह्णातीति व्यक्तमेतत् । तस्माद्विकल्पः ॥

इति कण्वरथन्तराधिकरणम् ॥ १६ ॥

१७

उभयसाम्नि० यत्र बृहद्रथन्तरयोः प्रकृतितो विकल्पे प्राप्ते समुच्चयो विधीयते'संसवे उभे कुर्यादि' त्यादौ, तत्र किमुभयोरथन्तरधर्माः, उभयोश्च बृहद्धर्माः कर्त्तव्याः ? उत रथन्तरे रथन्तरधर्माः, बृहति च

---

भेदात्कार्यद्वयमपि जायमानं कुतो नाभ्युपेयमिति वाच्यम्, संमीलनादि धर्मभेदेन सामग्रीभेदोपपत्तेः । संमीलनादिसमुच्चयस्य च कार्यसमुच्चयाधीनत्वात्तस्य चानपेक्षितत्वेनासिद्धेरिति भावः । अत एवाह—**स्तुतिरपीति** । स्तुतेर्हि प्राकृतोपकारसाकाङ्क्षतया निरपेक्षतत्तन्नियमापूर्वापेक्षा न तु समुच्चयेनेत्यर्थः । एवं पृष्ठस्तोत्रैक्येऽपि धर्मविकल्पमुपपाद्य तद्भेदे कैमुत्यन्यायेन तमाह— **किमुतेति** । **अन्यतरेति** । यदा यदपूर्वार्थितया क्रियते तदा तदपूर्वार्थान् धर्मान् गृह्णातीत्यर्थः । सूत्रार्थस्तु-अप्राकृते कण्वरथन्तरे-तद्विकारत्वाद्बृहद्रथन्तरोभयविकारत्वादुभयधर्माः स्युरिति शेषः । विरोधात्तु केचिद्व्यवस्थया स्युरिति भाष्यमते । वार्त्तिकमते तु वैरूपस्तोमस्य विकृतित्वात्प्रकृतिवदप्राकृतेऽपि कण्वरथन्तरे व्यवष्ठितेरन् अन्यथा चोदकविरोधादिति ॥

**इति कण्वरथन्तराधिकरणम् ॥ १६ ॥**

१७

**उभय साम्नि०** भाष्यमते आपवादिकी वार्त्तिकमते त्वातिदेशिकी सङ्गतिः । संसवो यज्ञविशेषः । **द्वाभ्यामपीति** । प्रकृतिप्राप्तपृष्ठानुवादेनोभयविधावविशेषात्पृष्ठद्वयस्योद्देश्यत्वात्प्रत्युद्देश्यञ्च वाक्यपरिसमाप्तेरेकैकपृष्ठकार्ये द्वयोः साहित्यावगमादेकै-

बृहद्धर्मा एव ? इति संशये, द्वाभ्यामपि संहत्यैकस्य कार्यं साध्यत इति द्वयोरपि द्वयधर्मप्राप्तौ उच्यते—यद्येकैकस्य कार्ये द्वयं विधीयेत, ततः स्यादेवम् ।

चोदकेन विकल्पेन प्राप्तयोः पृष्ठयोरिह ।
स्वधर्मयुक्तयोरेव समुच्चयविधिस्त्वयम् ॥

एवं हि समुच्चयमात्रविधानाल्लाघवम्, अप्राकृतकार्यता च साम्नोर्न कल्पिता भविष्यति । तस्मात्प्रकृतिवदिहापि धर्मा व्यवस्थिताः ॥

इति संसवे बृहद्रथन्तरयोर्व्यवस्थाधिकरणम् ॥ १७ ॥

१८

पार्वण० 'स्रुवेण पार्वणौ होमौ जुहोती'ति तद्धितश्रुत्या पर्वदैवत्यौ होमौ किं विकृतिष्वतिदिश्येते ? नेति ? संशयः । तदर्थमिदं विचार्यते— किं पर्वशब्दः कालवचनः कालोऽस्य देवता, तस्य चासंस्कार्यत्वादारादुपकारकौ होमौ ? उताग्नेयादिसमुदायवचनः समुदायदैवत्यौ होमौ तत्संस्कारार्थाविति ? तत्र—

---

कस्मिन्नुभयधर्माः स्युरिति भावः । **यदीति** । तथा सति समुच्चितसामविधौ विशिष्टविधिगौरवादप्राकृतकार्यकारित्वापत्तेरिति भावः । **पृष्ठयोरिति** । भाष्यमते तु साम्नोरिति ज्ञेयम् । **अप्राकृतेति** । रथन्तरस्य बृहत्कार्यं बृहतश्च रथन्तरकार्यमप्राकृतं कल्प्येतेत्यर्थः । उभयसाम्नि संसवादौ चैवमुभयधर्माः स्युरिति सूत्रार्थः ॥

इति संसवे रथन्तरबृहतोर्व्यवस्थाधिकरणम् ॥ १७ ॥

१८

**पार्वण०** अत्र च प्रसङ्गरूपां सङ्गतिमग्रिमाधिकरणान्ते स्वयमेव वक्ष्यति । आरादुपकारकत्वे प्रयाजादिवद्विकृतिष्वतिदेशः संस्कारकत्वे संस्कार्यस्य समुदायस्य विकृतावभावान्नातिदेश इति हेतुहेतुमद्भावः । **असंस्कार्यत्वादिति** । स्मरणरूपो हि संस्कारः कालस्य कर्मारम्भ एवोपयुज्यते पर्वणहोमयोस्तु प्रयोगमध्यवर्तित्वान्न तदुपयोग इत्यारादुपकारकत्वमेवेति भावः । पूर्वपक्षमाह—**काल इति** । प्रयोगप्राचुर्यादिति

**कालेशब्दस्य मुख्यत्वात्कालाभीज्येह मन्यते।**
**पृणातेर्दानकर्मत्वात्कर्मण्यपि च मुख्यता ॥**

**पृणातेर्दानकर्मणः पर्वशब्दः। स च दीयतेऽस्मिन्नित्यधिकरण-व्युत्पत्त्या कालेऽपि मुख्यः। भावव्युत्पत्त्या कर्मण्यपि। तत्र प्रकरणात्सामवायिकत्वलाभाच्च कर्मवचनमङ्गीकृत्य तत्संस्कारार्थतां होमयोरध्यवस्यामः। तेषाञ्च कर्मणां तन्त्रेणाभिहितानामग्नीषोमयोरिव व्यासक्तं देवतात्वं नैकैकशः। तेन समुदायस्य देवतात्वात् तस्य च विकृतिष्वभावादतद्विकारत्वाच्च सौर्यादेः, तत्र होमयोरप्रवृत्तिः। समुदायिविकारा हि सौर्यादयः न समुदायविकाराः ॥**

**इति पार्वणहोमाधिकरणम् ॥ १८ ॥**

---

भावः। **कालाभीज्या** कालदैवत्यो यागः। सिद्धान्तमाह--**पृणातेरिति**। **दानकर्मत्वात्** दानक्रियावाचित्वात्। 'अन्येभ्योऽपि दृश्यते' इति वनिप् प्रत्यये पर्वशब्द निष्पत्तेरिति भावः। यद्यपि यागदानयोर्भेदस्तथापि शाब्दिकानां तयोरेकतया व्यवहाराद्यागस्यापि भावव्युत्पत्त्या पर्वशब्द वाच्यत्वाविरोधः। ननु पर्वशब्दस्योभयसाधारणत्वेऽपि 'पूर्णमासं यजामहे अमावास्या सुभगे'ति मन्त्रवर्णवशाच्छागन्यायेन कालपरत्वं स्यादत आह—**तत्रेति**। तथा च प्रकरणादिवशेन प्रधानवाक्यार्थनिर्णये तदाकाङ्क्षाविरहाद् गुणभूतानुवादकमन्त्रस्तदनुसारेण नेतव्यः। छागस्थले तु पशु पदस्य विशेष निर्णायकान्तराभावान्मन्त्रस्य नियामकतेति वैषम्यमिति भावः। नन्वेवमपि विकृतौ कुतो नातिदेशः पर्वशब्दवाच्ययागदेवतासत्वादत आह—**तेषाञ्चेति**। देवतात्वेनान्वयवेलायां विधेयगतत्वेन साहित्यस्य विवक्षितत्वादिति भावः। **अग्नीषोमयोरिवेति** व्यासक्तत्वमात्रे दृष्टान्तः। तत्र समासगम्यत्वेनैकाभिधानगम्यत्वाभावात्। **समुदायस्येति**। समुदितानामित्यर्थः। **तस्य** समुदितस्य। ननु समुदायस्यानतिरेकात्समुदायिनामाग्नेयादीनामयं संस्कारस्तद्विकृतौ कुतो न स्यादत आह—**अतद्विकारत्वादिति**। सर्वसमुदायिविकारत्वाभावादित्यर्थः। समुदायिधर्मों हि तद्विकृतावतिदिश्येत। न च समुदायिनां सौर्यादिर्विकृतिः किन्त्वेकदेवताकत्वादि सादृश्यादाग्नेयादेरेकैकस्यैवेति भावः। **समुदायिविकाराः** तत्तत्समुदायिविकाराः। **न समुदायविकाराः** न सर्वसमुदायविकाराः। तथा च समुदायापूर्वप्रयुक्तत्वात्संस्कारस्य तस्य च विकृतावसत्वान्न पार्वणहोमयोः प्रवृत्तिरित्याशयः। सूत्रार्थस्तु स्पष्ट एव।

**इति पार्वणहोमाधिकरणम् ॥ १८ ॥**

१९

उभयोः० किमेतौ होमावुभावप्युभयोः पौर्णमास्यमावास्ययोः कर्त्तव्यौ ? उत विभज्य पौर्णमास्यां पौर्णमासीदेवत्यौ अमावास्यायाममावास्यादेवत्यौ ? इति। तत्र प्रकरणाविशेषादुभावप्युभयत्रेत्याशङ्क्य संस्कार्यवशत्वात् संस्काराणां सूक्तवाकन्यायेन निष्कर्षः। तेनैव च न्यायेन गतत्वान्नेदमधिकरणान्तरं पूर्वस्यैव तु प्रयोजनसूत्रद्वयमिदम्। 'उभयरविशेषात्, यदभीज्या तद्विषयावि'ति ऊहसिध्यर्थमवान्तरकार्यनिरूपणं प्रस्तुतमिति तत्प्रसङ्गात्पार्वणयोरवान्तरकार्यं निरूपितम्॥

इति पार्वणहोमयोः व्यवस्थाधिकरणम्॥ १९॥

२०

प्रयाजे० 'समिधो यजति, तनूनपातं यजती'त्यत्रापि किं कर्मसम्बन्धिनः समिदादीन् देवतात्वेनोद्दिश्य तत्संस्कारार्थं यागविधानम्? उतारादुपकारकयागविधानमिति? संशये, पूर्ववत्सामवायिकत्वलिप्सया संस्कारविधिः। द्वितीया च देवताऽभिधाने समर्थैव, 'विष्णुं यजती'त्यादिदर्शनादिति प्राप्ते। ब्रूमः—

---

१९

उभयोः० **पूर्वस्यैव त्विति**। कालाभीज्यापक्षे हि उभयोः पर्वणोरुभावपि होमौ स्याताम्। आरादुपकारित्वेन लिङ्गकृतविशेषाभावादित्याद्यसूत्रं प्रयोजनकथनार्थम्। उत्तरन्तु यस्य समुदायस्य संस्कारिका अभीज्याहोमस्तद्विषयः संस्कार्यवशादिति सिद्धान्तप्रयोजनप्रदर्शनार्थमित्यर्थः। सङ्गतिमाह—**ऊहेति**। कण्वरथन्तरादावित्यर्थः। अवान्तरकार्यं दृष्टादृष्टरूपम्॥

इति पार्वणहोमयोर्व्यवस्थाधिकरणम्॥ १९॥

२०

प्रयाजे० संस्कारकत्वापवादादनन्तरसङ्गतिः। **देवतात्वेनेति**। समिदादिशब्दानामग्निवाचित्वस्य वेदे प्रसिद्धेः 'समिधोऽग्न आज्यस्ये'ति यागमनुप्रकाश्यत्वाच्चेत्याशयः। देवतावाचकशब्दाभावमाशङ्क्याह— **द्वितीयेति**। उद्देशांशे कर्मत्वेन

उद्देशपूर्वकस्त्यागो यजिना ह्यभिधीयते ।
त्यागे च नास्ति कर्मत्वं देवतायाः कथञ्चन ॥

उद्देशांशगतन्तु कर्मत्वं यागेऽप्युपचर्य 'विष्णुं यजती'त्यादिनिर्देशः । न चेह विधावुपचारो युक्तः । यागास्त्विह केवला विधीयन्ते तेषाञ्च श्रुत्यादिभिः कार्यविशेषानवगमात् प्रकरणेनारादुपकारकत्वम् । समिदादिशब्दास्तु मन्त्रवर्णप्राप्तदेवतां निमित्तीकृत्य नामधेयानि देवता एव वानुवदन्ति । न चानुवादे उपचारो दोषः । तस्मादारादुपकारकाः प्रयाजाः ॥

इति प्रयाजानामारादुपकारकत्वाधिकरणम् ॥ २० ॥
इति शास्त्रदीपिकायां नवमस्य द्वितीयः पादः ॥



---

समिदादेरन्वयात्समिदुद्द्देश्यकत्वावगमाद्देवतात्वं द्वितीयागम्यमिति भावः । **उद्देशेति** । तथा चोद्देशांशस्य त्यागविशेषणत्वेन द्वितीयोक्तकर्मत्वानन्वयात्प्रधानभूतत्यागकर्मत्वस्य चासम्भवादित्यर्थः । **उपचर्येति** । प्रमाणान्तरप्राप्तानुवादकत्वाल्लक्षणामाश्रित्येत्यर्थः । प्रकृते तु नैवमित्याह—**न चेहेति** । 'न विधौ परशब्दार्थः' इति न्यायादिति भावः । कथं तर्हि प्रकृतवाक्यार्थस्तमाह—**यागास्त्विति** । **नामधेयानीति** । अग्निहोत्रमित्यादिवदित्यर्थः । ननु तवापि लक्षणादोषस्तुल्य इत्याशङ्क्याह—**न चेति** । तव तूद्देश्यसमर्पकतया विध्यन्तर्भावाद्दोष इति भावः । सूत्रं स्पष्टार्थम् ।

इति प्रयाजानामारादुपकारकत्वाधिकरणम् ॥ २० ॥

इति श्रीमद्रामचन्द्रबुधवरात्मजतत्सद्वैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां नवमाध्यायस्य द्वितीयः पादः ॥



## अथ तृतीयः पादः

१

प्रकृतौ० मन्त्राणामिदानीमूहश्चिन्त्यते 'अग्नये जुष्टं निर्वपामी' ति 'व्रीहीणां मेध सुमनस्यमानः' इत्येतौ मन्त्रौ किं सौर्यादिषु नीवारादिषु च ऊहितव्यौ ? उत नेति ? संशये,

प्रकृतौ यादृशो मन्त्रश्चोदकेन हि तादृशः ।
प्राप्यते विकृतौ तस्मान्नोहस्तत्रावकल्पते ॥

ननु कार्यद्वारेण मन्त्राः प्राप्यन्ते । कार्यश्चापूर्वीयदेवताप्रकाशनं नाग्निस्वरूपप्रकाशनमित्युक्तं 'फलदेवतयोश्चे'त्यत्र । तस्मादिहापि सूर्य एव प्रकाशयितव्यः । न चाग्निपदं तत्प्रकाशने समर्थमिति सूर्यपदं प्रक्षेप्तव्यम् ।

उच्यते—सत्यम्, सूर्य एव प्रकाश्यः, स तु चोदकप्राप्तेनाग्निपदेनैव गुणवृत्त्या प्रकाश्यते । तद्यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति

---

## तृतीयः पादः

१

**प्रकृतौ०** संस्कारसामोहौ सोपोद्घातौ पादद्वयेनोक्तौ । प्रथमपादे त्वल्पशो मन्त्रोहः । इह तु प्राधान्येन मन्त्रोह एव समोहसमाप्ताववशिष्टोऽवसरसङ्गत्या चिन्त्यत इत्याह—**मन्त्राणामिति** । 'व्रीहीणां मेधे'ति मन्त्रस्य पात्र्यां पुरोडाशप्रतिष्ठापनप्रकाशनार्थत्वाच्चरोश्च तदभावान्नीवारग्रहणं पुरोडाशार्थाभिप्रायमन्योपलक्षणं वा बोध्यमिति वदन्ति । गतार्थत्वमाशङ्कते—**नन्विति** । दशमाद्ये कार्यातिदेशोत्तरं तत्पृष्ठभावेन पदार्थातिदेशोक्तेरित्यर्थः । **नाग्नीति** । आनर्थक्यप्रसङ्गादिति भावः । **इहापि** सौर्येऽपि । अग्निपदेनैव सूर्यप्रकाशनोपपत्तेर्नोहसिद्धिरित्याह—**उच्यत इति** । **चोदकप्राप्तेनेति** गुणवृत्त्याश्रयणे विनियोगरूपहेतुः सूचितः । एतदेव सदृष्टान्तमाह—**तद्यथेति** । नन्वैन्द्री प्रत्यक्षवचनविहितत्वादस्तु गौण्या प्रकाशिका । कल्प्यातिदेशस्तु मन्त्रः सूर्यपदो-

वचनादिन्द्रपदेनैव गुणवृत्त्या गार्हपत्य उपस्थीयते, तथेहापि प्राकृतस्यैवाग्निपदयुक्तस्य मन्त्रस्य सूर्यप्रकाशनाय चोदकेन विनियुक्तत्वात्, तेनैव सूर्यं प्रकाशयिष्यामः अन्यथाऽर्थवशेन मन्त्राणामन्यथाभावकरणे गार्हपत्यवशादैन्द्रोऽपि मन्त्र ऊहितव्यः स्यात्। तस्मादेतावानेव मन्त्राणामन्यथाभावः यत्प्रकृतावग्निः प्रकाशितः, विकृतौ सूर्य इति। न तु पठितपदोद्धारः, पदान्तरप्रक्षेपश्च युक्त इति प्राप्ते अभिधीयते—

प्रकृतौ यादृशं रूपं मन्त्राणां हि विवक्षितम्।
तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम्॥

प्रकृतावग्निपदं न स्वरूपविवक्षया पठितमग्निपदयुक्तो मन्त्रः कथं नाम स्यादिति। यदि ह्येवं भवेत्, ततस्तेनैव यथा कथञ्चित्प्रकाश्येत सूर्यः। देवतावाचिपदविवक्षया त्विदं पठितं देवतावाचिपदयुक्तो मन्त्रः कथं नाम स्यादित्येवमभिसन्धायाग्निपदं पठितम्, तस्यैव प्रकृतौ देवतावाचित्वात्। अवश्यं हि देवतापदयुक्तमन्त्रमधिजिगांसमानैरग्निपदमेवाध्येतव्यम्। अतः तद्रूपविवक्षयाऽग्निपदं पठितम्, तथा दृष्टार्थं भवति। स्वरूपविवक्षायां त्वदृष्टार्थतैव स्यात्। एवञ्च विकृतावपि देवतावाचिपद-

---

हेनैवोपकरिष्यतीत्यत आह--अन्यथेति। विनियोजकत्वाविशेषात्प्रत्यक्षत्वानुमानिकत्वकृतवैषम्यमप्रयोजकमिति भावः। ननु तस्मादृचं नोहेदिति निषेधलिङ्गेनोहावश्यम्भावात्कथं तदभाव उच्यत इत्यत आह—तस्मादिति। एवञ्च लक्षणया प्रकाशनमेव नोहेदिति निषिध्यत इति भावः। प्रकृताविति। अयमाशयः—न पदार्थानां स्वातन्त्र्येणातिदेशः, तथा सति कृष्णलेष्वप्यवधातस्यातिदेशवशाददृष्टार्थता स्यात्, किन्तूपकारातिदेशे सत्यर्थात्तन्मुखेनेति प्रकृतौ मन्त्रस्य यद्रूपमुपकारजनकं तद्रूपतया विकृतावप्युपकारपृष्ठभावेन प्राप्तौ लुप्तार्थकाग्निपदबाधेन सूर्यपदोह एव युक्त इति। न च गौणार्थसम्भवान्न लुप्तार्थकत्वमिति वाच्यम्, मन्त्रे सकृत्पठितस्याग्निपदस्य क्लृप्तसामर्थ्यातिरिक्तसामर्थ्यकल्पने गौरवादप्राकृतकार्यकल्पनाया अयुक्तत्वात्पदान्तरप्रक्षेपस्यैव निर्दुष्टत्वात्। न स्वरूपेति। अग्निपदे तावदस्ति रूपद्वयम्-अग्निपदत्वं देवतावाचिपदत्वञ्च। तत्र दृष्टार्थत्ववशेनान्त्यमेव विवक्षितं न त्वाद्यम्। तन्मात्रस्य दृष्टांशानुपयोगेनादृष्टार्थतापत्तेः। प्रकृतौ देवताप्रकाशनस्याग्निशब्दं विनाऽसम्भवेनार्थिकत्वाच्चेत्यर्थः। तस्यैवेत्यनेन वन्ह्यादिपदव्यावृत्तिः। एतदेव विवृणोति—अवश्यं हीति। देवतात्वस्य विधिगतशब्दनिरूप्यत्वादिति भावः। तथा सतीति शेषः। उत्तरार्द्धं व्याचष्टे—एवञ्चेति। उपकार-

युक्तमन्त्रप्रयोग एव कर्त्तव्यः। न चाग्निपदस्य ताद्रूप्यमस्ति। अतः सूर्यपदप्रक्षेपः। एवं व्रीहिपदमपि हविःप्रकृतिद्रव्यवाचिपदाभिप्रायं न स्वरूपाभिप्रायमिति नीवारादिषूहसिद्धिः। बहुषु तद्वाचिषु सत्सु व्रीह्यादिपदमेव पठितम्। ततो नियमादृष्टमात्रं कल्प्यते अवघातादिवत्। स्वरूपन्त्वपूर्वीयसाधनविशेषवाचिपदविवक्षया प्रयुक्तं दृष्टार्थत्वात्। तस्मादूहः। ऐन्द्री तु स्वरूपेणैव गार्हपत्ये विनियुज्यत इति वैषम्यम्॥

इति मन्त्रोहाधिकरणम्॥ १॥

२

जाति० क्वचिच्छ्रूयते 'पौण्डरीकाणि बर्हींषि भवन्ती'ति। प्रकृतावस्ति बर्हिर्मन्त्रः—'दर्भैः स्तृणीत हरितैरि'ति। तत्र दर्भशब्दस्थाने पुण्डरीकपदमूहितव्यं पूर्वेणैव न्यायेन। हरितपदस्थानेऽपि किं रक्तपद-

---

जनकतावच्छेदकरूपेणोपस्थितपदार्थस्य तत्रातिदेशात् देवतावाचिपदयुक्तमन्त्रत्वेनैव प्राप्तिरित्यर्थः। **ताद्रूप्यं** देवतावाचिपदत्वम्। उक्तन्यायं द्रव्यपदेऽप्यतिदिशति—एवमिति। देवतावत् शब्दनियमाभावात् व्रीह्यादिपदस्य नार्थिकत्वमत आह—**बहुष्विति।** उक्तदृष्टान्ते वैषम्यमाह—**एन्द्रीत्विति। स्वरूपेण** इन्द्रपदयुक्तत्वेन। अक्लृप्तोपकारत्वेन प्रकृतमन्त्रोक्तन्यायाभावादिति भावः। सूत्रार्थस्तु प्रकृतौ यथोत्पत्ति यथाम्नानमेवार्थानां वचनम् अभिघानं मन्त्रैस्तथैवोत्तरस्यां ततौ विकृतिपङ्क्तौ तत्प्रकृतित्वादित्यन्तेन पूर्वः पक्षः। चशब्देन तद्व्यावृत्तिः। अर्थे आम्नातकार्यत्वासम्भवादूह इति सिद्धान्त इति॥

इति मन्त्रोहाधिकरणम्॥ १॥

२

जाति० **क्वचिदिति।** 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इतीष्टावित्यर्थः। **बर्हिः**-पदं कार्यपरम्। तेन बर्हिःकार्याणि पुण्डरीकजन्यानीत्यर्थः। तद्धितस्य जन्यत्वरूपसम्बन्धपरत्वात्। पुण्डरीकञ्च सिताम्भोजं यद्यपि लोके प्रसिद्धम्, तथापि वैदिकानां रक्तपद्म एव प्रयोगप्रसिद्धेस्तदेवात्र विधेयमिति बोध्यम्। **बर्हींषि** प्रकाश्ये इति शेषः। **पुण्डरीकपदमिति।** पुण्डरीकस्य सामान्यतो वाचकं पद्मपदमित्यर्थः। अन्यथा तेनैव रक्तगुणस्यापि प्रकाशनसिद्धौ रक्तपदोहस्यासम्भवदुक्तिकतापत्तेः। अथवा पुण्डरीकपदप्रयोगोपाधिना मात्रं रक्तत्वस्येत्याशयेनेदमुक्तमिति ज्ञेयम्। **पूर्वेणेति।** एतेन विशेष्य-

मूहितव्यम् ? नेति ? संशयः। दर्भशब्देनैव सिद्धे प्रकाशने हरिताभिधानमदृष्टार्थं प्रकृतौ। तस्माद्विकृतावपि हरितपदमेवादृष्टार्थमभिधातव्यमित्यनूहः—

स्यादेवं यद्यदृष्टार्थं स्यात्। अनेनापि तु गुणद्वारेण स्तरणद्रव्यमेव प्रकाश्यते, अर्थाभिधानपरत्वात् मन्त्राणाम्। अतः पुण्डरीकाण्यपि स्वगुणद्वारेण प्रकाशयितुं रक्तपदं प्रयोक्तव्यम् ॥

इति मौद्गचरौ हरितपदस्थाने रक्तपदोहाधिकरणम् ॥ २ ॥

३

लौकिके० प्रासङ्गिकमिदमधिकरणम्। 'यद्येकं यूपमुपस्पृशेत्, एष ते वायो इति ब्रूयात्, यदि द्वौ, एतौ ते वायू इति, यदि बहून्, एते ते वायवः' इत्यादि वाक्यं लिङ्गदर्शनत्वेन पूर्वाधिकरणे प्रस्तुतम्। तत्रेदं विचार्यते-किं वैदिके यूपोच्छ्रयणादिविषये स्पर्शे प्रायश्चित्तम् ? उत लौकिके ? उतोभयत्रेति। विशेषाश्रवणादनियमः। प्रकरणात्फलकल्पनापरिहाराच्च वैदिक एवेति प्राप्ते उच्यते—

---

वाचकपदोहमुपजीव्य विशेषणीभूतगुणवाचकपदोहचिन्तनादनन्तरसङ्गतिः सूचिता। **अदृष्टार्थमिति**। हरितगुणस्य कर्मानङ्गत्वेनासमवेतत्वादिति भावः। **गुणद्वारेणेति**। कर्मानङ्गत्वेऽपि वस्तुतो दर्भगतत्वात्तन्मुखेन दृढतरस्मृत्यर्थत्वसम्भवान्नादृष्टार्थत्वमगतिकं युक्तमिति भावः। हरिवदादिगुणानान्त्विन्द्रगतत्वं न वास्तविकमिति भेदः। जातिवाचकं तथा नैमित्तिकञ्च पदं यथास्थानमूह्यमिति सूत्रार्थः ॥

इति मौद्गचरौ हरिपदस्थाने रक्तपदोहाधिकरणम् ॥ २ ॥

३

**लौकिके०** ऊहविचाराभावादाह—**प्रासङ्गिकमिति**। कथं तत्राह—**यद्येकमिति**। 'यदि द्वौ एतौ ते वायू इति यदि बहूनेते ते वायव' इति वाक्यानि। **लिङ्गेति**। न्यायत उहसिद्धौ विधिवैय्यर्थ्यादनूहलिङ्गत्वेन प्रस्तुतमित्यर्थः। तच्चैवं परिहृतम्। मन्त्रत्रयस्यापि प्रकृतावाम्नानात्पाशनयेन तत्रैव विकल्पे प्राप्ते नियमार्थोऽयं विधिर्नानूहलिङ्गमिति। एकस्यैव क्रतुपुरुषोभयार्थत्वे वैरूप्यमनियमे स्यादत आह—**प्रकरणादिति**। यद्यपि

दोषनिर्हरणायेदं प्रायश्चित्तं विधीयते ।
दोषश्च प्रतिषिद्धे स्यात्प्रतिषेधश्च लौकिके ॥

'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, तस्माद्यूपो नोपस्पृश्यः' इति प्रतिषिध्य पश्चादिदमुच्यते 'यद्येकमुपस्पृशेदि'त्यादि । प्रतिषेधश्च रागप्राप्ते लौकिके, वैदिकस्य विहितत्वेन प्रतिषेधानर्हत्वात् । प्रतिषेध्यानुष्ठाने प्रत्यवायोत्पत्तेः प्रतीकारापेक्षायां प्रायश्चित्तविधिरपेक्षितार्थो भवति । तस्माल्लौकिके प्रायश्चित्तम् ॥

इति लौकिकयूपस्पर्शे प्रायश्चित्ताधिकरणम् ॥ ३ ॥

४

अन्यायस्तु० अग्नीषोमीयपशावेकवचनान्तः पाशमन्त्रः 'अदितिः पाशं प्रमुमोक्त्वेतमि'ति, तथा बहुवचनान्तोऽपि 'अदितिः पाशान्प्रमुमोक्त्वेतानि'ति । तयोरग्नीषोमीये निवेशमुपरितनेऽधिकरणे वक्ष्यति । तयोर्द्विपशुकेषु 'मैत्रं श्वेतमालभेत वारुणं कृष्णमि'त्यादिषु चोदकेन

---

प्रकरणे 'यदि द्वावि'त्यादिनिमित्तासम्भवाद्द्विवचनबहुवचनान्तयोर्न निवेशसम्भवस्तथाप्येकस्य वैदिकनिमित्तकत्वे तत्सहचारादितरयोरपि फलाकल्पनलाघवाय विकृतिनिवेश इति सूचनाय **फलेत्याद्युक्तम्** । न्यायेन द्विवचनाद्यूहप्राप्तावपि मन्त्रत्वसिद्धार्थं वचनमित्याशयः । नन्वेवमूहितपाठार्थवत्वेऽपि 'यदि द्वावि'त्यादिविनियोगवैयर्थ्यम्, पाशन्यायेन कथञ्चिद्विकल्पेन प्रकृतावेव निवेशप्राप्तावुत्कर्षविधानार्थतया तत्सार्थक्यमित्याशयात् । **दुरिष्टं** पापम् । **आमुञ्चते** स्वस्मिन् स्थापयतीत्यर्थः । **अनर्हत्वादिति** । यूपोच्छ्रयणाञ्जनादेः स्पर्शनियतत्वेन ग्रहणाग्रहणादिवद्विकल्पस्यासम्भवादिति भावः । **लौकिक एवेति** । कर्मानङ्गभूते तदन्तर्गते तद्बहिर्भूते चेत्यर्थः । सूत्रार्थस्तु-दोषसंयोगद् लौकिके स्यात्, हि यतः अप्रवृत्ते निषिद्धे स्पर्शे निमित्ते विधीयते प्रकृतौ, वैदिके तु न स्यादभागित्वान्निमित्तत्वायोग्यत्वादिति ॥

**इति लौकिकयूपस्पर्शे प्रायश्चित्ताधिकरणम् ॥ ३ ॥**

४

**अन्यायस्तु०** प्रकृत्यूहानन्तरं वचनोहचिन्तेति सङ्गतिः । **तयोरिति** । एवञ्चार्थतः

प्राप्तयोर्भवति संशयः—किमेकवचनान्तस्याप्रवृत्तिः बहुवचनान्तस्यानूहेन प्रवृत्तिः ? उत बहुवचनान्तस्याप्रवृत्तिरेकवचनान्तस्यैवोहेन प्रवृत्तिः ? अथवोभावपि यथायथमूहेनानूहेन च प्रवर्त्तेते, किं वोभयोरपि द्विवचनेनोहितयोः प्रवृत्तिः ? इति । तत्रैकवचनस्य समवेताभिधायित्वेन विकृतावपि द्विसङ्ख्यां वक्तुं विकारः स्यात् । बहुवचनस्य त्वेकस्मिन्नसमवेताभिधायित्वेन निर्देशमात्रार्थत्वाद् विकृतावपि तथैव सम्भवादनूहः । न चाविकारसम्भवे विकारो युक्तः, तस्मादेकवचनान्तस्याप्रवृत्तिः, इतरस्य त्वविकारेण प्रयोग इति प्रथमः पक्षः ।

सकलाभिधानसम्भवे विकलाभिधानमन्याय्यम् । तस्मात्सङ्ख्याविशिष्टपाशप्रकाशनार्थमेकवचनान्तस्योहितस्य प्रवृत्तिः, बहुवचनान्तस्य त्वविवक्षितसङ्ख्याकपाशमात्रप्रकाशनेनासमग्राभिधानत्वादप्रवृत्तिरिति द्वितीयः पक्षः ।

द्वयोरपि चोदकेन प्राप्तयोर्यथायथमूहेनानूहेन च विकल्पेन प्रयोग इति तृतीयः । गृह्णीम एतद्‌द्वयोः प्रवृत्तिरिति, न तु बहुवचनस्यानूहः ।

---

पूर्वत्वमुत्तराधिकरणस्येति भावः । **निर्देशमात्रेति** । केवलप्रकृतिप्रयोगासम्भवेन प्रयोगसाधुत्वमात्रार्थत्वादित्यर्थः । **न चेति** । अविकारस्य मन्त्रस्य सम्भवे सति विकृतस्यानार्षस्य विनियोगो न युक्त इत्यर्थः । **अप्रवृत्तिः** अनतिदेशः । **इतरस्य** बहुवचनान्तस्य । **सकलेति** । सङ्ख्याविशिष्टेत्यर्थः । प्रकृतौ हि सङ्ख्याविशिष्टपाशप्रकाशकः पाशमात्रप्रकाशकश्चास्ति प्रकरणपाठाद् । विकृतौ तु सङ्ख्याविशिष्टप्रकाशकेनैव प्राकृतकार्योपपत्तौ केवलपाशप्रकाशकस्य नातिदेश इत्यर्थः । **द्वयोरपीति** । मन्त्रद्वयाम्नानवशेन प्रकृतौ पाक्षिकविकलाभिधानकार्यस्यापि क्लृप्तत्वेन तन्मुखेन बहुवचनान्तस्याप्युतिदेशवर्जनासम्भवादिति भावः । सिद्धान्तमाह—**गृह्णीम इति** । सङ्ख्याप्रकाशनस्य प्रकृतावक्लृप्तत्वेऽपि साधुत्वार्थमूह इत्यर्थः । एकस्मिन्निव द्वयोरपि साधुत्वं कुतो न स्यादत आह—**प्रयुक्तत्वादिति** । 'दृष्टानुविधिश्छन्दसी'ति प्रयोगस्य दृष्टस्यानुसारेण व्यत्ययोक्तेर्नान्यत्र तत्सम्भव इत्यर्थः । ननु पाशमन्त्रस्य करणमन्त्रत्वेन प्रतिपाशमावृत्तेः कथं द्विवचनोह इति चेत्, अत्र केचिदाहुः—अस्य मन्त्रस्य क्रियमाणानुवादितया तन्त्रेणाभिधानसम्भवा-

तदपि द्वयोरसाधुत्वादूहितव्यम्। प्रकृतावेकस्मिन् पाशे छन्दसि बहुवचनस्य प्रयुक्तत्वात्तथैवाङ्गीकृतम् । न त्वेवं द्वयोः प्रयोगः छन्दसि दृष्टः। तस्मात्स्वायत्ते शब्दप्रयोगे सत्यसाधुप्रयोगासम्भवात् द्विवचनं प्रक्षेप्तव्यम्। तस्मादुभयोरूह इति सिद्धान्तः॥

इति द्विपशुकयागे पाशमन्त्रस्योहाधिकरणम्॥ ४॥

५

विप्रतिपत्तौ० पशावग्नीषोमीये पाशमन्त्रावेकवचनबहुवचनान्तौ। तत्र बहुवचनान्ते सन्देहः---किं प्रकृतावेवाग्नीषोमीये निविशते? उत बहुपाशकेषु पशुगणेषूत्कृष्यत इति। एकस्मिन् बहुवचनस्यासमर्थत्वादुत्कर्षे प्राप्ते, अभिधीयते--

प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः।
उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्याऽवकल्पते॥

पाशप्रातिपदिकार्थान्वितं विभक्त्यभिहितं कर्मकारकं प्रकृतावपि पाशकर्मकोन्मोचनाभिधानेन सम्भवन्नोत्कर्षं सहते सङ्ख्यामात्रं त्वसम्भवदपि गुणत्वान्न प्रातिपदिकं प्रधानभूतं कारकं वाऽऽत्मुत्क्रष्टुम्। अविवक्षिता चेह सङ्ख्या, पाशकर्माभिधानमात्रेण व्यवहारसिद्धेः। अतो निर्देशमात्रार्थं

---

दूहोपपत्तिरिति। अन्येतु-क्रियमाणानुवादिनां समुच्चयस्य द्वादशे वक्ष्यमाणत्वादिहापि प्रकृतौ मन्त्रसमुच्चयापत्तेरुदाहरणान्तरमन्वेष्यमित्याहुः। सूत्रार्थस्तु-अन्यायो बहुवचनान्तोऽविकारेण प्रयोज्य इति शेषः। एकस्मिन् बहुवचनप्रतिघातादर्शनात् द्वयस्य चैकस्मादविशेषादिति॥

इति द्विपशुकयागे पाशमन्त्रस्योहाधिकरणम्॥ ४॥

५

विप्रतिपत्तौ० गुणत्वादिति। परिच्छेदकतयाङ्गत्वादित्यर्थः। वस्तुतः परिच्छेदकापेक्षायाः प्राप्तत्वेनाभावात्पाशकर्मकोन्मोचनक्रियाप्रकाशनमात्रेण तदनुष्ठानसिद्धेर्न सङ्ख्याया विवक्षेत्याह-- अविवक्षिता चेति। अवयवेति। तथा चौपचारिक इत्यर्थः।

बहुवचनम् । कर्ममात्रं तत्र विवक्षितम् । अतोऽपि न सङ्ख्यावशेन मन्त्रोत्कर्षः । बहुवचनस्य त्वेकस्मिन् प्रयोगेऽवयवबहुत्वाभिप्रायेण छान्दसः ॥

इति पाशाधिकरणम् ॥ ५ ॥

६

अपूर्वे० दर्शपूर्णमासयोः 'पत्नीं संनह्ये'ति मन्त्रः किमेकद्विबहुपत्नीकेषु प्रयोगेषु सर्वेष्वविकारेण प्रयोक्तव्यः ? उत द्विबहुपत्नीकप्रयोगयोर्द्विवचन-बहुवचनाभ्यामूहितव्यः ? इति संशयः । तत्रैकपत्नीके समवेताभिधायित्व-सम्भवान्नैकवचनमन्याय्यनिगदम् । तस्माद् द्वित्वबहुत्वयोरूहः ।

नैतदेवम्, यद्येकपत्नीप्रयोगाभिप्रायमाम्नानं स्यात्, तत एक-वचनस्य समवेतसङ्ख्याभिधानरूपस्य सम्प्रतिपन्नत्वात्समवेतसङ्ख्या-भिधानमिह विवक्षतम्, एकवचनरूपन्त्वविवक्षितमिति कृत्वा द्विपत्नीके

---

सूत्रार्थस्तु-पाशैकत्वमन्त्रगतबहुवचनयोर्विप्रतिपत्तौ विरोधे विकल्प एव नोत्कर्षः । पाशोन्मोचनार्थतया समत्वात् । गुणभूतेऽन्यायकल्पनोपचारकल्पनात्तथा प्रधानप्रकृत्यर्थ-कारकक्रियाणामेकदेशत्वात्तदपेक्षयाल्पत्वादिति ॥

इति पाशाधिकरणम् ॥ ५ ॥

६

अपूर्वे० वचनोहापवादात्सङ्गतिः । तत्रेति । तथा च बहुत्ववन्नाविवक्षेति वैषम्य-मिति भावः । ऊह इति । यद्यपि प्रयोगाणां व्रीहियवप्रयोगवत्सामानविध्यान्न मुख्य ऊह-स्तथापि पत्नीप्रातिपदिकं सर्वत्र प्रवर्त्ततां वचनन्त्वेकपत्नीकप्रयोगे समवेतार्थत्वसम्भवा-त्पाशबहुत्ववन्नाविवक्षितमित्येकपत्नीकप्रयोगमात्र एव प्रवर्त्तते । एवञ्च द्विबहुपत्नीक प्रयोगे प्रातिपदिकप्रवृत्तावेकवचनस्य च निवृत्तावर्थात् द्विबहुवचनाक्षेपः । केवल-प्रकृतिप्रयोगायोगादित्ययमूह इति पूर्वपक्षाशयः ।

सिद्धान्तमाह—नैतदिति । कृत्स्नस्य मन्त्रस्य प्रधानभूतार्थानुरोधेन सर्वप्रयोग-साधारण्यस्य त्वयैवोक्तत्वाद्वचनमात्रस्य चैकदेशस्य विनियोज्यत्वाभावान्निर्देशमात्रार्थ-त्वेन नोह इत्यर्थः । एकपत्नीकप्रयोगमात्राङ्गत्वे तु तत्र समवेतार्थकस्य कार्यद्वाराऽन्यत्रा-

बहुपत्नीके च प्रयोगे समवेतसङ्ख्याभिधानार्थमूह्येत। सर्वप्रयोगाणान्तु समानविधानत्वात् सर्वाभिप्रायेणेदमाम्नातं द्वयोर्बह्वीषु चैकवचनस्य सम्प्रतिपत्त्यभावान्न समवेतसङ्ख्याभिधानरूपेण प्रयुक्तमिति शक्यमध्यवसातुम्। निर्देशमात्रार्थमेकवचनमदृष्टार्थं चैकत्वमभिधातुं प्रयुक्तमित्यापद्यते। ततश्च द्विबहुपत्नीके प्रयोगे एकवचनमेव प्रयोक्तव्यमित्यविकारः। न चैकवचनानुरोधेनैकपत्नीप्रयोगे मन्त्रः, नान्यत्रेति वक्तव्यम्। पाशवत्प्रातिपदिकबलेन सर्वत्र प्रवृत्तेः सङ्ख्यायाश्चाऽविवक्षितत्वेनानेकपत्नीकात्प्रयोगान्मन्त्रं व्यावर्त्तयितुमसमर्थत्वात्। तस्मात्सर्वत्राविकारेण प्रयोगः॥

इति द्विबहुपत्नीके प्रयोगे पत्नीसन्नहनमन्त्रस्यानूहाधिकरणम्॥ ६॥

७

विकृतौ० विकृतौ पत्नीशब्दः किं द्विपत्नीकबहुपत्नीकप्रयोगयोरूहितव्यः? नेति? संशये, प्रकृतौ द्वयोः बह्वीषु च पत्नीषु एकवचनाम्नानसामर्थ्यात्तत्प्रयुक्तम्। विकृतौ त्वाम्नानाभावात् द्विबहुत्वयोरेकवचनमसाधुत्वान्न प्रयोक्तव्यम्। तस्मादूहः।

---

तिदेशादूहः स्यात्तत्त्वसिद्धं विशेषतोऽङ्गत्वबोधकाभावात्सर्वेषां सामानविध्यादित्याह—**यदीत्यादिना**। निर्देशमात्रार्थं साधुत्वार्थं जात्यभिप्रायमित्यर्थः। व्यक्तिगतैकत्वपरत्वस्यौत्सर्गिकत्वेन तत्परत्वे त्वसमवेतार्थत्वाददृष्टार्थत्वपक्षः। ननु सर्वप्रयोगाणां सामानविध्येऽपि 'व्रीहीणां मेधे'ति मन्त्रस्य यथा यवप्रयोगाद्व्यावृत्तिस्तथेह द्विबहुपत्नीकप्रयोगाद्व्यावृत्तिरेकवचनान्तमन्त्रस्य स्यादिति शङ्कते—**न चेति**। तथा च व्रीहिमन्त्रे प्रधानप्रातिपदिकार्थस्यासत्वमिह तु तत्सत्वमिति वैषम्यमिति भावः। अतएवाविवक्षितत्वमपीत्याह—**सङ्ख्या चेति**। सूत्रार्थस्तु-अपूर्वं प्रकृतावविकारः अप्रदेशादतिदेशस्य सामानविध्येनाभावादिति॥

इति द्विबहुपत्नीके प्रयोगे सन्नहनमन्त्रस्यानूहाधि०॥ ६॥

७

**वकृतौ०** आतिदेशीकी सङ्गतिः। अधिकाशङ्कामाह—**आम्नानेति**। जात्यभिप्रायत्वमाम्नानस्य निमित्तत्वात्तस्य च विकृतावसत्वादित्यर्थः। सिद्धान्तमाह—**नैवमिति**। प्रकृताववगतकार्यस्य विकृतावतिदेशेन तादूप्यावगमादित्यर्थः। ननु प्रकृतावाम्नानात्सा-

नैवम्, निर्देशमात्रार्थमदृष्टार्थञ्चैकवचनं न तत्समवेतसङ्ख्याभिधानार्थमित्युक्तम्। अतो विकृतावपि तथैव कर्त्तव्यमित्यनूहः। न चासाधुत्वम्, द्वित्वबहुत्वयोरेकवचनस्य छान्दसत्वात्। पाशे तु द्वयोर्बहुवचनप्रयोगस्य छान्दसत्वाभावादसाधुत्वं स्यादिति विशेषः॥

इति विकृतौ पत्नीशब्दस्यानूहाधिकरणम्॥ ७॥

८

अध्रिगुः० तृतीयेऽध्याये संस्थापशवः समानविधाना इति पूर्वपक्षे समानविधानत्वं यदुक्तम्, तस्येदं प्रयोजनं पूर्वाधिकरणसिद्धमनेन सूत्रेण कथ्यते। यदा समानविधानाः, तदोक्थ्यषोडश्यादिषु द्विबहुपशुकेऽपि सवनीयगणे प्रवर्त्तमानः 'प्रास्मै' इत्यध्रिगुप्रैषगत एकवचनान्तः शब्दः पत्नीशब्दवदेव नोहितव्यः। विकारपक्षे तूहितव्यः। ननु समानविधानत्वे यथा 'प्रास्मै' इति पुँल्लिङ्गनिर्देशात्सारस्वत्यामप्रवृत्तिः, तथैकवचननिर्देशात् द्विबहुष्वप्रवृत्तिः स्यात्।

नैवम्, पुँल्लिङ्गस्य मेष्यामत्यन्तासम्भवात् युक्ता निवृत्तिः, एकवचनन्तु प्रतिव्यक्तिगतैकत्वाभिप्रायेण गणेऽपि सम्भवात् नात्यन्तानुपपन्नम्। पाशानिति बहुवचनमिवावयवाभिप्रायेणैवोपपन्नमिति नेतव्यम्।

---

धुत्वम्। इह तु तदभावात्साधुत्वार्थमेवोहस्स्यादत आह—**न चेति**। एकत्र क्वचित्प्रयुक्तस्य कल्प्यमानं छान्दसत्वं प्रकृतिविकृतिसाधारणमेव कल्प्यत इति भावः। **पाशनिति** बहुवचनान्तस्य कथं द्वयोरूह इत्याशङ्क्याह—पाशे त्विति। सूत्रार्थस्तु—विकृतावपिपत्न्यभिधानान्नोह इति॥

**इति विकृतौ पत्नीशब्दस्यानूहाधिकारणम्॥ ७॥**

८

**अध्रिगुः०** अत्राप्यातिदेशिकी सङ्गतिः। **तृतीय इति**। 'आग्नेयमग्निष्टोम आलभते, ऐन्द्राग्नमुक्थ्ये, ऐन्द्रं शोडशिनि सारस्वती मेषीमतिरात्र इति सवनीयपशूनाञ्च सामानविध्ये प्रकृतिविकारभावे च क्रमेणानूह उहश्चेति प्रयोजनं कथ्यत इत्यर्थः। ऊहश्च प्रेष्य इत्येवंरूपः। **अप्रवृत्तिरिति**। 'लिङ्गविशेषनिर्देशादि'त्यत्रैवाद्यपादे उक्तेति

अपि च 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामि' ति बहुषु चैकवचनं स्मर्यते। अतोऽपि न वचनयोरनुपपत्तिः। लिङ्गं त्वन्यलिङ्गे अत्यन्तानुपपन्नमिति वैषम्यम् ॥

इति सामानविध्यपक्षेऽध्रिगुप्रैषस्यानूहाधिकरणम् ॥ ८ ॥

९

नीवाराणां० श्रुतस्य द्रव्यस्यापचारे नीवारादिषु प्रतिनिहितेषु 'व्रीहीणां मेध सुमनस्यमानः' इति व्रीहिशब्दः किमूह्येत, नेति संशये, नीवारादिषु व्रीहिशब्दस्यासामर्थ्यादूहप्राप्तौ--

उच्यते--यदि नीवारा व्रीहिवत्साधनं भवेयुः, ततस्तत्प्रकाशनार्थं, नीवारपदं प्रक्षिप्येत न त्वेवम्। किं तर्हि? नीवारगता ये व्रीह्यंशाः, ते अत्र साधनमित्युक्तम्। ते च व्रीहिगता इव नीवारगता अपि व्रीहिशब्देनैव शक्यन्ते प्रकाशयितुमिति अविकारेण प्रयोगः ॥

इति नीवाराणां प्रतिनिधित्वे व्रीहिशब्दस्यानूहाधिकरणम् ॥ ९ ॥

---

शेषः। वचनाल्लिङ्गस्य वैषम्यमाह--नैवमिति। अर्थोपपत्तिवत्साधुत्वोपपत्तिमप्याह--अपिचेति। सूत्रं स्पष्टार्थम् ॥

इति सामानविध्यपक्षेऽध्रिगुप्रैषस्यानूहाधिकरणम् ॥ ८ ॥

९

प्रतिनिधौ० अत्रापि सैव सङ्गतिः। मन्त्रग्रहणन्तुल्यन्यायत्वादवहननादिसंस्काराणामप्युपलक्षणम्। उक्तं षष्ठ इति शेषः। नन्वेवमपि नीवारगतव्रीह्यवयवेषु व्रीहित्वजात्यभावात्कथं व्रीहिशब्दप्रयोग इत्यत आह--ते चेति। व्रीहित्वजातेः परिच्छेद्यद्रव्यावयवद्वारैव साधनत्वात्प्रयोगसमवेतस्यैव चार्थस्य स्मर्त्तव्यत्वाद्व्रीहिपदेन जातिपरिच्छेदयोग्यावयवानां स्मरणं कार्यम्। तच्च नीवारगतव्रीह्यवयवानामपि तुल्यमिति भावः। सूत्रं स्पष्टार्थम् ॥

इति नीवाराणां प्रतिनिधित्वे व्रीहिशब्दस्यानूहाधिकरणम् ॥ ९ ॥

१०

संसर्गिषु० ज्योतिष्टोमे अग्नीषोमीये पशावध्रिगुप्रैषः। तत्र संसर्गिणोऽर्थाश्चक्षुरादयः 'सूर्यं चक्षुर्गमयतादि' त्यादयः ते द्विबहुपश्वादिषु पशुगणेषु किं द्विवचनबहुवचनाभ्यामूहितव्याः ? नेति ? संशये, संसर्गिणां तेजःप्रभृतीनां स्वतः सङ्ख्याव्यवहाराभावात् औपाधिको भेदव्यवहारः। तदिह चक्षुःशब्दस्य तेजोवचनत्वादसति स्वतः सङ्ख्यावत्वेऽधिष्ठानापेक्षत्वे च तयोर्द्वित्वेन द्विवचनप्रसङ्गात् पशूपाधिकमेकवचनम्। अस्यशब्देन पशोरुपात्तत्वात्तदौपाधिकमेव विज्ञायते। अतः पशुभेदेन पशुसङ्ख्यावशेनोह इति प्राप्ते—

उच्यते—अधिष्ठानान्निर्गतं तेजः प्रदीपप्रभावदेकीभवतीति तदभिप्रायादेकवचनं न त्वौपाधिकम्। न चाधिष्ठानाभिप्रायश्चक्षुःशब्दः, तयोः सूर्यगमनासम्भवात् द्वित्वाच्च तयोरेकवचनानुपपत्तेः। तस्मान्निर्गततेजोऽभिप्रायम्। बहूनामपि च पशूनां सन्निहितानि निर्गतानि चाक्षुषाणि तेजांस्यनेकप्रदीपप्रभावदेकीभवन्ति। तस्मादनूहः॥

इति पशुगणे चक्षुःपदस्यानूहाधिकरणम्॥ १०॥

---

१०

**संसर्गिषु० संसर्गिण इति।** ये सङ्गता एकीभवन्ति न तु घटादिवत्पृथगवतिष्ठन्ते ते जलतेजःप्रभृतय इत्यर्थः। **पशूपाधिकमिति।** उपाधिसङ्ख्यामादायापि विवक्षितत्वसम्भवे सर्वथा अविवक्षानौचित्यादिति भावः। **अधिष्ठानादिति।** गोलकरूपादित्यर्थः। एवञ्च स्वतःसिद्धैकत्वविषयत्वोपपत्तौ नोपाधिगतैकत्वविषयत्वं युक्तमिति भावः। यद्यप्येतदेकत्वमपि निर्गमाद्युपाधिनिमित्तं तथापि तद्गतत्वेन प्रतीयमानं भेदतिराधायकमन्यत्तु न तादृशमित्यस्यैव स्वारसिकत्वमिति ज्ञेयम्। दूरस्थानां संसर्गनिमित्तैकत्वासम्भवादाह—**संनिहितानीति।** यत्तु अध्रिगुप्रैषस्य संज्ञपनपूर्वंभावात्संसर्गस्य चोत्तरकालत्वादेकत्वेनाभिधानानुपपत्तिरिति—तदयुक्तम्। अविसंज्ञपनफलप्रकाशनस्य प्रैषमन्त्रे सुतरामुपपत्तेः। सूत्रार्थस्तु संसर्गिषु चानूहः अर्थस्य संसर्गिणोऽव्यवस्थितसङ्ख्यत्वादिति। परिमाणशब्दस्य परिमीयते परिच्छिद्यतेऽर्थोऽनेनेति योगेन सङ्ख्यापरत्वात्॥

इति पशुगणे मन्त्रगतचक्षुःपदस्यानूहाधिकरणम्॥ १०॥

११

एकधेति० तत्रैव 'एकधाऽस्य त्वचमाच्छ्यतादि'ति श्रुतम्। तत्रैकधाशब्दः पशुगणेषु किमविकारेण प्रयोक्तव्यः? उताभ्यासेन विकर्त्तव्यः? इति संशयः। तदर्थमिदं विचार्यते—किं प्रकृतौ येन प्रकारेणाभिधानं कृतम् तेनैव प्रकारेण विकृतावपि कर्त्तव्यम्? उतान्यथापि सम्भवतीति? तत्र यद्यपि प्रकृतावेकत्वात् त्वचः साहित्याभिधानं न सम्भवतीत्येकप्रयत्नसाध्यत्वम् एकधाशब्देनोक्तम्। नावयवश आछ्यतात्, किन्त्वेकधा एकेन प्रयत्नेनेति, तथापि विकृतावार्षचोदकानुग्रहाय बह्वीनान्त्वचान्देशतः कालतो वा साहित्यम् 'एकधा गाः प्रापयती' तिवदभिदधदविकारेणैव त्वगाच्छेदनं प्रकाशयिष्यतीति प्राप्ते, ब्रूमः—

प्रकृतौ यस्य शब्दस्य यादृशोऽर्थो निरूपितः।
तादृगेवातिदेशेऽपि स हि कार्यपरो यतः॥

कार्यप्रधानो ह्यतिदेशः, न शब्दस्वरूपपरः। तेन प्राकृतमेकप्रयत्नसाध्यत्वं प्रत्येकं त्वचामभिधातुमेकधा, एकधेत्येवमभ्यसितव्यम्॥

इत्येकधाशब्दस्याभ्यासाधिकरणम्॥ ११॥

---

११

**एकधेति०** अनूहापवादात्सङ्गतिः। **नत्र** अध्रिगौ। **आर्षेति।** ऋषौ वेदे पठित आर्षः। सकृदुच्चरित एकधाशब्दस्तस्य यश्चोदकस्तदनुग्रहायेत्यर्थः। **अभिदधदिति।** तथा च साहित्यमपि शक्त्यैव विकृतावपि प्रकाश्यत इति लाक्षणिकाद्वैषम्यमित्यगतार्थतेत्यर्थः। **कार्येति।** त्वचः साकल्येनोद्धरणरूपकार्यार्थमेकप्रयत्नसाध्यत्वप्रकाशनमेव कार्यमिति तत्प्रकाशनायाभ्यास एव युक्त इत्यर्थः। सूत्रार्थस्तु-एकधेत्यभ्यासेनाभिधानं स्यात्। कुतः? एकप्रयत्नेन सह प्रकाश्यप्रकाशकभावादन्यथा सर्वविषयत्वासम्भवादिति॥

इत्येकधाशब्दस्याभ्यासाधिकरणम्।। ११॥

१२

मेधपतित्वं० तत्रैव श्रुतम्, 'उपनयत मेध्या दुरः आशासाना मेधपतिभ्यां मेधमि'ति । केषाञ्चित्तु 'मेधपतये मेधमि' ति । तत्र चतुर्धा संशयः—किमुभयोर्विकृतिष्वविकारः ? उत द्विवचनस्य देवतापर ऊहः ? एकवचनस्य तु यजमानपरः ? अथवोभयोर्यजमानपर एव, अथवोभयोरपि देवतापर ऊहः ? इति । तत्र मेधपतिशब्देन मेधस्य पशोः स्वामी यजमानः, देवताभूतौ चाग्नीषोमौ उभयेऽप्यभिधीयन्ते । तेन द्विवचनमेकवचनं चोभयमप्यन्याय्यनिगदम् । तस्मादनूह इति प्रथमः पक्षः । सम्भवत्यर्थवत्त्वे नान्याय्यनिगदता युक्ता । तस्माद् द्विवचनान्तो देवतावचनः । तेनासौ देवताविवृद्धावूहितव्यः । एकवचनान्तस्तु स्वामिवचनः स्वामिविवृद्धाविति द्वितीयः । एकोऽयं मन्त्रः शाखाभेदेन किञ्चिद्भिन्नः समाम्नातः । तत्र यजमानपरत्वे मेधपतये यो मेधः तमाशासाना इति सम्बन्धः । देवतापरत्वे मेधपतिभ्यामाशासाना इति । नेदमेकस्य वाक्यस्य वचनव्यक्तिद्वयं सम्भवति । तस्मादुभाभ्यामपि यजमानस्य देवताया वा नियमेनाभिधानम् । तत्र देवतापरत्वे सत्यग्नीषोमयोर्द्वित्वात् एकवचनमनुपपन्नम् । यजमानपरत्वे तु द्विवचनं पत्न्यभिधानपरत्वेनावकल्पते । तस्मात्स्वामिपरावुभावपि स्वामिवशादूहितव्याविति तृतीयः ।

---

१२

**मेध०** । ऊहातिदेशात्सङ्गतिः । **तत्रैव** अध्रिगुप्रैष एव । **उपनयतेति** । अत्र मेधपतिशब्दस्य देवतापरत्वे भो मेध्याः पवित्रा ऋत्विजः मेधस्य पशोः पतिभ्यामग्नीषोमाभ्यां आशासानाः सन्तो मेधं पशुं दुरो यज्ञद्वारं चात्वालोत्करमध्यदेशमुपनयतेत्यर्थः । यजमानपरत्वे तु यजमानार्थस्तद्भागसाधनं यो मेधः पशुस्तमिति पूर्ववत् । आशानाः स्वदक्षिणां यजमानगतफलञ्चार्थात् यजमानार्थतया पशोःसिद्धत्वेनाशासनायोगात् । **केषाञ्चिदिति** । शाखिनामित्यर्थः । उपपादनपूर्वकमाद्यपक्षमाह **तत्रेति** । मेधपतित्वरूपशक्यतावच्छेदकैक्यात् त्रिष्वप्येकैव शक्तिरित्यर्थः । **अन्याय्यः** अविवक्षितार्थो **निगदः** पाठो यस्य तथा भूतमित्यर्थः । मन्त्रयोर्द्विवचनैकवचनाभ्यां व्यवस्थितार्थत्वमाह **तस्मादिति** । अर्थवत्वस्य न्याय्यत्वादित्यर्थः । **एकोऽयमिति** ।

सिद्धान्तस्तु—मेधमाशाना इत्युक्ते किमर्थमाशासाना इत्यपेक्षा भवति। तत्र मेधपतिभ्यामाशासाना इत्यपेक्षितार्थपूरणाय सम्बध्यते। न च यजमानायाशास्यते, तस्यैव हि स देवताभ्यां आशास्यते। तस्माद्देवतावचनः। एकवचनं तर्हि कथम्? अग्नीषोमयोरुभयोऽयसक्तं देवतात्वम्। तेन देवतात्मना तयोरेकत्वात्तदभिप्रायम् अग्नीषोमौ देवते इति। द्विवचनं त्वधिष्ठानापेक्षम् तेन द्विवचनम् अधिष्ठानसङ्ख्यावशात्। एकवचनञ्च देवतासङ्ख्यावशाद्विकृतिषूहितव्यमिति॥

इति मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम्॥

१३

नियमो० वैश्वदेवादिषु बहुदेवत्येषु पशुषु द्विवन्निगदस्य मेधपतिशब्दस्योहोऽसन्दिग्धः। एकवन्निगदोऽपि तद्वदेवोह्यः, एकवचनान्तता तु निवर्तते? उताविकारेण प्रवर्त्तत इति चिन्तायामेकवचनस्य बहुत्वसामर्थ्यादूहः। देवतारूपैकत्वात्तु प्रकृतिवदनूह इति पूर्वाधिकरणप्रयोजन-

---

एकदेशान्यथात्वेऽपि प्रत्यभिज्ञाया अबाधितत्वादिति भावः। एकस्येति। तथाचार्थभेदे मन्त्रैक्यानुपपत्तिरित्यर्थः। विनिगमकमाह तत्रेति।

निराकाङ्क्षमन्त्रवाक्यार्थस्य देवतापरत्व एवोपपत्तेरन्यथा मेधपतेरिति वक्तुं युक्तत्वाच्चतुर्थ्यसामञ्जस्याच्च देवतापरत्वमेवेत्याह सिद्धान्तस्त्विति। वचनोपपत्तिमाह—एकेति। एवञ्च देवतानेकत्व एकवचनान्तस्योहः। अधिष्ठानबहुत्वे द्विवचनान्तस्येत्याह तेनेति। अधिष्ठानस्मृतेः कर्मानङ्गत्वेनानुपयोगेऽपि तद्द्वारा देवतास्मृतावुपयोग इति बोध्यम्। अयं विचारो यस्यै वाव कस्यै च देवतायै पशुरालभ्यते सैव मेधपतिरित्यैतरेऽपि वाक्यं नास्तीति कृत्वा चिन्तयेति तन्त्ररत्न उक्तम्। सूत्रार्थस्तु-मेधपतित्वं स्वामिनो देवतायाश्च शब्दार्थसमवायात्सर्वत्र आधिपत्ये पतिशब्दस्य प्रयुक्तत्वादिति। शेषं स्पष्टार्थम्॥

इति मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम्॥ १२॥

१३

नियमोवा० एकवचनान्तो निवर्त्तत इति भाष्यस्यार्थमाह—एकेति। अस्याप्यति-

मात्रमिदमधिकरणं न तु किञ्चित्प्रतिपाद्यमस्ति । यद्वोत्तराधिकरणो-पोद्घातत्वेन पूर्वाधिकरणसिद्धमेवानुकीर्त्तितम् ॥

इत्यैकादशिन्यामेकवचनान्तमेधपतिशब्दस्योहाधिकरणम् ॥ १३ ॥

१४

अर्थान्तरे० 'आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः' इत्यादिषु पशुगणेषु किमेकवन्निगदस्याविकारः ? उत त्रिकारेण प्रयोगः ? इति संशये गणाभिप्रायेण पूर्ववदनूहं मन्वानस्योत्तरम् ।

देवतात्मन एकत्वादविकारः पुरोदितः ।
तद्रूपस्य तु भिन्नत्वे को नामोहं निवारयेत् ॥

इति पशुगणे मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ॥ १४ ॥

इति शास्त्रदीपिकायां नवमस्य तृतीयः पादः ॥

---

स्फुटत्वादाह यद्वेति । सूत्रार्थस्तु-अबहुदेवते नियमः अन्यत्र विकारः स्यादित्यकार प्रश्लेषाद्बोधः ॥

इत्यैकादशिन्यामेकवचनान्तमेधपतिशब्दोहाधिकरणम् ॥ १३ ॥

१४

अर्थान्तरे० प्रत्युदाहरणात् सङ्गतिः । गणेति । तस्यैकत्वादित्यर्थः । **देवतात्मनः** देवतात्वस्य । सूत्रार्थस्तु अर्थान्तरे उक्तपशुगणे विकार ऊहः स्याद्देवतापृथक्त्वात् एकैकस्मिन् देवतात्वस्य समवायादिति ॥

इति पशुगणे मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ॥ १४ ॥

इति श्रीमद्धर्मशास्त्रपारावारीणतत्सद्रामभट्टसूरिवरात्मजवैद्यनाथकृतायां शास्त्र दीपिकाव्याख्यायां प्रभाख्यायां नवमस्याऽध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः ।

षड्विंशति० तत्रैव 'षड्विँशतिरस्य वङ्क्रयः' इति श्रुतम् । तद्धि अश्वादिषु पशुगणेषु चोदकप्राप्तं पञ्चधा सन्दिह्यते-किं षड्विंशतिरस्येत्युभयपदाभ्यासः ? उताविकारेण प्रयोगः ? उत 'षड्विंशतिपदतमेकवचनद्विवचनबहुवचनाभ्यामूहितव्यम् ? अथवाऽस्येत्येतत्पदमभ्यसितव्यम् ? आहोस्वित्सर्वपशुगताः वङ्क्रीः समस्य तासामियत्ता वक्तव्येति ? तत्र षड्विंशतिसङ्ख्याया अस्यपदाभिधेयस्य च पशोर्यः सम्बन्धः तत्प्रधानमिदं वाक्यम् । ततः प्रतिपशु तत्सम्बन्धं प्रकाशयितुं षड्विंशतिपदम् अस्यपदं चाभ्यसनीयम् । अयमेवात्र प्रधानतः पूर्वपक्षः । इतरे तु सम्भवमात्रेणोपन्यस्य दूष्यन्ते । तत्र द्वितीयः पक्षः—अकरणभूतोऽयमदृष्टार्थो मन्त्रः । तस्मादविकारः । तृतीयस्तु यद्यप्यकरणः, तथाऽपि शमितृणामन्यूनावदानोद्धरणाय पार्श्वयोः साकल्यं स्मारयन्दृष्टार्थ एव । तत्र षड्विंशतिसङ्ख्या प्राधान्येन प्रकाश्या । तेन द्वयोः पश्वोः षड्विंशतिसङ्ख्ये

---

## चतुर्थः पादः

१

षड्विंशतिः० सन्दिग्धप्रकाश्यरूपद्वाराणां मन्त्राणामूहचिन्तनमिह पादार्थः । अत एव कार्यनिरूपणानपेक्षतत्सापेक्षस्यानन्तर्यमिति ज्ञेयम् । तत्रैवेति । अध्रिगुप्रैष एवेत्यर्थः । वङ्क्रयः पार्श्वद्वयगतास्थीनीति । अत्र 'ताअनुष्ठ्योच्यावयतादि'ति शेषवाक्यम् । अनुष्ठ्य एकप्रयत्नेनोद्धरतेत्यर्थः । उत षड्विंशतीति । एतच्चास्यपदस्याप्युपलक्षणम् । समस्येति । एकीकृत्येत्यर्थः । तत्रेति । वाक्यं हि वाक्यार्थप्रधानम् । स चात्र वङ्क्रिसङ्ख्यापशुसम्बन्ध एव । षड्विंशतिरस्येत्यव्यवहितान्वयात् । वङ्क्रीणान्तु सामानाधिकरण्यादाकाङ्क्षावशाच्च सङ्ख्याविशेषणत्वम् । एवञ्च षड्विंशतिपदबाधापेक्षयाभ्यास एव युक्त इति भावः । अयमेवेति । अदृष्टार्थत्वाङ्गीकारात् द्वितीयस्थानङ्गसंङ्ख्याप्राधान्यायोगाद्विकृतावेकवचनबाधापत्तेश्च तृतीयस्य षष्ठीविरोधात्पशुस्वरूपस्य विशसनेन नाशाच्च चतुर्थपक्षस्यायुक्तत्वादिति भावः । अकरणेति । संज्ञपनपूर्वकालीनतया प्रैषस्य वङ्क्युद्धरणकरणत्वायोगादिति भावः । प्राधान्येनेति । साकल्येनोद्धरणरूपप्रयोजनवत्वादित्यर्थः । तेनेति । तृतीयनन्तरमूह इति शेषः । नन्विति ।

प्रकाशयितुं षड्विंशती अनयोः वङ्क्रय इति । ननु षड्विंशतिशब्दे सङ्ख्याप्रधाने सङ्ख्येयेषु वङ्क्रिषु षष्ठी स्यात् । सत्यम् । यथा सिद्धान्ते वङ्क्रीणां प्राधान्ये सङ्ख्याशब्दस्य लक्षणया सामानाधिकरण्यम्, तथा सङ्ख्याप्राधान्ये वङ्क्रिशब्दो लक्षणया सङ्ख्यासामानाधिकरण्यं प्रतिपत्स्यते । चतुर्थस्तु-पशुप्रधानमिदम्, स हि चोदितः । सङ्ख्यात्वचोदिता । तस्मात् षष्ठ्यन्ताभिधेयः पशुरेवात्र प्रधानम् । तद्विशेषणं सङ्ख्या, वङ्क्रयश्च । षड्विंशतिवङ्क्रिकोऽयं पशुरिति । ततश्चैकैकं पशुं भेदेन प्रकाशयितुमस्यपदमभ्यसतिव्यम् । सिद्धान्तस्तु—

वङ्क्रीयत्ता प्रकाश्येह पार्श्वसाकल्यसिद्धये ।
ता इति प्रतिनिर्देशादपि तासां प्रधानता ॥

वङ्क्रयोऽत्र प्रधानम् । ता एव षड्विंशतिशब्देनेयत्तया प्रकाश्यन्ते । 'अन्यूनयोः पार्श्वयोरवद्यती'ति वचनात् । यद्यपि पशुश्चोदितः, तथाऽप्यसौ हृदयादिद्वारेणैव साधनं न साक्षादिति वक्ष्यामः । तस्माद् वङ्क्रयः प्रधानम् । तथा च 'ताः अनुष्ठ्योच्यावयतादि'ति तासामेवोत्तरत्र प्रतिनिर्देशः उद्धरणं चोच्यते । पशुप्राधान्ये हि तमिति स्यात् । सङ्ख्याप्राधान्ये तामिति । तस्माद्वङ्क्रीयत्तापरत्वात्समस्याभिधानम् । ननु यद्यपि

---

सामानाधिकरण्याभावेन प्रथमाया अयुक्तत्वादिति भावः । आकृत्यधिकरणन्यायेन विशंत्यादीनामपि सङ्ख्यामात्रवाचित्वात्सङ्ख्येये लक्षणैवेति ममापि वङ्क्रीशब्दे सा तुल्येत्याह **यथेति** । षष्ठ्यन्तत्वेनाप्राधान्यमाशङ्क्याह **तस्मादिति** । षष्ठ्यन्ताभिधेयत्वेऽपि विहितत्वेन तस्यैव मन्त्रप्रकाश्यत्वात्प्राधान्यमित्यर्थः । **भेदेनेति** । तत्तत्सङ्ख्याविशिष्टतयेत्यर्थः । अस्यपदाभ्यासे हि तत्तत्पशोः षड्विंशतिसङ्ख्यवङ्क्रिसम्बन्धात्तद्विशिष्टतयाभिधानसिद्धिरिति भावः । श्लोकं व्याचष्टे **वङ्क्रयोऽत्रेति** । प्रातिपदिकार्थप्रधानप्रथमान्तत्वाच्छब्दतः प्राधान्यं स्पष्टमेव । अन्यूनावदानसंस्कार्यतया चार्थतोऽपि षड्विंशतिशब्दोऽपि स्वार्थविशिष्टवङ्क्रिप्रकाशनार्थ एव । हरितैरितिवदिति भावः । **इयत्तयेत्यनेनेयत्ता** **प्रकाश्येति** । श्लोके नेयत्ताप्राधान्येन प्रकाश्येत्यर्थः । किन्तु वङ्क्रिविशेषणतयेत्युक्तम् । यत्तु पशुश्चोदितत्वात्प्रधानमित्युक्तं तत्परिहरति **यद्यपीति** । तथा च पशोरपि हविःसम्पादकतया हविरेव प्रधानमिति भावः । **वक्ष्यामः** इत्यस्य दशम इति शेषः । उत्तरार्धं व्याचष्टे **तथाचेति** । **तामितीति** ।

वङ्क्रीयत्तापरमिदं तथाऽपि प्रतिपशु भेदेन वङ्क्रीणामुद्धरणात् भेदेनैव पशोर्वङ्क्रय इयत्तया वक्तव्या इति 'षड्विंशतिपदाभ्यास एव न्याय्यः। तथा च आश्वलायनादयो यज्ञसूत्रकारा मन्यन्ते। नेति भगवान् जैमिनिः। स हि मन्यते-यथैव प्रकृतौ द्वयोः पार्श्वयोस्त्रयोदशसु वङ्क्रिषु पृथक् पृथगुद्ध्रियमाणास्वपि समस्तानामेवेयत्तोक्ता 'षड्विंशतिरस्य वङ्क्रयः' इति। तथा विकृतिष्वप्युद्धारभेदमतन्त्रीकृत्य प्रयोगसमवेतसमस्तवङ्क्रीयत्ता मन्त्रेण प्रकाशयितव्या। तस्माद् द्विपञ्चाशदनयोर्वङ्क्रयः, अष्टसप्ततिरेषां वङ्क्रय इत्येवं समस्याभिधानमेव न्याय्यम् ॥

इति वङ्क्र्यधिकरणम् ॥ १ ॥

२

अश्वस्य० अश्वमेधे श्रूयते 'अश्वः तूपरो गोमृगः ते प्राजापत्याः' इति। तस्याश्वस्य चतुस्त्रिंशद्वङ्क्रयः, तत्र वैशेषिको मन्त्रः पठितः।

---

एतच्च पशुसङ्ख्यासम्बन्धपक्षेऽपि तुल्यमिति ज्ञेयम्। अभ्यास एवेति। अप्राकृतपदोहापेक्षया प्राकृतपदावृत्तिमात्रमेव युक्तमित्यर्थः। 'एकधाषड्विंशतिरिति द्विर्द्विर्बहूनामि'त्याश्वलायनवचनम्। तथा च षड्विंशतिः षड्विंशतिरनयोरेषां वा वङ्क्रय इति वाच्यमित्यर्थः। अयञ्च षष्ठः पक्ष इति पञ्चन्यूनतापि सूचिता। उद्धरणभेदस्य प्रकृतावेवाविवक्षणात्समस्यवचनाच्च तदेव न्याय्यमिति जैमिन्यभिप्रायमाह स हीति। सूत्रार्थस्तु-षड्विंशतिशब्दोऽभ्यासेन पशुगणे प्रयुज्येतेति शेषः। गुणस्याभ्यासस्य तत्प्रकृतित्वात्' षड्विंशतिशब्दप्रकृतिकत्वात्ततोऽत्यन्तभेदाभावादित्यर्थः। कुतोऽभ्यासस्तत्राह-प्रविभक्तत्वात्प्रतिपशुभिन्नत्वात्। अविकारे हि तासां वङ्क्रीणामकात्स्न्येंन सम्बन्धः प्रकाशितः स्यात्। समासस्तु विकारात्प्राकृतपदात्यन्तबाधरूपान्न स्यात्। सर्वाभिः समस्योक्ताभिः पशोरसम्बन्धाच्चेति ॥

इति वङ्क्र्यधिकरणम् ॥ १ ॥

२

अश्वस्य० तूपरः शृङ्गहीनश्छागः गोमृगो गवय इति यज्ञिकाः। तत्रेति। भाष्ये किमश्वस्य वैशेषिकी ऋगेव तूपरगोमृगयोः समासः? उत नैव वैशेषिकी ऋक्

'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेती'ति । तत्रेदं वचनमामनन्ति ' न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादिति। तत्र भाष्यकारः—'अश्वस्य चतुस्त्रिंशदि'त्येवमादिसूत्रपञ्चकमेकाधिकरणत्वेन व्याख्यातवान् । वार्त्तिककारस्त्वेतत्सूत्रं पृथक्कृत्य प्राप्तिसूत्रत्वेनाधिकरणान्तरत्वेन च व्याख्यातव्यमित्युक्तवान् । तत्राधिकरणान्तरमेवं द्रष्टव्यम्-वैशेषिक्याः ऋचः प्रतिषेधोऽयं 'न चतुस्त्रिंशदिति ब्रूयादि'ति उत्तराधिकरणे वक्ष्यति । इदन्त्वत्र चिन्त्यते-किं निषिद्धमपि वैशेषिकं पक्षे स्यात् ? उत सर्वदा प्राकृतमेवेति । तत्र पाठप्राप्तं वैशेषिकं गिरापदवत् प्रत्यक्षवचनबलान्नित्यवद् बाधितत्वात्प्राकृतमेवाध्रिगुवचनमिरापदवत्सर्वदा वक्तव्यमिति प्राप्ते—

ब्रूमः—इरापदं हि प्रत्यक्षेण वचनेन गिरापदस्थाने विहितं युक्तं यत्पाठप्राप्तं वैशेषिकं गिरापदं बाधते । तस्मिन् बाधितेऽनुवाद एव गिरापदप्रतिषेधः । न त्वेवमिह 'षड्विंशतिरित्येव ब्रूयादि'त्येतत् एवकारोपहतविधिशक्तित्वान्न प्राकृतस्य विधौ समर्थम् । अतोऽत्र न चतुस्त्रिंशदित्येवं प्रतिषेधं विधत्ते । तस्मिंश्च प्रतिषिद्धे 'षड्विंशतिरित्येव ब्रूयादि'ति चोदकप्राप्तानुवाद एव । न त्वेवं गिरापदप्रतिषेधादिरापदं प्राप्नोति, येनानूद्येत । तस्यापि विधौ वाक्यभेदः, तेन तत्रेरापदविधिरेव वाक्यार्थः ।

---

किन्तु प्राकृत एवाध्रिगुः षड्विंशतिशब्दवानश्वे इतरयोस्तु समासेन ? अथवा सर्वेषामेव समासेनेति पक्षत्रयमुपन्यस्याद्यपूर्वपक्षसूत्रमिदमपरञ्च द्वितीयपूर्वपक्षसूत्रं व्याख्याय सर्वेषां समास इति सूत्रान्तरेण सिद्धान्तकथनादित्यर्थः । अत्र च सर्वथा वैशेषिक ऋग्बाधस्यायुक्तत्वादस्वरसाद्वार्त्तिकमतमाह—**वार्तिककारस्त्विति** । प्राप्तिरपि न विचारं विनेत्यत अधिकरणान्तरत्वेन चेति । **नित्यवदिति** । स्वार्थे वतिः । नित्यं बाधित्वेत्यर्थः । गिरापदस्थानापत्तौ मानमाह **तस्मिन्निति** । अन्यथा प्रतिषेधस्याप्राप्तत्वेन तस्यापि विधौ वाक्यभेदः स्यादिति भावः । प्रकृते वैषम्यमाह **न त्वेवमिति** । षड्विंशतिरित्यस्यैवकारार्थविशेषणतया विध्यन्वयायोगात्प्रधानभूतैवकारार्थस्य चायोगान्ययोगव्यावृत्तिरूपार्थसन्देहेनाभिधानादिति 'न चतुस्त्रिंशदि'त्येव प्रतिषेधविधायकमितरदनुवाद इत्यर्थः । गिरापदे तु नायं प्रकार इत्याह **न त्विति** । आनुमानिकस्य दुर्बलत्वा

इह तु प्रतिषेध एव विधेयः। स च प्राप्तिपूर्वकः प्राप्तिश्च न शास्त्रमन्तरेण सम्भवतीत्यतः अवश्यं वैशेषिकवचनस्य प्रापकं प्रकरणपाठानुमितं वाक्यं लाघवाय काममङ्गीक्रियताम्। अङ्गीकृते चास्मिन्नुभयोर्विधिप्रतिषेधयोः शास्त्रत्वाविशेषाद्विकल्पः। तस्माद्वैशेषिकवचनमपि कर्त्तव्यम् ॥

इति चतुस्त्रिंशन्मन्त्रस्य विकल्पाधिकरणम् ॥ २ ॥

३

तत्प्रतिषिध्य० तत्रैव संशयः—किमश्वस्य पठितमेव 'चतुस्त्रिंशद्वाजिनः' इति वैशेषिकं कर्त्तव्यम्? उत प्राकृतमपि? यदाऽपि प्राकृतं तदापि किं तूपरगोमृगयोः, अश्वस्य च समस्य वचनं षडशीतिरेषां वङ्क्रय इति? उत तूपरगोमृगयोः सामासिकं वचनं कृत्वा अश्वस्य 'षड्विंशतिरस्य वङ्क्रयः' इत्येवमयथार्थमध्रिगुवचनं कर्त्तव्यमिति? तत्र 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादि'त्यनेन पठितायामेवर्चि गिरापदवत् चतुस्त्रिंशदिति पदं प्रतिषिध्य षड्विंशतिपदमिरापदवन्निक्षिप्यते। न त्वयं समस्ताया ऋचः प्रतिषेधः। तस्मात् सैव षड्विंशतिपदयुक्ता वक्तव्येति। चोदकप्राप्ताध्रिगुवचनस्य निवृत्तिरिति प्राप्ते उच्यते—

---

त्कथं तेन प्रत्यक्षविहितस्य विकल्प इत्यत आह अङ्गीकृत इति। उपजीव्यत्वान्न दौर्बल्यमिति भावः। सूत्रार्थस्तु स्पष्टः ॥

इति चतुस्त्रिंशन्मन्त्रस्य विकल्पाधिकरणम् ॥ २ ॥

३

तत्प्रतिषिध्य० विकल्पस्याक्षिप्य समाधानात्सङ्गतिः। किमिति। षड्विंशतिपदयुक्तं वैशेषिकं कर्त्तव्यमित्यर्थः। अयथार्थमिति। अश्ववङ्क्रीणां चतुस्त्रिंशत्त्वादैन्द्रीन्यायेन वाचनिकेनैव षड्विंशतिपदेन लक्षणया चतुस्त्रिंशदभिधानमित्यर्थः। गिरापदवदित्यनेन प्रतिषेधस्यानुवादत्वं सूचितम्। न त्वयमिति। ऋचो लक्षणागम्यत्वात्तत्र च मानाभावादिति भावः। चतुस्त्रिंशन्निषेधे चतुस्त्रिंशत्पदमात्रनिषेधे। ननु षड्विंशतिरित्यस्यानुवादत्वाभावे विधिरेवास्त्वति शङ्कामपाकुर्वन् श्लोकं व्याचष्टे न चतुरिति।

एवकारोपबद्धत्वान्न षड्विंशतिचोदना ।
चतुस्त्रिंशन्निषेधे च नानुवादोऽस्य सम्भवी ॥

ऋच एव निषेधोऽतस्तथा सति च चोदकात् ।
प्राप्तं षड्विंशतिरिति ब्रूयादित्यनुकीर्त्यते ॥

'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादि'त्येकमिदं वाक्यम् । तेनैकोऽत्र विधिः, इतरोऽनुवादः । तत्र यदीरापदवत्षड्विंशतिर्विधीयेत, ततः चतुस्त्रिंशत्प्रतिषेधो गिरापदप्रतिषेधवदनूद्येत । न त्वत्र षड्विंशतिपदमिरापदवच्छक्यं विधातुम्, एवकारोपबन्धात्, एवकारार्थविशेषणं हि ब्रूयादिति, न स्वयं विधिक्षमम् । एवकारार्थश्च निवृत्तिः । तस्मात् षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिरिह विधीयते । 'ऐरं कृत्वोद्गेयमि'ति तु शक्नोति विधातुमिति विशेषः । तेन चतुस्त्रिंशत्प्रतिषेधोऽत्र विधीयते । तद्यदि पदमात्रं प्रतिषिध्येत, न षड्विंशतिपदमनुवदितुं शक्यते, प्राप्त्यभावात्, न हि पठितायामृचि चतुस्त्रिंशत्पदे प्रतिषिद्धे, षड्विंशतिपदस्य प्राप्तौ प्रमाणमस्ति । तस्मात्समस्ताया ऋचः प्रतिषेधः । तथा सति 'षड्विंशतिरित्येव ब्रूयादि'ति चोदकप्राप्तत्वात्सम्भवत्यनुवादः । शक्नोति च चतुस्त्रिंशदिति प्रतीकग्रहणेनर्चं प्रतिषेद्धुम्, गिरापदेन त्वनाद्यत्वात् ग्रहणं न शक्यमिति, वैषम्यम् ।

द्वितीयपूर्वपक्षवादी त्वाह-प्राकृतेऽपि वचने क्रियमाणे 'षड्विंशतिरिति ब्रूयादि'ति वचनादेव वक्तव्यमश्वे न समस्य वचनमिति । तदिदं

---

एवकारार्थश्चेति । सा च 'न चतुस्त्रिंशदि'ति निषेधेन प्राप्तत्वादनूद्यत इति शेषः । विधीयत इत्यनन्तरं 'न चतुस्त्रिंशदि' त्यनेनेति शेषः । यथाश्रुते एवकारार्थविधेरङ्गीकारे पूर्वाधिकरणोक्तस्य 'न चतुस्त्रिंशदि'त्येव प्रतिषेधं विधत्त इत्यस्य व्याघातापत्तेः । अत्रोक्तस्य चतुस्त्रिंशत्प्रतिषेधो गिरापदप्रतिषेधवदनूद्येतेत्यस्य नत्वत्रेत्यादिना व्यतिरेकप्रतिपादनासामञ्जस्याच्चेति ध्येयम् । ननु 'न चतुस्त्रिंशदि'ति पदमात्रनिर्देशात्कथमृक्प्रतिषेधस्तत्राह– शक्नोति चेति । प्रतीकग्रहणेन आद्यप्रतीकग्रहणेन इति करणस्याद्यर्थकत्वादिति भावः । ग्रहणं ऋक्ग्रहणम् । अश्वे इत्यत्रच्छेदः । अध्रिगुवचनमिति । षड्विंशतिपदेनानुवादत्वबलात्समस्तमन्त्रे लक्षणेत्यर्थः । तदुक्तं यथा-

मन्दम् । न ह्यनेन षड्विंशतिपदं विधीयते, चतुस्त्रिंशन्निषेधपरत्वाद् वाक्यस्य । तद्विधौ वाक्यभेदात् । एवशब्दोपबन्धाच्चाशक्यमिदं विधातुमित्युक्तम् ।

तस्मादेष वाक्यार्थः—न चतुस्त्रिंशदिति पठितं ब्रूयात्, किन्तु यथाप्राप्तमध्रिगुवचनमेवेति । तस्मात्समस्यवचनं, पक्षे च वैशेषिकमृग्वचनम् ॥

इति चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनाधिकरणम् ॥ ३ ॥

४

वनिष्ठु० 'वनिष्ठुमस्य मा राविष्ट उरूकं मन्यमानाः' इति किमुरूकशब्देनोलूकस्याभिधानम् ? तत्सादृश्यबुध्या वनिष्ठोर्लवनं प्रतिषिध्यते ? उत वपाभिधानम् उरूकशब्दः वपोद्धरणकाले वपां मन्यमाना वनिष्ठुं मा राविष्ट इति । तत्र रलयोरैकत्वादुलूकाभिधाने प्राप्ते—

ब्रूमः—न तावद्वनिष्ठोर्लवितव्यस्य लवनं शक्यं निषेद्धुम्, सादृश्यबुद्धिनिषेधस्यादृष्टार्थत्वात् । तस्मादवयवव्युत्पत्त्या वपाभिधानम् ।

---

प्राप्तमिति । सूत्रार्थस्तु तद्वैशेषिकं वचनं प्रतिषिध्य प्रकृतिस्तद्गतमन्त्रो नियुज्यते सा च प्रकृतिः पक्षे चतुस्त्रिंशदिति वैशेषिकश्च । कुतः ? तस्यापि प्रकरणपाठेनावश्यवाच्यत्वादिति ॥

इति चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनाधिकरणम् ॥ ३ ॥

४

वनिष्ठु० उरूकशब्दे ऊहस्याक्षिप्य समर्थनात्सङ्गतिः । वनिष्ठुर्वपासदृशस्तत्सन्निहितोऽवयवविशेषस्तं मा राविष्ट तल्लवनं मा कुरुत तत्रोरूकबुद्धिं कुर्वाणा इत्यर्थः । प्रतिषिध्यत इति । प्रतिषेधविषयत्वेन प्रकाश्यत इत्यर्थः । तेन च प्रतिषेधकल्पना तत्प्रकाशनस्य दृष्टार्थत्वं बोध्यम् । वनिष्ठुलवनप्रतिषेधार्थोऽयं मन्त्रः सादृश्यबुद्धिनिषेधार्थो वा । नाद्य इत्याह—न तावदिति । लवितव्यत्वश्च वनिष्ठुं जाघनीञ्चावद्यती'ति कात्यायनादिवचनादिति भावः । द्वितीयं दूषयति—सादृश्येति । अदृष्टार्थत्वादि-

दर्शिता चावयवव्युत्पत्तिर्भाष्ये । वपोद्धरणकाले सन्निधानाद्भ्रान्त्या वनिष्ठोर्लवनं प्रसक्तमाशङ्क्य तन्निवारणार्थं वचनं दृष्टार्थं भवति । तस्माद्वपाभिधानमिति वपाविवृद्धावूहः ॥

इति वनिष्ठ्वधिकरणम् ॥ ४ ॥

५

प्रशसा० 'प्रशसा बाहू कृणुतादि'ति किं प्रशसेति तृतीयान्तमस्यभिधानम्, असिना बाहू छेत्तव्याविति ? उत द्वितीयाद्विवचनस्याकारादेशे च्छान्दसे चौकारलोपे कृते प्रशंसावचनोऽयमिति । तत्र प्रशसाशब्दस्यासौ प्रसिद्धत्वात्तद्वचनं मन्यते ।

न तु स्वधितिसाधने छेदने शक्यमसेः करणत्वं प्रकाशयितुम् । मान्त्रवर्णिकद्रव्यकल्पनायां चातिगौरवम् । तस्मात् प्रशसावचनत्वम् । प्रशस्तौ बाहू कृणुतादविकलावित्यर्थः । एवं दृष्टार्थता भवति । तस्माद् बाहुविवृद्धावूहः ॥

इति प्रशसाशब्दस्य प्रशंसावाचित्वाधिकरणम् ॥ ५ ॥

---

त्यनन्तरमसम्भव इति शेषः । दर्शितेति । उरु विस्तीर्णकं भेदो वपारूपमित्येवंरूपेत्यर्थः । प्रयोजनमाह—तस्मादिति । उरूणी के इत्यादिरूपः । एकपदत्वे उरू के इति ज्ञेयः । सूत्रार्थस्तु स्पष्टः ॥

इति वनिष्ठ्वधिकरणम् ॥ ४ ॥

५

प्रशसा० आतिदेशिकी सङ्गतिः । 'वक्षः कृणुतादि'त्यत्रत्यं कृणुतादित्यनुषज्य पठितम् । प्रसिद्धत्वादिति । शसु हिंसायामिति धात्वनुशासनादिति भावः । सिद्धान्तमाह—नेति । 'स्वधितिना पशुं विशास्तीति श्रवणादित्यर्थः । अस्मिन् पक्षे कृणुतादित्यस्य कुरुतादित्यर्थो ज्ञेयः । सूत्रं स्पष्टम् ॥

इति प्रशसाशब्दस्य प्रशंसावाचित्वाधिकरणम् ॥ ५ ॥

६

श्येन० 'श्येनमस्य वक्षः कृणुतादि'ति श्येनसदृशमित्यर्थः । तत्र संशयः-किं सादृश्यमेवात्र विवक्षितम् ? उत साकल्यमिति ? तत्र सादृश्यमेव 'अमी पिष्टपिण्डाः सिंहाः क्रियन्तामि'तिवत् विधीयते । तेन वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिसम्पादनेन श्येनसंस्थानं कर्तव्यम् ।

नैतद्युक्तम्, अदृष्टार्थताप्रसङ्गात् । कर्तने च वक्षसो वैकल्याद्धविर्विनाशः स्यात् । अतः साकल्यमत्र विधीयते । अविकलं हि वक्षः श्येनसदृशं भवति । तदनेन प्रकारेणावैकल्यमेवोच्यते, दृष्टार्थत्वात् । एवं शला दोषणी कश्यपे वासो, कवषोरु, स्रेकपर्णा ष्ठीवन्ते'त्यपि साकल्यमेव ॥

इत्यध्रिगौ श्येनादिशब्दानां कात्स्न्र्यवाचित्वाधिकरणम् ॥ ६ ॥

७

प्रासङ्गिके० अग्निहोत्रे श्रूयते 'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽग्निरहुतेऽग्निहोत्र उद्वायेदि'ति । तत्र

---

६

**श्येन०** आतिदेशिक्येव सङ्गतिः । **तदनेनेति** । सादृश्यप्रतिपादनेनावैकल्यमेव विवक्षितं दृष्टार्थत्वादित्यर्थः । **एवमिति** । **शला** शलाकाकारौ दोषणी भुजौ । **कश्यपे** कच्छपाकारावंसौ । **कवषा** कवाटसदृशौ । खट्वा सदृशौ वा । **अष्ठीवन्तौ** ऊर्वोः पूर्वभागौ । **स्रेकपर्णा** । करवीरपत्रसदृसौ । शुकपत्रसदृशौ वेति पदार्था ज्ञेयाः । सूत्रे प्रसिद्धार्थश्येनादिपदसामानाधिकरण्यादिति हेत्वर्थः । शेषं सुगमम् ॥

**इत्यध्रिगौ श्येनादिशब्दानां कात्स्न्र्यवाचित्वाधि० ॥ ६ ॥**

७

**प्रासङ्गिके०** मन्त्रपदावान्तरकार्यप्रसङ्गादिष्टिकार्यचिन्तनात्सङ्गतिः । **उद्धृत**

संशयः-यदा दर्शार्थेनोद्धृतोऽग्निरग्निहोत्रकाले उद्वाति, किं तदा ज्योतिष्मतीष्टिः कर्तव्या ? नेति। तदर्थमिदं विचार्यते-किमग्निविशिष्टोद्वाननिमित्तमिदं कर्माग्निहोत्रस्यारादुपकारकम् ? उतोद्वानव्याप्ताग्निनिमित्तं तस्यैवाग्नेरुत्पादकं सामवायिकमिति ? किं प्राप्तम्—

उद्वायेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम् ।
वदत्यग्नेस्तु वाक्येन तस्मादारादुपक्रिया ॥

यदा हि वाक्यगम्याग्निनिमित्तत्वतिरस्कारेण पदश्रुत्योद्वानस्यनिमित्तता, तत उद्वानस्य क्रत्वनङ्गत्वेनासंस्कार्यत्वात्, अग्नेस्तु विशेषणत्वेन कार्यान्वयाभावात् आरादुपकारत्वमेवेति। निमित्तस्य च प्रकरणेन विशेषणासम्भवाद्दर्शार्थस्याप्युद्धृतस्याग्नेरुद्वाने सञ्जातं निमित्तमिति कर्त्तव्येष्टिरिति प्राप्ते ब्रूमः—

उद्वानस्याग्नियुक्तस्य नित्यत्वान्न निमित्तता ।
न च तस्याग्निना व्याप्तिः कदाचिदपि विद्यते ॥

---

इति। गार्हपत्यादुद्धृत्य प्रणीत इत्यर्थः। **उद्वायेत्** नश्येत्। **लिङिति**। 'हेतुहेतुमतोर्लिङि'त्यनुशासनादित्यर्थः। **श्रुत्या** एकपदरूपया। **वाक्येन** 'यदि रथन्तरसामे'ति वद्विशेषणप्राधान्यकल्पनया। **तस्मात्** श्रुतिबलीयस्त्वेनोद्वानस्य निमित्तत्वात्। एतदेवोपपादयति—**यदा हीति**। अयमर्थः—हेतुहेतुमतोरित्यनेन प्रयोजनत्वरूपनिमित्तत्वं यदि शालीन् भुञ्ज्यात्तर्हि दध्युपसिञ्चेदितिवदत्र प्रतिपादयितुं यदि शक्येत तदा सन्निपत्योपकारिता स्यान्न त्वत्र तत्सम्भवः। उद्वानस्य प्रयोजनत्वासम्भवादग्नेस्तु तद्विशेषणत्वेन तादृशनिमित्तत्वान्वययोग्यत्वात्। एवञ्चानुष्ठापकत्वरूपमेव निमित्तत्वं वाच्यमित्यारादुपकारित्वमिति। नन्वारादुपकारित्वेऽपि भेदनहोमस्य प्रकृतभेदन एव विधानवदिष्टेरपि अग्निहोत्रार्थोद्धृताग्निनाश एव विधानं स्यादत आह-- **निमित्तस्य चेति**। भेदन होमो हि दर्शवैगुण्यपरिहारार्थतया दर्शाङ्गम्। न चान्यदीयभेदने विधीयमानस्य तदङ्गत्वं सम्भवतीत्यनन्यगत्या फलान्तरकल्पनापरिहाराय तत्र प्राकरणिकत्वेन निमित्तस्य विशेषणं कृतम्। इह तु दर्शार्थमप्युद्धृतस्याग्निहोत्रकाले उद्वानमग्निहोत्रवैगुण्यापादकमेवेति तत्समाधानार्थतयेष्टेरग्निहोत्राङ्गत्वसम्भवान्नाग्निहोत्रार्थोद्धृतत्वस्य निमित्तविशेषणता वाक्यभेदापत्तेरिति भावः। वस्तुतस्तु नष्टस्याग्नेरुत्पादकाकाङ्क्षायामिष्टेस्तदुत्पादकतया संनिपत्योपकारित्वेऽपि दर्शार्थोद्धृतस्याप्यग्नेरग्निहोत्रोपयोगित्वेन तदुत्पादनार्थमिष्टेः करणसम्भवो ज्ञेयः। **उद्वानस्येति**। स्वाधिकारिकप्रयोगाङ्गस्याग्नेरेकदेश-

अग्निसम्बन्धस्तावदुद्वानपर्यायस्य विनाशस्यावयवशः सर्वदा विद्यमानो न निमित्तं भवति। न च विनाशस्य चिन्तितनिमिषितादिषु सर्वदा वर्त्तमानस्याग्निना वा व्याप्तिः सम्भवति, यो निमित्त स्यात्। उद्वानपरीतस्य त्वग्नेर्निमित्तता युक्ता। कादाचित्को हि तेनाग्नेर्व्याप्तिः, नतु सदातनी। यद्यप्यग्नेरुद्वानसबन्धो नित्यः, तथापि व्याप्तिरनित्या। तेनाग्निरेव चोद्वानव्याप्तो निमित्तम्। तस्योद्वानपरीतस्य कार्यायोग्यस्योत्पत्त्यर्थेयमिष्टिरग्निहोत्राङ्गम्। अग्निहोत्रार्थस्य चाग्नेरुद्धृतस्योद्वातस्योत्पादनं कुर्वती अग्निहोत्राङ्गं स्यात्, नान्यार्थस्य। तस्माद्दर्शार्थेनाग्नावुद्धृत उद्वाने नैतत्प्रायश्चित्तम्॥

इति प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम्॥७॥

८

धारणे० इदमाम्नायते 'धार्यो गतश्रिय आहवनीयः' इति। तत्र यदा ध्रियमाणोऽग्निरग्निहोत्रकाले उद्वाति, तदा किमिष्टिः कार्या? उत नेति संशये,

---

सम्बन्धमात्रेणोद्वानविशेषणत्वं साकल्येन वा। आद्ये दोषमाह—**नित्यत्वादिति**। द्वितीये-तु तादृशनाशस्यानित्यत्वेऽप्यग्नेस्तद्दोषित्वाभावेन विशेषणं व्यवच्छेत्तृ विशेष्यव्यापि चोच्यत इति न्यायात् न विशेषणत्वं युक्तमित्याह - **न चेति**। पूर्वार्द्धं व्याचष्टे—**अग्नीति**। उत्तरार्द्धं व्याचष्टे—**न चेति**। **वर्त्तमानस्येति**। प्रतियोगितेत्यर्थः। तस्मादुद्वानविशिष्टः स्वकर्त्तव्याग्निहोत्रप्रयोगाङ्गभूतोऽग्निरेव निमित्तमित्याह—**उद्वानेति**। **परीतस्य** युक्तस्य। ननु दर्शार्थमुद्धृतस्याप्यग्नेरग्निहोत्राङ्गत्वात्तदुत्पादकत्वेनेष्टेराग्निहोत्राङ्गत्वं स्यादत आह—**अग्निहोत्रार्थे चेति** उद्धृतत्वरूपेणेष्टिकार्यत्वावगमाद्यस्योद्धृतत्वेनाग्निहोत्राङ्गत्वं तदुत्पादकतयेष्टेरग्निहोत्राङ्गत्वम्। प्रकृते तूद्धरणस्याग्निहोत्राङ्गत्वान्न तद्रूपेणेष्टेस्तदुत्पादकतयाङ्गत्वसम्भव इत्यर्थः। सूत्रं स्पष्टार्थम्॥

इति ज्योतिष्मत्याः प्रायश्चित्तरूपेणाननुष्ठानाधिकरणम्॥ ७॥

८

**धारणे च०** आतिदेशकी सङ्गतिः। **गतश्रीः** प्राप्तश्रीः। **सर्वार्थमित्यस्य** समुदा-

अग्निहोत्रार्थ उद्वाते प्रायश्चित्तमिदं श्रुतम् ।
धार्यस्य चास्ति तादर्थ्यं सर्वार्थं धार्यते ह्यसौ ॥

सर्वकर्मणां धार्यमाणोऽग्निः प्रत्येकमङ्गम् । अतोऽग्निहोत्रार्थताऽप्यस्तीति, तदुद्वाने कर्तव्येष्टिः ।

नैवम्—

अन्यार्थमुद्धृतो ह्येष गतश्रीत्वेन धार्यते ।
धारणस्य निमित्तं तन्नोद्धारस्याश्रुतत्वतः ॥

न हि गतश्रीत्वेन पुरुषस्याग्न्युद्धरणं श्रुतम्, येनोद्धरणम् उद्धृतो वाऽग्निः सर्वार्थः स्यात्, किन्तु धारणमात्रम् । तेन यदा यं कञ्चित्कर्मविशेषमधिकृत्याग्निमुद्धरति, तदा तस्य धारणमात्रं गतश्रीत्वेन करोति । यस्मिंश्च कर्मण्युपसम्प्राप्तेऽग्निरुद्धृतः तदर्थमेवोद्धरणम् । उद्धृतश्चाग्निस्तदर्थ एव निमित्तवशाद्धार्यमाणः प्रसङ्गादग्निहोत्रस्योपकरोतीति न तदुद्वाने प्रायश्चित्तम् ॥

इति ज्योतिष्मत्याः प्रायश्चित्तरूपेणाननुष्ठानाधिकरणम् ॥८॥

९

न तूत्पन्ने० दर्शोपक्रमेऽग्न्युद्धरणे क्रियमाणे किमग्निहोत्राङ्गभूत उद्धरणमन्त्रः, 'वाचा त्वा होत्रे' त्यादिः प्रयोक्तव्यः ? नेति संशयः । तत्र—

---

यार्थत्वभ्रमं वारयति—प्रत्येकमिति । सिद्धान्तमाह—नैवमिति । तत् गतश्रीत्वम् । उद्धृतो वाग्निरिति । तथा चोद्धृतत्वेनाग्निहोत्रानङ्गत्वात्पूर्वोक्तन्यायेन नेष्टिरिति भावः । वस्तुतः प्रकरणाद्यभावाद्गतश्रिय इति षष्ठीश्रुत्या पुरुषार्थमेवेदं निमित्ते विधीयत इति न धारणं क्रत्वर्थमिति सूचयितुं निमित्तवशादित्युक्तम् । न कर्मार्थतयेत्यर्थः । एवञ्च प्रसङ्गोपकारित्वादग्नेर्नेष्टिस्तस्यास्तादर्थ्याभावादिति भावः । सूत्रं स्पष्टम् ॥

इति ज्योतिष्मत्याः प्रायश्चित्तरूपेणाननुष्ठानाधिकरणम् ॥ ८ ॥

९

नतूत्पन्ने० आतिदेशिक्येव सङ्गतिः । विशेषाशङ्कामाह—तत्रेति । ननु

दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्त्तते ।
साधनत्वप्रयुक्तश्च धर्मो नाङ्गमपेक्षते ॥

तेनाग्निहोत्रानङ्गभूतेऽप्युद्धरणे तदुपकारकत्वमात्रेण यागार्थयोर्दधिपयसोः प्रणीताधर्मा इव कर्त्तव्य एव मन्त्रः कालमनादृत्य । कालस्य गुणत्वेनासम्भवेऽपि मन्त्रस्य लोपोऽन्याय्यः । अथवोद्धरणमप्येतदग्निहोत्रस्याप्यङ्गमकालेऽपि क्रियमाणम्, अन्यथाऽग्निहोत्रस्य प्रणयनलोपाद्वैगुण्यं स्यादिति प्राप्ते, उच्यते—

काले खल्वनुपादेये प्राप्ते कर्म विधीयते ।
साङ्गं तस्मात्तु कालात्प्राङ्नाधिकारोऽस्ति कर्मणि ॥

अनधिकारिणा च क्रियमाणं निष्फलं स्यात् । तस्मान्नाप्राप्ते कालेऽग्निहोत्राङ्गमुद्धरणम्, तन्मन्त्रो वा कर्तव्यः ॥

इति दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरम् ॥९॥

१०

प्रदान ० 'आदित्यः प्रायणीयः पयसि चरुरि' त्यत्र संशयः—किमेतत् पयश्चरुणा तुल्यं तद्देवतासम्बन्धि प्रदेयद्रव्यत्वेन विधीयते ततश्च प्रदेयधर्मैर्वत्सापाकरणादिभिः सम्बध्यते ? उत चरोरेव श्रपणार्थं प्रणीताकार्ये विधीयते, न प्रदेयधर्मान् लभेतेति ? तत्र—

---

साङ्गस्योद्धरणस्य कालान्वयात्तं विना कथं मन्त्र इत्यत आह—**गुणत्वेनेति** । गुणानुरोधेन प्रधानलोपोऽनुचित इत्यर्थः । **काले इति** । कालस्यानुपादेयत्वेनाधिकारिविशेषणत्वात्तदभावे चाधिकाराभावादुद्धरणमन्त्रयोर्द्वयोरप्यग्निहोत्राङ्गयोरनुष्ठानायोगान्न मन्त्र कर्त्तव्यतेत्यर्थः । प्रसङ्गसिद्धेश्च न प्रणयनलोपप्रयुक्तदोष इति भावः । सूत्रार्थस्तु परार्थोत्पन्ने यस्याग्निहोत्रस्यानुष्ठानं तत्राप्राप्तकालत्वान्न मन्त्र इति ॥

इति दर्शार्थाग्न्युद्धरणस्यामन्त्रकत्वाधिकरणम् ॥ ९ ॥

१०

**प्रदान०** मन्त्रवद्धर्माभावोक्तेरातिदेशीकी सङ्गतिः । **चरोरिति** । विरुद्धत्रिकद्वयमपि ज्ञेयम् । भावनाया अश्रवणाद्द्रव्यदेवतान्वये च पयसीति कारकान्वयायोगा-

चरोर्देवतया योगं पयसा चरुसङ्गतिम् ।
विदधद्भिद्यते वाक्यमर्थद्वयविधानतः ॥

द्रव्यद्वयविशिष्टदेवतासम्बन्धविधौ त्वेकार्थविधानम् । तस्मात्पयः प्रातिपादिकार्थोऽपि देवतासम्बन्धः सप्तम्यर्थस्तु सह श्रपणादर्थसिद्धोऽनूद्यते अभ्युदितेष्टिवत् इति प्राप्ते, ब्रूमः—

चरुणाऽऽधारभूतेन पयसा च विशेषितः ।
द्रव्यदेवतसम्बन्ध एकार्थोऽत्र विधीयते ॥

'पयस्यादित्यश्चरुरि'त्युभयविशिष्टद्रव्यदेवतासम्बन्धविधानान्नास्ति वाक्यभेदः । तत्र चरुः प्रथमानिर्देशाद्धविः, पयस्तु सप्तमीनिर्देशादाधारत्वेन सम्बध्यते । एवमवाक्यभेदे सति सप्तमीनिर्देशस्याविवक्षामङ्गीकृत्य, तुल्य-कल्पफलत्वमयुक्तमभ्युपगन्तुम् । तस्मान्न पयसि प्रदेयधर्माः ॥

इति प्रायणीचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् ॥ १० ॥

११

अभ्युदये० अभ्युदयेष्टावपि 'ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधंश्चरुम् येऽणिष्ठाः तान्विष्णवे शिपिविष्टाय शृते चरुमि'ति दधिशृतयोः सप्तमीनिर्देशात्पूर्ववत्प्रदेयधर्मा न कर्तव्या इति प्राप्ते—

---

त्कल्प्पयागेऽपि च तदसम्भवाच्चरुरादित्यः कार्यः । स च पयसीति वाक्यभेद इत्यर्थः । **सप्तम्यर्थ इति** । सम्प्रतिपन्नदेवतत्वात्सहप्रदानवत्सहश्रपणमप्यर्थसिद्धं चरुत्वाविरो-धादित्याशयः । **द्रव्यदेवतसम्बन्ध इति** । द्रव्यदेवते सम्बध्येते अनेनेति तथाभूता भावनेत्यर्थः । अप्राप्तत्वेन विधिवत् भावनाया अप्यवश्यकल्पनीयत्वादिति भावः । सूत्रा-र्थस्तु—श्रप्यमाणे पयसि प्रदानदर्शनं अतश्च तद्धर्म । तस्य प्रदेयस्य धर्मा यस्मिंस्तथाभूतं भोजनार्थत्वाद्यागार्थत्वान्मधूदकवत्संसर्गात् चित्रेष्टिवदिति ॥

इति प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् ॥ १० ।

११

**अभ्युदये०** अत्र प्रत्युदाहरणसङ्गतिः । अन्यत्सुगमम् । सूत्रार्थस्तु अभ्युदये दोहा-

तत्रोच्यते—नापूर्वकर्मविधानादृतेऽनेकार्थविधिः सम्भवति। न चेहापूर्वकर्मविधिः। किन्तु पूर्वप्रवृत्तदर्शकर्मणि निमित्ते पूर्वमेवापनीतानां हविषां देवतान्तरसम्बन्धमात्रं विधीयत इति स्थितं षष्ठे। तद्यदि तण्डुलानां देवतान्तरसम्बन्धे दधिशृतयोश्च प्रणीतार्थे विधिः स्यात्, ततः प्राप्ते कर्मणि अनेकार्थविधानाद्वाक्यं भिद्येत। तस्मात्प्रदेयत्वेनैव प्रवृत्तायोर्दधि-शृतयोर्देवतान्तरसंयोगमात्रं तण्डुलवद्विधीयत इति कर्त्तव्याः प्रदेयधर्माः॥

इत्यभ्युदयेष्टौ दधि शृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्॥ ११॥

१२

अपनयो० 'यः पशुकामः स्यात्, सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये मध्यमाः तान् विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दधंश्चरुमि'ति श्रुतम्। तत्राभ्युदयेष्टितुल्यश्रुतित्वात्तद्वदेव दधिपयसोः प्रदेयत्वं मन्वानः प्रदेयधर्मान्मन्यते। अपूर्वकर्मविधानादप्राप्तप्रदानयोर्दधिपयसोः सप्तम्या श्रपणार्थमादित्यचरुपयोवद्विधानमित्यकर्त्तव्याः प्रदेयधर्माः॥

इति पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम्॥ १२॥

---

पनयः अपनीतदेवतो दोहः दधिपयोरूपः प्रदेयधर्मा स्यात् प्रदेयत्वेन प्रवृत्तत्वादिति॥

इत्यभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्॥ ११॥

१२

अपनयो वा० पूर्वापवादात्सङ्गतिः। तत्रेति। य इति प्रकृताभिधायकयच्छब्दवशात्प्रकृतानामेव देवतान्तरसम्बन्धप्रतीतेरिति भावः। अपूर्वेति। पूर्वदेवतापनयविध्यभावेन देवतान्तर सम्बन्धार्थत्वासम्भवात्कर्मान्तरत्वसिद्धौ प्रदानप्राप्तभाव इत्यर्थः। पयसि चरुरितिवदिति सूत्रार्थः॥

इति पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम्॥ १२॥

१३

श्रपणानां० ज्योतिष्टोमे श्रूयते 'पयसा मैत्रावरुणं श्रीणाति' 'सक्तुभिर्मन्थिनम्' इत्यादि। तत्र संशयः— किं पयः प्रभृतयः प्रदेयत्वेन सोमवद्विधीयन्ते, ततश्च प्रदेयधर्माः क्रयादयः कर्त्तव्याः? उत सोमसंस्कारार्थत्वेन विधानादकर्त्तव्याः? इति। तत्र पयसः सोमस्य मिश्रणं श्रूयते। किमर्थम्? कथं नु नाम सोमे प्रदीयमाने पयोऽपि प्रदीयेतेति। एवं हि यागनिर्वृत्तिर्दृष्टमेव प्रयोजनम्। सोमसंस्कारार्थत्वे तु अदृष्टार्थता स्यादिति। एतावता प्रदेयत्वं मन्यते।

द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते।
तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते॥
श्रुतेश्चादृष्टसंस्कारकल्पना नैव दुष्यति।
तस्मात्प्रदेयधर्माणां न पयः प्रभृतौ क्रिया॥

इति श्रपणाधिकरणम्॥ १३॥

१४

पर्यग्नि० अश्वमेधे 'ईशानाय परस्वत आलभते' इति प्रकृत्य श्रूयते 'पर्यग्निकृतानारण्यानुत्सृजति'ति। तत्र सन्देहः—किम् 'ईशानाया-

---

१३

श्रपणानां० अतिदेशिकी सङ्गतिः। अधिकाशङ्कामाह एवं हीति। सिद्धांतमाह द्वितीययेति। प्रयाजशेषन्यायेन द्वितीयादिश्रुतिभङ्गस्तु सोमेन यजेते' त्युत्पत्तौ निरपेक्षसाधनत्वस्य प्रतीतस्याविरोधात् दुर्बलप्रकरणेनाङ्गत्वायोगाच्चायुक्त इति भावः। सूत्रे अपूर्वत्वादित्यस्यापूर्वार्थत्वापत्तेरित्यर्थः॥

इति श्रपणाधिकरणम्॥ १३॥

१४

पर्यग्नि० पयआदिनामिव परस्वतामपि न प्रदेयत्वमिति शङ्कोत्थानात्सङ्गतिः। परस्वच्छब्द आरण्यकमृगविशेषवचन इति माधवः। आलम्भेति। स्पर्शमात्रमित्यर्थः।

ऽऽलभते' इत्यालम्भमात्रं विधीयते। तेषां चालब्धानां पर्यग्निकरणविशिष्ट उत्सर्गः—त्यागः पर्यग्निकरणवाक्येन विधीयते? उतेशानायेति यागविधिः, पर्यग्निकृतानारण्यानुत्सृजतीति ? तत्रैव गुणविधिरिति ? तत्र सत्यपि देवतासंयोगे न यागविधिः, आलम्भमात्रन्तु विधीयते। यागविधित्वे सति पर्यग्निकरणवाक्ये न किञ्चिद्विधेयं लभ्येत। न तावदुत्सर्गः, यागविधिनैव प्राप्तत्वात्। न पर्यग्निकरणम्, चोदकप्राप्तत्वात्। न पर्यग्निकरणोत्तरकालमुत्सर्गः, तस्यापि प्राप्तत्वात्। न पर्यग्निकरणानन्तर्यम्, आनन्तर्यशब्दाभावात्। न च क्लृप्तोपकारपर्यग्निकरणविधानादपूर्वत्वम्। न ह्यत्र पर्यग्निकरणं विधीयते, सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात्। न च पर्यग्निकरणान्ताङ्गरीतिविधिः, प्राप्तत्वादेव। न च ततः परेषां पदार्थानां प्रतिषेधः, प्रतिषेधकशब्दाभावात्। न च पर्यग्निकरणकाले 'उत्सृजती' ति विधिः, कालस्याशाब्दत्वात्, कालविधौ तु कालान्तरं निवर्तेत, नाङ्गान्तराणि तत्र चोदकप्राप्तसमस्ताङ्गयुक्त उत्सर्गः पर्यग्निकरणकाले कथमनुष्ठातुं शक्येत। तस्मादालम्भमात्रं देवतोद्देशेन पूर्ववाक्ये विधीयते, परस्त्वताम् उत्तरवाक्ये तेषामुत्सर्गः। पर्यग्निकरणविशिष्टश्चोद्यते। उच्यते—

विना यागेन न द्रव्यं देवतान्वयमृच्छति।
द्रव्यदैवतसंयोगादतो यागो विधीयते॥

ईशानायेति देवतात्वं गम्यमानमशक्यमपह्नोतुम्। तच्च न कदाचिद्यागमन्तरेणालम्भमात्रादुपपद्यते। अतो यागविधिः। विहिते च तस्मिन् यदि पर्यग्निकरणवाक्यस्य विधेयं न लभ्यते, ततोऽनुवादो भवतु। न चैतावतादेवतासम्बन्धज्ञानमप्रमाणीकर्तुं शक्यम्। न च नास्ति विधेयम्, अपूर्वतापरत्वात्। क्लृप्तोपकारप्राकृतपर्यग्निकरणाङ्गरीतिवि-

---

एवञ्च यागभावनातिदेशाभावात्पर्यग्निकरणमपि विधेयमित्यर्थः। यागः कुतो न विधीयते तत्राह यागविधित्व इति। अनन्तर्यं अव्यवहितोत्तरत्वम्। शेषं सुगमम्। सूत्रार्थस्तु

धीयते। तया प्रत्यक्षविहितया निराकाङ्क्ष ईशानप्रयोगवचनो न चोदकमपेक्षते। तस्माद्यागविधिः। उत्तरन्तु तत्रैव गुणविधिः॥

इतीशानवाक्ये यागान्तरविधानाधिकरणम्॥ १४॥

१५

आज्यसंस्था० 'त्वाष्ट्रं पात्नीवतमालभेते'ति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजती'ति श्रुतम्। तत्र पुनः श्रूयते 'आज्येन शेषं संस्थापयती'ति। तत्र संशयः—किं पूर्वस्मिन्नेव कर्मणि पशोरुत्सृष्टस्य स्थाने प्रतिनिधित्वेनाज्यं विधीयते? किं वा कर्मान्तरविधिरिति? तत्र शेषशब्दात् संस्थापयतिशब्दाच्च तत्रैव प्रतिनिधिविधिः न कर्मान्तरम्, देवतान्तराभावात्। ननु पर्यग्निकरणान्ताङ्गरीतिविधानमित्युक्तं पूर्वाधिकरणे। ततश्च तथैव निराकाङ्क्षस्य न शेषमस्ति। उच्यते—पूर्वाधिकरणे यागविधिरालभतिरित्युक्तम्। तदिह मृष्यामहे, पर्यग्निकरणान्ताङ्गरीतिनैराकाङ्क्ष्यन्तु न मृष्यामहे, शेष-संस्थापयतिशब्दानुपपत्तेः। किन्तु यागस्यैव पशुनोपक्रान्तस्य चोदकप्राप्तेऽग्नीषोमीयविध्यन्तेऽनुष्ठीयमाने पर्यग्निकृतावस्थायामुत्सर्गः परित्यागः पशोर्विधीयते। तस्मिन्नुत्सृष्टे

---

पर्यग्निकृतानामुत्सर्गे तादर्थ्यात् तद्विषयोपरममात्रार्थता चरुमुपदधातीत्युपधानवत् न तु यागविधिरिति॥

इतीशानवाक्ये यागान्तरविधानाधिकरणम्॥ १४॥

१५

आज्य० आक्षिप्य समाधानात्सङ्गतिः। शेषसंस्थापयतिशब्दानुपपत्तेरिति.

साकाङ्क्षस्य कर्मशेषस्याज्येन संस्थापनं विधीयते । कर्मान्तरस्य ह्यनुपक्रान्तस्य स्वरूपमेव वक्तव्यं न समापनम् । शेषशब्दस्य चानुपपत्तिः । तस्मात्पूर्वत्रैव प्रतिनिधिराज्येनेति प्राप्ते—

ब्रूमः—न प्रतिनिधिः सम्भवति । तथा हि-यदि पशोस्त्यागमात्रं क्रियेत, तत उत्पत्तिवाक्यविहितदेवतासम्बन्धो नानुष्ठितः स्यात् । तत्रैव देवतासम्बन्धविधिरप्रमाणं स्यात् । असति च देवतासम्बन्धे यागविधित्वं न स्यात्, प्रत्यक्षयज्यश्रवणात् । असति च यागे अग्नीषोमीयविध्यन्तस्याप्राप्तेः पर्यग्निकृतोत्सर्गः, शेषसंस्थापनश्चोभयमप्यनुपपन्नम् । अथ देवतामुद्दिश्योत्सृज्येत, ततः पशुसाधनके यागे पशुनैव मुख्येन साधिते किमर्थः प्रतिनिधिः । देवतोद्देशेन चोत्सर्ग उत्पत्तिवाक्यसिद्धत्वान्न पर्यग्निकरणवाक्येन विधातव्यः । तस्मात्पूर्वाधिकरणोक्तन्यायेन पर्यग्निकरणान्ताङ्गरीतिविधानात्तयैव निराकाङ्क्षस्य पूर्वस्य कर्मणः समाप्तत्वान्न शेषमस्ति, यस्याज्येन संस्थापनमुच्येत । तस्मात्कर्मान्तरविधिरेवायमिति । न च देवताभावः प्रकृतपात्नीवतपदानुषङ्गात् । इह संस्थापयतीति प्रत्ययार्थेन भावनया आज्यप्रातिपदिकार्थोऽनुषक्तदेवतापदयुक्तः सम्बध्यते । तदयमर्थः—पात्नीवतमाज्यं कुर्यादिति । शेषसंस्थाशब्दौ च सादृश्यात्पूर्वो हि यागः पत्नीवद्देवत्यः पर्यग्निकरणमात्रे संस्थापितः सशेष इव तदनन्तरं चाज्ययागः पत्नीवद्देवत्य एव क्रियमाणस्तत्रैव शेषसमापनमिव भवति । याप्याज्यप्रातिपदिके तृतीया, साऽपि संस्थासम्बन्धानुवाद एव । प्रातिपदिकार्थमात्रन्तु देवतासम्बधित्वेन विधीयत इति सिद्धं कर्मान्तरत्वम् ।

---

यदुक्तं तद्विवृणोति **कर्मान्तरस्य हीति** । शेषसंस्था शब्दयोरुपपत्तिमाह **शेषसंस्थाशब्दौ चेति** । तथा चैवं रीत्या गौणत्वेन स्तावकत्वमात्रमिति भावः । सङ्क्षेपेणा-

प्राकृतार्थपतितान्यकार्यतो मन्त्र सामविषये च संस्कृतौ ।
एवमूहविधिरत्र चिन्तितो बाधचिन्तनमतः करिष्यते ॥

इति शेषसंस्थापनाधिकरणम् ॥ १५ ॥

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां नवमाध्यायस्य चतुर्थः पादः समाप्तः ॥

इति नवमोऽध्यायस्समाप्तः ।



---

ध्यायार्थमुपसंहरति प्राकृतार्थेति । प्राकृतस्याग्नेयोऽर्थः प्रयोजनं तत्र पतितस्तत्स्थानापन्नोऽन्यः सूर्यस्तद्रूपं यत्प्रकाश्यतया कार्यं तद्वशादित्यर्थः । एवं अन्यत्कार्यं संस्कार्यमिरापदमिति सामविषये योज्यम् । एवं नीवारादिकार्यं वैतुष्यरूपेण तद्वशादिति संस्कृतौ योजनेति शिवम् ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञश्रीमत्तत्सद्रामभट्टात्मजवैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां नवमाध्यायः संपूर्णः ॥



# अथ दशमोऽध्यायः

## प्रथमः पादः

१

विधेः० ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया ।
इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते ॥

अतिदिष्टपदार्थविषयत्वाद्बाधस्याप्यूहवदतिदेशोत्तरकालमारम्भः । ननूहबाधयोर्न मिथो हेतुहेतुमत्ता, ऊहो नाम प्राकृतस्य प्रयोगस्यान्यथाभावः । न च तदधीनो बाधः । कृष्णलेषु ह्यवघातस्य बाधः, न च तत्रोहोऽस्ति, अननुष्ठानात् । न ह्यननुष्ठीयमानस्य प्रयोगविकारोऽस्ति । यत्र चोहो नीवारादौ, न तत्र बाध इति विषयभेदान्न तयोरन्योन्यहेतु-

---

## दशमोऽध्यायः

१

विधेः० सङ्गतिं दर्शयन्नध्यायार्थं प्रतिजानीते **ऊह** इति । विकृतिष्वतिदिष्टानामङ्गानामियत्ताभिधीयत इत्यन्वयः । इयत्ता परिमाणम् । सूत्रादावियत्तायाः प्रतिपादनाभावादाह **बाधेति** । इयत्ता तु फलीभूतार्थिकीति भावः । **अभ्युच्चयः** समुच्चयो वैकृतैः प्राकृतानां क्वचित् । यथा दीक्षाहुतिमन्त्राणां प्राकृतानां वैकृतानाञ्चेति वक्ष्यते । स च क्वचिद्बाधापवादतयोच्यमानोऽपि नाध्यायार्थः किन्तु बाध एव । अन्यथाध्यायभेदप्रसङ्गात् । अत एव बाधस्यैवोहसङ्गतिमनुपदमेव वक्ष्यति । उहे सिद्ध इत्यनेनावसरसङ्गतिसूचनं मनसि निधाय तदुपपादनार्थमूहबाधयोरतिदेशानन्तरं निरूपणप्रसक्तिमाह **अतिदिष्टेति** । ऊहस्यातिदिष्टपदार्थधर्मत्वेनान्तरङ्गतया प्रथमं जिज्ञासा बाधनिरूपणप्रतिबन्धिकेति तन्निवृत्त्या प्राप्तावसरं पश्चाद्बाधचिन्तनमित्याशयः । एवमाशयमजानानोऽतिदेशोपजीवित्वसाम्यादूहबाधयोः पौर्वापर्ये निमित्ताभावमशङ्कते **नन्विति** । हेतुहेतुमद्भावे हि तयोः पौर्वापर्यं युज्येत न तु सोऽस्तीत्याशयः । **नहीति** । अननुष्ठीयमानस्यावघातस्य प्रयोगविकारोऽनुष्ठानान्यथात्वं न ह्यस्तीत्यर्थः । ऊह-

हेतुमत्ता। यत्र हि द्रव्यान्तरे देवतान्तरे वा प्राकृतप्रयोजनमस्ति, तद्विषय ऊहः। यत्र तु नास्ति, तत्र बाधः। सत्यमेवम्, तथाऽप्यूहस्य पदार्थगतरूपान्तरात्मकत्वेन पदार्थप्रत्यासत्तेस्तत्प्राप्तिचिन्तानन्तरं चिन्ता कृता। बाधस्तु तन्निवृत्त्यात्मकः पश्चाच्चिन्त्यते।

तत्र प्रथमन्तावदिदं चिन्त्यते—किं सर्वं प्राकृतं विकृतौ कर्त्तव्यम् उत क्लृप्तप्राकृतप्रयोजनं न कर्त्तव्यम्? इति। तदर्थमिदं विचार्यते—किं प्राकृतमङ्गजातम्, अङ्गशास्त्रं वा स्वरूपेणैवानादृतप्रयोजनं विकृतावतिदिश्यते—सौर्येण भावयेत्कथम्? आग्नेयस्य यान्यङ्गानि तानि कृत्वेति। उत पदार्थकार्याणि यानि दृष्टादृष्टरूपाणि तद्वत्तासम्पादनात्मा य आग्नेयादिगतो व्यापारः सोऽतिदिश्यते—सौर्येण भावयेत्, कथम्? यथाऽऽग्नेयेन तथेति?

---

बाधयोः प्रयोजनसत्वासत्वाभ्यां विषयभेदं स्फुटीकरोति— **यत्र हीति**। **द्रव्यान्तरे** नीवारादौ **देवतान्तरे** सूर्यादौ **प्रयोजनं** वितुषीभावप्रकाशनरूपम्। **यत्र** कृष्णत्वादौ पशुगणे च क्रमेणावघातस्याध्रिगुप्रैषगतषड्विंशतिपदस्य च बाधः। आशयमाविष्करोति- **तथापीति**। **पदार्था** अवघातादयस्तद्गतं **रूपान्तरं** व्रीहिकर्मकत्वादन्यन्नीवारादि कर्मकत्वं तदात्मकत्वेनेत्यर्थः। **तन्निवृत्त्येति**। पदार्थनिवृत्यात्मक इत्यर्थः। एवञ्चार्थ-लोपप्रत्याम्नानानिषेधान्यतमप्रयुक्तप्राकृताङ्गनिवृत्तिरूपबाधचिन्तनमिह प्राधान्येनाध्या-यार्थ इति भावः। तत्र कृष्णलेष्वर्थलोपादवघातस्य कुशानां शरैः प्रत्याम्नानाद्विकृतौ 'न होतार' मिति पर्युदासाद्धोतृवरणादेर्बाध इति ज्ञेयम्। एतदधिकरणास्यार्थलोप-प्रत्याम्नानकृतवाधोपोद्घातत्वमाह—**तत्रेति**। **स्वरूपेणैवेति**। अङ्गातिदेशपक्षे स्वरूपे-णैव **अवधातत्वादिनैव** न त्ववघाताद्युपकारत्वेन विशिष्टरूपेणेत्यर्थः। अतएवा-**नादृतं** विशेष्यतया **प्रयोजन**मुपकारो येन तादृशमित्येकोऽर्थः। पूर्वमनतिदिष्टप्रयोजन मित्यपरः शास्त्रातिदेशपक्षे। स्वरूपेणावघातादि शास्त्रत्वेन न तु वितुषीभावादि जनकावघातादिशास्त्रत्वेनेत्यर्थः। अत एवानादृतं विशेषणतया प्रयोजनं येनेत्यर्थः। स्वरूपमात्रातिदेशप्रकारमाह—सौर्येणेति। शास्त्रातिदेशेऽप्यतिदिष्टशास्त्रैकवाक्यतयाय-मर्थो ज्ञेयः। **उतेति**। **तद्वत्तासम्पादनात्मेति** युक्तः पाठः, न तु तद्वत्तासम्पादनायेति। आग्नेये हि तद्वत्तासम्पादनमेव व्यापारो न तु तदर्थोऽन्यः। अतएव **स चाङ्गजन्योपकार सम्पादनात्मे**त्यग्रे वक्ष्यति। उपकारवत्तासम्पादनायाग्नेयादिगतो व्यापारो दृष्टादृष्टो-पकार एव तद्वत्ताया उपकाराधीनत्वादिति तु कथञ्चिद्व्याख्येयम्। अतिदेशप्रकारमाह— **सौर्येणेति**। **कथमिति**। प्रकारकाङ्क्षायामाग्नेयगतप्रकारस्यैवातिदेशात्तस्य चोपकार

तत्र पूर्वस्मिन्पक्षेऽतिदेशावगताङ्गभावानां प्राकृतप्रयोजनानादरेण विकृतावेव यथासम्भवं दृष्टादृष्टप्रयोजनकल्पनात् स्वयंदितेऽपि बर्हिषि लवनमदृष्टार्थतया कर्त्तव्यमिति नास्ति बाधः। उत्तरत्र तु प्राकृतस्य लवनकार्यस्य दृष्टस्य स्वयंदिते बर्हिष्यभावेनानतिदेशाल्लवनस्वरूपस्य चानतिदेशान्नकर्त्तव्यं लवनमिति सिध्यति बाधः।

तत्रोपदेशवदतिदेशोऽपि पदार्थपूर्वक एव युक्तः, उपदेशानुरूपत्वात्तस्येति मन्वानः सर्वं कर्त्तव्यं न तु किंचिद्बाधितव्यमित्याह। सिद्धान्तस्तु—

अपेक्षाऽऽसत्तियोग्यत्वैरुपकारातिदेशनम्।
तदभावात्पदार्थानामतिदेशो न कल्प्यते॥

यागेन भावयेदिति हि यथा यागः फलसाधनं भवति, तथा व्याप्रियेतेत्यर्थः। कथमिति? केन व्यापारेण यागः फलसाधनतामाद्यत इत्येवं यागस्य फलसाधने व्यापारविशेषोऽपेक्षितः, न तु व्यापारमात्रम्, येनावघातादिव्यापारः स्वरूपेणातिदिश्येत। अवघातप्रयाजादिजन्यदृष्टादृष्टोपकारसम्पादनन्तु भवति यागस्य फलसाधनसामर्थ्यंजनने व्यापारः। तस्मादपेक्षावशादुपकारसम्पादनस्यैवातिदेशः, न पदार्थानाम्। तथा—सन्निधिरपि तस्यैव वैकृतं वाक्यं चोदनासामान्येन प्राकृतं प्रधानवाक्यमुपस्थापयति। तच्च वाक्यं स्वार्थमुपस्थापयति। तस्य च स्वार्थोऽशत्रययुक्ता भावना। तत्र साध्यसाधनांशावनपेक्षितत्वादनादृत्य तृती-

---

सम्पादनरूपत्वात्तस्यैवातिदेशो न तु तद्व्यवहितानामङ्गानामित्यर्थः। कोटिद्वयस्य क्रमेण पूर्वोत्तरपक्षोपयोगितां दर्शयति **तत्रेत्यादि**। **स्वयंदिते** छिन्ने। राजसूयान्तर्गतमैत्राबार्हस्पत्येष्टौ 'स्वयं दितं बर्हिर्भवती'ति विहित इत्यर्थः। **दृष्टस्येति**। मूलाद्विश्लेषरूपस्येत्यर्थः। **स्वरूपस्य** स्वरूपमात्रस्य **मन्वान** इत्यननोपदेशकाले उपकारस्याक्लृप्तपूर्वत्वं तद्वाचकपदाभावश्च अतिदेशकाले तूपकारस्य क्लृप्तत्वं पदानां कल्प्यत्वेनाश्रवणदोषाभाव इति वैषम्यं सूचितम्। **तदभावात्** अपेक्षादित्रयाभावात्। **फलसामर्थ्येति**। फलोत्पत्त्यनुकूलशक्तीत्यर्थः। अवघातादेरपि तादृशसामर्थ्यजनकत्वमस्तीत्यत आह **अवघातादीति**। शक्तिरूपकार्यसामानाधिकरण्यादव्यवधानाच्चेति

योंऽशो गृह्यते। स चाङ्गजन्योपकारसम्पादनात्मा, नाङ्गस्वरूपाणि। तथा कथमाकाङ्क्षापूरणयोग्यताऽपि यागगतव्यापारस्यैव नाङ्गानाम्। तस्मादपेक्षा-सन्निधि-योग्यत्वैः कार्याणामेवात्र पदार्थविशिष्टानामतिदेशः न पदार्थस्वरूपाणामपेक्षाद्यभावात्। एवं शास्त्रस्वरूपाणाम्। एवञ्च विशिष्टकार्यातिदेशादार्थिको विशेषणानां पदार्थानामतिदेशः। ततश्च यस्यां विकृतौ यत्प्राकृतं कार्यं न सम्भवति तस्यां तस्यासम्भवेनानतिदेशान्न तद्वशेन पदार्थप्राप्तिः। स्वरूपस्य नास्त्येवातिदेशः। तदिदमुक्तं 'तस्मात् लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयती'ति।

यस्तु पदार्थाननुरक्तं तदुपलक्षितमुपकारस्य स्वरूपमतिदिश्य तस्य जनकापेक्षायां पदार्थानामपि पुनर्विकृत्यपूर्वेण तादर्थ्यादन्वयमिच्छति, तन्मते लुप्तप्राकृतद्वाराणामपि तादर्थ्यावगमात्तदुपपत्तये द्वारान्तरं परिकल्प्याऽनुष्ठानं स्यात्। पदार्थापोहेन च स्वरूपमतिदिशता किं तत्स्वरूप-

---

भावः। **सामान्येन** निर्वपत्यादिसादृश्येन। **स चेति**। प्रकृतावपि प्रकारस्यैवेत्थमिति भावनेतिकर्त्तव्यतारूपतयाऽन्वयात्तस्य चोक्तरीत्योपकारसम्पादनरूपत्वादित्यर्थः। **योग्यतापीति**। शक्तिरूपकार्यसामानाधिकरण्याव्यवधानाभ्यामिति भावः। शास्त्रस्वरूपाणां नातिदेश इत्यनुषङ्गः। कथं तर्हि पदार्थानां विकृत्यङ्गत्वं तदुद्देशेनाविधानादत आह **एवञ्चेति**। विशिष्टविधौ विशेषणविधेरार्थिकत्वादङ्गत्वोपपत्तिरिति भावः। **स्वरूपस्येति**। स्वरूपमात्रस्येत्यर्थः। येन प्राकृतकार्याभावेऽपि कार्यान्तरं कल्प्येतेति शेषः। स्वोक्तार्थे भाष्यसम्मतिमाह **तदिदमिति**। पृथक्पदार्थातिदेशे तु नैतद्भाष्यमुपपद्येतेति भावः।

प्राभाकरमतं दूषयितुमुपन्यस्यति—**यस्त्विति**। **अननुरक्तं** अविशिष्टम्। विशिष्टातिदेशे तदाक्षेपादेव पदार्थातिदेशः स्यान्न तु पृथगिति तन्निरासः। इष्टिषु सौमिकाङ्गोपकारव्यावर्त्तनाय **उपलक्षितमिति**। **उपकारस्य** करणगतफलानुकूलशक्त्युद्बोधरूपपरमोपकारस्य। अङ्गजन्यावान्तरोपकरग्रहणे **लुप्तप्राकृतद्वाराणामिति** दूषणासङ्गतेः। उक्तपरमोपकारस्य प्रथममपेक्षितत्वात्तज्जनकापेक्षायां पृथगेव पदार्थानां तज्जननद्वारा विकृत्यपूर्वाङ्गत्वमित्यर्थः। दूषयति—**तन्मत इति**। **तादर्थ्यावगमात्** अङ्गत्वावगमात्। **द्वारान्तरं** अवघातादेः कृष्णलादावदृष्टरूपम्। किंचैवमङ्गीकारेऽपि न पृथक्पदार्थातिदेशसिद्धिरिति प्रतिपादयितुं पृच्छति—**पदार्थेति**। विशेषण-

मतिदेष्टव्यम् । न तावत्प्रकृत्युपकारव्यक्तिर्विकृतौ शक्या कर्त्तुम् । तादृशस्तूपकारोऽतिदिश्येत । तादृक्त्वञ्च न दर्शपूर्णमाससम्बन्धितया । न हि विकृतौ तत्सम्बन्धिता सम्भवति । तेन प्रयाजादिमत्तयैव तादृक्त्वमिति तादृग्रूपातिदेशोऽर्थसिद्ध एव । पदार्थानामतिदेशोऽपि विशिष्टविधिनेव विशेषणानां विधिरिति व्यर्थः पृथक्पदार्थातिदेशः । स्यान्मतम्, कारणभेदे कार्यभेदस्यावश्यम्भावाद्यत्प्रयाजाद्यधीनमुपकारान्तराद् व्यावृत्तं सर्वेषु दर्शपूर्णमासोपकारेष्वनुवृत्तमुपकाररूपं तदतिदिश्यत इति । तथाऽपि तत एव प्रयाजादिप्राप्तिः सिध्येत् । न हि तस्य तस्मादन्यत उत्पत्तिसम्भवः, कारणभेदे कार्यभेदादिति त्वयैवोक्तत्वात् । तस्मादनर्थकोऽयं पदार्थातिदेशः केवलमूहबाधविघाताय स्यादित्यास्तां तावत् ।

ननु सप्तमे विध्यन्तातिदेश इत्युक्तम् । विध्यन्तश्च ब्राह्मणम् । अतः कथमिह शास्त्रातिदेशो निराक्रियते । उच्यते—कार्यातिदेशादार्थिको यः शास्त्रातिदेशो तदभिप्रायन्तत् । अपि च विध्यन्तशब्देन प्राकृतस्य-प्रधानविधेयोऽन्तिमोऽशः, स उच्यते । न च 'समिधो यजति, व्रीहीनव-

---

तया पदार्थत्वागेनेत्यर्थः । **स्वरूपं** परमोपकारस्वरूपम् । **किमिति** । पदार्थोफलक्ष्यं किमित्यर्थः । प्राकृत्युपकारव्यक्तिः तत्सदृशी तत्सजातीया वेति विकल्पान्मनसि निधायाद्यं दूषयति **न तावदिति** । तृतीयमांशकते—**स्यादिति** । नन्वेवं पृथगतिदेशेऽपि तादृशपरमोपकाराक्षेपादेव प्राप्तानां कृष्णलचरावङ्गत्वम् । द्वारलोपात्परमनुष्ठानाबाधो न त्वनतिदेश इति तन्मतं निर्दुष्टमेवेति चेत्—न प्रकृति क्लृप्तवैतुष्यादिद्वारैवावघातादेस्तज्जात्तीयोपकारहेतुत्वेन तद्बाधेन तदाक्षेपासम्भवेनाङ्गत्वस्याप्यसम्भवादिति । दूषणमुपसंहरति—**तस्मादिति** । **पदार्थातिदेशः** पृथक्पदार्थातिदेशः । अनिष्टमपि दर्शयति--**केवलमिति** । अग्नेय जुष्टमिति मन्त्रस्य स्वातन्त्र्येणातिदेशे तद्वशेनाग्निपदयुक्तस्यैव सौर्येऽपि कार्यकल्पनापत्तौ सूर्यपदोहविघातः, कृष्णलेष्ववघातबाधविघातश्चानिष्ट आपद्येतेत्यर्थः । **आस्तामि**त्यनेन विकृतिरूपसाधनोपदेशादेवार्थप्राप्तस्य परमोपकारस्यातिदेशायोगात्तदुपायत्वेनावान्तरव्यापारस्यैवाङ्गजन्यदृष्टादृष्टसम्पादनरूपस्यातिदेशो युक्त इति सूच्यते । **आर्थिक** इति । उपकारपृष्ठभावेन पदार्थप्राप्तेः शास्त्रायत्तत्वादर्थात्तदतिदेशो न तु स्वातन्त्र्येणेत्यर्थः । शास्त्रातिदेशपक्षेऽपि प्रधानवाक्यैकवाक्यतापन्नस्यैव विध्यन्तपदार्थत्वात्तस्य च कार्यघटितत्वेन तल्लोपे बाधात्पदार्थबाधोपपत्तिरित्याह–**अपिचेति** । **अन्तिमोऽशः** अन्तिमांशरूपेतिकर्त्तव्यताबोधकवाक्यशेषः । **हवि-**

हन्ती' ति प्रत्यक्षश्रुतमात्रं प्रधानवाक्यस्य शेषः, किं तर्हि ? कल्पित-कार्थवाचिशब्दसहितमीदृशमङ्गशास्त्रमवघातेन वितुषीकुर्याद्धविरिति । ततश्चेदृस्यैवातिदेशः । ईदृशस्य च कृष्णलचरावतिदेशासम्भवात्सिद्धो बाधः । तस्माल्लुप्तार्थानां प्रकृतिवत्कुर्यादित्येतावन्मात्रालोचनया झटिति प्राप्तिमवगतामपि भ्रान्तीकृत्य तद्व्यतिरिक्ताङ्गविषयमतिदेशशास्त्रमुपसंह्रियते । तेन 'स्वयं दितं बर्हिर्भवती'त्यादौ लवनादयः, तन्मन्त्राः, तत्साधनभूताश्च परश्वादयो न प्रवर्तन्ते ॥

एवं वा—'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति श्रूयते । तत्रावघातः कर्तव्यो नवेति संशये, चरुशब्दोऽचरौ चरुधर्मविधानार्थः । तेन लुप्तार्थोऽप्यवघातो वचनाच्छ्रपणवत्कर्तव्य इति

---

रिति । हविःशब्दोऽत्र हविःप्रकृतिपरो ज्ञेयः । नन्वेवमुपकारपदार्थभेदेनानन्तातिदेशकल्पने गौरवादाग्नेयाङ्गजन्यप्रकारत्वेनैकेनैव रूपेणैकस्यैवातिदेशस्य विकृतावश्याभ्युपेयत्वे कथमवघातबाधस्तदंशे शास्त्रतात्पर्याभावोक्तौ च पाप्त्यभावात्कथं प्राप्तबाधत्वमत आह—**तस्मादिति** । आपाततः प्राप्तिबुद्धौ मिथ्यात्वग्रह एव बाधो न तु वस्तुतः प्राप्तस्य निवृत्तिः । शास्त्रन्तु वस्तुतस्तद्व्यतिरिक्तविषयमेवेत्यर्थः । सूत्रार्थस्तु विधीयत इति विधिरङ्गजातं तच्छास्त्रं वा तस्य प्रकरणान्तरेऽतिदेशात्सर्वेषां कर्मानुष्ठानं स्यादिति ॥

इति विकृतावर्थलोपात्प्राकृताङ्गानां बाधाधिकरणम् ॥ १ ॥

## वर्णकान्तरम्

एवं वा वक्ष्यमाणविशेषाशङ्कानिरासायोदाहरणविशेषपरतया वर्णकान्तरमेतदुच्यते—**शतेति** । शतं कृष्णलानि तत्परिमाणसुवर्णखण्डानि यस्य तमित्यर्थं इति भट्टभास्करः । कृष्णलपदार्थश्च मध्यमयवत्रयपरिमाणम् । 'यवो मध्यस्तु ते त्रयः कृष्णल' इति स्मृतेः । **चर्विति । अचरौ** चरुपदार्थौदनभिन्ने । **गौण्येति** शेषः । अन्यथा तद्वैयर्थ्यादिति भावः । तथा चावघातस्य प्रकृतिद्वारा सौर्यादौ चरुधर्मत्वादिहापि कृष्णलानामणुणीकरणावस्थापन्नहविःप्रकृतित्वान्नामातिदेशेन प्राप्तिः । न च हविरन्तराभावान्न कृष्णलानां तत्प्रकृतित्वमिति वाच्यम्, अत्यन्तभेदाभावेऽपि व्रीहितण्डुलयोरिव प्रकृतिविकृतित्वव्यवस्थाभेदमात्रेणापि सम्भवात् । **वचनादिति** । 'घृते श्रपयती' त्यस्मादित्यर्थः । एतच्च सिद्धान्ताभिप्रायेण । पूर्वपक्षे त्वतिदेशादेवावघातवत्प्राप्ते श्रपणे घृत-

विशेषशङ्कां विनाऽप्यवघातेनालुप्तार्थैरेव धर्मैः, वैशद्येन चोपन्नश्चरुशब्दो नावघातं प्रापयितुमलम्। श्रपणन्तु 'घृते श्रपयती'त्याहत्य विधानात्क्रियत इति वैषम्यम्।

एवं वा—'वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान् तं बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेत्, इदमहममुञ्चामुं च व्यूहामीति, यं द्विष्यात तं ध्यायेत्, यदधोऽवमृज्येत, यच्च स्फ्य आश्लिष्येत्, तद्विष्णव उरुक्रमायाऽवद्यती'ति श्रूयते। तत्र संशयः किं—वैश्वदेवदेवतावाहनकाले विष्णोरावाहनं कर्त्तव्यम्? नेति? तत्र चोदकप्राप्तेः कर्त्तव्यम्। ननु कथं पुनश्चोदक प्राप्तिः? न ह्ययं देवता प्राकृत्याःकस्याश्चिद्देवतायाः कार्ये वर्त्तते, किं त्वप्राकृतकार्ये यम्। अतोऽस्याः यूपावटस्तरणबर्हिषीव वर्हिर्धर्मा नावाहनं प्राप्नोति। सत्यम्, वैश्वदेविकचोदकेन न प्राप्नोति, स्वयमेव त्वयं वैष्णवयाग औषधद्रव्यकत्वादेकदेवतात्वाच्चाग्नेयविकारः। तत्र वैश्व-

---

मात्रविधिरिति ज्ञेयम्। सिद्धान्तमाह—**विनापीति**। **अलुप्तार्थैः** प्रोक्षणादिभिः। **वैशद्येन** विविक्तावयवत्वेन। तथा च सिद्धसादृश्येन चरुशब्दोपपत्तौ न साध्यसादृश्यपरत्वेनादृष्टार्थतयावघातप्रापकत्वं युक्तम्। अग्निहोत्रपदे त्वगत्योपकारापेक्षया च तदङ्गीकार इति भावः॥

इति प्रथमं वर्णकम्

## वर्णकान्तरम्

अर्थलोपनिश्चये बाधस्य स्फुटत्वात्तत्सन्देहोदाहरणे वर्णकान्तरमाह—**एवंवा**। **वैश्वदेवमिति**। **भ्रातृव्यः** शत्रुस्तद्वान् तद्वधकाम इति यावत्। तं चरुमिडाभक्षणानन्तरं बर्हिषि स्थापयित्वा प्रकृतिवद्धस्तेन ऋत्विग्भ्यश्चतुर्धा न विभजेत् किन्तु **इदमहं** चरुव्यूहनं कुर्वन् **अमुञ्चामुञ्च** शत्रुं व्यूहामीत्यर्थकमिदमिति मन्त्रमुच्चारयन् **शम्यया** चतुरङ्गुलया **स्फ्येन च** खड्गाकारेण **व्यूहेद्विभजे**दित्यर्थः। तदा च यं द्विष्यात्तं ध्यायेत्। व्यूहनकरणे **यदधो** भूमौ **अवमृज्येत** पतेत् **यच्च स्फ्ये आश्लिष्येत** संलग्नं भवेत्तद्दुरुक्रमगुणकविष्णुदैवत्ययागेन प्रतिपादयेदित्यर्थः। **काल इति**। सामिधेनीप्रयाजान्तरालरूपे इत्यर्थः। चोदकशब्दस्य वैश्वदैविकातिदेशपरत्वभ्रमेणाशङ्कते—**कथमिति**। प्रकृतावाज्यभागप्रधानप्रयाजानुयाजस्विष्टकृद्देवतानामावाहनधर्मः विष्णुश्च न तद्देवताकार्ये आज्यभागादौ विहित इति न तद्धर्ममावाहनं लभेतेत्यर्थः। **अकृतार्थत्वात्**

**देविकतन्त्रमध्यपातात्सर्वाण्यङ्गानि प्रसङ्गेनोपकुर्वन्तीति न पृथक् क्रियन्ते। आवाहनं त्वकृतार्थत्वात्कर्त्तव्यमिति प्राप्ते—**

**ब्रूमः—नैमित्तिकविधेर्निमित्तापेक्षित्वान्निमित्तस्य स्फ्याश्लेषादेरवश्यंभावाभावेन देवताऽऽवाहनकाले निश्चयासम्भवादनिश्चितसद्भावमुरुक्रमयागविधानं नावाहनं प्रयोक्तुं क्षमम्। अविहितं चावाहनं कृतमपि निष्फलमेव। तस्मान्न कर्त्तव्यम्॥**

**इति विकृतावर्थलोपात् प्राकृताङ्गानां बाधाधिकरणम्॥ १॥**

**२**

**इष्टिरारम्भ० दर्शपूर्णमासयोरारम्भणीया श्रुता। सा विकृतिष्वपि कर्त्तव्येति द्वादशे वक्ष्यते। सा किं सोमाङ्गभूतासु दीक्षणीयादिषु कर्त्तव्या? नेति? विचारः।**

---

अनन्यलभ्यप्रयोजनत्वात्। आवाहनस्य हि विष्णुस्मरणं प्रयोजनम्, तत्तु नान्यतः सिद्ध-मिति न तत्र प्रसङ्गन्याय इत्यर्थः।

**नैमित्तिकेति**। निमित्तनिश्चयवत एव नैमित्तिकेऽधिकारात्तदनिश्चये प्रधानविधेरेवाप्रवृत्तेर्न तदर्थाङ्गानुष्ठानमित्यर्थः। ननु सम्भावितनिमित्तवशात्कर्त्तव्यमत आह— **अविहितञ्चेति**। अनधिकारिणं प्रति विध्यभावान्निष्फलत्वमित्यर्थः। **तस्मादिति**। देवतावाहनकाल इति शेषः। निमित्ते तु जाते कर्त्तव्यमेव। सामिधेन्यानन्तर्यलोपेऽपि प्रधानभूतावाहनबाधायोगात् आधारानन्तर्यबाधेऽपि पौरोडाशिकाज्यभागानुष्ठानवदिति॥

**इति द्वितीयं वर्णकम्**

**इष्टिः** ० आतिदेशिकी सङ्गतिः। नन्वारम्भणीयायाः पुरुषसंस्कारकत्वात्तस्य च सकृदनुष्ठानेनैवोत्पन्नस्य सर्वप्रकृतिप्रयोगसाधारणस्येव विकृतिप्रयोगसाधारण्यस्यापि सम्भवादेतद्विचारानुपपत्तिरित्याशङ्क्याह— **सा चेति**। दर्शपूर्णमासावारप्स्यमाण इत्यारम्भद्वारा पुरुषसंस्कारकत्वात्तस्य च प्रकृतावेकत्वेऽपि विकृतौ भेदात्कर्त्तव्येति वक्ष्यत इत्यर्थः। विकृत्यन्तरवदिहाप्यारम्भरूपद्वारमस्तीत्याशयेनाह— **कर्त्तव्येति**।

**कर्तव्या चोदकप्राप्तेरिति प्राप्तेऽभिधीयते ।**
**अङ्गभूतास्वियं लुप्तद्वारत्वान्न प्रवर्तते ॥**

**आरप्स्यमानपुरुषसंस्कारार्थेयमिष्यते ।**
**नारम्भो दीक्षणीयदेः प्रधानारम्भसिद्धितः ॥**

**आरम्भद्वारेणारम्भणीया प्रकृतावङ्गमासीत्, अतो विकृतिष्वपि तद्द्वारैव प्राप्तिः । न चाङ्गभूतासु दीक्षणीयादिष्विष्टिष्वात्मीय आरम्भोऽस्ति । ज्योतिष्टोमे तावन्न कर्त्तव्या, तस्यापूर्वत्वात् । दीक्षणीयादेश्च तस्यामवस्थायामप्राप्तावसरत्वात्, ज्योतिष्टोमे च प्रवृत्तोऽर्थादङ्गेष्वपि प्रवृत्तो भवति । प्रथमं च प्रवर्तनमारम्भः । तेन प्रधानार्थेनैवारम्भेणाङ्गानामारब्धत्वात् न तेषां पृथगारम्भोऽस्ति । तदभावाच्च तद्द्वाराऽऽरम्भणीया लुप्तार्थत्वान्न कर्त्तव्या ॥**

**इति दीक्षणीयादिष्वारम्भणीयाबाधाधिकरणम् ॥ २ ॥**

---

विकृत्यन्तराद्वैषम्यमाह—**अङ्गभूतास्विति** । विधिर्हि चिकीर्षाद्वारा अप्रवर्त्तनरूपारम्भं जनयति । साङ्गप्रधाने च चिकीर्षेति तद्विषय एवारम्भो व्यपदिश्यते । तेनैवार्थसिद्धत्वात्तु नाङ्गारम्भव्यपदेश इति लुप्तार्थतेत्यर्थः । ननु ज्योतिष्टोमारम्भार्थतयैव तर्हि क्रियतामित्याशङ्कामपाकरोति—**ज्योतिष्टोम इति** । ज्योतिष्टोमार्थमित्यर्थः । ज्योतिष्टोमारम्भद्वारा दीक्षणीयार्थत्वन्तु न सम्भवतीत्याह—**दीक्षणीयादेरिति** । **तस्यामवस्थायाम्** ज्योतिष्टोमारम्भसमये । **अप्राप्तेति** । दीक्षणीयात्वेनारम्भविषयात्वाभावादित्यर्थः । ननु साङ्गारम्भे विशेषणतयाङ्गानामपि विषयत्वमस्त्येवेत्यत आह—**ज्योतिष्टोमे चेति** । विशिष्टविषयकप्रवृत्त्या विशेषणप्रवृत्तिरार्थिकीति तद्विषयत्वेनारम्भस्य द्वारत्वमित्यर्थः । ननु दीक्षणीयाकालीनतदारम्भ एव द्वारमस्तु तत्राह- **प्रथमञ्चेति** । पूर्वं साङ्गप्रधानारम्भस्य वृत्तत्वान्नायं प्रथम इति भावः । उपसंहरति—**तस्मादिति** । सूत्रार्थस्तु-अङ्गभूतादक्षणीयादेः आरम्भस्य प्रधानविषयत्वादिति । शेषं सुगमम् ॥

**इति दीक्षणीयादिष्वारम्भणीयाबाधाधिकरणम् ॥ २ ॥**

३

प्रधान० अथ यत्रैष्टिकान्यन्यानि च कर्माणि समप्रधानान्येकफलसाधनत्वेन चोदितानि यथा राजसूये। तत्र किमैष्टिकेष्वारम्भणीया स्यात्? न वेति? पूर्वाधिकरणे प्रधानविषयारम्भो नाङ्गानामित्युक्तम्। स इह सर्वेषां प्रधानत्वादिष्टीनामप्यस्त्यारम्भः। तेनालुप्तार्थत्वादारम्भणीया कर्त्तव्येति प्राप्ते—

ब्रूमः—प्रकृतौ हि यदङ्गमारम्भणीया तद्विषय आरम्भो द्वारं 'दर्शपूर्णमासावारप्स्यमानः' इति वचनात्। इह त्विष्टि-पशु-सोमानामेकप्रयोगभाजामेकः सर्वेषु व्यासक्त आरम्भो नेष्टिभिर्व्यपदेष्टुं शक्यते, अग्नीषोमीयहविरिवाग्निना। तेनात्रापीष्टीनामात्मीयारम्भाभावाल्लुप्तार्थैवारम्भणीया॥

इति राजसूयान्तर्गतानुमत्यादिष्वारम्भणीयाबाधाधिकरणम्॥ ३॥

४

तस्यां तु० किमारम्भणीयायामारम्भणीया कर्त्तव्या? नेति? संशयः। नन्वङ्गभूतेयं दर्शपूर्णमासयोः। अतो दीक्षणीयादिवदस्यां न

---

३

प्रधानाच्च० आतिदेशिक्येव सङ्गतिः। अधिकाशङ्कामाह—**पूर्वेति**। **नेष्टिभिरिति**। इष्ट्यारम्भ इति वक्तुं न शक्यत इत्यर्थः। **अग्निनेत्यनन्तरं** व्यपदेष्टुमित्याद्यनुषङ्गः। आग्नेयमिति यथा वक्तुं न शक्यत इत्यर्थः। सूत्रार्थस्तु-अन्यसहितात्प्रधानान्निवर्त्तेत। कुतः? सर्वेषामेकारम्भादसधारणैष्टिकाङ्गत्वाभावादिति॥

इति राजसूयानुमत्यादिषु आरम्भणीयाबाधाधिकरणम्॥ ३॥

४

तस्यान्तु० पृथगारम्भसम्भवाच्छङ्कोत्थानात्सैव सङ्गतिः। दीक्षणीयादिवदङ्गत्वेन पृथगारम्भाभावादगतार्थत्वं शङ्कते—**नन्विति**। पृथक् प्रयोगतया पूर्वन्यायाविषयतामाह—

कर्त्तव्या। तस्मादुगतार्थमेतत्। उच्यते—सत्यमङ्गभूता, तथाऽपि पृथगारम्भा भवति। न प्रधानारम्भेण सिध्यति, न ह्यस्यां वेलायामारब्धौ दर्शपूर्णमासौ। तयोरारप्स्यमानयोरेषा विहिता, यदि चारब्धौ भवेतां तत आरम्भणीयैव न कर्त्तव्या। सा हि कर्त्तारमारम्भयोग्यं कर्त्तुं क्रियते। तौ चेदारब्धौ, किमर्था सा। तस्मादारप्स्यमानयोर्दर्शपूर्णमासयोः क्रियमाणेयं पृथगारम्भो भवतीत्यलुप्तार्थत्वादस्यामारम्भणीया कर्तव्या। नैवम्, अशक्याऽसावतिदेष्टुम्। सा हीदानीं विधीयते, न तस्या दर्शपूर्णमासाङ्गत्वं ज्ञातम्। यच्च प्रकृतावज्ञातं न तद्विकृतावतिदेष्टुं शक्यम्। तदेतदेकमेव वाक्यमविहितवद्दर्शपूर्णमासयोरेतां विदधाति, विहितवच्चातिदिशतीति न कथञ्चिदवकल्पते। तस्मात्तद्व्यतिरिक्तेतिकर्तव्यातातिदिश्यते॥

इत्यारम्भणीयायामारम्भणीयाबाधाधिकरणम्॥ ४॥

५

कर्म० साद्यस्क्रे श्रूयते 'खलेवाली यूपो भवती'ति। प्रकृतौ चास्ति यूपाहुतिः—'यूपमच्छेष्यता होतव्यमि'ति। सा किं खलेवाल्यां कर्त्तव्या

---

पृथगारम्भेति। सिद्धान्तमाह—नैवमिति। अशक्यत्वमेवोपपादयति—सा हीति। अपूर्वविधेरज्ञातविषयत्वादतिदेशस्य च ज्ञातविषयत्वाद्युगपदेवात्र ज्ञतत्वाज्ञातत्वयोरसम्भवान्नातिदेशसम्भव इत्यर्थः। एकमेवेति। वैकृतविधेरेव हि प्रकृतिवच्छब्दसहकृतस्य प्राकृताङ्गविधायकत्वादिति भावः। सूत्रं स्पष्टम्॥

इत्यारम्भणीयायामारम्भणीयाबाधाधिकरणम्॥ ४॥

५

कर्म च० अत्राप्यातिदेशिकी सङ्गतिः। साद्यस्क्र इति। एतदाख्यक्रतोर्यवक्षेत्रं वेदिः। तदीयः खल उत्तरवेदिः। तत्र बलीवर्दबन्धनार्थं निखाता स्थूणा रलयोरभेदात् खले वारयति बलीवर्दानितस्ततः सञ्चारादिति खलेवालीत्युच्यते। सैव यूप इत्यर्थः। यूपमिति। अच्छेत्याप्तुमित्यर्थेऽव्ययम्। यूपमाप्तुमेष्यता गमिष्यता होतव्यमित्यर्थः।

नेति संशये, अतिदेशप्राप्तेः कर्त्तव्येति प्राप्ते--

लुप्तार्थत्वादकर्त्तव्येत्याह । कथं ? 'यूपमच्छेष्यता होतव्यमि'ति छेदनार्थो होमः । न च खलेवाल्यां छेदनमस्ति । स्वदेशावस्थितायामेव तस्यां पशुर्बध्यते । अतस्तत्र न यूपाहुतिः कर्तव्या ॥

इति खलेवाल्यां यूपाहुतिबाधाधिकरणम् ॥ ५ ॥

६

स्थाणौ तु० तत्रैव 'स्थाण्वाहुतिं जुहोती'ति । सा किं यस्मिन् कस्मिंश्चित्स्थाणावारादुपकारत्वेन कर्तव्या सती खलेवाल्यामपि स्यात् ? किं वा यूपाव्रश्चनस्थाणौ कर्तव्या तद्द्वारेण यूपस्यैव संस्कारार्था सती खलेवाल्यामाव्रश्चनस्थाण्वभावेन लुप्तार्थत्वादकर्त्तव्येति विचारे, यूपवियोजिते स्थाणौ क्रियमाणा तद्द्वारेण न शक्नोति यूपस्योपकर्त्तुम् । तस्मादारादुपकारिका खलेवाल्यां कर्त्तव्येति प्राप्ते—

ब्रूमः—आव्रश्चनस्थाणोः सन्निधानात्तद्द्वारेण च संस्कारत्वे सम्भवति, आरादुपकारत्वानुपपत्तेर्यूपसंस्कारार्थेयं वियोजितेऽपि स्थाणौ

---

अतिदेशेति । छेदनस्याश्रवणेन यूपाहुतेः साक्षादेवादृष्टद्वारा यूपार्थत्वादञ्जनादिवत्कर्त्तव्यत्वमित्याशयः । छेदनार्थ इति । एष्यतेति लृटा गमनार्थत्वप्रतीतेर्गमनस्य च छेदनार्थत्वाद्धोमस्य गमनद्वारा छेदनाभावात्तदर्थगमनाभावेऽप्याप्तुं गमनं स्यादिति शङ्कानिरासार्थं स्वदेशेत्याद्युक्तम् । सूत्रार्थस्तु–होमकर्म च द्रव्यप्राप्त्यर्थं यूपप्राप्तिरूपार्थाभावान्निवर्तेत । अदृष्टार्थतास्त्वत आह तादर्थ्यं यूपप्राप्त्यर्थत्वं श्रुतिसंयोगादिति ।

इति खलेवाल्यां यूपाहुतिबाधाधिकरणम् ॥ ५ ॥

६

स्थाणौ तु० पूर्ववत्सङ्गतिः । तत्रैवेति । पशुयागरूपप्रकृतावेवेत्यर्थः । स्थाणावाहुतिः स्थाण्वाहुतिः । यूपस्याव्रश्चनं छेदनं यस्मात्तस्मिन्नित्यर्थः । न शक्नोतीति । यूपासम्बन्धादित्यर्थः । खलेवाल्यामारादुपकारिकेत्यन्वयः । कर्त्तव्या यत्र क्वापि स्थाणा-

यूपीयोऽसावित्येवं क्रियमाणा शक्नोत्येव यूपस्योपकर्त्तुम् । देवदत्तधारिताया इव स्रजः शुचिदेशनिधानं देवदत्तस्य । यद्यपि चादृष्ट एव संस्कारः, तथाऽपि संस्कारत्वमेव सम्बद्धोपकारित्वलाभादसम्बद्धोपकारिण आरादुपकाराज्ज्यायः । तस्मात् खलेवाल्यां न कर्त्तव्या ॥

इति खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणम् ॥ ६ ॥

७

प्रयाजे च० अस्ति दर्शपूर्णमासयोरुत्तमः प्रयाजः 'स्वाहाकारं यजती' स किमारादुपकारकः ? उताज्यभागादिव यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारः ? इति । तदर्थमिदं विचार्यते-किं 'स्वाहाकारं यजती'ति देवताविधिः ? उत नामधेयम् ? 'स्वाग्निं स्वाहा सोममि' त्यादिमन्त्रवर्णाद्देवताविधिः ? इति । तत्र -

वचनाद्देवतालाभे न मन्त्रात्कल्पनं क्षमम् ।
तस्याश्चानुपयोगित्वाद्भवेदाराद्दुपक्रिया ॥

न हि वचनविहितदेवतासम्भवे 'स्वाहाऽग्निं स्वाहा सोममि'त्यादिना तत्कल्पना युक्ता । न चाऽयं मन्त्रः करणत्वेन श्रुत्या विधीयते, यत-

---

वित्यर्थः । अदृष्टार्थत्वाद्विशेषमाशङ्क्याह–यद्यपीति । उपकार्योपकारयोः सम्बन्धस्य कल्प्यत्वादारादुपकारित्वस्य दुर्बलत्वमित्यर्थः । सूत्रार्थस्तु–स्थाणौ देशत्वमात्रत्वादधिकरणत्वेन संस्कार्यत्वाभावादनिवृत्तिरिति ॥

इति खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणम् ॥ ६ ॥

७

प्रयाजे च० आतिदेशिकी सङ्गतिः । उत्तमोऽन्त्यः । तदर्थमिति देवताविधित्वे स्वाहाकारदेवतायाः करिष्यमाणकर्मासम्बन्धात्तद्दैवत्ययागस्यारादुपकारित्वम् । नामत्वे तु मन्त्रवर्णादेवाग्न्यादेर्दैवतात्वात्तस्य चाज्यभागादावुपयोगिनः स्मरणरूपसंस्कारजनकत्वमिति तदर्थत्वमिति भावः । न मन्त्रादिति । वचनस्य शीघ्रं प्रवृत्तेरिति भावः । तस्याः वाचनिकस्वाहाकारदेवतायाः । श्रुत्येति । 'सूक्तवकेन प्रस्तरं प्रहरती'तिवदित्यर्थः ।

स्तद्गतानामग्न्यादीनां देवतात्वं कल्प्येत। क्रमतप्रकरणविनियोज्यो ह्यसौ। न चाविज्ञातसामर्थ्यस्ताभ्यां विनियोक्तुं शक्यते। न चाग्न्यादिप्रतिपादकस्य मन्त्रस्याविज्ञातदैवत्ये यागे सामर्थ्यमवगम्यते। तेन वाचनिकं देवताविधानमाश्रित्य तत्रैवाग्न्यादिशब्दानां मातृशब्दवद्रूढ्या कथंचिद्वृत्तिरङ्गीकर्त्तव्या। अतो न मान्त्रवर्णिकी देवतेत्याराढुपकारकः। किञ्च न चायं स्वाहाकारो मन्त्रवर्णाच्छक्यते कल्पयितुम्। तेन स्वाहाकारदेवताकयागविधानमिदम्। न च स्वाहाकाराख्या देवताऽन्यत्रोपयोगिनी, या संस्क्रियेत। तस्मादाराढुपकारकमिदं कर्मेति प्राप्ते, उच्यते—

न देवताविधौ शक्तिर्द्वितीयान्तस्य विद्यते।
न च यागविधौ क्षीणो विधत्ते देवतां विधिः॥

न ह्येकार्थविधिसम्भवेऽनेकार्थविधिर्युक्तः। सम्भवति चात्र यागमात्रविधानं स्वाहाकारशब्दस्य, 'स्वाहाऽग्निमि'त्यादिमन्त्रसम्बन्धेन नामधेयत्वसम्भवात्। करणत्वञ्च क्रमसहितात्प्रकरणाल्लभ्यते मन्त्रस्य। न चासामर्थ्यं निश्चितम्, येन विनियोगो न स्यात्। सम्भवति च यागे देवताप्रतिपादकस्य मन्त्रस्य प्रकाशनसामर्थ्यम्। यदि यागोऽयं न स्यात्, यदि यागोऽपि वा देवतान्तरयुक्तः स्यात्, ततोऽग्न्यादिवचनस्य मन्त्रस्या-

---

**न चेति**। एवञ्चाग्न्यादिदेवताकत्वनिश्चये सति मन्त्रविनियोगस्तस्मिंश्च सत्यग्न्यादिदेवताकत्वनिश्चय इत्यन्योन्याश्रय इति भावः। **अग्न्यादीति**। मन्त्रगताग्न्यादिशब्दानामित्यर्थः। **मातृशब्दवदिति**। धान्यादिमानकर्तरि यौगिकस्य मातृशब्दस्य जनन्यां रूढिवदित्यर्थः। यद्यपि शक्त्यन्तरकल्पनापेक्षया गौण्येव युक्ता, तथापि स्वाहाकारेऽग्न्यादिसादृश्यासम्भवाद्रूढिकल्पनं भाष्यानुसारेणोक्तम्। नामत्वासम्भवादपि देवताविधायकत्वमित्याह— **किञ्चेति**। मन्त्रवर्णप्राप्तार्थतया हि तत्प्रख्यन्यायेन नामता स्यात्। न चैतत्सम्भवति। मन्त्रगतस्वाहाशब्दस्यार्थपरत्वेन स्वाहाशब्दप्रापकत्वायोगात्। स्वाहाकारशब्दस्य शब्दवाचित्वात्। अतस्तस्य देवतात्वेन विधिरेवेत्यर्थः। 'विष्णुं यजती'तिवद्देवताविधायित्वं लक्षणया स्यादत आह—**न चेति**। **मन्त्रसम्बन्धेनेति**। तथा च स्वाहापदवन्मन्त्रवत्वान्नामत्वोपपत्तिरित्यर्थः। लिङ्गाभावान्मन्त्रप्राप्तिरसिद्धेत्यत आह—**करणत्वञ्चेति**। उपांशुयाज इवेत्यर्थः। प्रागुक्तमन्योन्याश्रयं परिहरति—

सामर्थ्यं निश्चीयेत। न त्वेतदस्ति। तस्माद्योग्यताऽस्तीत्यविहतो विनियोगः। न च द्वितीयान्तस्य देवताविधौ सामर्थ्यं लभ्यते, मन्त्रवर्णाद्देवताविधिरिति वचनादगत्या देवताविध्याश्रयणम्। मन्त्रे चाज्यभागादिषु वक्ष्यमाणा देवता यथाक्रमेण सङ्कीर्त्यमानाः प्रत्यभिज्ञायन्त इति तासां स्मरणं दृष्टमेव प्रयोजनमिति, नादृष्टार्थत्वकल्पना। तस्माद्विकृतिषु सौर्यादिष्वग्न्यादिपदानि लुप्तार्थत्वान्निवर्त्तन्ते ॥

इत्युत्तमप्रयाजस्य संस्कारकर्मत्वाधिकरणम् ॥ ७ ॥

८

तथाऽऽज्य० दर्शपूर्णमासयोराज्यभागौ प्रकृत्य श्रूयते 'आज्यभागावग्नीषोमाभ्यां यजती'ति। योऽयमाग्नेय आज्यभागः स किं प्रधानदेवताया अग्नेः संस्कारः? उदाराहुपकारकः? इति। पूर्वेण न्यायेन संस्कारत्वे प्राप्ते—

उच्यते—निगदेष्वावाहनादिषु 'अग्निमग्न आवह, सोममावह, अग्निमावहे'त्येवमग्निशब्दस्य द्विःपाठाद्देवतान्तरं गम्यते सोमाच्च पूर्वं पठ्यमानोऽग्निस्ततः परभाविनः प्रधानाग्नेरन्य इति गम्यते। विधिवाक्ये च 'अग्नीषोमाभ्यां यजते'त्येकेन पदेनाग्निः सोमश्च विधीयते। तत्र स्फुटमेव यागं प्रति गुणत्वं सोमस्य अन्यत्र देवतात्वाभावात्। तद्यद्यग्निः

---

न चेति। सामर्थ्यं हि योग्यता तज्ज्ञानं संशयसाधारणमेव हेतुः। अयोग्यतानिश्चयस्तु प्रतिबन्धकः। स तु नास्तीति विनियोगो निर्बाध इत्यर्थः। योग्यताज्ञानमस्तीत्याह—सम्भवतीति। प्रयोजनमाह—तस्मादिति। सूत्रं स्पष्टार्थम् ॥

॥ इत्युत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् ॥ ७ ॥

८

तथा० आपवादिकी सङ्गतिः। पूर्वेणेति। प्रकृतदेवताप्रत्यभिज्ञादृष्टार्थत्व-

प्रधानं स्यात्, ततो वैरूप्यं स्यात् सोमापेक्षयाऽऽज्यभागावित्युद्दिश्याग्नीषोमाभ्यामित्युपादेयम्, अग्न्यपेक्षया तद्विपरीतमिति वचनव्यक्तिभेदात् । तस्मादग्निरपि यागाङ्गत्वेन विधीयते । यागस्तु प्रधानकर्माऽऽरादुपकारकः । तेन सौर्यादिषु नाग्निर्निवर्तते । अग्नीषोमीयादिविकारेष्वप्याग्नेयाज्यभागोऽतिदिश्यते ॥

इत्याग्नेयाज्यभागस्यारादुपकारकत्वाधिकरणम् ॥ ८ ॥

९

पशावपीति० अग्नीषोमीये पशौ पशुपुरोडाशः—'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपती'ति । स किं पशोरारादुपकारकः ? उत पशुदेवतासंकारः ? इति सन्देहे, पशौ पशुपुरोडाशे चोभयत्रापि तद्धितनिर्देशाद्विशेषणभूता देवता गुणत्वेन गम्यते । न च गृह्यते विशेषः, पशोर्देवताऽङ्गं पुरोडाशे विपरीतमिति । उभयत्राप्यपूर्वैव देवतोपादीयत इति न संस्कारत्वम् । 'आ सोमं वहन्त्यग्निना प्रतितिष्ठन्ती'ति वाक्यशेषाल्लता सोमः, प्रणीयमानोऽग्निश्च पशौ देवता । पुरोडाशे तु न नियोगतस्तावेवेति प्रमाणमस्ति । तस्मादारादुपकारकः पशुपुरोडाशः । नैवम्—

---

रूपेणेत्यर्थः । अग्नीषोमीयेति । अग्निसंस्कारकत्वे त्वेकदेवताकेष्वेवातिदेशः स्यान्नानेकदेवताकेष्विति भावः । सूत्रे संस्कार्य इति शेषः ॥

इत्याग्नेयाज्यभागस्यारादुपकारकत्वाधिकरणम् ॥ ८ ॥

९

पशौ० अपवादादनन्तरसङ्गतिः । तद्धितेति । तद्धितस्य देवताविशिष्टद्रव्यवाचित्वाद्देवताया गुणत्वावगम इत्यर्थः । विपरीतमिति । अङ्गिभूतेत्यर्थः । आसोममिति । सोममावहन्ति हविर्द्धानशकटं नयन्तीत्यर्थः । अग्निना प्रणीयमानेन प्रतितिष्ठन्तीति पशुवाक्यशेषार्थः । न च गृह्यते विशेष इत्युक्तं परिहरति—पशुधर्मैरिति । यदुक्तं

**दृष्टे स्मरणसंस्कारे सति नादृष्टकल्पना ।**
**पशुधर्मैश्च सन्दंशात्तदङ्गत्वं सुनिश्चितम् ॥**

ज्योतिष्टोमाङ्गं हि पशुर्न पुरोडाशे संस्कारार्थत्वेन शक्यः शङ्कितुम् । पुरोडाशस्तु पशुधर्ममध्ये विधीयमानस्तदङ्गं संस्तद्गतदेवतासंस्कारेण दृष्टेनोपकुर्वन्नादृष्टार्थतामवलम्बते । अतो नाऽगृह्यमाणविशेषत्वम् । तेन यैव पशोर्देवता लता वा, अन्या वा, सैव पुरोडाशेन संस्कर्त्तव्येति विकृतिषु देवतान्तरवतीष्वग्नीषोमौ निवर्तेते ॥

इति पशुपुरोडाशयागस्य देवतासंस्कारकत्वाधिकरणम् ॥ ९ ॥

१०

चरुः० 'सौर्यं चरुं निर्वपेदि'त्यत्र संशयः—किं स्थालीवचनश्चरुशब्दः ? उत ओदनवचनः ? इति । यदाऽपि स्थालीवचनः, तदापि किं स्थाली कपालविकारः हविः श्रपणार्था ? उत पुरोडाशस्य हविषो विकारः प्रदेयेति ? तत्र स्थाल्यां लोकप्रसिद्धेस्तद्वचनत्वम् । यस्तु याज्ञिकानामोदने प्रयोगः, स स्थालीसम्बन्धाल्लाक्षणिकः । न च विपरीतं सम्भवति, ओदनमात्रे प्रयोगाभावात् । येऽपि तस्यौदनवचनत्वं मन्यन्ते,

---

पशौ लतादिरूपा देवता सा च न पुरोडाशे नियतेति तत्राह–तेनेति । अन्या वेत्यनास्थयोक्तम्, वाक्यशेषेण नियमात् । केचित्तु अग्नीषोमीयमिति विधेरेवंविधविशेषापेक्षाभावान्न वाक्यशेषोक्तविशेषो विवक्षित इत्याशयेनेदमित्याहुः । सैवेति । नियमप्रमाणान्तराभावेऽप्यङ्गभूतपुरोडाशयागस्य दृष्टार्थत्वबलात्सामान्यशब्दाविरोधाच्च निगमसिद्धिरिति भावः । देवतान्तरेति । आग्नेयसवनीयपश्वादिष्वित्यर्थः । पशावपि देवतान्तरमाज्यभागाग्निवदिति पूर्वपक्षसूत्रार्थः ॥

इति पशुपुरोडास्य देवतासंस्कारकत्वाधिकरणम् ॥ ९ ॥

१०

चरुः० अत्रोत्तराधिकरणे प्रयोजनोक्त्या पादसङ्गतिरातिदेशिकी त्वनन्तरेति स्फुटीभविष्यति । ओदनमात्र इत्येतद्विवृणोति—येऽपीति । अन्यथाग्रिमाधिकरणविरोध

तेऽपि न तन्मात्रं वाच्यमाहुः। कपाले कटाहे वा अर्पितस्यौदनस्य तद्वाच्यत्वानभ्युपगमात्। तथा चोपरितनेऽधिकरणे वक्ष्यामः तेन स्थालीसम्बन्धनिमित्त एवौदनेऽपि चरुशब्द इति विशेषणत्वात्स्थाल्येवाऽभिधेया। सा चानदनीया हविष्ट्वायोग्या। अपणयोग्यता तु प्रसिद्धैव। तस्मात्स्थाली चरुः, कपालविकारश्च। सौर्यमिति स्थाल्यां अर्पितस्य हविषः सूर्यसम्बन्धात्स्थाल्येवाऽभिधीयते। 'तस्येदमि' ति तद्धितो भविष्यतीत्येकः पक्षः।

गृह्णीम एतत्स्थाली चरुरिति। स तु हविर्विकारः, सौर्यमिति देवतासंयोगात्। देवतातद्धितो ह्ययम्। अन्यथा याग एवायं न स्यात्। वचनाच्चानदनीयेनापि कृष्णलादिनेव यागः क्रियते। तस्माद्धविर्विकार इति द्वितीयः।

सत्यम् चरुर्हविर्विकारः, न तु स्थाल्यां चरुशब्दः, किन्त्वोदने। चरुशब्दस्य वेदे, याज्ञिकप्रयोगे चौदनवचनत्वावधारणात्। वेदे तावदादित्यः प्रायणीयश्चरुरित्युक्त्वा 'अदितिमोदनेने'ति पश्चादनुवादादोदनवचनत्वं तत्र तावद्वाक्येऽवगम्यत इत्युक्तं 'शास्त्रस्था वा तन्निमित्तत्वादि'त्यत्र। ततश्चानेकार्थत्वमन्याय्यमिति सर्वत्रैवोदनवचनत्वम्। याज्ञिकाश्च अनवस्रावितान्तरूष्मपक्वौदने चरुशब्दमुपचरन्ति। तेषाञ्च शब्दैकगम्यधर्माधर्मव्यवहारिणां शब्दार्थाविप्लवे तात्पर्यातिशयात्पृथग्जनेभ्यः प्रत्ययिततरत्वात्स एव शब्दार्थः। पाकविशेषनिमित्तश्चौदने चरुशब्दः। न च स्थालीमन्तरेण स पाको निर्वर्तत इति कृत्वा स्थाल्यादरः, न तु तावता स्थालीवचनत्वम्। तस्मादोदनेन हविर्विक्रियते॥

इति सौर्यचरौ प्राकृतहविर्बाधाधिकरणम्॥ १०॥

---

इत्याह—तथाचेति। एवञ्च स्थालीसम्बन्ध्योदनस्य वाच्यत्वप्रसक्तौ नागृहीतविशेषणेति न्यायेन विशेषण एव शक्तिरित्याह—तेनेति। सौर्यमित्यनेन स्थाल्येवाभिधीयत इत्यन्वयः। सूर्यसम्बन्धि हविःसम्बन्धश्च न यागं विनेति तत्सिद्धिरपीति भावः। अन्यथेति। हविर्विशेषाज्ञानान्नोक्तरीत्या यागसिद्धिरित्यनदनीयस्यैव श्रुतिवशेन हविष्ट्वमित्यर्थः। उपचरन्ति प्रयुञ्जते। पृथग्जनेभ्यः साधारणजनेभ्यः। सूत्रं स्पष्टार्थम्॥

इति सौर्यचरौ प्राकृतहविर्बाधाधिकरणम्॥ १०॥

११,१२

स कपाले० स एष चरुः किं कपाले पक्तव्यः ? उत यत्र क्वचित् ? उत स्थाल्याम् ? इति संशयः। चोदकप्राप्तेः कपाले स्यात्। नन्वष्टत्वपरिच्छिन्नं कपालं चोदकेन प्राप्नोति, न च चरुरष्टसु कपालेषु शक्यः पक्तुम्। सत्यमष्टत्वं प्राप्यते, तत्त्वसम्भवान्निवर्त्तते न तु तन्निवृत्त्या कपालमपि निवर्तितुमर्हति। तस्मात्कपाले स्यात्। नैवम्, अप्राकृतकार्यत्वात्। प्रकृतौ हि कपालोष्मणा हविः पाको निर्वर्तते, चरुस्तूदकगतोष्मणा पक्तव्यः। तत्र कपालमुदकधारणार्थमुपादीयमानमप्राकृतकार्यं स्यादिति न चोदकानुग्रहः। तस्माद्यत्र क्वचित्पक्तव्य इति प्राप्ते, ब्रूमः—

स्थाल्यामेव स्यात्। तस्य हि चरुत्वनिमित्तः पाको निर्वर्तते नान्यत्र। तस्मात्स्थाल्यां स्यात्। यद्योदनवचनेऽपि चरुशब्दे स्थाल्यामेव पाकः, ततः पूर्वाधिकरणे स्थाली कपालविकार इति पक्षस्यौदनेन हविर्विक्रियत इति पक्षस्य च कोऽनुष्ठाने विशेषः ? उभयथाऽपि स्थाल्यां पक्वस्य हविष्ट्वादित्याशङ्क्य, 'तस्मिन् पेषणमनर्थलोपात्स्यात्' इत्यादिभिस्सूत्रैः।

प्रयोजनमुच्यते। स्थाल्या हि कपाले निवर्त्तितेऽपि चोदकप्राप्तः पुरोडाश एव श्रपितो हविः स्यात्, ततश्च पेषणसंयवनोपधानादीनि कर्त्तव्यानि स्युः, सिद्धान्ते त्वोदने तेषामर्थलोपादकरणम्।

---

११,१२

**स कपाले०** आतिदेशिकी सङ्गतिः। पुरोडाशस्थाने चरोरिव कपालस्थाने कस्यचिदविधानान्न कपालनिवृत्तिरित्यधिकाशङ्का। **संयवनम्** उदकमिश्रणम्। **उपधानम्** अङ्गारेषु कपालस्थापनम्। आदिना कपालसन्तापनं पुरोडाशस्य प्रथनाद्यूह्यम्। **तेनैव**

एवं प्रयोजनसूत्राणि व्याख्याय पुनरधिकरणान्तरत्वेन व्याख्यातवान्। यो नाम चरावपि सम्भवादवघातवत्पेषणादीनि कर्त्तव्यानीति मन्यते, तस्य बुद्धिर्मन्दविषन्यायेन व्यावर्त्यते, प्रयोजनप्रयुक्तत्वात्तेषाम्। चरौ च तदभावादकरणं पेषणसंयवनोपधानादीनाम्। उपधानन्तु याज्ञिकाः कपालोपधानकाले तेनैव मन्त्रेण स्थाल्याः कुर्वते। न च स्थाली कपालकार्ये वर्तते, उदकधारणार्थत्वात्। अत उपधानस्य व्यावृत्त्या आसादनमप्राकृतत्वान्न चोदकेन प्राप्यते॥

इति सौर्यचरौ पेषणादिबाधाधिकरणम्॥ ११, १२॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
दशमाध्यायस्य प्रथमः पादः॥ १॥



---

**मन्त्रेण** ध्रुवमसीत्यादिना। याज्ञिकाचारं दूषयति–**न चेति**। तथा च पूर्वाधिकरणन्यायविरोधादयुक्तोऽयमाचार इत्यर्थः। उपधाननिवृत्तौ च तदङ्गमासादनमपि न चोदकेन प्राप्यते, किन्त्वर्थात्तदनुष्ठानमित्याह—**अत इति**। सूत्रार्थः सुगमः॥

इति सौर्यचरौ पेषणादिबाधाधिकरणम्॥ ११,१२॥

इति श्रीमत्तत्सद्रामभट्टसूरिकरात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां दशमस्य प्रथमः पादः॥



## दशमाध्याये द्वितीयः पादः

१

कृष्णलेषु० 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इत्यत्र संशयः—किं कृष्णलेषु पाकः कर्त्तव्यः नेति ? लुप्तार्थत्वादकर्त्तव्यः। ननु 'घृते श्रपयती'ति वचनात्कर्तव्यः। न, अशक्यत्वात्। रूपरसादीनां पूर्वेषान्तिरोभावः, अपूर्वाणां च प्रादुर्भावः पाकः। असौ न कृष्णलेषु सम्भवति। तस्मादकर्त्तव्य इति प्राप्ते, ब्रूमः—यद्यपि मुख्यः पाको न सम्भवति, तथाऽपि लक्षणया तापमात्रं वचनेन विधीयते। अतस्तावन्मात्रं कर्त्तव्यम्। अन्यथा वचनानर्थक्यं स्यात्। यदि त्वयमेव मुख्यः पाको यदनुष्णस्पर्शवद्द्रव्यस्योष्णीकरणं, ततः सुतरां वचनबलादसत्यपि प्राकृते कार्ये कर्त्तव्यः॥

इति कृष्णलचरौ पाकानुष्ठानाधिकरणम्॥ १॥

---

## द्वितीयः पादः

१

कृष्णलेषु० पूर्वपादेऽर्थलोपप्रयुक्तो बाध उक्तः। अस्मिंस्तु तदपवादः प्राधान्येनेति सङ्गतिः पादभेदश्चेति ज्ञेयम्। **लुप्तार्थत्वादिति।** विक्लृत्यनुकूलव्यापारस्यैव पच्यर्थत्वात्तस्य च कृष्णलेषु बाधाद्वचनं घृते प्रक्षेपस्य लक्षणया विधायकमित्याशयेनाह—**नेति।** **रूपे**त्यादिना विक्लृत्तिपदार्थ उक्तः। केचित्तु घृत इति सप्तमी द्वितीयार्थे। तेन घृतश्रपणपरं वचनमित्याहुः। **मुख्य इति।** विक्लृत्यनुकूलाग्निसंयोगरूप इत्यर्थः। **लक्षणयेति।** श्रपयतीत्यनेन पाकाविनाभूताग्निसंयोग एव लक्षणया विधीयते। तस्य प्रकृतितः प्राप्तस्यार्थलोपान्निवर्तमानस्य प्रतिप्रसवमात्रकरणे लाघवात्। अन्यथा घृताधारत्वस्योत्पत्तिवाक्यादेव प्राप्तेरेतद्वचनानर्थक्यापत्तेरिति भावः। ननु विक्लृत्यनुकूलाग्निसंयोगरूपमुख्यपाकस्य प्राकृतस्यासम्भवादेवाप्राप्तेरग्निसंयोगमात्रस्य चाप्राकृतत्वात्कथं तद्विधानस्य प्रतिप्रसवरूपतासिद्धिरित्यरुचेराह—**यदीति।** एवकारेण रूपादिपरावृत्तिरूपविक्लृत्तिव्युदासः। अत्र च कृष्णलश्रपणविधिरेव मानमिति भावः। **असत्यपीति।** प्राकृते प्रयोजने हविः सिध्यर्थं विक्लृत्तिरूपेऽसत्यपीत्यर्थः। सूत्रं स्पष्टम्॥

इति कृष्णलचरौ पाकानुष्ठानाधिकरणम्॥ १॥

२

उपस्तरणा० कृष्णलचरावेव सन्देहः—किमुपस्तरणाभिघारणे कर्त्तव्ये ? नेति ? चोदकप्राप्तेः कर्त्तव्ये । 'यदुपस्तृणात्यभिघारयति, अमृताहुतिमेवैनां करोती'ति वचनात्स्वादिमाऽर्थ्येत् । न च कृष्णलेषु स्वादिमा सम्भवति । अतो लुप्तार्थत्वादकर्त्तव्ये इति चेत् न, अर्थवादत्वादमृताहुतिवचनस्य । एवं तर्हि चतुरवत्तसम्पत्यर्थमुपस्तरणाभिघारणम् । ननु 'चत्वारि चत्वारि कृष्णलान्यवद्यति, चतुरवत्तस्याप्त्यै' इति कृष्णलचतुष्टवेनैव चतुरवत्तावाप्तिवचनादकर्त्तव्यम् । नैवम् न हि कृष्णलचतुष्टवेनावदानचतुष्ट्वमाप्तुं शक्यं विषयभेदात् ।' आप्तिवचनन्त्वर्थवादमात्रम् । यदि कृष्णलचतुष्ट्वेनैव चतुरवत्तमाप्येत, ततः सकृदवत्तैरेव तदवाप्तेर्न द्व्यवदानमपि स्यात् । तत्र 'चत्वारि चत्वारी'ति वीप्सा नावकल्प्येत । अथ वीप्सार्थो विधीयते, ततः प्राप्तावदानानुवादेन चतुःसङ्ख्यायाः, वीप्सायाश्च विधानाद्वाक्यं भिद्येत । ननु 'द्विर्हविषोऽवद्यती'त्यस्य प्रकृतितः प्राप्तेर्द्व्यवदानं स्यात् । न चतुरवत्तसम्पत्यर्थं हि प्रकृतौ द्व्यवदानमुपस्तरणाभिघारणवत् । तच्चेदन्यतः सम्पन्नं, ततोद्व्यवदानमप्युपस्तरणाभिघारणवदेव निवर्त्तितुमर्हति । तस्मादर्थवादमात्रमाप्तिवचनमिति, कर्त्तव्यमपस्तरणाभिघारणमिति प्राप्ते—

उच्यते—सूक्ष्माणां पुरोडाशावयवानां स्रुच्यसंसक्तानामाहवनीयपातः—कथं स्यादित्येवमुपस्तरणाभिघारणं दृष्टार्थम् । न कृष्णलानां संसक्तिः सम्भवति, यत्परिहारायोपस्तरणादि भवेत् । ननु चतुरवत्तसम्प-

---

२

उपस्तरण० श्रपणानुष्ठाने सति सुतरामुपस्तरणाभिघारणे कर्तव्य इति शङ्काधिक्येनोत्थानादन्तरसङ्गतिः । विषयेति । कृष्णलचतुष्ट्वस्यावदेयगतत्वेवावदानक्रियागतचतुष्ट्वनिर्वर्तकत्वासम्भवादित्यर्थः । नन्विति । एवञ्च वीप्सानुवादोपपत्तिरिति भावः । तच्चेदिति । चतुरवन्तं चेदित्यर्थः । असंसक्तानाम् सतामित्यर्थः । ननु चतुःसङ्ख्यावदानविशिष्टस्य होमसाधनत्वेन विधानात्कथमनङ्गत्वमत आह—चतुरवत्तमिति ।

त्तिरपि दृष्टमेव प्रयोजनम् । न, अनङ्गत्वात् । 'चतुरवत्तं जुहोती'त्यत्रावत्तं जुहोतीत्येतावद्विधीयते । चतुःशब्दस्तूपस्तरणाभिघारणद्वयवदानवचनप्राप्तचतुःसङ्ख्यानुवादमात्रं न विधानार्थम् । अवत्तहोमविधिपरत्वाद्वाक्यस्य तस्मादकर्त्तव्यमुपस्तरणाभिघारणम् ॥

इति कृष्णले उपस्तरणाभिधारणयोर्बाधाधिकरम् ॥ २ ॥

३

भक्षाणां० कृत्वा चिन्तेयम् । यदा प्रकृतौ भक्षाः पुरुषप्रीत्यर्थाः, तदा कृष्णलानामस्ति भक्षः ? नेति ? तत्र कृष्णलैर्भक्ष्यमाणैर्न प्रीतिर्भवति । तेन प्राकृताः तावद्भक्षा लुप्तार्थत्वादकर्त्तव्याः । यत्तु वचनं 'चुश्चूषाकारं भक्षयती'ति, तदाज्यस्य भक्षणं विधत्तो, तस्यादनीयत्वात् । चुश्चूषाकारस्यानुवादसम्भवात्, न कृष्णलानाम् । तस्मान्न तेषां भक्षणमिति प्राप्ते—

ब्रूमः—पूर्ववाक्ये कृष्णलानां प्राधान्यात्, आज्यस्य च तदङ्गत्वात्, तेषामेव भक्षणवाक्येऽन्वयः । तेषां चानदनीयानामपि प्रदानवद्भक्षणमपिवचनाद्भविष्यतीति, तेषामेव चुश्चूषाकरणविशिष्टं भक्षणं विधीयते ।

इति कृष्णलचरौ भक्षसद्भावाधिकरणम् ॥ ३ ॥

---

अवत्तसंस्कारत्वेन होममात्रमत्र विधीयत इति न चतुस्सङ्ख्याविधिरिति न तत्सम्पत्तेः प्रयोजनत्वमित्यर्थः । सिद्धान्त्येकदेशिसूत्रं स्पष्टार्थम् ॥

इति कृष्णलचरावुपस्तरणाभिघारणबाधाधिकरणम् ॥ २ ॥

३

**भक्षाणान्तु०** आपवादिकी सङ्गतिः । **कृत्वेति** । भक्षाणां द्रव्यप्रतिपत्तित्वस्यात्रैव पादे वक्ष्यमाणत्वादिति भावः । **पूर्वेति** । उत्पत्तिवाक्य इत्यर्थः । मुखान्तः प्रक्षेपानुकूलव्यापार एव प्रतिप्रसवलाघवाद्विधीयते न त्वप्राप्ताज्यभक्षणम् । चुश्चूषाकारत्वन्तु प्राप्तानुवाद इति भावः ॥

इति कृष्णलचरौ भक्षसद्भावाधिकरणम् ॥ ३ ॥

४

एकधा० तत्रैव श्रूयते 'एकधा ब्रह्मण उपहरती'ति । किमत्र सकृत्त्वं सहत्वं वा विधीयते ? उत सहत्वमिति ? कश्चात्र विशेषः । यदि सकृत्त्वं विधीयते, ततश्चोदकप्राप्तानामिडाप्राशित्र-चतुर्धाकरण-शंयुवाककालभक्षाणां कालभेदेन चतुर्हरणे प्राप्ते 'सकृद्धरति नाधिकमि'ति विधानादेकः एवास्य भक्ष उपहर्त्तव्यः । भक्षान्तराणि निवर्त्तेरन् । सहत्व-विधौ पुनरनिवर्त्तिता भक्षाः कालभेदेनोपहर्त्तव्याः प्राप्ताः सन्त एक-स्मिन्काल उपह्रियन्ते तत्र सकृत्त्वे सहत्वे चैकधाशब्दस्य लोके प्रयोगाद-नियमः ।

यत एवायं साधारणः । अत एव चोदकप्राप्तभक्षान्तराबाधाय सहत्वमेव विधीयते । प्राशित्रं इडामिति द्वितीयया क्रियां प्रति भक्षस्य प्राधान्यावगमाद्, दृष्टार्थत्वाच्च तत्प्रतिपत्त्यर्थाः प्राकृता भक्षाः कृष्णलेष्वपि चोदकेन प्राप्नुवन्तीति तेषां सहत्वविधानमुपयुज्यते ॥

इति कृष्णलचरौ ब्रह्मभक्षाणां युगपत्परिहरणीयत्वाधिकरणम् ॥ ४ ॥

५

सर्वत्वं० तत्रैव 'सर्वं ब्रह्मणे परिहरती'ति श्रुतम् । तत्र संशयः—

---

४

एकधा० आतिदेशिकी सङ्गतिः । तत्रैवेति । कृष्णलचरावेवेत्यर्थः । शंयुवाक-स्तच्छंयोरिति मन्त्रः । चतुर्हरणे कालभेदाच्चतुर्वारं हरणे । प्रकृतौ विहृतत्वान्नानाकाल-त्वादिति सौत्र हेत्वर्थः । शेषं सुगमम् ॥

इति कृष्णलचरौ ब्रह्मभक्षाणां युगपत्परिहरणीयत्वाधिकरणम् ॥ ४ ॥

५

सर्वत्वम्० अबाधस्यापवादादनन्तरसङ्गतिः । अत्र च सिद्धान्तेऽपि सर्वमित्यनुवाद

किं ब्रह्मभागस्यसर्वस्य परिहारो विधीयते—यद्ब्रह्मणे सर्वं तत्परिहरतीति-यद्ब्रह्मणेपरिहरति तत्सर्वमिति वा ? उत परिहरणीयस्य सर्वस्य ब्रह्म-सम्बन्धोविधीयते—यत्परिहरति तत्सर्वं ब्रह्मणे, नाध्वर्य्वादिभ्य इति पुरुषान्तरेभ्योभक्षोऽपनीयते ? इति। तत्र चोदकप्राप्तपुरुषान्तरसम्बन्धो मा बाधीति ब्रह्मभागस्य परिहर्त्तव्यस्य सर्वता, सर्वस्य ब्रह्मसम्बधिनो वा परिहारो विधीयत इति मन्यते।

वचनं त्वेवमनर्थकं स्यात्। प्रकृतित एव हि कृत्स्नस्य ब्रह्म-भागस्य भक्षणाय परिहरणं प्राप्तमेव। कृत्स्नो हि भागस्तेन भक्षणीयः। अन्यथा ह्यभक्षितस्यांशस्य संस्कारहानिः स्यात्। तस्मात्प्राप्तत्वाद्ब्रह्म-भागस्य कृत्स्नता न विधातव्या। तेन यत्प्रकृतौ नानापुरुषेभ्यो भक्षार्थं हरति, तत्सर्वं ब्रह्मणे परिहरति नान्येभ्य इति, प्राकृता भक्षाः पुरुषान्तरे-भ्योऽपनीयन्ते॥

इति ब्रह्मणस्सर्वभक्षपरिहाराधिकरणम्॥ ५॥

६

पुरुषा० सर्वे भक्षा ब्रह्मण उपहर्त्तव्याः, ते 'एकधा ब्रह्मण उप-हरती'ति सहत्वविधानादेकस्मिन्नेव काल उपहर्त्तव्या इति स्थिते, संशयः—किं युगपदुपहूतानां युगपद्भक्षणम्? उत प्रकृतिवन्नानाकालं भक्षणम्? तत्र—

---

एवेति ज्ञेयम्। यत्परिहरति तद्ब्रह्मण इत्येतावतैव परिहर्तव्यस्य सर्वस्य ब्रह्मसम्बन्ध-विधानसिद्धेः। पूर्वपक्षे च विशिष्टोद्देशाद्वाक्यभेदो दोषः सन्नप्यानर्थक्यदोषस्यापरिहार्य-स्योत्कटत्वादुपेक्षितः। सूत्रार्थस्तु—तेषां ब्रह्मभक्षाणामेव सर्वत्वम्, अधिकारात् प्रकृतत्वादिति॥

इति कृष्णलचर्यौ ब्रह्मणः सर्वभक्षपरिहाराधिकरणम्॥ ५॥

६

पुरुष०. पूर्वोक्तबाधापवादादनन्तरसङ्गतिः। पुरुषमात्रापनयात्स्वकालत्वमेव

भक्षार्थो ह्युपहारोऽतो भक्षोऽपि युगपद्भवेत् ।
सहाप्युपहृतौ शक्यं यथाकालं तु भक्षणम् ॥

तस्माच्चोदकाबाधाय सहोपहृतानामपि प्रकृतिवन्नानाकालं भक्षणम् ॥

इति ब्रह्मणा स्वस्वकाले भक्षाधिकरणम् ॥ ६ ॥

७

एकार्थत्वा० प्रकृतौ चतुर्धाकरणं विधाय 'इदं ब्रह्मणः, इदं होतुरि'त्यादिव्यादेशो विहितः । स किं कृष्णलेषु कर्तव्यः ? नेति ? चोदकप्राप्तेः कर्तव्यः । नैवम् । चतुर्धाकरणं तावच्चतुर्णां भक्षणार्थं प्रकृतौ । इह तु ब्रह्मणैव सर्वं भक्षयितव्यमिति लुप्तार्थत्वादकर्तव्यम् व्यादेशोऽपि चतुर्णां व्यवस्थार्थम् । इह तु सर्वस्य ब्रह्मसम्बन्धित्वेन निश्चितत्वादिदं ब्रह्मणः' इत्यपि निर्देशो न कर्तव्यः, नतरा'मिदं होतुरि'त्यादि, होत्रादिभ्योऽपनीतत्वात् ॥

इति ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम् ॥ ७ ॥

---

भक्षाणामिति सूत्रार्थः ॥

इति कृष्णचरौ ब्रह्मणः स्वस्वकाले भक्षणाधिकरणम् ॥ ६ ॥

७

**एकार्थत्वात्०** अबाधापवादात्सङ्गतिः । **व्यादेशो** निर्देशः । **चोदकेति** । इदं ब्रह्मण इति व्यादेशः कर्तव्य इत्यर्थः । होत्रादीनां भक्षणाभावेन तदर्थव्यादेशस्याप्रसक्तेः चतुर्धाकरणे सति तत्तद्भागव्यवस्थाबोधार्थं व्यादेशप्रसक्तिरतदभावात्तु न सेत्यतश्चतुर्धाकरणाभावकथनम् । सूत्रार्थः स्पष्टः ॥

इति कृष्णलचरौ ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम् ॥ ७ ॥

८

ऋत्विग्दानं० 'ऋत्विग्भ्यो दक्षिणां दद्यादि'त्यादि यदृत्विग्दानं तददृष्टार्थम्, आनत्यर्थं वा ? इति सन्देहे, अदृष्टार्थमिति ब्रूमः—दानकर्तव्यता श्रुत्या, दानेनानतिकर्तव्यता वाक्यात्। तच्च दुर्बलम् तस्माद्दानमात्रं कर्त्तव्यम्। किञ्च द्वादशशतादिपरिमाणनियमः, मन्त्रादीतिकर्त्तव्यता कर्माननुरूपद्रव्यता च दानस्यादृष्टार्थत्वेऽकल्पते, नान्यथा।

उच्यते—कर्मकरेभ्यस्तु दीयमानमपेक्षितानतिद्वारेण दृष्टप्रयोजनत्वान्न शक्यते अदृष्टार्थं कल्पयितुम्। परिमाणादिनियमस्तु कामं भवत्वदृष्टार्थः। न तु तावता दानस्याप्यदृष्टार्थता। तस्मात्सत्रेषु न कर्त्तव्यं दानम्॥

इति दक्षिणादानस्य ऋत्विगानत्यर्थत्वाधिकरणम्॥ ८॥

---

८

**ऋत्विक्०** आतिदेशिकी सङ्गतिः। **दानकर्तव्यतेति**। दद्यादिति पदश्रुत्या दानस्यैव कर्तव्यताभावनाकर्मता प्रतीयते कर्मान्तरस्याश्रुतत्वात्पश्चात्तु दानस्य प्रयोजनं प्रकरणाददृष्टरूपक्रतूपकारः कल्प्यत इत्यारादुपकारकं दानम्। आनतेस्तु वाक्यस्थ कर्मकरवाचिऋत्विक्पदाल्लक्षणया कथञ्चिदुपस्थिताया भाव्यत्वं दुर्बलमित्यर्थः। एतच्चापाततः दानस्याप्राप्तत्वाद्विधीयमानस्य च करणत्वावश्यंभावादनुपस्थितादृष्टार्थत्वापेक्षया च ऋत्विक्दक्षिणापदोपस्थितानत्यर्थताया एवोचितत्वादतो युक्त्यन्तरमाह—**किञ्चेति**। स्वल्पेऽपि कर्मणि सहस्रदक्षिणादर्शनान्महत्यपि ऋतपेयाख्यक्रतौ सोमचमसादिदक्षिणादर्शनात्कर्माननुरूपद्रव्यत्वमित्यर्थः। **नान्यथेति**। आनतेर्लोके नियतद्रव्यासाध्यतादर्शनादुक्तनियमोऽनुपपन्न इत्यर्थः। सिद्धान्तमाह—**कर्मकरेभ्यस्त्विति**। ऋत्विक्कर्मकृदुच्यत इति स्मृत्या ऋत्विक् शब्दस्य कर्मकरवाचित्वादिति भावः। परिमाणादीत्यादिना मन्त्रकर्माननुरूपद्रव्यनियमादिसङ्ग्रहः। अध्यायसङ्गतिं सूचयन् प्रयोजनमाह—**तस्मादिति**। तत्र यजमानानामेव ऋत्विक्त्वेनानत्यनपेक्षणादिति भावः। सूत्रं स्पष्टम्॥

इति दक्षिणादानस्य ऋत्विगानत्यर्थताधिकरणम्॥ ८॥

९

शेषभक्षाश्च० शेषभक्षा इडादिविषया दर्शपूर्णमासयोः, सोमविषयाश्च सोमे समाम्नाताः किं परिक्रयार्थाः ? उत प्रतिपत्त्यर्थाः ? इति विचारः । तत्र भक्षणात्प्रीतिः, प्रीत्या चानतिः प्रत्यक्षा । तस्मात्तदर्थाः ।

नैवम्, यागे कृतेऽवशिष्टं द्रव्यं प्रतिपत्तिमपेक्षमाणं भक्षणेन प्रतिपाद्यते । तत्तु दृष्टमेव प्रयोजनम् । अनीशानश्च यजमानो देवतायै सङ्कल्पितस्य । अतो न शक्नोत्यसौ तेन परिक्रेतुम् । तस्मात्प्रतित्त्यर्था भक्षाः । स्थिते चास्मिन् भक्षाणां प्रतिपत्त्यर्थत्वे चतुर्धाकरणे भक्षणाश्रवणात्परिक्रयमाशङ्क्य भक्षार्थता व्यादेशस्य तृतीये साधिता । तस्मात्सत्रेष्वप्यबाध्या भक्षाः ॥

इति दर्शपूर्णमासादिषु भक्षस्य प्रतिपत्त्यर्थताधिकरणम् ॥ ९ ॥

१०

वरणम्० ज्योतिष्टोमे वरणमृत्विजामाम्नातम् 'अग्निर्होता, स मे होते'त्यादि । तत्सत्रेषु कर्त्तव्यं नेति संशये चोदकानुग्रहाय कर्त्तव्यम् ।

---

९

**शेष०** बाधापवादात्सङ्गतिः । **परिक्रयः** ऋत्विगानतिः । **अनीशानश्चेति** । आनतेर्दानं विनाऽसम्भवात्तस्य च त्यक्तद्रव्ये स्वामित्वाभावेनायोगादित्यर्थः । गतार्थतां परिहरति—**स्थिते चेति** । तृतीये हि भक्षाश्रवणात्तदभावमाशङ्क्य भक्षः साधितः । इह तु सतोऽपि भक्षस्य प्रतिपत्त्यर्थत्वपरिक्रयार्थतानिरासेनोच्यत इत्यगतार्थतेत्यर्थः । पूर्वपक्षसूत्रे तद्वद्दक्षिणादानवत्परिक्रयार्था इत्यर्थः ॥

इति दर्शपूर्णमासादिष्विडाभक्षस्य प्रतिपत्त्यर्थताधिकरणम् ॥ ९ ॥

१०

**वरणम्०** अत्र वरणस्याबाधमाशङ्क्य तन्निरासादापवादिकी सङ्गतिः । **इत्यादीति** । इत्यादिना मन्त्रेणेत्यर्थः । ननु वरणस्यानत्यर्थत्वात्तल्लोपे लोप इत्यत

ऋत्विक्त्वार्थञ्चेदं प्रकृतौ। तच्च सत्रेऽपि यजमानेष्वाधातव्यं 'ये यजमानास्त ऋत्विजः' इति वचनात्। अतोऽलुप्तार्थत्वात्कर्त्तव्यं वरणम्।

मैवम्, आनत्यर्थं तत्प्रकृतौ कृतम्। न चात्र यजमानैर्वरणेनाननमितव्यम्। अतोऽर्थलोपादकर्त्तव्यम्। ऋत्विक्त्वमपि यागकर्तृत्वम्। तच्च प्रकृतौ वरणविधानात्तद्द्वारेणानतानामेव। सत्रेषु तु वरणस्यार्थलोपान्निवृत्तावरणानामेव न विगुणमृत्विक्त्वम्, अध्वर्य्वादित्वञ्च भविष्यति। यदि तु कर्मकरत्ववचनोऽयमृत्विक्शब्दः, ततो वरणेनापि यजमानेषु अशक्यमाधातुम्। ते हि स्वार्थं कुर्वाणा न कर्मकरा भवन्ति। तेन ऋत्विग्भिरेव सत्रं कर्त्तव्यमिति वरणनिवृत्तिः॥

इति सत्रे वरणाभावाधिकरणम्॥ १०॥

११

परिक्रयश्च० दक्षिणादानं परिक्रयार्थं नादृष्टार्थमित्युक्तम्।

---

आह—**ऋत्विक्त्वार्थमिति**। 'ऋत्विजो वृणीते' इत्यस्य हि वरणेन ऋत्विजः सम्पादयेदित्यर्थाददृष्टसंस्काररूपऋत्विक्त्वमेव तत्फलं तच्च सत्रेऽपि 'ये यजमानास्त ऋत्विज' इति यजमानानां ऋत्विक्त्वविधानात्तदर्थं कार्यमित्याशयः। **अलुप्तार्थत्वादि**त्यकार प्रश्लेषो ज्ञेयः। सिद्धान्तमाह—**मैवमिति**। प्रार्थनरूपवरणस्यानत्यर्थताया दृष्टत्वात्तादर्थमेव वरणं नादृष्टार्थम्। दक्षिणादेरानत्यर्थत्वेऽप्यस्य तद्विशेषाधायकत्वदर्शनादित्यर्थः। ऋत्विक्त्वमपि नादृष्टरूपं येन तदर्थत्वादनुष्ठानं स्यादित्याह—**ऋत्विक्त्वमपीति**। क्विन्नन्तऋत्विक्शब्दस्य ऋतुयजनकर्तृत्वार्थत्वात्तस्य च वरणेनानतिद्वारा सम्पाद्यत्वनियमस्य प्रकृतौ विधानेऽपि सत्रेषु द्वारभूतानतिलोपादप्रसक्तवरणनियमासम्भवात्तेन विनाऽपि यागकर्तृत्वस्य न वैगुण्यमित्यर्थः। एवमध्वर्य्वादित्वमप्यध्यवसायनिमित्तमेवेति न तस्यापि वैगुण्यम्। 'ऋत्विक् कर्म कृदुच्यते' इति स्मृतिं लोकप्रयोगञ्चानुसृत्याह—**यदि त्विति**। अतएव लक्षणया ऋत्विक्कार्ये यजमानविधिरिति षाष्ठसिद्धान्त इति भावः। सूत्रं स्पष्टम्॥

**इति सत्रे वरणाभावाधिकरणम्**॥ १०॥

११

**परि०** पौनरुक्त्यं परिहरति—**दक्षिणेति**। वचनबलाददृष्टार्थतया परिक्रयार्थत्व-

इदानीं परिक्रय एव सत्रे किं कर्त्तव्यः ? नेति ? संशये, पूर्वाधिकरणवत्पूर्वोत्तरपक्षौ । 'नात्र गौर्दीयते' इत्यादिप्रतिषेधो नासत्यां दानप्राप्तौ घटते । तस्मादनिवृत्तं दानमिति विशेषाङ्का ।

विध्यन्तरशेषस्त्वयमनुवादो न प्राप्तिं सूचयति । तस्माद्दानमनार्थत्वाद्वरणवत्परिक्रयोऽपि निवर्त्तते ॥

इति सत्रे परिक्रयाभावाधिकरणम् ॥ ११ ॥

## १२

उदवसानीयः० 'सत्रादुदवसाय ज्योतिष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेन यजेरन्नि'ति श्रूयते । तत्र संशयः—किं पृष्ठशमनीयं सत्राङ्गम् तत्र च सत्रवद् यजमानैरेवार्त्विज्यं कर्तव्यमिति दक्षिणादानमदृष्टार्थम् ? उत नाङ्गमृत्विग्भिः कर्तव्यं परिक्रयार्थं च दानमिति ? तत्र फलवत्सत्रसमभिव्याहारात्तदुत्तरकालेऽपि श्रूयमाणः पृष्ठशमनीयो वाजपेयस्येव बृहस्पतिसवः सत्रस्याङ्गम् । इतरथा हि सत्रसंयोगः काललक्षणार्थः स्यात् । फलं च कल्प्येत । तस्मादङ्गम् ।

---

माश्रित्य पुनः समाधीयत इति भावः । अत एवाह—**पूर्वेति** । आक्षेपहेतुमाह—**नात्रेति** । समाधिमाह—**विध्यन्तरेति** । 'अदक्षिणानि सत्राण्याहुरि'त्युपक्रमात्सत्रविधिशेषोऽर्थवाद इत्यर्थः । सूत्रे तादर्थ्यात्स्वार्थत्वात्सत्रस्येति हेत्वर्थः । न स्यादिति चानुषङ्गः ॥

इति सत्रे परिक्रयाभावाधिकरणम् ॥ ११ ॥

## १२

**उदवसानीयः०** परिक्रयबाधापवादात्सङ्गतिः । **उदवसायेति** । उपरम्येत्यर्थः । **तत्र चेति** । अङ्गप्रधानयोरेककर्तृकत्वादिति भावः । यदि तु सत्रप्रयोगगतार्त्विज्योद्देशेन ये यजमानास्ते इत्यनेन यजमानविधानेऽपीह पृष्ठशमनीयस्य तत्प्रयोगबहिर्भूतत्वेन ऋत्विक्कर्तृकत्वाद्दक्षिणाया बृहस्पतिसव इव दृष्टार्थत्वमेवेति भाव्यते, तदा सत्राङ्गत्वे सत्यातिदेशिकयजमानैकत्वबाधः सत्राधिकारिभिस्तदङ्गानुष्ठानात् । अनङ्गत्वे तु नेति फलं बोध्यमित्यध्यायसङ्गतिः । **इतरथेति** । सत्रपदार्थस्योद्देश्यतयाऽथवा विधेयतया

नैवम्, उदवसानं हि त्यागः। स च निःशेषसमाप्ताववकल्पते। न च निःशेषसमाप्तस्याङ्गं सम्भवति, 'वाजपेयेनेष्ट्वे'ति तु प्रयोगसमाप्तिर्गम्यते। समाप्तेऽपि च यथोक्ते प्रयोगे सम्भवत्यङ्गान्तरम्। त्यक्तस्य तु पुनरङ्गं न सम्भवति। सम्भवे वा त्याग एव न स्यात्। तस्मादुदवसायेति त्यागस्य शाब्दत्वादनङ्गत्वम्। न च लक्षणा, श्रौतमेव सत्रावसानं निमित्तीकृत्य पृष्ठशमनीयविधानात्॥

इत्युदवसानीये दक्षिणादानस्य परिक्रयार्थत्वाधिकरणम्॥ १२॥

१३

तेषान्तु० पृष्ठशमनीय एव संशयः—किमुदवसायिभिस्सह संहत्य प्रयोक्तव्यः?, उतैकैकश्येन यजेरन्? इति। तत्राख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेन विवक्षितत्वात्संहत्य कुर्युरिति स्थितं तावदपर्यवसितम्। अन्तरा चिन्तान्तरं क्रियते॥

इत्युदवसानीयस्यर्त्विजामेकैकेनानुष्ठानाधिकरणम्॥ १३॥

---

विध्यन्वयाभावात्केवलं स्वोत्तरकालोपलक्षकत्वं सत्रपदस्य स्यादित्यर्थः। **शाब्दत्वादिति।** तथा च श्रुतिबलात्फलकल्पनमपि न दोष इति भावः। काललक्षणां परिहरति—**नचेति** सूत्रं स्पष्टार्थम्॥

इत्युदवसानीये दक्षिणादानस्य परिक्रयार्थत्वाधिकरणम्॥ १२॥

१३

**तेषान्तु०** इतरबाधेऽपि संहत्य कर्तृकं त्वसत्रधर्मो न बाध्य इति पूर्वाधिकरणप्रयोजनविशेषाक्षेपात्सङ्गतिः। **अन्तरेति।** 'एकैकश्येन यजेरन्नि'ति सिद्धान्त उक्ते ऋत्विक्तदसद्भावविचारानुपपत्तिः। एकेनैव सर्वप्रयोगस्याशक्यतया ऋत्विजामावश्यकत्वादतः सिद्धान्तात् प्राक् चिन्तान्तरावसर इति भावः। सूत्रे द्वियज्ञवत् 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामि'तिवदिति दृष्टान्तार्थः। शेषं स्पष्टम्॥

इत्युदवसानीयस्यर्त्विजामेकैकश्येनानुष्ठानाधिकरणम्॥ १३॥

१४

तत्रान्या० यदा संहत्य कर्त्तव्यं तदा किं यजमानैरेव सर्वं कर्त्तव्यम् ? उतर्त्विग्भिरिति ? विचारः । तत्रोदवसाने यजमानानामेव कर्तृत्वात्, क्त्वाप्रत्ययेन च पृष्ठशमनीयस्य तत्समानकर्तृकत्वात्तत्रापि यजमाना एव कर्त्तारः, नान्ये इति प्राप्ते—

ब्रूमः—यजेरन्नित्यनेन यो व्यापारो विधीयते, तस्यैवोदवसानसमानकर्तृकता क्त्वाप्रत्ययादवगम्यते, नार्त्विज्यस्य । तत्तु पुरुषान्तरैः प्रकृतिवत्क्रियमाणं न केनचिद्विरुध्यते । किञ्च दक्षिणाशब्दः परिक्रयार्थे वर्त्तते । न चात्र परिक्रयः सम्भवति । अतो दक्षिणाश्रुतिबलादन्ये भवेयुः । यद्येवमङ्गत्वेऽपि दक्षिणाश्रुतेरेवान्ये सिध्येयुः 'ये यजमानास्ते ऋत्विजः' इति साधारणं वचनं पृष्ठशमनीयवर्जं भविष्यति । तत्राहत्य परिक्रयवचनात् । भवतु नामैवं को दोषः ? किमर्थं तस्याङ्गत्वनिराकरणम् ? उच्यते–अङ्गत्वाभ्युपगमेनापि शक्यत एव परिक्रयार्थता वक्तुम्, तथाऽपि तत्त्वत उत्तरं विवक्षित्वाऽङ्गत्वमेव नास्तीत्युक्तम् । अपि चाङ्गत्वे सति संहत्यप्रयोगः स्यात् प्रधानवत् । एकैकशस्तु प्रयोगं वक्तुकामोऽङ्गत्वं निराकृतवान् । तस्मादन्ये वरीतव्याः ।

---

१४

तत्रान्यान्० उत ऋत्विग्भिरित्यनन्तरं सहेति शेषः । तत्रेति । न च पृष्ठशमनीयस्योदवसानसमानकर्तृकत्वावगमो न तु तदङ्गानामपीति वाच्यम् । पृष्ठशमनीयेनेति तृतीयया करणत्वावगमात्साङ्गस्य च करणत्वेन समानकर्तृकत्वान्वयात् । यजेरन्निति । यजधातुना यो व्यापारः प्रधानभूतत्यागो विधीयते तस्यैवेत्यर्थः । धातुसम्बन्धाधिकारविहितेन प्रत्ययेन धात्वर्थगतस्यैव समानकर्तृत्वस्य बोधनादिति भावः । युक्त्यन्तरमाह–किञ्चेति । परिक्रयार्थे द्रव्य इति शेषः । किमर्थमिति । प्रपूर्वाधिकरणोक्तमित्यर्थः । सत्यप्यङ्गत्वे दक्षिणाशब्दबलादेव ऋत्विक्सिद्धेरित्यर्थः । अध्यायसङ्गत्यर्थं समाधानान्तरमाह—अपि चेति । एवञ्च यजमानैकत्वबाध इति सङ्गतिरिति भावः । पूर्वाधि-

स्थितादुत्तरम्—नैतदस्ति संहत्य प्रयोग इति। यदि बहुत्वं विधीयेत, तत एवं स्यात्। उदवसायेति तु क्त्वाप्रत्ययादुदवसानसमानकर्तृकत्वावगमादुदवसाने च बहूनां कर्तृत्वात्प्राप्तमेव बहुत्वम् न विधीयते। न चाविहितमङ्गं भवति। उदवसाने च गम्यमानमपि बहुत्वं निमित्तवदुद्देश्यगतत्वादविवक्षितम्। यागे चानुवादत्वादनङ्गम्। किं च उदवसाने निरपेक्षाः कर्त्तारस्तद्यदि यागेऽपि निरपेक्षाः, ततः समानकर्तृकत्वं सम्भवेन्नान्यथा। तस्मादेकैकश्येन प्रयुञ्जीरन्॥

इति सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम्॥ १४॥

१५

कामेष्टौ० सारस्वते सत्रे श्रूयते 'प्लाक्षं प्रस्रवणं प्राप्य, अग्नये कामायाष्टाकपालं निर्वपन्ति, तस्यामश्वां पुरुषीं च धेनुके दद्युरि'ति। किमिदं दानमदृष्टार्थम्? उत परिक्रयार्थमिति? तदर्थं चिन्त्यते किमेतस्यामृत्विजः सन्ति? उत यजमानैरेवेयमिष्टिः कर्त्तव्येति? तत्र द्वादशाहे 'ये यजमानास्त ऋत्विजः' इति यजमानानामार्त्विज्यमिहातिदेशेन प्राप्य-

---

करणसिद्धान्तमाह—**स्थितादिति**। **न चेति**। तदर्थतया विहितमेव तदङ्गम्। अतएव च लिङ्गादिना श्रुतिकल्पनयैवाङ्गत्वसिद्धिरित्यर्थः। ननूदवसानकर्तृगतत्वेन प्रतीयमानबहुत्वस्य तत्समानकर्तरि प्रतीतेः। कुतस्तदविवक्षेत्यत आह—**उदवसाने चेति**। न ह्युदवसानकर्तरि शब्दाद्बहुत्वावगमः, किन्त्वर्थात्तस्य च निमित्तवदधिकारिरूपोद्देश्यगतत्वात्सुतरामविवक्षा। यागकर्तरि तथैव प्राप्तत्वान्न विधानमित्यविवक्षेत्यर्थः। वस्तुतः समानकर्तृकत्वबलादेवेकैकश्येन कर्तृत्वसिद्धिरित्याह—**किञ्चेति**॥

इति सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम्॥ १४॥

१५

**कामेष्टौ०** तत्रान्यानित्यस्यापवादात्सङ्गतिः। **प्लाक्षमिति**। सरस्वतीविनशनादारभ्य तत्तीरे सत्रमिदं विहितम्। सरस्वती च यस्मात्पर्वतादारभ्य प्रवहति तत्र प्लक्षवृक्षमूलोत्पन्नं जलप्रस्रवणमस्ति तत्प्राप्येयमिष्टिः कार्येत्यर्थः। इह सारस्वतसत्रे। **अपूर्वाङ्गेष्टौ** अपूर्वाङ्गरूपायामिष्टौ। **चोदकेति**। ऐष्टिकातिदेशेत्यर्थः। **ऋत्विग्भिः**

माणं प्राकृतेष्वेवाङ्गेषु प्राप्यते, नापूर्वाङ्गेषु यूपावटास्तरणबर्हिष्विव बर्हिर्धर्माः। तेनापूर्वाङ्गे कामेष्टौ असति यजमानात्विज्ये चोदकप्राप्तैर्ऋत्विग्भिर्भवितव्यम्। सत्सु च तेषु दानमसत्यपि दक्षिणाशब्दे दृष्टार्थत्वात्परिक्रयार्थमेवेति प्राप्ते—

ब्रूमः—प्रकृतौ बर्हिर्धर्माः प्रदिष्टानां पदार्थानामङ्गत्वाद्युक्तं यदपूर्वेषु न भवन्ति। यजमानास्तु कर्त्तारः प्रयोगाङ्गत्वाद्विकृतावपि प्रयोगद्वारेण प्राप्नुवन्ति। तस्मिंश्च प्रयोगे यदपूर्वमप्यङ्गं निपतति, तत्रैव प्रसङ्गसिद्धत्वान्न कर्त्रन्तरमाकाङ्क्षति। तस्माददृष्टार्थमेवैतद्दानम्॥

इति कामेष्टौ दानस्यादृष्टार्थताधिकरणम्॥ १५॥

## १६

द्वेष्ये वा० दर्शपूर्णमासयोश्श्रूयते 'यदि पत्नीः संयाजयन् कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत्, तस्यैकहायनी गौर्दक्षिणा तां स द्वेष्याय दद्यादि'ति। किमिदं दानं परिक्रयार्थम्? उतादृष्टार्थमिति? दक्षिणाशब्दात्परिक्रयार्थमिति। यद्यपि च दर्शपूर्णमासयोरेव नैमित्तिकमङ्गं वैश्वानरेष्टिः तन्त्रमध्य एव क्रियते, तथाऽपि वचनाद्दक्षिणान्तरं नानुपपन्नम्। उच्यते—द्वेष्याय तद्दानम् न चर्त्विग् द्वेष्यः सम्भवति, 'ऋत्विगाचार्यौ-

---

चतुर्भिः। अपूर्वेषु अप्राकृतकार्येषु। कार्यपृष्ठभावेनैवातिदेशावगमादिति भावः। ननु प्रयोगद्वारापि प्राकृतेष्वेव प्राप्तिर्नापूर्वाङ्गेष्वत आह—तस्मिंश्चेति। तथा च प्रसङ्गसिद्धेर्न कर्त्राकाङ्क्षाधीनैष्टिककर्त्रतिदेशः पुरोडाशे प्रयाजादीनामिवेत्यर्थः। सूत्रार्थस्तु कामेष्टावन्यानृत्विजो वृणीरन्नित्यनुषङ्गः। कुतः? दृष्टार्थदानशब्दादिति॥

इति कामेष्टौ दानस्यादृष्टार्थताधिकरणम्॥ १५॥

## १६

द्वेष्ये च० आतिदेशिकी सङ्गतिः। यदीति। गार्हपत्ये पुरोडाशश्रपणार्थमुपहितेषु कपालेषु यदि पत्नीसंयाजाहुतिः पतेदित्यर्थः। विशेषाशङ्कामाह—दक्षिणेति। कामेष्टौ दक्षिणाशब्दाभावाददृष्टार्थता युक्ता। इह तु तत्सत्त्वाद्विशेष इत्यर्थः। यद्यपीति। प्रधान-

नातिचरितव्यावि'ति श्रवणात् । तस्मादनृत्विजे दानमिदमदृष्टार्थम् । दक्षिणाशब्दश्च दानमात्रेऽगत्या वर्तते ॥

इति वैश्वानरेष्टौ द्वेष्यसम्प्रदानस्यादृष्टताधिकरणम् ॥ १६ ॥

१७

अस्थियज्ञो० इदं श्रूयते 'यदि सत्राय सन्दीक्षितानां प्रमीयेत, तं दग्ध्वा कृष्णाजिने अस्थीन्युपनह्य, योऽस्य नेदिष्ठः स्यात्, तं तस्य स्थाने दीक्षयित्वा, तेन सह यजेरन्, ततः सम्वत्सरे अस्थीनि याजयेयुरि'ति । योऽयंसम्वत्सरे अस्थियागः, स विचार्यते—किमस्थिशब्देन शरीरशरीरिणोरभेदोपचारेण मृतं लक्षयित्वा तस्यायं याग उच्यते, तदधिकारे च यागे सत्रिणामितरेषामृत्विक्स्थानीयानां कर्तृत्वमात्रम् ? उतास्थिशब्देन जीवत एव सत्रिणोऽस्थिसहायांल्लक्षयित्वा तेषामेव यागविधिरिति ? तत्रास्थिशब्दस्य तच्छरीरे पुंसि प्रवृत्तेः, इतरेषां च ण्यन्तपरस्मैपदनिर्देशात्परार्थे कर्मणि याजयितृत्वावगमात् । मृताधिकारमिदं कर्म सत्रमध्यमरणनिमित्तं तस्यैव फलदमिति प्राप्ते—

ब्रूमः—न कथञ्चिदपि मृतस्य साक्षाद्वा संविधानाद्वा कर्तृत्वं

---

दक्षिणयैव प्रसङ्गसिद्धेस्तदङ्गभूतायामस्यां न दक्षिणान्तरापेक्षेत्यर्थः । **नातिचरितव्यौ** नावज्ञातव्यौ । न च पुरुषार्थनिषेधातिक्रमेऽपि न क्रतुवैगुण्यम् । अतएव 'नानृतं वदे'ति पुनः क्रतौ निषेध इति वाच्यम् । द्वेषावस्थायां दानविधानात् वरणकाले द्वेषे सति ऋत्विक्त्वानुपपत्तेः । प्रयोगमध्ये द्वेषे च ऋत्विक्त्वनाशात्पुरुषार्थनिषेधेनापि क्रतौ नियमसिद्धेः । क्रत्वविनाभूत ऋत्विक्सम्बन्धेन निषेधस्य क्रत्वङ्गत्वाद्वेति वदन्ति । **सूत्रार्थस्तु**—द्वेष्ये दानस्यापि दक्षिणात्वापनयः स्यात्तस्य ऋत्विक्त्वाविधानादिति ॥

इति वैश्वानरेष्टौ द्वेष्यसम्प्रदानस्यादृष्टार्थताधिकरणम् ॥ १६ ॥

१७

**अस्थियज्ञः०** द्वेष्यदानवद्वचनादस्थ्यधिकार इति शङ्कोत्थानात्सङ्गतिः । **दीक्षितानां** मध्य इति शेषः । **उपनह्य** बध्वा । **नेदिष्ठः** कनिष्ठः । **संविधानाद्वेति** ।

सम्भवति। न चाकर्त्तुरधिकारः। तस्माज्जीवतामेवायं यागः। याजयतिश्च ये तेषां याजयितारः, तदभिप्रायेण भविष्यति॥

इत्यस्थियज्ञस्य जीवदधिकारित्वाधिकरणम् ॥ १७ ॥

१८

यदि तु० जीवदधिकारपक्षे चोदकप्राप्तं न किञ्चिद्बाधितव्यम्। मृताधिकारे तु भवति केषाञ्चिद्बाधः। तदिह कृत्वा चिन्तया किं बाध्यं किं नेति चिन्त्यते। ये यजमानजपाः, वपनादयश्च संस्काराः, दीक्षणीयेष्टिश्च, ते किमस्थ्यधिकारपक्षे कर्त्तव्याः, नेति? चोदकानुग्रहाय कर्त्तव्याः।

मैवम्, दीक्षार्था हीष्टिः। यम-नियम-सङ्कल्पश्च दीक्षा। न चासौ मृतस्य सम्भवति। तस्माल्लुप्तार्था। वपनं तु दूरापास्तम् केशश्मश्रुणोरभावात्। जपश्चाशक्यत्वात् ॥

इत्यस्थियज्ञेऽस्थ्नां जपाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

---

सर्वस्वार इव 'समापयत मे यज्ञमि'ति प्रैषसंविधानादित्यर्थः। अथवा वरणभरणादिसम्पादनादित्यर्थः। सूत्रे अविप्रतिषेधादिति पदच्छेदः। शेषं सुगमम् ॥

इत्यस्थियज्ञस्य जीवदधिकारिकत्वाधिकरणम् ॥१७॥

१८

**यदि तु०** पूर्वाधिकरणप्रयोजनकथनात्सङ्गतिरिति दर्शयितुमाह—**जीवदिति**। **कृत्वेति**। अनुमतिद्वारा मृतस्याधिकार इति कृत्वाचिन्तयेत्यर्थः। जपादयश्च वाक्संस्कारका ज्ञेयाः। आरादुपकारिष्वनुमतिद्वारा कर्तृत्वोपपत्तेः। अत**श्चाशक्यत्वादि**त्यस्य वाक्संस्कारस्याशक्यत्वादित्यर्थः। **सूत्रार्थस्तु**—यदि वचनात्तेषामस्थ्नामधिकार इति शेषः। तदा जपसंस्कारमिति समाहारद्वन्द्वः दीक्षणीयेष्टिसहितं अर्थतो लुप्तम्। तदर्थत्वाद्दीक्षार्थत्वादिति ॥

इत्यस्थियज्ञे जपाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

१९

क्रत्वर्थं० अथ यत्र यजमानो गुणभूतः यथा 'शुक्रं यजमानोऽन्वारभते' इत्यादौ तत्कर्त्तव्यम्? नेति? अचेतनानामस्थ्नां स्वातन्त्र्यलक्षणकर्तृत्वासम्भवादकर्त्तव्यम्। न चैतन्यापेक्षं कर्तृत्वं काष्ठादीनामपि ज्वलनादौ कर्तृत्वसम्भवात्। यस्यैवान्यानपेक्षयाऽऽख्यातोपात्तव्यापारसमवायसम्भवः, स एव कर्त्ता। तस्माच्छुक्रान्वारम्भणादिकर्माऽस्थिभिः कर्त्तव्यम्॥

इत्यस्थियज्ञे शुक्रान्वारम्भाद्यनुष्ठानाधिकरणम्॥ १९॥

२०

काम्यानि० गुणकामानां विकृतौ प्रवृत्तिं कृत्वा चिन्त्यते। 'यदि कामयेत वर्षुकःपर्जन्यः स्यात्, नीचैः सदो मिनुयादि'त्यादयो गुणकामाः-

---

१९

**क्रत्वर्थन्तु०** आपवादिकी सङ्गतिः। **शुक्रमिति**। शुक्राख्यं ग्रहं होमकाले यजमानोऽन्वारभते स्पृशतीत्यर्थः। **स्वातन्त्र्येति**। अन्याप्रयुक्तस्पर्शानुकूलव्यापाराश्रयत्वलक्षणस्येत्यर्थः। **काष्ठादीनामपीति**। काष्ठानि ज्वलन्तीति प्रयोग इत्यर्थः : न नु स प्रयोगो गौण इत्याशङ्क्याह—**यस्यैवेति**। **अन्यानपेक्षयेति** प्राधान्यमुच्यते। **आख्यात**शब्दो धातुपरः। 'सर्वमाख्यातजं नामे'ति निरुक्तस्मृतेः। तथा च प्राधान्येन धातूपात्तव्यापाराश्रयत्वं कर्तृत्वम्। काष्ठानि ज्वलन्ति, स्थाली पचतीत्यादौ काष्ठादिगतव्यापारस्यैव प्राधान्येन धातूपात्तत्वात्तेषां मुख्यमेव कर्तृत्वम्। प्राधान्यस्य विवक्षाधीनत्वादित्यर्थः। सूत्रे गुणत्वादित्यनेन पूर्ववत्संस्कार्यत्वाभाव उक्तः॥

इत्यस्थियज्ञे शुक्रान्वारम्भाद्यनुष्ठानाधिकरणम्॥ १९॥

२०

**काम्यानि०** आपवादिकी सङ्गतिः। **कृत्वेति**। 'निवृत्तिर्वा कर्मभेदादि'त्यष्टमे निवृत्त्यभिधानादिति भावः। वस्तुतोऽन्याश्रितगुणकामानां 'श्येनचितं चिन्वीत स्वर्गकाम'

मृताधिकारपक्षे प्रवर्तते, नेति । चोदकप्राप्तेः प्रवर्तन्ते । नैवम्, कुतः ? कामाज्ञानात् । न हीदं ज्ञायते—किं मृतस्येष्टं न वेति । तस्मादप्रवृत्ति-र्गुणकामानाम् ॥

इत्यस्थियज्ञे काम्यकर्माननुष्ठानाधिकरणम् ॥ २० ॥

२१

ईहार्था० सूक्तवाकगतानि 'आयुराशास्ते' इत्यादीनि फलपदानि प्रवर्तन्ते, नेति संशये, सूक्तवाकस्य प्रहरणाङ्गतया नित्यवत्प्रवृत्तेः तन्नि-बन्धनानामायुरादिपदानामपि प्रवृत्तिः । नैवम्, फलनिर्देशा ह्येते, मान्त्र-वर्णिकफलकल्पनात् । न च मृतस्य फलाशंसनङ्गम्यत इत्युक्तम् । अतो लुप्तार्थत्वादेषां निवृत्तिः ॥

इति सूक्तवाकगतफलप्रकाशनभागाननुष्ठानाधिकरणम् ॥ २१ ॥

---

इत्यादीनां 'तमुक्थ्येनेत्यादिवचनवशाद्विकृतौ प्रवृत्तिसत्वात्तदभिप्रायेणाऽपि विचारोपपत्ति-रित्याहुः । वर्षुकः बहुवर्षणकारी । सदः सदोनामकं मण्डपम् । फलत्वस्य कामनाविष-यत्वरूपत्वात्कामनाया अज्ञाने फलत्वासम्भव इत्यर्थः । यथेतरस्य जीवतोऽनुच्यमानि काम्यानि न विद्यन्ते तथा मृतस्येति सूत्रार्थः ॥

इत्यस्थियज्ञे काम्यकर्माननुष्ठानाधिकरणम् ॥२०॥

२१

ईहार्थाश्च० आतिदेशिकी सङ्गतिः । तन्निबन्धनानाम् सूक्तवाकप्रवृत्तिनिबन्ध-नानाम् । किञ्चित्पदोद्धारे च सूक्तवाकत्वं न स्यादिति भावः । लुप्तेति । प्रकाश्याभा-वादित्यर्थः । सूक्तवाकत्वन्तु समवेतवचनत्वमिति न तद्धानिरिति भावः । सूत्रार्थस्तु अर्हेवतिः सूक्तवाकार्हा ईहार्था आयुराशास्त इत्यादयोऽभावान्निवर्तेरन्निति ॥

इत्यस्थियज्ञे सूक्तवाकाननुष्ठानाधिकरणम् ॥ २१ ॥

२२

स्युर्वा० प्रकृतौ सन्ति होतृकामाः 'यं कामयेत पापीयान् स्यादिति, नीचैस्तरां तस्य याज्यया वषट्कुर्यात्' यं कामयेत वसीयान् स्यादिति उच्चैस्तरां तस्य याज्यया वषट्कुर्यादि'त्यादयः। ते मृताधिकारेऽपि कर्मणि होतुः कामनासम्भवान्न निवर्तेरन्। निवृत्तिर्वा। यजमानफलमेव हि अत्रापि निर्दिश्यते। न चानिर्दिष्टं फलं भवति। न च मृतस्येच्छा विज्ञायते। तस्मादेवमादीनामपि निवृत्तिः॥

इत्यस्थियज्ञे होतृकामाभावाधिकरणम्॥ २२॥

२३

सर्वस्वारस्य० सर्वस्वारो नामैकाहः स्वर्गकामस्य विहितः। तत्रार्भवस्तोत्रकाले—'ब्राह्मणाः समापयत मे यज्ञमि'ति प्रैषमृत्विग्भ्यः प्रदाय यजमानो म्रियते। तस्मिन्मृते शेषं कर्म समापनीयं नेति संशये। न समाप्यम्, मृतस्य कर्तृत्वासम्भवात्। यजमानस्य तावन्न समाप्तिः

---

२२

स्युर्वा० आतिदेशिकी सङ्गतिः। यजमानफलमेवेति। 'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव तदाशासते' इति वचनेन ऋत्विजां पारतन्त्र्येण च यजमानफलस्यैवायं निर्देश इति भावः। तथा चायमर्थः—यो यजमानः पापीयान् दरिद्रः स्यामिति वसीयान् धनवत्तरः स्यामिति वा कामयेत तस्य होता नीचैरुच्चैश्च क्रमेण याज्यया वषट्कारं पठेदिति। धनमदेनाकार्यकरणान्निर्विण्णस्य दारिद्र्येच्छाऽपि न विरुध्यते। सूत्रं स्पष्टार्थम्॥

इत्यस्थियज्ञे होतृकामाभावाधिकरणम्॥ २२॥

२३

सर्वस्वारस्य० उत्तरचिन्तोपोद्घातत्वेनास्य सङ्गतिः। विहित इति। सर्वस्वारोऽग्निष्टोमः। 'मरणकामो ह्येतेन यजेत यः कामयेतानामयं स्वर्गमि'ति वाक्येनेत्यर्थः। तत्रेति। आर्भवस्तोत्रं तृतीयसवनादौ कर्तव्यं तत्काल इत्यर्थः।

कर्त्तव्या। यच्च यजमानस्य कार्यं, तद् ऋत्विजः कुर्वन्ति, नाऽन्यत्। तस्मादृत्विजोऽपि न समापयेयुः। उच्यते—

यथासम्भवि कर्त्तव्यं तत एवं भवेदिदम्।
जीवन्नेव तु सम्प्रैषाच्छिष्टे कर्तृत्वमृच्छति ॥

वरण-भरणादिसमाचरणमेव जीवदवस्थायामपि यजमानस्य कर्तृत्वम्। तच्च मरणोत्तरकालभाविन्यपि कर्मशेषे जीवदवस्थायामपि संविधानेन सम्भवति। प्रत्यक्षमेव च 'समापयते'ति प्रैषेण समाप्तिश्चोद्यमाना न शक्यते अपह्नोतुम्, न हि ब्राह्मणभागगताद्विधेः प्रैषस्य कश्चिद्विशेषः। न हि प्रैषे प्रेषकपुरुषस्य स्वातन्त्र्यम्, येन पौरुषेयत्वाद्दोषः स्यात्। प्रयोक्तृत्वमात्रन्तु ब्राह्मणगतेष्विव विधिषु प्रैषेष्वपि पुरुषाणाम्। अतः प्रत्यक्षमेव विहितं समापनम्। स्वर्ग एवात्र मरणेनार्थिनः फलं न मरणम्। मरणकाम इत्यङ्गीकृतमरण इत्यर्थः। तेन यो ह्येवं ज्ञात्वा स्वर्गं

---

'आर्भवे प्रस्तूयमानेऽग्निं प्रविशती'ति वचनादित्यर्थः। **शिष्टे** अवशिष्टप्रयोगे। ननु ब्राह्मणगतविधेरेव विधायकत्वं न मन्त्रगतप्रैषस्येत्यत आह—**नहीति**। प्रवर्तकत्वस्योभयत्र साम्यादित्यर्थः। ननु प्रैषस्य पुरुषाधीनतया न विधिसाम्यमत आह—**नहीति**। **स्वातन्त्र्यम्** अपूर्वरचनाकर्तृत्वम्। **दोषः** अप्रामाण्यरूपः। **प्रयोक्तृत्वमात्रमिति** मात्रपदेनास्वातन्त्र्यव्यवच्छेदः। तथा च स्वतन्त्रपुरुषप्रयुक्तत्वमेव पौरुषेयत्वं तच्च नात्रापीति न दोष इत्यर्थः। एवञ्च प्राप्तविषयप्रैषस्याविधायकत्वं न त्वप्राप्तविषयस्यापि। किन्त्वावश्यकमेव विधित्वमिति भावः। किञ्च समाप्तिविधिं विना प्रैषमन्त्रस्य तत्प्रकाशकतया कर्माङ्गत्वानुपपत्तेः समाप्तिविधिकल्पनमावश्यकमेवेति बोध्यम्। नन्वत्र 'मरणकाम' इति मरणस्यैव फलत्वावगमात्फलसिद्धौ किं समापनेनेत्याशङ्क्याह—**स्वर्ग एवेति**। अन्तरा फललाभेऽपि समापनस्य षष्ठे साधनाद्वस्तुगतिमनुसृत्यैतदुक्तमिति ज्ञेयम्। **न मरणमिति**। स्वर्गमरणरूपानेकोद्देशे वाक्यभेदान्मरणस्यानिष्टत्वाच्चेति भावः। **एवं ज्ञात्वेति**। मरणाङ्गकोऽयं क्रतुः स्वर्गसाधनमिति ज्ञात्वेत्यर्थः। अत्रार्थे

प्राप्नवानीति कामयते, तस्यायं क्रतुः । तथा च हरिभिरुक्तं 'प्रधानस्य मरणेनार्थिन इज्यां प्रवर्तयन्ती'ति । तेन संजातेऽपि मरणे स्वर्गार्थमेव समापनीयम् ॥

इति सर्वस्वाराधिकरणम् ॥ २३ ॥

२४

गते० अथ मृते यजमाने कर्मशेषे क्रियमाणे किं बाध्यम् ? किं वा नेति प्रश्नेनैवोक्रमः । अत्रोत्तरम्—अस्थियज्ञेऽस्थ्नामधिकारपक्षे यथोक्तं तथेहापि द्रष्टव्यम् ॥

इति सर्वस्वारे कार्यबाध्यव्यवस्थाधिकरणम् ॥ २४ ॥

२५

जीवत्यवचन० सर्वस्वार एव मरणात्प्राग्जीवदवस्थायाम् 'आयुराशस्ते' इत्यायुराशीर्वक्तव्या, नेति संशयः । तत्र मरणाभ्युपगमेन प्रवृत्तस्य नाशासितव्यमायुः । प्रागपि स्वाभवकालान्मरणं सम्भवति । तथा सति क्रतोर्वैगुण्याद्यावदाभवकालमाशासितव्यमायुः । तस्मादायुराशीर्वक्तव्या ॥

इति सर्वस्वारे आयुराशंसनाधिकरणम् ॥ २५ ॥

---

हरिटीकासम्मतिमाह—तथाचेति । मरणेन प्रधानस्य स्वर्गस्यार्थिनः पुरुषा इत्यर्थः । सूत्रं स्पष्टार्थम् ॥

इति सर्वस्वाराधिकरणम् ॥ २३ ॥

२४—२६

गते० इत्याद्यधिकरणत्रयं स्पष्टम् ॥

२६

क्रिया० यत्प्रकृतावानत्यर्थमृत्विग्वरणं दक्षिणादानञ्च न तत् तत्रे स्यादित्युक्तम्। यत्त्वदृष्टार्थमृतुयाज्यावरणम्, आत्रेयाय हिरण्यदानञ्च तत् सत्रेऽपि कर्त्तव्यमिति ॥

इति द्वादशाहे ऋतुयाज्यानुष्ठानाधिकरणम् ॥ २६ ॥

२७

गुणलोपे० दर्शपूर्णमासयोः 'अग्निहोत्रहवण्या हवींषि निर्वपती'ति श्रुतो निर्वापः पवमानेष्टिषु चोदकेन प्राप्तः कर्त्तव्यः ? नेति ? संशये, न कर्तव्यः। कस्मात् ? अग्निहोत्रहवण्यभावात्। ययाऽग्निहोत्रं हुतं सा ह्यग्निहोत्रहवणी। न च पवमानेष्टिवेलायामग्निहोत्रं हुतं सम्भवति। विना वाऽग्निहोत्रहवण्या निर्वापः विगुणत्वादकर्त्तव्य इति प्राप्ते ब्रूमः— अतिदेशेन हि कार्यमुखेन पदार्थेषु प्राप्यमाणेषु हविः संस्कारार्थतया निर्वापः प्राप्यते, तदङ्गभूताग्निहोत्रहवण्यसम्भवान्न प्राप्यते। न चाप्राप्ताया गुणवत्त्वम्। अतस्तदभावेऽप्यगुणत्वात्कर्त्तव्य एव निर्वापः ॥

इति पवमानेष्टौ निर्वपानुष्ठानाधिकरणम् ॥ २७ ॥

---

ऋतुयाज्या मन्त्रविशेषास्तैः क्रियमाणं वरणमृतुयाज्यावरणम् ॥ २४–२६ ॥

२७

**गुणलोपे०** आतिदेशिकी सङ्गतिः। **पवमानेष्टिषु** आधाने कर्तव्यासु। **न चाप्राप्ताया इति**। अतिदेशेनाविहिताया इत्यर्थः ॥

इति पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ।२७॥

२८

मुष्टिलोपात्तु० वाजपेये श्रूयते 'बार्हस्पत्यो नैवारः सप्तदशशरावः क्षीरे चरुर्भवती'ति । अस्ति तु प्रकृतौ 'चतुरो मुष्टीन्निर्वपती'ति चतुःसङ्ख्या मुष्टिद्रव्यञ्च । तदुभयमिह चोदकेन प्राप्तम् । न च चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणः चरुः सम्पादयितुं शक्यते । अतोऽवश्यं बाधितव्ये सति, किमुभयं बधितव्यम्—शरावद्रव्येण मुष्टिद्रव्यं सप्तदशसङ्ख्यया च चतुःसङ्ख्या ? किं वान्यतरत् ? तत्रापि किमनियमः ? अथ वा मुष्ट्यनुग्रहः, सङ्ख्यालोपः विपरीतं वेति ? तत्राविशेषादुभयोर्बाधः । तत्रापि समानकार्यत्वात् द्रव्यं द्रव्येण, सङ्ख्या सङ्ख्ययेत्येकः पक्षः । सप्तदशसङ्ख्याशरावपरिमाणश्च यागद्रव्याङ्गम्, चतुःसङ्ख्या मुष्टिश्च निर्वापाङ्गम् । अतो न तावत्साक्षादेकविषयत्वं येनोभयमुभयेन बाध्येत, चतुर्भिर्मुष्टिभिः सप्तदशशरावश्चरुर्न सम्पादयितुं शक्यते इत्यर्थाद्बाधः । तत्रैकबाधेनोपपत्तौ नोभयबाधनं युक्तम् । तस्मादन्यतरबाधः । तत्राविशेषादनियम इति द्वितीयः । सङ्ख्याया द्रव्याङ्गत्वात्प्रधानस्य मुष्टिद्रव्यस्यानुग्रहः । सङ्ख्यायास्तु बाध इति तृतीयः । न सङ्ख्याया मुष्ट्यङ्गत्वं वाक्यलक्षणसमानाधिकरणद्रव्यसम्बन्धबाधेन द्वितीया श्रुत्या निर्वापाङ्गत्वावगमादुभयोरपि

---

२८

**मुष्टि०** अत्र सङ्ख्याया मुष्टिगुणत्वनिरासाद्गुणलोप इत्यस्य प्रत्युदाहरणप्रदर्शनात्सङ्गतिः । **नैवारः** नीवारप्रकृतिकः सप्तदशशरावपरिमितः । **मुष्टिद्रव्यम्** मुष्टिपरिमितं द्रव्यम् । **नचेति** । तथा च 'चतुरोमुष्टीनि'त्यस्य निर्वापविषयत्वात् सप्तदशेत्यस्य च प्रधानविषयत्वाद्भिन्नविषयत्वेऽपि निरुप्तस्यैव यागसाधनत्वेनार्थादेकविषयोपनिपाताद्विरोधोऽपरिहार्य इत्यर्थः । **समानेति** । मानलक्षणकार्यैक्यात् मुष्टिपरिमाणावच्छिन्नद्रव्यं शरावपरिमाणावच्छिन्नद्रव्येण परिच्छेदरूपकार्यैक्याच्च सङ्ख्या सङ्ख्यया सप्तदशत्वरूपयेत्यर्थः । द्वितीयपक्षमाह—**सप्तदशेति** । सिद्धान्तमाह—**नेति** । आरुण्यस्येवैकहायन्यङ्गत्वमिति भावः । **द्वितीयाश्रुत्येति** । साधनत्वलक्षणयेति शेषः । यथाश्रुते द्वितीयायाः साध्यत्ववाचितयाऽसङ्गतेः । तथा च सङ्ख्यामुष्ट्युभयोद्देशेन सङ्ख्याविशिष्टमुष्ट्युद्देशेन वा विधौ वाक्यभेदापत्तेरप्राप्तत्वाच्चोभयकरणकनिर्वाप एव सक्तुवद्विनि-

क्रियाङ्गत्वावगमात्तल्यत्वम् । तत्र मुख्यत्वात्सङ्ख्यानुग्रहः, जघन्यत्वाच्च मुष्टिलोप इति सिद्धान्तः ॥

इति सप्तदशशरावचरौ मुष्टिलोपेन सङ्ख्यानुग्रहाधिकरणम् ॥ २८ ॥

२९

औत्पत्तिके० 'द्यावापृथिव्यां धेनुमालभेत, वायव्यं वत्सम्, ऐन्द्रमृषभमि'ति गोद्रव्यासाधारणगुणवचनेषु धेन्वादिशब्देषु श्रुतेषु किं चोदकप्राप्तमजद्रव्यं प्रवर्त्तते, नेति ? संशयः । तत्र यद्यपि गोरसाधारणं गुणमेते वदन्ति, तथाऽपि न गोर्वाचकाः । तेनात्र गोर्नोपदेशेन नातिदेशेन प्राप्तिः । अजस्त्वतिदेशेन प्राप्यते । तत्रैव धेन्वादिशब्दा लक्षणया वर्तन्ते । तथाजमृषभमित्यादिष्विति प्राप्ते, ब्रूमः—नानुमानिकचोदकानुरोधेन श्रुतानां शब्दानां लक्षणावृत्तिः न्याय्या । तेन यद्यपि गोद्रव्यं न शाब्दम्, तथाऽपि श्रुतगुणविशेषसम्पादनाय गौरेव आलब्धव्यः, चोदकप्राप्तं त्वजद्रव्यं प्रत्यक्षश्रुतगुणविशेषविरोधान्न प्राप्यते ॥

इति धेन्वादिशब्दानां गोवाचित्वाधिकरणम् ॥ २९ ॥

---

योगभङ्गेन विधेय इति भावः । न च सङ्ख्यायाः परिमाणपरिच्छेदद्वारतया बहिरङ्गतया दौर्बल्यमिति वाच्यम् । मिथोऽङ्गाङ्गित्वाभावे एकक्रियाङ्गत्वे च सति वस्तुस्वभावप्रयुक्तवैषम्यस्याकिञ्चित्करत्वादिति । सूत्रार्थस्तु—मुष्टिलोपापेक्षया सङ्ख्यालोपो युक्तः स्यात् मुष्टिगुणत्वादिति ॥

इति सप्तदशशरावचरौ मुष्टिलोपेन सङ्ख्यानुग्रहाधिकरणम् ॥ २८ ॥

२९

**औत्पत्तिके०** आतिदेशिकी सङ्गतिः । **गोद्रव्येति** । धेनुशब्दो धानकर्मत्ववचनः वत्सवृषभशब्दौ वयोविशेषवचनौ । **असाधारणमिति** । वस्तुतो गोमात्रनिष्ठमवान्तरजातिपुरस्कारेण वदन्तीत्यर्थः । सूत्रार्थस्तु औत्पत्तिके स्वाभाविकेऽसाधारणगुणशब्दे द्रव्यस्याजस्य विकारो बाधः तस्य गुणस्याजे कर्तुमशक्यत्वादिति ॥

इति धेन्वादिशब्दानां गोवाचित्वाधिकरणम् ॥ २९ ॥

३०

नैमित्तिके० यस्तु साधारणगुणवचनः श्वेतादिशब्दः 'वायव्यं श्वेतमालभेते'ति । स चोदकप्राप्तेऽप्यजे सम्भवतीति, न तत्राजस्य बाधनमिति प्रत्युदाहरणमेतत् ॥

इति श्वेतगुणेन प्राकृताजद्रव्यस्याबाधाधिकरणम् ॥ ३० ॥

३१

विप्रतिषेधे० साद्यस्क्रे श्रूयते 'खलेवाली यूपो भवती'ति । तत्र संशयः—किं चोदकप्राप्तं खादिरादिकं यूपं छेदनादिभिः कृत्वा स खलेवाली कर्त्तव्यः—यूपः खलेवाली भवतीति वचनव्यक्तिः ? उत यैवोत्तरवेदिभूते खले पूर्वावस्थिता खादिर्यखादिरी वा खलेवाली, तस्यामेव पशुनियोजनं कर्त्तव्यं या खलेवाली, स यूपो भवति यूपकार्यकारी भवतीति वचनव्यक्तिः ? इति । तथा—चित्रायामिष्टौ श्रूयते 'दधि मधु घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमि'ति । तत्रापि चोदकप्राप्ता व्रीहयोऽवघातादिभिस्तण्डुलीकर्त्तव्याः ? उत व्रैहा अव्रैहा वा लोकसिद्धास्तण्डुला ग्रहीतव्याः ? इति । तत्र चोदकानुग्रहाय यूपस्य खलेवालीत्वं व्रीहीणाञ्च तण्डुलत्वम् । यथासिद्धोपादाने हि चोदकप्राप्ताः खदिरादयो व्रीहयस्तत्संस्काराश्च छेदनावघातादयो बाध्येरन् । किञ्च खलेवाली

---

३०

नैमित्तिके० नैमित्तिके गुणसामान्यनिमित्तके कार्यत्वाच्छक्यत्वात्प्राकृतेऽजे स्यात्तद्गुणस्थानापत्तेरिति सूत्रार्थः । शेषं सुगमम् ॥

इति श्वेतगुणेन प्राकृताजद्रव्यबाधाभावाधिकरणम् ॥ ३० ॥

३१

विप्रतिषेधे० अबाधापवादात्सङ्गतिः । श्रपणस्य विधानादिति । अर्थसिद्धस्यापि प्रयोगान्तर्विधानादित्यर्थः । अन्यथा हि केनचिच्छ्रपितस्य सिद्धस्यैव क्रयादिना

यूपकार्ये भवतीति विधौ यूपशब्दस्यायूपे तत्कार्यकरे यजमानशब्दस्येव प्रस्तरे गौणी वृत्तिः स्यात्। यूपस्य तु खलेवालीत्वविधौ न गौणत्वम्। तस्मात्खदिरादयः खलेवाली कर्तव्याः, व्रीहयश्च तण्डुलीकर्त्तव्या इति प्राप्ते—

ब्रूमः—यूपस्य खलेवालीत्वमदृष्टार्थं विधीयते। खलेवाल्यास्तु यूपत्वं दृष्टार्थं पशुवनपक्रमणात्। तस्माद्यथासिद्धैव खादिरी, अखादिरी वा खलेवाली यूपकार्यं कुर्यात्। तण्डुलाश्च यथासिद्धा एवोपादेयाः। प्रकृतौ हि श्रपणस्य विधानात्प्रकृतिद्रव्यमुपादाय स्वयमेव हविः कर्त्तव्यम्। विकृतावपि यत्र श्रपणं चर्वादौ तत्रापि प्रकृतिद्रव्यं गृहीत्वा स्वयमेव हविः कर्त्तव्यम्। तण्डुलेषु श्रपणस्यार्थाभावान्निवृत्तौ न श्रपणकर्तव्यताबलेन प्रकृतिद्रव्यप्राप्तिः। प्राप्ते च प्रकृतिद्रव्योपादाने व्रीहियवनियमः। तस्माल्लोकप्रसिद्धा एव तण्डुला व्रैहा अव्रैहा वा ग्रहीतव्याः॥

इति साद्यस्क्रे चित्रेष्टौ च खादिरव्रैहत्वयोरनियमाधिकरणम्॥ ३१॥

३२

परेषां० यथासिद्धे खलेवाल्युपादानात्खादिरादिकाष्ठं बाध्यमिति

---

ग्रहणं स्यादित्यर्थः। प्राप्ते चेति। श्रपणविध्यनुरोधाद्यत्प्रकृतिद्रव्यमुपाददीत तद्व्रीहियवरूपं सतुषमिति नियम इत्यर्थः। तथा च नियमानुष्ठानस्य श्रपणप्रयुक्तत्वात्तदभावे लोप इति भावः। एतच्च वस्तुगतिमनुरुध्योक्तम्। व्रीहिशास्त्रस्यैव प्रकृत्युपादानतन्नियमप्रयोजकत्वेऽपि प्रकृतौ हविःप्रकृतितण्डुलानामेव द्वारतया चित्रेष्टौ तण्डुलानां हविःप्रकृतित्वाभावेन द्वारलोपाद्व्रीहिनियमनिवृत्तिसम्भवादित्याहुः। सूत्रार्थस्तु-विप्रतिषेधे उपदेशातिदेशविरोधे तद्वचनात् खलेवालीतण्डुलवचनात्प्राकृतस्य गुणस्य खदिरच्छेदनव्रीहितदवघातादेर्लोपः स्यात्। तेनैव खलेवालीतण्डुलादिना कर्मणः सम्बन्धादिति॥

इति साद्यस्क्रे चित्रेष्टौ च खादिरव्रैहत्वयोरनियमाधिकरणम्॥ ३१॥

३२

परेषाम्० आक्षेपिकी सङ्गतिः। आक्षेपनिमित्तमाह—शक्यत्वाच्चेति। खादि-

स्थितम् । अथ छेदनतक्षणादयः संस्काराः कर्त्तव्याः, नेति ? संदेहे, चोदकानुग्रहात् शक्यत्वाच्च कर्त्तव्याः । प्रयोजनाभावात्तु न कर्त्तव्याः । छिन्ना हि खलेवाली श्लक्ष्णीभूता निखातोच्छ्रिता तस्याः छेदनं तक्षणं निखननम् उच्छ्रयणञ्च लुप्तार्थमकर्त्तव्यम् ॥

इति खलेवाल्यां तक्षणादिबाधाधिकरणम् ॥ ३२ ॥

३३

अर्थाभावे० अथ यत् पर्यूहण-परिबृंहण-परिषेचनादि खलेवाल्यां सम्भवत्प्रयोजनम् यच्चादृष्टार्थमञ्जनप्रोक्षणादि, तत् खलेवाल्यां भवति ? नेति ? संशये, भवतीति ब्रूमः । कुतः ? यूपार्थत्वात्तेषाम् । इह चायूपे खलेवाल्यां यूपकार्यकरणाल्लुप्तार्थं पर्यूहणादि न कर्त्तव्यम् ।

उच्यते—न यूपो नामैकः कश्चिदर्थोऽस्ति यदर्थाः संस्काराः । किन्तु छेदन-प्रोक्षादिजन्यदृष्टादृष्टरूपाः संस्काराः काष्ठे वर्त्तमाना यूपशब्दाभिधेया नियोजनस्याङ्गभूताः । तत्र केषाञ्चिल्लुप्तार्थानां लोपेऽपि,

---

रादीनां खलेबाल्यामशक्यत्वम् । छेदनादीनान्तु शक्यत्वमिति बैषम्यान्न बाधो युक्त-इत्याक्षेप इत्यर्थः । सिद्धान्तमाह—**प्रयोजनेति** । एतदेव विवृणोति—**छिन्ना हीत्यादि** ।

इति खलेवाल्यां तक्षणादिबाधाधिकरणम् ॥ ३२ ॥

३३

**अर्थाभावे०** आपवादिकी सङ्गतिः । **अथेति** । यूपं परितः पांसूनां समूहीकरणं पर्यूहणम् । तेषाञ्च पांसूनां मैत्रावरुणदण्डेन भूमिसमतया घट्टनं परिबृंहणम् । घट्टित-तद्देशे जलसेकः परिषेचनमिति ज्ञेयम् । **सम्भवादिति** । खलेवाल्या बलीवर्द्दविमर्देन चालनाद्यर्थस्य प्रयोजनस्य सम्भवादिति भावः । **यूपार्थत्वादिति** । तद्विधिषु द्वितीयान्त-यूपपदश्रवणादिति भावः । **न यूप** इति । यद्येकः स्यात्ततस्तस्य खलेवाल्यामभावात्त-दर्थानां लोपः स्यात् छेदनादिजन्यसंस्कारगणस्तु यूपपदार्थः स पशुनियोजनाङ्गम् । तत्र

**अन्येषामलुप्तार्थानां निवृत्तौ नास्ति प्रमाणम्। तस्मात्पर्यूहणाञ्जनादयः कर्त्तव्याः ॥**

**इति खलेवाल्यां पर्यूहणाद्यननुष्ठानाधिकरणम् ॥ ३३ ॥**

**३४**

**अर्थेन॰ महापितृयज्ञे श्रूयते 'सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमि'ति। तत्र धानासु हन्तिः कर्त्तव्यः, नेति संशये, विघाताद-कर्त्तव्यः। क्रियमाणे हि हन्तौ धानात्वं विहन्येत। सक्तवो भवेयुः। तस्मादकर्त्तव्योऽवघातः। सत्यम्, श्रपणोत्तरकालं क्रियमाणे विघातः स्यात्, पूर्वं तु हन्तिं कृत्वा पश्चात्पाकः क्रियते क्रममात्रं बाधित्वा। तथा च न विहन्यते। न हि क्रमबाधे पदार्थोऽपि बाधितव्यः। तदुक्तं 'गुणलोपे च मुख्यस्य क्रिया स्यादिती'ति। तस्मात्कर्त्तव्योऽवघात इत्येवं भाष्यकारेणाधिकरणं व्याख्यातम्। तदिदमनुपपन्नम्, प्रकृतावपि पूर्वमव-**

---

केषाञ्चिल्लोपेऽपि नेतरेषां सम्भवतां यूपपदार्थत्वमात्रेण लोपो युक्त इत्यर्थः। सूत्रार्थस्तु-अर्थाभावे ह्यसंस्कारार्थता स्यान्नतु सोऽस्तीति ॥

**इति खलेवल्यां पर्यूहणाद्यनुष्ठानाधिकरणम् ॥ ३३ ॥**

**३४**

**अर्थेन॰** आतिदेशिकी सङ्गतिः। **धानाः** भ्रष्टा यवाः। **अभीवान्याया** मृतवत्साया धेन्वा इत्यर्थः। द्रवद्रव्ये क्षिप्त्वा मथिताः सक्तवो मन्थः। भाष्यमतं दर्शयति—**तत्रेति**। ननु प्रकृतिवद्धानाप्रकृतिषु यवेष्ववघाते कथं धानात्वविघातः कथञ्च क्रमबाध इति पूर्वोत्तरपक्षानुपपत्तिरिति चेत्—सत्यम्, अत्रायमाशयः—प्रकृतौ यागीयतया श्रुते द्रव्येऽवघातदर्शनादिहाऽपि श्रुत एव धानाद्रव्ये प्राप्तोऽवघातो धानात्वविघातादकर्तव्य इति पूर्वपक्षः। धानात्वाऽविघाताय यवरूपपूर्वावस्थायामवघातः कार्यः यवानां यागीयत्वाश्रवणेऽपि वस्तुतो यागीयहविः प्रकृतित्वेन यागीयत्वात्। प्रकृतौ श्रुतद्रव्ये, इह त्वश्रुत इत्येवंरूपक्रममात्रबाधेऽपि न पदार्थबाधो युक्त इति वदन्ति। वार्तिकोक्तभाष्यदूषणं दर्शयति—**तदिदमिति**। धानास्वपि चर्वादिवदतिदेशेन श्रपणप्राप्तौ तन्मुखेन प्रकृतिद्रव्य-

घातः, ततः पाकः । तेन नास्ति क्रमविपर्यासः । पुनरुक्तं च 'गुणलोपे च मुख्यस्ये'त्यनेन न्यायेन ।

ये त्वाहुः न क्रमो नाम कश्चिद्गुणः पदार्थव्यतिरिक्तोऽस्ति, यस्य पृथग्बाधं व्यवस्थापयामः । पदार्था एव हि विततः प्रतीयन्ते । तेन केवलस्य क्रमस्य बाधासम्भवात्तद्बाधे पदार्थोऽपि बाधित इत्यवघातो न कर्तव्य इत्येतन्निराकरणार्थमिदमाधिकरणम् । यत्तु विपर्यासो नास्तीति तत्राप्याहुः-धानासु श्रपणं कृत्वाऽवघातः । प्रकृतौ च विपरीतमित्यस्ति विपर्यास इति । यदि विपर्यासः कथं तर्ह्यवघातानुष्ठानम् न हि क्रमस्य पृथग्बाधः सम्भवति । सत्यम् ? न त्वत्र परमार्थतः क्रमबाधः । प्रकृतौ हि श्रुतेष्वेव व्रीहिष्ववघातः-कृतः । अत्रापि श्रुतास्वेव धानास्ववघात इति नास्ति क्रमविपर्यासः । प्रकृतावनघातात्परं श्रपणम्, इह तु विपरीतमित्येतावता विपर्यासवाचोयुक्तिः । ननु धानावस्थायां हन्तिः क्रियमाणो विघातं कुर्यात् । यथा न विघातो भवति, तथा कुर्महे । सकृदेवानभ्यस्तमवहननं क्रियते । न च भविष्यति विघात इति । तदयुक्तम्, सम्भवति हि पृथक् क्रमस्य बाधः, त एव हि पदार्था अन्येनाऽन्येन च क्रमेणानुष्ठातुं शक्यन्ते । तेन क्रमस्य प्राकृतस्याभावेऽपि पदार्था न निवर्तन्ते ।

यत्तु श्रपणं कृत्वाऽवघात इति । तत्पूर्वं हन्ति कृत्वा पश्चात्पाकः-कार्यः, इति भाष्यविरुद्धम् । यद्यपि श्रपणोत्तरकालेऽप्यवघाते विपर्यासो नास्ति, श्रुते द्रव्येऽवघातकरणादिति । तदप्यसारम्, प्रकृतौ-हि द्वे द्रव्य-

---

तत्संस्काराणां प्रकृतिवदनुष्ठानादिति भावः । ननु श्रपणोत्तरं किञ्चिदवघातं विना धानात्वानिष्पत्तेः क्रमविपर्यासेन तदनुष्ठानमित्याशय इत्यत आह—**पुनरुक्तं चेति** । प्राभाकरोक्तभाष्यसमर्थनप्रकारमाह—**ये त्विति** । विततः पूर्वापरीभावापन्नाः । ननु क्रमबाध एव नास्ति नतरां पदार्थबाध इति शङ्कते —**यत्त्विति** । क्रमबाधरूपविपर्यासे त्वदुक्तरीत्या पदार्थबाध एव स्यादिति शङ्कते—**यदीति** । **श्रुतेष्वेवेति** । अवघातपाकयोः पौर्वापर्यन्त्वार्थिकं न विवक्षितमिति भावः । एवञ्चार्थिकपौर्वापर्यस्य प्राकृतस्यात्र विपर्यास इत्याशयेन तदभिधानमित्याह--**प्रकृताविति** । केवलक्रमस्य बाधासम्भवात्पदार्थबाध इति पूर्वपक्षोपपादनं दूषयति—**सम्भवति हीति** । **तत्रैवेति** । महापितृयज्ञ

श्रपणे पुरोडाशश्रपणं व्रीहिश्रपणञ्च । तत्र धानादेवतासम्बन्धात् पुरोडाशकार्ये वर्तन्ते, न व्रीहिकार्ये । प्रकृतौ च व्रीहिविषयोऽवघातः, न पुरोडाशविषयः । तेन धानास्वपि चोदकप्राप्तेषु व्रीहिष्वेवावघातः, न धानावस्थायाम् । तत्र तु क्रियमाणे हन्तौ क्रमविपर्यासः स्यादेव । धानासु चाऽवघातकरणे धानात्वं विहन्येत । यत्तु सकृदेवावहनिष्याम इति । तथा सत्यप्राकृतकार्यमदृष्टार्थमवहननं स्यात् । प्रकृतिवत्तु तुषविमोकार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात् । तस्मान्नैवमधिकरणं युक्तमिति यथावार्त्तिकं व्याख्यास्यामः । न धाना उदाहरणम् । तत्रैव मन्थ उदाहरणम् । तत्र पेषणं श्रपणोत्तरकालमर्थाद्भवति । तत्प्राकृतम् उताप्राकृतमिति संशयः । प्रकृतौ पाकात्पूर्वं पेषणं पाकार्थं भवति । न ह्यसति पेषणे पुरोडाशनिर्वर्तकः पाकः कर्तुं शक्यते । तेन पाकार्थं पेषणम् । मन्थे तु विनैव पेषणेन भर्जनरूपः पाकस्तण्डुलावस्थायामेव कृत इति लुप्तार्थं प्राकृतं पेषणं निवृत्तम् । भर्जितेषु तण्डुलेषु सक्तुभावापादनाय लौकिकं पेषणमधर्मकं कर्त्तव्यमिति प्राप्ते—

ब्रूमः—न प्रकृतौ पाकार्थं पेषणम् । द्वितीयाश्रुत्या पेषणं श्रपणञ्चोभयमपि हविरर्थम् । अर्थात्तु तयोः पूर्वं पेषणम्, इह त्वर्थादेव पश्चात्क्रियत इति क्रममात्रमन्यत् । न च तदन्यत्वे पदार्थान्यत्वम् । तस्मात्प्राकृतमेव पेषणमिति कर्त्तव्याः पेषणधर्माः ॥

इति धानास्ववघातानुष्ठानाधिकरणम् ॥ ३४ ॥

एवेत्यर्थः । द्वितीयेति । 'तण्डुलान् पिनष्टि' 'गार्हपत्ये हवींषि श्रपयती'ति श्रवणादित्यर्थः । पेषणस्य प्राकृतत्वसाधनस्य फलमाह – तस्मादिति । सूत्रार्थस्तु अर्थेन प्रयोजनेन पेषणस्य मन्थे विपर्यासे पाकात्पूर्वत्वे तादर्थ्यात्प्राकृतकार्यहविरर्थत्वात्तत्वं प्राकृतत्वमेव स्यादिति ॥

इति धानास्ववघातानुष्ठानाधिकरणम् ॥ ३४ ॥

इति श्रीमद्विद्वन्मान्यश्रीमत्तत्सद्रामभट्टात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां
दशमस्य द्वितीयः पादः ॥



# अथ दशमाध्याये तृतीयः पादः

१

विकृतौ० अग्नीषोमीयपशौ श्रूयते 'एकादश प्रयाजान् यजती'ति। तथा चातुर्मास्येषु 'नव प्रयाजान् यजति, नवानुयाजानि'ति। तथा वायव्ये पशौ हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयती'ति। एवमन्यत्रापि। यत्र प्राकृतमङ्गमप्राकृतगुणयुक्तं श्रूयते, तदुदाहृत्य विचार्यते-किं तत्र चोदकेन प्राकृतीतिकर्त्तव्यता प्राप्यते ? न वेति ? तदर्थमिदं विचार्यते-किमेतैर्गुणविशिष्टप्रयाजादिविधिः ? उत प्रयाजाद्यनुवादेन गुणमात्रविधिरिति ? तत्रातिदेशेन पदार्थानां न स्वरूपतः पर्युपस्थापनमस्ति, प्रकारमात्रातिदेशात्। अतो नातिदेशप्राप्त्यङ्गीकरणेन गुणविधिः सम्भवति। तस्मात्सङ्ख्यादिविशिष्टाः प्रयाजादय एवात्र विधीयन्ते। एवञ्च धात्वर्थविधानाच्छ्रुत्यनुग्रहो भवति। ते च प्रयाजादयः प्रकृतौ क्लृप्तोपकारा विकृतौ श्रूयमाणा गृहमेधीयाज्यभागवदतिदेशं निरुन्धन्ति। तस्मान्न प्राकृतीतिकर्त्तव्यताऽतिदिश्यत इति प्राप्ते ब्रूमः—

प्रकारद्वारतः प्राप्तेरतिदेशेन कर्मणाम्।
तान्यूनद्य गुणः शक्यो विधातुमिति तद्विधिः ॥

---

## तृतीयः पादः

१

विकृतौ० एवं प्राधान्येन बाधं निरूप्यास्मिन् पादे प्राधान्येनाबाधः प्राकृतानामुच्यत इति पादभेदः। सङ्गतिश्चोह्या। पूर्वपक्षमाह—**तत्रेति**। **स्वरूपतः** प्रयाजत्वादिना। **प्रकारमात्रेति**। आग्नेयादिगतोपकारसम्पादनमात्रातिदेशादित्यर्थः। **अतिदेशप्राप्तीति**। प्रयाजत्वादिनेति शेषः। सामान्यरूपेण प्रकारपृष्ठभावेन तद्विशेषणत्वेन वा प्राप्तिसत्वात् यथाश्रुतासङ्गतेः। **प्रकारद्वारत** इति। सामान्यतः प्राप्तस्याऽपि विशेषरूपे-

न च सत्यां गतौ न्याय्यं विशिष्टविधिगौरवम् ।
वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः ॥

योऽपि हि श्रुत्यर्थविधिलिप्सया धात्वर्थं विधित्सति, तेनापि गुणवादस्याप्रमादपाठायाऽवश्यं वाक्यार्थविधिरङ्गीकर्तव्यः । तथा सति तत्र सङ्क्रान्ते विधौ धात्वर्थानुवादेनानेकविधिपरिजिहीर्षया प्रकारद्वारा प्राप्तिमालोच्य तदनुवादेन विधिर्गुणमात्रं विधत्ते । तस्मादेवञ्जातीयकेषु गृहमेधीयन्यायाभावादस्त्यतिदेशः ॥

इति पश्वादौ प्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् ॥ १ ॥

२

हिरण्यगर्भः० वायव्ये पशौ श्रूयते 'हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयती'ति । तत्प्राकृताघारानुवादेन मन्त्रविधिरिति स्थितम् । प्रकृतितश्च द्वावाघारौ प्राप्तौ पूर्वः प्राजापत्यः अमन्त्रकश्च, उत्तरस्त्वैन्द्रः समन्त्रकः । तदिह किं पूर्वस्याघारस्य मन्त्रविधिः ? उतोत्तरस्येति ? संशये, मन्त्रस्य प्रजापतिलिङ्गत्वात् 'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाये'ति च वाक्यशेषात्पूर्वस्येति प्राप्ते—

ब्रूमः—पूर्वस्मिन्मन्त्राभावान्न मन्त्रकार्यमस्ति । तत्र मन्त्रविधौ

---

णानुवादसम्भवादिति भावः । विकृतौ प्रधानस्य प्रयाजादेः शब्दवत्वाच्छ्रुत्या विध्यन्वयाद्गुणानामधिकोत्पत्तिर्न तु गुणमात्रस्य तत्सन्निधानाच्च नातिदेश इति सूत्रार्थः ॥

इति पश्वादौ प्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् ॥ १ ॥

२

**हिरण्यगर्भः०** प्राकृतानुवादेन गुणविधेरुपजीवनात्सङ्गतिः । **वायव्य इति ।** 'वायव्यं श्वेतमालभेते'ति विहित इत्यर्थः । **समन्त्रकः** 'इन्द्र ऊर्ध्वोऽध्वर' इति मन्त्रवान् । **प्रजापतिर्वा इति ।** प्रजापतिर्हिरण्यगर्भ इति तदनुरूपत्वायाद्यमन्त्र इत्यर्थः ।

मन्त्रकार्यमप्राकृतं कल्प्यं स्यात् । उत्तरत्र तु प्रकृतावेव मन्त्रविधानादस्ति मन्त्रनियमजन्यमदृष्टम् । तत्र मन्त्रविधानं सुकरम् । मन्त्रलिङ्गन्त्वैन्द्रेऽप्य-विशिष्टमिति दर्शितं भाष्ये । वाक्यशेषोऽपि प्रजानां पतिः प्रजापति-रित्येवमिन्द्र एवोपपन्नः । 'यो हि खलु वाव प्रजापतिः, स एवेन्द्र' इति चैकत्वादुपपत्तिर्वाक्यशेषस्य । पूर्वाघारस्य चाहत्यैवामन्त्रत्वं दृश्यते, 'न स्वाहेति करोति, न मन्त्रश्चाहे'ति । तस्मादुत्तरस्य मन्त्रः ॥

इति हिरण्यगर्भमन्त्रस्योत्तराघारगुणताधिकरणम् ॥ २ ॥

३

संस्कारे तु० 'उत्करे वाजिनमासादयति, परिधौ पशुं नियुञ्जीते'-त्यत्र संशयः--किमप्राकृतमासादनान्तरं नियोजनान्तरं वा दृष्टार्थ-मुत्करपरिधिविधिविशिष्टं विधीयते ? उत प्राकृतयोरेवासत्तिभावानप-क्रमणरूपदृष्टप्रयोजनयोरुत्करपरिधिविधिः ? इति । तत्र तीक्ष्णाग्रत्वात् तुङ्गत्वाच्चोत्करस्य, परिधेश्चाणीयस्त्वान्न दृष्टकार्यमासादनं नियोजनं च शक्यं कर्तुम् । अतः अप्राकृतकार्यमन्यद्विधीयते । एवञ्च धात्वर्थविधा-नाच्छ्रुत्यनुग्रहः । अन्यथा वाक्यार्थविधिः स्यादित्येवं प्राप्ते—

---

**मन्त्रकार्यम्** मन्त्रप्रकाशनजन्यं नियमादृष्टम् । **सुकरमिति** । तादृशादृष्टार्थतया मन्त्रमात्र-विधौ लाघवात् । पूर्वस्मिस्तु नियमादृष्टस्य कल्प्यत्वेन गौरवादित्यर्थः । **दर्शितमिति** । इन्द्रस्याप्यैश्वर्यसम्पन्नतया सृष्टेः प्रागवस्थानमेकस्य भूतपतित्वाद्यस्तीति प्रतिपादित-मित्यर्थः । प्रजापतिशब्दो वेदे क्वचिदिन्द्रेऽपि प्रयुज्यत इति नाप्रयुक्तत्वदोष इत्याह—**योऽपीति** । **अमन्त्रत्वमिति** । प्रकृतौ श्रूयत इत्यर्थः । एवञ्च शास्त्रातिदेशपक्षे तस्य-विकृतौ स्तावकतया प्राप्तस्य त्वन्मते बाधः स्यादिति भावः । सूत्रं स्पष्टार्थम् ॥

इति हिरण्यगर्भमन्त्रस्योत्तराघारगुणताधिकरणम् ॥ २ ॥

३

**संस्कारे तु०** पूर्वत्र मन्त्रसमुच्चयापवादवदत्रासादनादेः समुच्चयापवादादाति-देशकी सङ्गतिः । 'उत्कर इति सोमे, परिधाविति चातुर्मास्येष्वाम्नातम् । वेदिं खात्वा तत्पांसूनां वहिः क्षिप्तानां राशिरुत्करः । **आसत्तिभावः** सन्निहितत्वम् । **अनपक्रमणम्**

ब्रूमः—न सम्भवति गुणमात्रविधौ विशिष्टविधिर्युक्तः, साधारणश्च वाक्यार्थविधिः, गुणस्यावर्जनीयत्वात् । अतः प्राकृतयोर्गुणविधिः । न चाशक्यता, पृथ्वग्रतामुत्करस्य, स्थविमानञ्च परिधेराश्रित्य प्राकृतकार्यसम्पादनात् ॥

इति सोमे चातुर्मास्येषु चासदननियोजनयोर्गुणविधित्वाधिकरणम् ॥ ३ ॥

४

षड्भिर्दीक्ष० अग्नौ प्रकृतितो दीक्षाहुतयः षट् प्राप्ताः । तासाञ्च षण्मन्त्राः प्रकृतित एव प्राप्ताः 'आकूत्यै प्रयुजेऽग्नये स्वाहे' त्यादयः । अग्नावपरे षण्मन्त्राः—'आकूतिमग्निं प्रयुजं स्वाहे'त्यादयः । ते च दीक्षार्थतया विनियुक्ताः 'षड्भिर्दीक्षयती'ति । दीक्षाहुतीनाञ्चाभ्यासः श्रूयते 'द्वादश जुहोती'ति । तत्र संशयः—किं वैकृतैर्मन्त्रैः प्राकृता बाध्यन्ते, समुच्चीयन्ते वेति ।

तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च ।
वैकृताः प्राकृतान्मन्त्रान् बाधेरन्नेककार्यतः ॥

यद्यपि 'द्वादश जुहोती'ति वचनाद्धोमानामभ्यासः, तथाऽपि वैकृतानामेव प्रत्यक्षवचनविहितानां चोदकप्राप्तप्राकृतमन्त्रबाधेन होमाङ्गत्वात्तैरेवाभ्यस्तैर्द्वादशापि होतव्या इति प्राप्ते, ब्रूमः—

---

पशोरपलायनम् । स्थविमानम् स्थूलताम् । संस्कार आसादनादौ क्रियान्तरं श्रुत्या विधायकत्वादिति सूत्रार्थः ।।

इति सोमे चातुर्मास्येषु चासादननियोजनयोर्गुणविधित्वाधिकरणम् ।। ३ ।।

४

षड्भिः० आपवादिकी सङ्गतिः । अग्नौ चयने । यद्यप्यग्निसोमयोर्न प्रकृति-

न प्रत्यक्षेण वाक्येन होमार्थं वैकृताः श्रुताः ।
दीक्षार्थताबलात्तेषां होमाङ्गत्वं प्रकल्प्यते ॥
सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते ।
वैकृतैः प्राकृतास्तस्मात्समुच्चेया न बाधनम् ॥

'षड्भिर्दीक्षयती'ति दीक्षार्थता श्रुता । सा च स्वाहाकारलिङ्गानां होमद्वारेणेति दीक्षार्थत्वसिद्धये होमाङ्गता कल्प्यते । सकृत्प्रयुक्तैरेव च षट्सु होमेषु दीक्षार्थतासिद्धेर्नाभ्यासे, प्राकृतबाधे वा प्रमाणमस्ति । तेनाभ्यासवशेन होमानां द्वादशत्वान्मन्त्राणामपि प्राकृतवैकृतानां समुच्चयः ॥

इति चयने दीक्षाहुतिमन्त्राणां समुच्चयाधिकरणम् ॥ ४ ॥

५

अग्न्याधेयस्य० अस्ति पुनराधेयम्, तच्चाग्न्याधेयधर्मकम् । तत्र श्रूयते 'पुनर्निष्कृतो रथो दक्षिणा, पुनरुत्स्यूतं वासः' इत्यादि । सेयं दक्षिणा किमग्न्याधेयस्य दक्षिणानाम् 'एका देये'त्येवमादीनां निवर्त्तिका, न वेति

---

विकृतिभावस्तथाप्याग्निकदीक्षणीयेष्टेः सौमिकतद्विकारत्वमिति वदन्ति । **दीक्षार्थताबलादिति** । स्वाहाकारलिङ्गानां होमद्वारेणैव दीक्षार्थता सम्भवादिति भावः । सूत्रं स्पष्टार्थम् ॥

इति चयने दीक्षाहुतिमन्त्राणां समुच्चयाधिकरणम् ॥ ४ ॥

५

**अग्न्याधेयस्य०** समुच्चयापवादात्सङ्गतिः । पुनरनुष्ठीयमानमाधानं पुनराधेयमिति भ्रमं निराकरोति—**तच्चेति** । 'योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयेत स पुनरादधीते'ति भाग्यपुत्रहानौ निमित्ते विहितमित्यर्थः । ज्यानिं जीयेत प्राप्नुयादित्यर्थः,

चिन्तायाम्, सत्यप्येककार्यत्वे वचना 'दुभयीर्ददाती'ति समुच्चयप्राप्तौ उच्यते—विध्यश्रवणाद्विध्यन्तरशेषत्वाच्चास्य समुच्चयविधावसामर्थ्या-द्दक्षिणयोश्चानत्यर्थत्वमनेककार्यत्वेनैककार्यत्वाद्वैकृतिभिः प्राकृतीनां बाधः। कथं पुनः 'उभयीर्ददाती'ति निर्देशः? उच्यते—कृत्वा ह्यग्न्याधेयं पश्चात्पुनराधेयं क्रियते। तेन पूर्वदत्तसम्प्रतिदीयमानापेक्षयोभयदान-निर्देशः॥

इति पुनराधाने आधानदक्षिणानां निवृत्त्यधिकरणम् ॥ ५ ॥

६

वासो० आग्रयणे 'वासो दक्षिणा, वत्सः प्रथमजो दक्षिणे'ति श्रुतं वासोवत्सं समानकार्यत्वात्प्राकृतस्यान्वाहार्यस्य निवर्त्तकमिति सिद्धमेवोत्तरविवक्षायै प्राप्यते॥

इति वासोवत्साभ्यामन्वाहार्यस्य निवृत्त्यधिकरणम् ॥ ६ ॥

७

अर्थापत्तेस्तद्धर्मः० अन्वाहार्यकार्यापत्तेर्वासः वत्सम्, तद्धर्मा-न्लभेत इत्येतदपि प्राप्तिसूत्रमेव॥

इति आग्रयणे वासोवत्सयोरन्वाहार्यधर्माननुष्ठानाधिकरणम् ॥ ७ ॥

८

दाने० अन्वाहार्यपाको वत्से कर्तव्यः, नेति संशये, चोदकानु-ग्रहाय पक्त्वा वत्सं तदीयं मांसं दक्षिणात्वेन देयमिति मन्यते।

---

दानं दद्यादितिवत्। एतच्च काम्यत्वस्याप्युपलक्षणम्। भाग्यं यशः 'श्रीकामानां पुनरा-दधीते'ति श्रुतेः। **पुनर्निष्कृतः** भग्नः पुनः कृतसन्धानः। **पुनरुत्स्यूतम्** पाटितं सत्सीवनेन कृतसन्धानम्। एका गौः। **विध्यन्तरेति**। पुनरित्यादि दक्षिणाविधीत्यर्थः।

श्रुतन्तु० वत्सद्रव्यं पाकेन नश्येत्, अश्रुतं च मांसं दीयेत । वत्सशब्दो वा मांसलक्षणार्थः स्यात् । न चैतन्न्याय्यम् । तस्मान्न वत्सपाकः ॥

इत्याग्रयणे वत्सपाकाभावाधिकरणम् ॥ ८ ॥

९

पाकस्य० अथ वाससि पाकः स्यान्नेति संशये, विरोधाभावात् पच्येत । प्रयोजनाभावात्त्वपाकः । प्रकृतौ हि दक्षिणाभूतान्नसम्पत्त्यर्थः पाकः, नादृष्टार्थः । तस्मान्न वाससः पाकः ॥

इति वाससि पाकाभावाधिकरणम् ॥ ९ ॥

१०

तथा० अभिधारणमन्वाहार्यधर्मः किं वासोवत्सयोः कर्त्तव्यम् ? न ? इति । प्रकृतावदृष्टार्थत्वादिहाविरोधात्कर्त्तव्यम् ॥

नैवम्, स्वादिमार्थं हि तद्दृष्टेनैव प्रकृतावन्नानामुपकरोति । न च वासोवत्सयोः स्वादिम्ना प्रयोजनमस्ति । अतोऽभिधारणनिवृत्तिः ॥

इति वासोवत्सयोरभिधारणाभावाधिकरणम् ॥ १० ॥

११

द्रव्यविधि० ज्योतिष्टोमे श्रूयते 'गौश्चाश्वश्चाश्वतरश्च गर्द-

---

एतदेवोपपादयितुं पृच्छति—कथमिति । निर्देश इति इत्युपपत्तय?इति शेषः । सूत्रार्थस्तु—नैमित्तिके पुनराधेये गुणस्य दक्षिणाया विकारे सत्यग्न्याधेयस्य दक्षिणादानमधिकं स्यादुभयीरिति वाक्यादिति । एतदुत्तरं पञ्चसूत्री स्पष्टा ॥

इति पुनराधाने आधानदक्षिणानां निवृत्त्यधिकरणम् ॥ ५-१० ॥

११

द्रव्यविधि० सङ्ख्यान्वये गवादिसमुच्चयाभावोक्तेरातिदेशिकी सङ्गतिः ।

भाश्चाजाश्चाश्वयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादश शतं दक्षिणे'ति । तत्र संशयः—किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशत-सङ्ख्या ? उतैकस्य यस्य कस्यचित् ? अथवा माषाणाम् ? आहोस्वित्सर्वैः सहितैः सम्पाद्या ? किं वैकजातीयस्यैवानियमेन ? यद्वा पशूनाम् ? तदापि किमनियमः ? अथवा गवाम् ? इति । तत्र 'तस्ये'ति षष्ठ्यन्तेन गवादीनि प्रधानत्वेनोपदिश्य तद्गुणभूतासङ्ख्या विधीयमाना प्रतिप्रधानं सम्बध्यते । अतः प्रत्येकं द्वादशशतमिति प्रथमः पक्षः । नात्र गवाद्युद्देशेन सङ्ख्या विधीयते, न ह्येकेन वाक्येन गवादीनां दक्षिणात्वेन विधानम्, तदङ्गत्वेन च सङ्ख्याविधानं सम्भवति । तस्माद्गवादीनि द्रव्याणि सङ्ख्या च दक्षिणया सम्बध्यन्ते । सोभयविशिष्टा विधीयते । तत्रैकस्मिन्द्रव्ये निविष्टायां सङ्ख्यायां तद्विशिष्टा दक्षिणा अनुष्ठिता भवति । तस्मादेकस्य सङ्ख्या । तत्राप्यनियमः विशेषाभावात् । अथवा माषाणां स्यात्, आनन्तर्यात् । नैतदपि युक्तम् । चशब्दश्रुत्या ह्यन्यसहिताः माषा निर्दिष्टाः, तेनान्यसहितानां माषाणां सङ्ख्या, तेषाञ्च बहुत्वात् तस्येति प्रतिनिर्देशासम्भवात् । तस्येति तु क्रतुनिर्देशोऽङ्गीकर्तव्यः ।

यद्वा गवादिसमाहाराभिप्रायं तस्येत्येकवचनम् । यदा च क्रतुनिर्देशः, तदा यद्यपि चशब्दो न स्यात्, तथाऽपि गवादिद्रव्यविशिष्टा द्वादशशतसङ्ख्याविशिष्टा च दक्षिणा श्रुता । सहितानि च गवादीनि दक्षिणा, नैकैकम् । अतो दक्षिणापरिच्छेदिका सङ्ख्या सर्वेषु सहितेषु

---

किंवेति । गवादेः पशुजातीयस्य वा, व्रीह्यादेर्धान्यजातीयस्य वा अनियमेनेत्यर्थः । द्वितीयपक्षस्तु-दशानां मध्ये कस्यचिदेकस्येत्येवंरूप इति ततो भेदः । यद्वेति । पशुजातीयस्यैवेति नियम इत्यर्थः । तत्रेति । इन्द्रियकामस्येतिवत्प्राधान्ये षष्ठीत्यर्थः । तथा च गवादिवत्सङ्ख्याया दक्षिणात्वायोगाद्गवादीनां दक्षिणात्वेन विधिः । सङ्ख्यायास्तु गवाद्युद्देश्येनेति प्रत्युद्देश्यं सङ्ख्यान्वय इत्यर्थः । द्वितीयपक्षमाह—तस्मादिति । सङ्ख्या अपि द्रव्यपरिच्छेदद्वारा दक्षिणान्वययोग्यतया वाक्यभेदपरिहाराय षष्ठीश्रुत्यवगतद्रव्यसम्बन्धत्यागेन सामानाधिकरण्यावगतदक्षिणान्वय एवोचित इत्याशयः । चशब्देति । तस्येति सर्वनाम्नो बुद्धिस्थपरामर्शकत्वान्माषाणाञ्च चशब्देनान्यसहितानां बुद्धिस्थत्वात्तादृशानामेव सङ्ख्यान्वय इत्यर्थः । यदेति । समुदायनिर्देशपक्षे तु चशब्दं विना न तत्सिद्धि-

निवेष्टुमर्हति । तस्मात्सर्वसम्पाद्या सङ्ख्या । नैवम्, न हि 'तस्ये'ति शब्दो वाक्यगतेन द्रव्येण सम्बन्धं लभमानः प्रकृतिविशेषञ्च कुर्वन्नप्रकृतेन क्रतुना सम्बन्धमानर्थक्यं चावलम्बते । तस्मात्तस्येति गवादीनां निर्देशः । तत्रैकवचनान्तत्वान्न सहितानां सर्वेषां निर्देशः ; नापि समाहारस्य, तस्याशाब्दत्वात् । किन्त्वेकजातीयकस्य, तत्राप्यनियमः, विशेषाभावात् । अथवा पशूनामेव, न माषादीनाम् ; तेषामाढकादिपरिमाणान्तरापेक्षया-सङ्ख्याव्यवहारो लोके । न स्वरूपतः भृतित्वाभावादिति दर्शितं भाष्ये । अत एव माषैरप्यनन्तरैर्न सम्बध्यते । अतः पशूनामेव । तत्राप्यनियमः अविशेषात् । एकवचनान्तत्वाच्च तस्येति न बहुवचननिर्दिष्टानां माषादीनां निर्देशः । अत एवाजादीनामपि न निर्देशः । गवादीनां चत्वारि परिशिष्टानि । तत्र महोपकारित्वादप्रतिषिद्धत्वान्मुख्यत्वाच्च गवां निर्देशः । तेनायमर्थः—गवादिद्रव्याणि, तत्र च 'तस्य गोद्वादशशतं दक्षिणेति' । तस्माद्गवामेषा सङ्ख्या ॥

इति ज्योतिष्टोमे गवामेव द्वादशशतदक्षिणात्वाधिकरणम् ॥ ११ ॥

---

रित्याशयः । प्रथमतः क्रतुनिर्देशकत्वं दूषयति—**नैवमिति** । समाहाराभिप्रायमेकवचनमित्युक्तं दूषयति—**नापीति** । **अशाब्दत्वात्** प्राधान्येन शब्दागम्यत्वात् । चशब्दस्य समभिव्याहृतपदार्थोपसर्जनत्वेनैव तद्बोधकत्वस्य व्युत्पत्तिसिद्धत्वादिति न तच्छब्देन तत्परामर्श इति भावः । पञ्चमं पक्षमाह—**किन्त्विति** । जात्यभिप्रायं चैकवचनमिति भावः । **अनियम इति** । पशुजातीयस्य धान्यजातीयस्य वा अनियमेन परामर्शः सङ्ख्यान्वयश्चेत्यर्थः । **भृतित्वाभावादिति** । एतद्वाक्यश्रुतभृतिरूपदक्षिणात्वासम्भवादित्यर्थः । **अप्रतिषिद्धत्वादिति** । अश्वस्य महोपकारित्वेऽपि 'न केसरिणो ददाती'ति प्रतिषिद्धत्वान्न निर्देश इति भावः । एकाश्वदानं विना तु वचनानुपपत्तेर्निषेधसङ्कोच इति भावः । **मुख्यत्वादिति** । प्रथमातिक्रमे कारणाभावादित्यर्थः । अजाविसङ्ख्या तु कपिञ्जलन्यायेन त्रित्वरूपेति ज्ञेयम् । सूत्रे तेषामित्यनन्तरं प्रत्येकमिति शेषः ॥

इति ज्योतिष्टोमे गवामेव द्वादशशतदक्षिणात्वाधिकरणम् ॥ ११ ॥

१२

तत्र दान० किमेषा दक्षिणा ऋत्विग्भ्यो विभज्य विभज्य वा देया ? किमविभज्यैव ? उत विभज्यैवेति ? संशये, विशेषाश्रवणादनियमः। अथवा 'ऋत्विग्भ्यो दक्षिणां ददाति'ति दानाङ्गत्वेन ऋत्विग्बहुत्वस्य विवक्षितत्वादविभज्यैव सहितेभ्यो देया, न विभज्यैकैकस्मै, बहुवचनविरोधादिति प्राप्ते, अभिधीयते—

ऋत्विक्परिक्रयार्थेन दानमेतदिति स्थितम्।
तेन तेषां प्रधानत्वाद्बहुत्वं न विवक्षितम् ॥

अतः प्रतिप्रधानावृत्तेरेकैकस्यैव तद्दानम्। न चानियमः, आनमानर्थं हि तद्दानम्। यदि च दीयमानं द्रव्यमात्मोपयोगक्षमं भवति, तेन तेषामानतिः नान्यथा। तेनात्मीयं द्रव्यमृत्विजामुपयोगक्षमं कुर्यादिति दानविधेरर्थः। विभज्य च ददता सम्पूर्णं तदनुष्ठितं भवति, परिषदे तु ददता न तत्सम्पूर्णमनुष्ठितं स्यात्। पुनर्विभागापेक्षत्वात्तेषामुपयोगस्य 'तुथो वो विश्ववेदाः—विभजत्वि' च मन्त्रवर्णस्यापाक्षिकत्वात् छागन्याये-

---

१२

तत्र दानम्० पूर्वत्रैव विशेषचिन्तनात्सङ्गतिः। विशेषेति। विभागाविभागयोरश्रवणादुभयथापि च दानसिद्धेरित्यर्थः। अथवेति। ऋत्विजां सम्प्रदानकारकत्वेनोपादेयत्वात्तद्विशेषणतया बहुत्वविवक्षेत्यर्थः। ऋत्विगिति। परिक्रयार्थत्वेनेति भावप्रधानम्। स्थितम् पूर्वपादे ऋत्विग्दानमित्यधिकरणे। प्रधानत्वादिति। 'मैत्रावरुणाय दण्डं प्रयच्छती'तिवद् दृष्टार्थतावशेन कर्मणाभिप्रेतत्वेन प्राधान्यस्य विवक्षणादृत्विजामुद्देश्यत्वान्न तद्विशेषणबहुत्वविवक्षेत्यर्थः। आनमनेति। एतच्चातिशयार्थमुक्तम्। वस्तुतो यथेष्टविनियोगत्वरूपस्वत्वापादनान्तमुख्यदानपदार्थस्य विभागमन्तरेणासिद्धेरेव तत्सिद्धेः। अन्यदप्युपोद्बलकमाह—तुथ इति। हे गावः विश्वस्य विभागादेर्वेदिता तुथो नाम देवपक्षी युष्मान् विभजत्विति मन्त्रार्थः। अस्य च ऋत्विग्भिः करिष्यमाणविभागानुवाद-

नापि सिध्यति विभागः । यत्र त्वेकमेव द्रव्यं दक्षिणा, यथा 'धेनुर्दक्षिणा' 'अन्वाहार्यो दक्षिणे'ति तत्र विभागासम्भवादविभज्यैव दानम् ॥

इति गोदक्षिणाया विभज्य दानाधिकरणम् ॥ १२ ॥

१३

समं० स्थिते विभागे, चिन्त्यते—किं समो विभागः स्यात् ? उत प्रयासानुरूपः अथवा समाख्यानुरूपः ? इति । विशेषाश्रवणात्साम्ये, लोकवद्वा प्रयासानुरूप्ये प्राप्ते—द्वादशाहे दीक्षाक्रमवाक्यगताद्धर्यादिसमाख्यानात् ब्राह्मणाच्छंसिप्रभृतीनां तदनुरूपो विभागः प्रकृतावध्यवसीयते ॥

इति समाख्यानुसारेण दक्षिणाविभागाधिकरणम् ॥ १३ ॥

१४

तस्य० एवं प्रकृतौ दक्षिणास्थितिर्निरूपिता । तस्यां हि निरू-

---

कत्वेनाप्युपपत्तेर्न्यायोपोद्बलकतामात्रं ज्ञेयम् । यत्र त्विति । तथा च तत्र ददातेरुद्देशपूर्वकत्यागमात्रे लक्षणेति भावः । अन्वाहार्यस्य तु विभागसम्भवात्तद्ग्रहणं चिन्त्यमित्याहुः । सूत्रं स्पष्टार्थम् ॥

इति गोदक्षिणाया विभज्य दानाधिकरणम् ॥ १२ ॥

१३

समं स्यात्० उपजीवकत्वसङ्गतिमाह—स्थित इति । सिद्धान्तमाह—द्वादशाह इति । 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'त्यादिक्रमविधायकवाक्ये अर्धिनस्तृतीयिनः, पादिन इति समाख्याकल्प्यविधिना महर्त्विजां ब्रह्मादीनां यो अंशस्तदर्धी तदधस्तनब्राह्मणाच्छंस्यादीनाम् । तृतीयांशः तृतीयिनामाग्नीध्रादीनाम् । चतुर्थांशः पादिनां पोत्रादीनामिति विभागः । सत्रे दक्षिणाया अभावात्प्रकृतौ निर्णीयत इत्यर्थः ॥

इति समाख्यानुसारेण दक्षिणाविभागाधिकरणम् ॥ १३ ॥

१४

तस्य धेनुः० पूर्वाधिकरणत्रयस्योपोद्घाततयाऽध्यायसङ्गतिं करिष्यमाणचिन्ता-

पितायां विकृतिषु बाधाबाधविचारः सुखेन वर्तिष्यते । इदानीं बाधाबाधौ विचार्येते । अस्ति भूर्नामैकाहः 'अथैष भूर्वैश्वदेवः, तस्य धेनुर्दक्षिणे'ति । तत्र संशयः--किं धेनुर्गवामेव विकारः । उत सर्वस्य गवाश्वादेरिति ? तदर्थमिदं विचार्यते--किं गवादीनां प्रत्येकं दक्षिणात्वम् ? उत सहितानामिति ? तत्र प्रत्येकं दक्षिणात्वं न्याय्यम् । कथम् ? गवादिशब्दा जातिवचनाः, दक्षिणाशब्दो गुणवचनः । स हि भृतित्वेन गुणेन वर्तते । जाति-गुणयोश्च जातिर्विशेष्यत्वेन । गुणस्तु विशेषणत्वेन । 'नीलमुत्पलं शुक्लो गौरि' त्यादिषु सार्वजनीनमेतत् । यच्च विशेष्यं तत्प्रधानमेव । अतो गवादीनां प्राधान्यम् । प्राधान्यात्तेषां गुणभूता दक्षिणा प्रत्येकमेतैः सम्बध्यते । गवादयो दक्षिणारूपाः कार्या इति । एवं बह्वीषु दक्षिणासु यस्याः कस्याश्चित्स्थाने निविशमानाया धेन्वा दक्षिणात्वमुपपन्नम् । तत्र गोलिङ्गेन धेनुत्वेन गवां निवृत्तिर्गम्यते । तस्माद्गवामेव निवर्त्तिका धेनुः, नाऽश्वादीनामिति प्राप्ते, अभिधीयते--

गवादीनां प्रधानत्वे दृष्टं नास्ति प्रयोजनम् ।
ऋत्विगानमनार्था तु दक्षिणा सप्रयोजना ॥

---

याश्चोपोद्घातत्वेनानन्तरसङ्गतिं साक्षाच्चाध्यायसङ्गतिमाह--**प्रकृताविति** । **वैश्वदेवः** विश्वेदेवदेवताकः । **विकारः** बाधिका । पूर्वपक्षमाह--**तत्रेति** । ननु सङ्ख्यागवादिद्रव्योभयविशिष्टदक्षिणाविधेः सिद्धान्तितत्वाद्गवादीनां विधेयत्वेन तद्गतसाहित्यविवक्षायां प्रत्येकदक्षिणात्वमनुपपन्नमिति शङ्कते--**कथमिति** । उक्तसिद्धान्तस्य प्रकारान्तरेणाक्षेपान्नानुपपत्तिरिति समाधत्ते--**गवादीति** । **भृतित्वम्** आनतिकरत्वम् । **विशेष्यत्वेनेत्य**नन्तरं प्रतीयत इति शेषः । एवमग्रेऽपि । **अत इति** । उक्तव्युत्पत्या गवादयो दक्षिणेति गवाद्युद्देशेन दक्षिणात्वविधिर्न तु दक्षिणा गवादिरूपेति गवादिविशिष्टदक्षिणाविधिरित्यर्थः । न च **दक्षिणो**द्देशेन सङ्ख्याया अपि विधौ विरुद्धत्रिकद्वयापत्तिरिति वाच्यम्, **तस्ये**त्यादेर्भिन्नवाक्यत्वाभ्युपगमात् । **दक्षिणे**त्यस्य च पूर्वत्रानुषङ्गात्तत्र च सङ्ख्याया अनन्वयाद्वैरूप्याप्रसक्तेः । न चैवमपि दक्षिणाशब्दस्य गवादिप्रत्येकान्वये-आवृत्तिप्रसङ्गाद्द्विध्यावृत्तेर्वाक्यभेद इति शङ्क्यम् । चशब्दवशेन सहितेष्वेव गवादिष्वन्वये न तदनापत्तेः साहित्यस्याविवक्षितत्वेऽपि दक्षिणान्वयवेलायां सहिततयोपस्थितिमात्रेण युगपद्दक्षिणान्वयस्यावृत्तिमन्तरेण सम्भवात् 'ऋद्धिकामाः सत्रमासीरन्नि'त्यत्र कामपदगतबहुत्वाविवक्षायामप्येकपदोपात्तानेकऋद्धिकामान्वयस्य युगपत्सत्र इवेति भावः । अतएव सिद्धान्ते पूर्वपक्षिणं प्रति दक्षिणाशब्दस्य बहुवचनान्तत्वापादनं सङ्गच्छते । प्रत्येकं दक्षिणाशब्दान्वये तदापत्तेरसम्भवादिति ध्येयम् । **गवादीनामिति** । गवादेर्निष्प्र-

यदि च द्रव्योपसर्जनत्वेन दक्षिणोच्येत, ततो गुणवचनत्वादाश्रयभूतगवादिद्रव्यगतवचनप्राप्तेर्गवादीनां बहुत्वाद्दक्षिणाशब्दो बहुवचनान्तः स्यात्। गुणवचनशब्दस्य व्याकरणे परोपसर्जनार्थत्वात्। स्वप्राधान्ये तु नैष दोषो भवति। तथाहि—यत् आनतिक्रयम्, तद्दक्षिणेत्युच्यते। एका चानतिरिति तदुपाधिको दक्षिणाशब्द एकवचनं लभते। गवादीनि तु तत्र विशेषणानि। न च विशेषणवशेन विशेष्ये सङ्ख्या सम्भवति। यथाऽग्नीषोमौ देवतेति। तेनानेकगवाद्यात्मिकैका दक्षिणा विधीयते। गवादिरूपया च भृत्या दृष्टं प्रयोजनमृत्विगानमनं श्रुतिरूपसंस्कृतैर्गवादिभिर्नास्ति दृष्टम्। तस्मादेका दक्षिणा गवाद्यात्मिका प्रकृतौ विकृतौ धेन्वात्मिका जातेति समस्तगवादिनिवृत्तिः॥

इति धेनुदानेन निखिलदक्षिणाबाधाधिकरणम्॥ १४॥

१५

एकां० 'यदि सोममपहरेयुः, एकां गां दक्षिणां दद्यात् अभिदग्धे सोमे पञ्चगाः दद्यादि'ति श्रुतम्। तत्र संशयः किमेका पञ्च गवां निवर्त्तिका,

---

योजनतया गुणस्य तदङ्गत्वायोगाद् घटस्य शुक्ल इतिवद्गुणस्यैवानतिरूपप्रयोजनाङ्गत्वेन प्राधान्यं न तु गवादेरित्यर्थः। ननु जातिगुणयोर्जातिर्विशेष्यत्वेनेति नियमात्कथं गुणप्राधान्यमत आह—**यदि चेति**। **आश्रयेति**। 'गुणवचनानामाश्रयतो लिङ्गवचनानी'त्यनुशासनादित्यर्थः। ननु सिद्धान्तेऽपि गुणवचनत्वानपायाद्दोषसाम्यमत आह—**गुणवचनशब्दस्येति**। एवं मुख्यानुपपत्तिमुक्त्वाऽभ्युच्चययुक्तिं श्लोकोक्तां व्याचष्टे—**गवादिरूपया चेति**। **सूत्रार्थस्तु**—'तस्य धेनुरि'ति श्रुता धेनुर्गवां निवर्तिका प्रकृतौ पृथक् दक्षिणाया गवादिरूपाया विधानात्तत्रापि गोत्वसामान्यात् न तद्विकारः स्यात् यथा सौर्यादीष्टिगुणभूतनिर्वपत्यादिशब्देन साम्यादाग्नेयविकारस्तथेति॥

इति धेनुदानेन निखिलदक्षिणाबाधाधिकरणम्॥ १४॥

१५

**एकां०** पूर्वोक्तसर्वदक्षिणानिवृत्तेरपवादात्सङ्गतिः। **गवामिति**। द्वादशशत-

किं वा सर्वस्य दाक्षिण्यस्येति। तदर्थमिदं विचार्यते—किं गामेकां दद्यादिति सम्बन्धः ? उतैकां गामिति ? तत्र—

द्वितीयाश्रुतिसामर्थ्याद्ददातिक्रियया ऽन्वयः।
एकया पञ्चभिश्चातः सर्वं देयं निवर्त्तते ॥

उच्यते—

ददातिसङ्गतौ सत्यां गोशब्दे लक्षणा भवेत्।
पाक्षिको वाऽनुवादः स्याद्विधौ वाक्यन्तु भिद्यते ॥

बहुषु गवादिषु चोदकप्राप्तेषु 'एकां दद्यादि'ति विहिते किं तदेकमित्यनिर्देशात् चोदकप्राप्तेषु यत्किञ्चिदिति गम्यते। गामित्यश्वादीनामप्युपलक्षणार्थं स्यात्। गोरपि वा पक्षे प्राप्तेः पाक्षिकोऽनुवादः स्यात्। न चैतदुभयमपि न्याय्यम्। अथ त्वेकां दद्यात्, ताश्च गामिति विधीयते, ततः प्राप्तक्रियाऽनुवादेनानेकार्थविधानाद्वाक्यं भिद्येत। यदि तु 'गां दद्यादि'ति गौरेव दक्षिणादाने विधीयते, ततस्तस्याश्चोदकप्राप्तैव द्वादशशतसङ्ख्या परिच्छेदिका प्राप्तेति, पञ्चैकशब्दावनर्थकौ स्याताम्, विधाने वाक्यभेदः। अथ धेनवद्विवक्षितैकसङ्ख्यगोविधानादेकशब्दोऽनुवादः। तथाऽप्यानर्थक्यम्। पञ्चशब्दस्त्वननुवाद एव, तस्माच्छब्दानर्थक्यपरिजिहीर्षया श्रुतिलक्षणमपि क्रियासम्बन्धमभिधाय वाक्यलक्षणो गोसङ्ख्यासम्बन्ध एव विधीयते ॥

यद्वा भवतु सङ्ख्ययोर्दानेनैवान्वयः, तथाऽपि ते प्रातिपदिकाभिहित-

---

सङ्ख्याकानामित्यर्थः। **तदर्थमिति**। दाने एकद्रव्यविधौ सर्वदक्षिणानिवृत्तिः। गोगतैकत्वविधौ तु तद्गतसङ्ख्यानिवृत्तिमात्रमिति क्रमेण पूर्वोत्तरपक्षार्थता। **अथेति**। गामित्यनेन सङ्ख्याजातिविशिष्टैककारकविधानादित्यर्थः। **पञ्चशब्दस्त्विति**। कपिञ्जलन्यायेन त्रित्वस्यैव गा इति बहुवचनात्प्राप्तेः पञ्चत्वानुवादासम्भव इत्यर्थः। विधाने च वाक्यभेदापत्तिरिति भावः। यद्यपि पञ्चपदसमभिव्याहाराद्बहुवचनस्य पञ्चत्व एव तात्पर्यान्नायं दोषस्तथाऽपि चोदकानुग्रहाय पञ्चपदस्य गोसम्बन्धविधावेव तात्पर्यग्राहकत्वमुचितमिति परिहारो ज्ञेयः। एतदस्वरसादाह—**यद्वेति**। श्रौतसम्बन्धलाभादिति

**सङ्ख्यात्वसामान्यात् द्वादशशतसंख्यास्थाने निविशेते। सा च प्रकृतौ गोपरिच्छेदेनैवोपकृतवतीति, तत्स्थानपतिते एक-पञ्चसंख्ये गामेव परिछिद्यातामिति, अश्वादीनामनिवृत्तिः ॥**

**इति एकां गामित्यनेन गोगतसंख्याबाधाधिकरणम् ॥ १५ ॥**

**१६**

**त्रिवत्सः० 'त्रिवत्सः साण्डः सोमक्रयणः' इत्यत्र तु साण्डानुवादेन त्रिवत्सविधौ सत्यग्नीषोमीयादिष्वपि प्रसङ्गात्सोमक्रयण एव त्रिवत्सो-विधीयते इति सर्वाणि क्रयद्रव्याणि निवर्तन्त इति विशेषः ॥**

**इति त्रिवत्से सोमक्रयसाधनमात्रबाधाधिकरणम् ॥ १६ ॥**

---

भावः। एकत्वस्याजाविगतत्रित्वसङ्ख्याविकारत्वं पञ्चत्वस्य चाश्वादिगतसङ्ख्याविकारत्वं वारयितुं **प्रातिपदिकाभिहितेत्युक्तम्**। तादृशी च गोगतद्वादशशतसङ्ख्यैवेति तत्सादृश्यादेकत्वपञ्चत्वयोस्तद्विकारत्वमेवेत्यर्थः। सूत्रं स्पष्टम् ॥

**इत्येकां गामित्यनेन गोगतसङ्ख्याबाधाधिकरणम्** ॥ १५ ॥

**१६**

**त्रिवत्सश्च०** आपवादिकी सङ्गतिः। **त्रिवत्स इति**। साद्यस्क्रे श्रुतमिदं त्रिवत्सर इत्यर्थः। **साण्डः** अनुत्कालितपुंस्त्वः। साण्डानुवादेन त्रिवत्सत्वविधौ प्राकृतऋषभस्यैव निवृत्तिः स्यादिति पूर्वपक्षं निरस्यति **साण्डानुवादेनेति**। साण्डशब्दस्य सर्वपशुसाधारणत्वात्साद्यस्क्राङ्गभूताऽग्नीषोमीयादिष्वपि प्रसङ्ग इत्यर्थः। एवञ्च **सोमक्रयण**शब्दस्यानुवादत्वासम्भवादानर्थक्यम्। सोमक्रयणविशिष्टसाण्डानुवादे तु विशिष्टोद्देशाद्वाक्यभेद इति भावः। **सोमक्रयणे इति**। प्रकृत्यर्थसोमक्रयानुवादेनेत्यर्थः। त्रिवत्सश्च धेनुवदिति सूत्रार्थः ॥

**इति त्रिवत्से सोमक्रयसाधनमात्रबाधाधिकरणम्** ॥ १६ ॥

१७

प्राकाशौ० अश्वमेधे श्रूयते 'प्राकाशावध्वर्यवे ददाती'ति । तत्र संशयः—किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ ? उताध्वर्युभागस्य निवर्त्तकाविति ? यदि प्राकाशौ ददातीति सम्बन्धः ततः कृत्स्नस्य, अथ प्राकाशावध्वर्यव इति ततस्तद्भागस्यैव । तत्र—

तदानन्तर्यसम्प्राप्तं बाधित्वाऽध्वर्युसङ्गमम् ।
द्वितीयाश्रुतिसामर्थ्याद्ददातीति क्रियान्वयः ॥

दानञ्च चोदकप्राप्तमुद्दिश्यते, न चोद्देश्यमध्वर्युणा शक्यं विशेष्टुम् । तस्मादध्वरं युङ्क्ते इत्येवमध्वर्युशब्दं कथंचिदृत्विङ्मात्रे व्याख्याय दानमात्रे प्राकाशविधिरिति, कृत्स्ननिवृत्तिः ।

उच्यतेऽध्वर्युसम्बन्ध एव प्राकाशयोरिह ।
विधीयतेऽथवाऽपूर्वं दानं द्वाभ्यां विशेषितम् ॥

अध्वर्युशब्दस्यानर्थक्यभयान्न दानमात्रे विधानम् । अतः क्रियान्वयनिमित्तो यः पश्चात्तनः सम्प्रदानस्याध्वर्योः सम्प्रदेयभूतयोश्च प्राकाशयोर्मिथः—सम्बन्धः, स एव विधीयते । अथवाऽध्वर्युशब्दस्यानर्थक्यपरिजिहीर्षयैव दानान्तरमेवापूर्वमध्वर्युप्राकाशविशिष्टं विधीयते । तेन च दृष्टार्थत्वादध्वर्य्वानतिसिद्धेस्तद्भागः प्राकृतो निवर्त्तत इति न कृत्स्ननिवृत्तिः ॥

इति प्राकाशाधिकरणम् ॥ १७ ॥

---

१७

**प्राकाशौ०** आपवादिकी सङ्गतिः । **प्राकाशाविति** । सुवर्णदर्पणाविति भट्टभास्करः । **तदिति** । प्राकाकाशपदेत्यर्थः । **अत इति** । अध्वर्युपदानर्थक्यदोषादित्यर्थः । **सम्बन्धत्वेति** । चतुर्थ्यभिहिताध्वर्युविशिष्टसम्प्रदानकारकोद्देशेन द्वितीयोक्तप्राकाशविशिष्टं कर्मकारकं विधीयत इत्यर्थः । एवंविधकारकसम्बन्धस्य दानक्रियाधीनत्वाद्ददातिरर्थप्राप्तानुवाद इति भावः । केचित्तु अध्वर्युप्राकाशयोः स्वस्वामिभावरूपसम्बन्धो विधीयते । स च प्राकाशयोरध्वर्यवे दानाद्भवतीति द्वितीयाचतुर्थीभ्यां सह ददातिरनुवाद इत्याहुः । अत्र च क्रयादिनाऽपि सम्भवतः स्वस्वामिभावस्य दानाक्षेपकत्वासम्भवात्तदप्युपपत्तिः । अशाब्दत्वेन च स्वस्वामिभावसम्बन्धस्य विधेयत्वानुपपत्तिरित्यस्वरसो बोध्यः । कारकशक्तेर्भावनोद्देश्यत्वादर्शनादाह **अथवेति** । सूत्रं स्पष्टार्थम् ॥

**इति प्राकाशाधिकरणम् ॥ १७ ॥**

१८

धेनुवच्चाश्व० 'उपहव्योऽनिरुक्तः' इत्युपहव्यसञ्ज्ञकमेकाहं विधाय श्रूयते-'अश्वःश्यावो दक्षिणा, स ह्यनिरुक्तः, स ब्रह्मणे देयः' इति। किमयमश्वो ब्रह्मभागस्य निवर्त्तकः? किं वा कृत्स्नस्येति? तत्र 'ब्रह्मणे देयः' इति वचनाद् ब्रह्मणे दीयमानस्तस्यैवानतिं कुर्वंस्तद्भागमेव निवर्त्तयति। प्राकाशवदध्वर्युभागं पुरुषान्तराणां चानत्यर्थं चोदकप्राप्तं दाक्षिण्यं दातव्यमेवेति प्राप्ते—

ब्रूमः—द्वे ह्येते वाक्ये क्रतुसंयुक्तमेकम्-अश्वःश्यावो दक्षिणेति। पुरुषयुक्तमपरं स ब्रह्मणे देयः इति। तत्र पूर्वेण वाक्येनास्मिन् क्रतावश्वो दक्षिणेत्यश्वेनानतिः कार्येति विहिते, यदन्यदस्मिन् क्रतौ चोदकेनानत्यर्थतया प्राप्तं तत्सर्वं धेनुन्यायेन निवर्त्तते। स चाश्वः क्रतौ भृतित्वेन विहितः सर्वर्त्विजां दातव्यः प्राप्तः सन्नुत्तरेण वाक्येन पुरुषान्तरेभ्योऽपनीय ब्रह्मणे दीयते। तेन पुरुषान्तराणां विनैव दक्षिणया प्रकारान्तरेणानतिः कर्त्तव्येति कृत्स्ननिवृत्तिः॥

इति श्यावाश्वेन कृत्स्नदक्षिणाबाधाधिकरणम्॥ १८॥

---

१८

धेनुवच्च० आपवादिकी सङ्गतिः। उपहव्य इति। एतन्नामक एकाहः क्रतुरित्यर्थः। अनिरुक्तः उपांशुत्वधर्मकत्वात्। श्यावः कपिशवर्णः। स हि यस्मादनिरुक्तः श्याववर्णस्य वर्णसमाहाररूपतया नीलादित्वेनानिर्वाच्यस्तस्मादनिरुक्ते क्रतावनुरूप इत्यर्थः। प्रकारान्तरेणेति। लौकिकेन प्रार्थनाद्युपायेनेत्यर्थः। न चाश्वानुवादेन श्यावत्वमात्रविधानान्न कृत्स्ननिवृत्तिरिति वाच्यम्, रुक्मललाट इति गुणान्तरश्रवणेन विशिष्टविधेरावश्यकत्वादिति। सूत्रे यथा हिरण्यस्य कृष्णलचरोर्भक्षे सर्वं ब्रह्मणे परिहरतीति पुरुषाय नयस्तथेत्यर्थः॥

इति श्यावाश्वेन कृत्स्नदक्षिणाबाधाधिकरणम्॥ १८॥

१९

तथा च० ऋतपेये 'औदुम्बरः सोमचमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देयः' इति। तत्र पूर्ववत्संशयपूर्वोत्तरपक्षाः। का पुनर्विशेषाशङ्का? पूर्वत्र द्वे एव वाक्ये। इह त्वेकमिदं वाक्यम्। अतः प्रथमं क्रतुसंयोगाभावाद् ब्रह्मभागस्यैव निवृत्तिरिति विशेषाशङ्का। यद्यप्येकं वाक्यम्, तथाऽपि दक्षिणासंयोगात्सर्वनिवृत्तिरिति केचिदेवं वर्णयन्ति। न त्वेतद्युक्तम्, अत्रापि द्वे एव वाक्ये सोमचमसो दक्षिणेत्येकं स ब्रह्मणे देय इत्यपरं स्पष्टमेव। अतो नायं विशेषः। सिद्धान्तोऽप्ययुक्तः। सति ह्येकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः स्यादिति वक्ष्यामः। तस्मादेवं वक्तव्यम्। अत्र हि केषांचिद्दक्षिणाद्रव्याणां प्रतिषेधःश्रूयते। असौ सत्यां प्राप्तौ घटते। तस्मान्नूनं सोमचमसः सर्वस्यानिवर्त्तक इति विशेषाशङ्का। सोमचसमस्तुत्यर्थोऽयमर्थवादः 'ऋतं वै सोमः, अनृतं पशवः, यत्पशून्दद्यात् सोऽनृतं कुर्यादि' त्यादिः न प्रतिषेधः। तस्मात्पूर्ववत्सर्वनिवृत्तिः॥

इति सोमचमसाधिकरणम्॥ १९॥

---

१९

**तथाच०** आतिदेशिकी सङ्गतिः। गुरुमतेन विशेषाशङ्कां दर्शयति—**पूर्वत्रेति।** स ह्यनिरुक्त इत्यर्थवादव्यवधानादिति भावः। गुरुमतेनैव परिहारमपि दर्शयति—**यद्यपीति।** ब्रह्मभागमात्रपरत्वे दक्षिणाशब्दस्य तदेकदेशे लक्षणापत्तेरिति भावः। **अत्रापीति** अन्यथा तच्छब्दानर्थक्यादिति भावः। **सति हीति।** चमसः क्रतोर्दक्षिणा स च ब्रह्मणे इत्यर्थद्वयस्यैकेन वाक्येन बोधनासम्भवाद्या ब्रह्मणे दक्षिणेत्यनूद्य सोमचमसविधानाद्ब्रह्मभागस्यैव निवृत्तिरित्युत्तराधिकरणे वक्ष्याम इत्यर्थः। दक्षिणाशब्दस्यैकदेशलक्षणा त्वेकवाक्यतानुरोधान्न दोष इति भावः॥

इति सोमचमसाधिकरणम्॥ १९॥

२०

यदि तु० इदं सूत्रद्वयं पूर्वोत्तरपक्षप्रयोजनकथनार्थत्वेन व्याख्याय, पुनरन्यथाऽव्याख्यातम्। सोमचमसो ब्रह्मणे देय इत्येकमिदं वाक्यमिति कृत्वा चिन्त्यते। यद्येकवाक्यं तदाऽपि किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवृत्तिः? उत ब्रह्मभागस्यैवेति? दक्षिणासंयोगात् दक्षिणायाश्च चोदकेनैकस्याः प्राप्तत्वात्तत्संयुक्तश्चमसः सत्यपि ब्रह्मसंयोगे कृत्स्नां दक्षिणां निवर्तयेत्। इतरथा हि ब्रह्मभागे दक्षिणावयवे दक्षिणाशब्दो लक्षणया स्यात्। तस्माद्दक्षिणासंयोगात्कृत्स्ननिवृत्तिः, ब्रह्मसंयोगाच्च पुरुषान्तरापनय इत्येवमुत्सूत्रं पूर्वपक्षं कृत्वा, यदि ब्रह्मण इति सिद्धान्ते वर्णयितव्यम्। एकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः ब्रह्मणे दक्षिणात्वेन सोमचमसो देय इति। न खल्वेकं वाक्यं सोमचमसः क्रतोर्दक्षिणा, नाऽन्यत्, सोऽपितु ब्रह्मणे देयः नान्येभ्य इत्यर्थद्वयं शक्नोति विधातुम्। भिद्येत हि तथा वाक्यम्। तस्माद्दक्षिणावयवे ब्रह्मभागे दक्षिणाशब्दमङ्गीकृत्य तत्रैव सोमचमसो विधातव्यः।

किं च दक्षिणाशब्दो भृतिवचनः, स च कर्मापेक्षयाऽपि प्रवर्त्तते।

---

२०

यदि तु० यदि तु ब्रह्मणः सोमचमसो न तु क्रतोस्तदा ब्रह्मभागो न प्राकृत दक्षिणाविकारः स्यादिति पूर्वपक्षप्रयोजनम्। सर्वं निवर्तते तासां दक्षिणानां क्रतुप्रधानत्वात्पुरुषमात्रापनयादिति सिद्धान्तप्रयोजनम्। **तस्मादिति**। वाक्यभेदप्रसङ्गादित्यर्थः। ननु त्वन्मतेऽपि 'सोमचमसो देयः स चौदुम्बर'इति विधेयभेदाद्वाक्यभेद इति विशिष्टविधिरावश्यकः। एवञ्च दक्षिणाशब्दमुख्यार्थानुरोधात् ब्रह्मसम्बन्ध्यौदुम्बरचमसरूपकृत्स्नक्रतुदक्षिणाविधिरेव युक्त इति सर्वनिवृत्तिः स्यात्। प्राकाशावित्यत्र तु दक्षिणाशब्दाश्रवणात्तद्भागमात्रनिवृत्तिरित्याशङ्क्याह—**किञ्चेति**। ब्रह्मशब्दसमभिव्याहारात्तद्दक्षिणाया एव विधानं न तु सर्वक्रतुदक्षिणायाः। तस्याः प्रतिसम्बध्याकाङ्क्षायाः समभिव्याहृत ब्रह्म-

अस्मिन् कर्मणीयं भृतिरिति। कर्त्रपेक्षयाऽपि प्रवर्त्तते अस्य पुरुषस्य कुर्वाणस्येयं भृतिरिति। तदिह यदि द्वे वाक्ये ततो यत् पुरुषविशेषासंयुक्तं तत् प्रकरणात् क्रतुना सम्बध्यमानं क्रत्वपेक्षयैव दक्षिणात्वं चमसस्य विदधत्क्रतुगतं कृत्स्नं दाक्षिण्यं निवर्त्तयेदेव। यदा पुरुषविशेषसंयुक्तमेकं वाक्यं तदा तदपेक्षयैव दक्षिणात्वं चमसस्य विदधत् तद्भागमेव निवर्त्तयति। तद्भागश्च यद्यपि क्रत्वपेक्षया दक्षिणावयवः, तथाऽपि ब्रह्मापेक्षया भृतित्वान्मुख्यैव दक्षिणेति, न लक्षणाप्रसङ्गः। तस्मादेकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः। 'सर्वं वा पुरुषापनयादि'ति कृत्वाचिन्तोद्घाटनम् ॥

इति सोमचमसेन कृत्स्नदक्षिणाबाधाधिकरणम् ॥ २० ॥

## २१

यजुर्युक्ते० वाजपेये 'सप्तदश रथाः सप्तदश दास्यः' इति दक्षिणा विधाय श्रूयते—'यजुर्युक्तं रथमध्वर्यवे ददाती'ति। तत्र संशयः-किं यजुर्युक्तो रथोऽध्वर्युभागं निवर्त्तयेन्नेति। तत्र—

प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधकः।
न चायं बाधकस्तस्य प्राप्तस्य नियमो ह्यसौ ॥

प्राकाशौ ह्यपूर्वावध्वर्य्वानतिकरत्वेन विधीयमानौ युक्तं तत्र यत्तद्भागं प्राकृतं बाधेते इति। इह तु सप्तदशरथाः, द्रव्यान्तराणि च

---

शब्देनैव निवृत्तौ प्राकरणिकक्रतुसम्बन्धानौचित्यादित्यर्थः। तदिदमुक्तं **कर्त्रपेक्षयापीति**। तदपेक्षयैवेति च दक्षिणापदे लक्षणां परिहरति—**तथापीति** ॥

इति सोमचमसेन कृत्स्नदक्षिणाबाधाधिकरणम् ॥ २० ॥

२१

**यजुर्युक्तम्**० आपवादिकी सङ्गतिः। **यजुर्युक्तमिति**। 'इन्द्रस्य वज्रोऽसी'त्यादि यजुर्मन्त्रैः सज्जीकृतमित्यर्थः। **न चायमिति**। अपूर्वविध्यपेक्षया नियममात्रविधौ

वाजपेयस्य दक्षिणात्वेन विहितानि इति। तत्र यजुर्युक्तस्यापि रथस्य प्राप्तमेव दानं स त्वध्वर्यवे, अन्यस्मै वा कस्मैचिद्दातव्यः सन्नध्वर्यो-र्नियम्यते। ततश्च नायमर्थः—यदध्वर्यवे ददाति तद्यजुर्युक्तं रथमिति किं तर्हि? यजुर्युक्तं यद्ददाति तदध्वर्यव इति। तस्य च द्रव्यान्तरसहित-स्यैव दानं प्राप्तमिति तादृशस्यैव नियमान्न देयान्तरनिवृत्तिः। अध्वर्युभागे तु यथाप्राप्ते यजुर्युक्तो नियम्यते॥

इति यजुर्युक्ताधिकरणम्॥ २१॥

इति श्रीमत्पार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
दशमाध्यायस्य तृतीयः पादः

---

लाघवादिति भावः। नियमाकारं दर्शयति—किन्तर्हीति। ननु यदध्वर्यवे ददाति तत् यजुर्युक्तमित्यपि नियमसम्भवादध्वर्युभागान्तरव्यावृत्तिरत आह—अध्वर्युभागे त्विति। द्रव्यान्तरसाहित्यप्रापकशास्त्राबाधायाध्वर्यादिसमाख्याप्राप्तविभागाबाधाय च यद्यजुर्युक्तं ददाति तदध्वर्यव इत्येव नियमविधिर्युक्त इति भावः। सूत्रं स्पष्टार्थम्॥

इति यजुर्युक्ताधिकरणम्॥ २१॥

इति श्रीमद्विद्वन्मान्यतत्सद्रामभट्टात्मजवैद्यनाथकृतायां शास्त्रदीपिका-व्याख्यायां प्रभाख्यायां दशमाध्यायस्य तृतीयः पादः।



# दशमाध्याये चतुर्थः पादः

१

प्रकृति० नक्षत्रेष्टौ श्रूयते 'सोऽत्र जुहोती'ति । अत्र मन्त्रा आम्नाताः—'अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा' इत्येवमादयः । सन्ति च प्रकृतौ नारिष्टहोमाः । तत्र संशयः—किं वैकृतैरुपहोमैः प्राकृता नारिष्टहोमा बाध्यन्ते ? किं वा समुच्चयः ? इति । तदर्थञ्च किं वैकृताः प्राकृतानां कार्ये वर्त्तन्ते ? नेति ? तत्रोपहोमाः कार्यमपेक्षमाणाः होमत्वसामान्यात्प्राकृतहोमकार्ये उपस्थिते तत्रैव विधीयन्ते । तस्मिंश्च कार्ये प्रत्यक्षश्रुतैरुपहोमैर्निर्वर्तिते तत्कार्यकराः प्राकृता निवर्त्तन्ते शरैरिव कुशा इति प्राप्ते ब्रूमः—

सति प्राकृतकार्यत्वे भवेद्बाधो न चास्ति तत् ।
साधारणं न होमत्वं तस्योपस्थापनक्षमम् ॥

सर्वसाधारणं हि होमत्वं न नारिष्टकार्यमुपस्थापयितुमर्हति । विधीयमानस्य तु होमविशेषस्य दूरापास्तमेव तदुपस्थापकत्वम्, अदृष्टार्थ-

---

## चतुर्थः पादः

१

प्रकृति० पूर्वपादे बाधापवादत्वेनाबाधचिन्तनमिह तु प्राकृतवैकृतपदार्थसमुच्चयस्येति पादान्तरत्वम् । स इति । इष्टिकर्त्तेत्यर्थः । अत्र नक्षत्रेष्टौ । एषामेवोपहोमा इत्याख्या । क्वचित् सोऽनुजुहोतीति पाठः । अनु प्रधानानन्तरम् । **आम्नाता इति ।** न तु होमानुवादेन विहिताः । येन नारिष्टहोमानुवादेन मन्त्रमात्रविधिः स्यादिति भावः । वस्तुतो होमानुवादेनानेकमन्त्रविधौ वाक्यभेदस्स्यादिति ज्ञेयम् । आदिपदेन 'अम्बायै दुलायै नियतये अभ्रूपत्यै मेघपत्यै निगर्वपत्यै निपुणिकायै इति स्वाहान्ताः षण्मन्त्राः सङ्गृह्यन्ते । **साधारणमिति ।** अग्निहोत्रादिसाधारणमित्यर्थः । **तस्य** नारिष्टहोमकार्यस्य । साधारणस्यानुपस्थापकत्वे सुतरामसाधारणस्यानुपस्थापकत्वमित्याह—**विधीयमानस्य त्विति ।** प्रत्यक्षानुमानाभ्यां कार्यापत्तिं निरस्यति—**अदृष्टार्थत्वाच्चेति । नचेति ।** आज्यभाग-

त्वाच्च होमानाम् । प्रमाणान्तरमपि तत्कार्यकरत्वे नास्ति । न च प्रत्यक्षश्रुतैरुपहोमैर्निराकाङ्क्षा विकृतिः प्राकृतमित्थम्भावं नापेक्षत इति वाच्यम् । सन्निपातिनां द्रव्यदेवतासंस्काराणामलाभे कथम्भावस्यापरिपूर्णत्वात् । तस्मादुभयेषामभ्युच्चयः स्यात्, अतिदेशोपदेशाभ्यामवगतत्वात् । यदुक्तमाद्येऽभ्युच्चयं वक्ष्याम इति तदिदं शरास्तु बर्हिः शब्दलक्षिते कुशकार्ये विहिता युक्तं यत्कुशान्बाधन्ते । तदिदमुक्तं 'चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानादि'ति । यद्वाऽधिकरणान्तरमिदम् । उभयोः कुश-शरयोः प्रमाणावगतत्वात्समुच्चयः । सिद्धा प्राकृतकार्यत्वाच्च निवृत्तिः ।

एवं वा—वाजपेये श्रूयते 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति'ति । प्रकृतौ 'उपावर्तध्वमि'ति मन्त्रेण दर्भाभ्यां स्तोत्रोपाकरणम् । तदिह किं रथो दर्भयोर्निवर्तकः, घोषश्च मन्त्रस्य ? उत रथस्य घोष उभयोर्निवर्तक इति संशयः । तदर्थश्च किमयं समाहारद्वन्द्वो रथेन घोषेण चेति ? किं वा षष्ठीतत्पुरुषः ? तत्र षष्ठीसमासपक्षे पूर्वपदस्य लक्षणा स्यात्, अतः समाहारद्वन्द्वः । तेन रथो घोषश्च द्वयमुपाकरण-

---

विधिनिराकाङ्क्षं गृहमेधीयवदित्यर्थः । उपहोमानामाज्यभागवत् क्लृप्तोपकारत्वाभावात् गृहमेधीयवैषम्यमिति समाधाने सत्यपि मुख्यं समाधानान्तरमाह—**सन्निपातिनामिति** । नक्षत्रेष्टौ द्रव्यदेवताम्नानेऽपि तत्संस्काराम्नानाभावादिति भावः । **आद्ये** अध्यायाद्यसूत्रे । पूर्वपक्ष्युक्तदृष्टान्तवैषम्यमाह—**शरास्त्विति** । तत्र शरमयमिति मयटो विकारार्थत्वाद् बर्हिःशब्देन तत्कार्यसाधनद्रव्यलक्षणया बर्हिःकार्यसाधनं शरविकार इति विधीयते । बर्हिः कार्यकराणाञ्च शराणां केवलशरविकारत्वोपपत्तिरिति युक्तं कुशबाधकत्वमित्यर्थः । **तदिदमिति** । प्राकृतचोदनालिङ्गबर्हिःसंयोगे तद्विकारो बाधः प्रतीयेत प्रकृतिवाचकबर्हिः पदसन्निधानादिति सूत्रार्थः । प्राकृतनारिष्टहोमकार्यज्ञापकाभावात्कर्मोपहोमादि संस्कारश्चादृष्टार्थः । विकृतावधिकमिति मुख्यसूत्रार्थः । **समुच्चय** इति मयटः प्राचुर्यार्थत्वात् शरसंयुक्ताः कुशाः कार्या इत्याशयेन । 'नित्यं वृद्धशरादिभ्यः' इति विशेषतो विकारार्थे मयडनुशासनात् सिद्धान्त इति ज्ञेयम् ॥

## वर्णकान्तरम्

**एवं वा** । यद्वेति विचारे पूर्वपक्षमान्द्याच्चोदनेत्यादिसूत्रस्य वर्णकान्तरमिदम् । समुच्चयापवादात्सङ्गतिः । **रथेति** । **माहेन्द्रो** ग्रहः । **उपाकरोतीति** । प्रवर्तयतीत्यर्थः ।

साधनम् । तत्र रथो द्रव्यत्वसामान्यात् दर्भयोर्निवर्तकः, घोषस्तु मन्त्रस्य, शब्दत्वसामान्यात् । एवं च नावश्यं रथस्यैव घोष आदर्तव्यः घोषस्याविशेषणात् । येन केन चिदपि घोषेण कार्यसिद्धेरिति प्राप्ते—

ब्रूमः—इतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिवृत्तं स्यात्, तथा तु रथघोषाभ्यामिति द्विवचनं स्यात् । समाहाराश्रयणे तु द्वे अपि पदे लक्षणार्थे स्याताम् । तत् पूर्वपदमात्रे लक्षणावृत्तिमङ्गीकृत्य षष्ठीसमासाश्रयणम् । तस्माद्रथस्यघोष उपाकरणस्य साधनम् । स च प्राकृतं साधनं मन्त्रदर्भौ निवर्त्तयति ॥

इति नारिष्टहोमाधिकरणम् ॥ १ ॥

२

सर्वत्र तु० बृहस्पतिसवे श्रूयते 'बार्हस्पत्यं ग्रहं गृह्णाती'ति । विषुवति 'अर्कं गृह्णाती'ति । महाव्रते 'शुक्रं गृह्णाती'ति । अश्वमेधे सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णाती'ति । एवञ्जातीयका वैकृता ग्रहाः प्राकृतानामैन्द्रवायवादिग्रहाणां निवर्तकाः, न वेति संशये ? ग्रहाणां यागनिर्वृत्त्यर्थत्वेनैककार्यत्वात्प्रत्यक्षश्रुतैः वैकृतैर्ग्रहैर्निर्वृत्ते यागे चोदकप्राप्ता निवर्तन्ते इति प्राप्ते ब्रूमः—

---

लक्षणेति । रथसम्बन्धिनीति शेषः । अविशेषणादिति । रथेनेति शेषः । न च रथघोषयोः क्रियान्वयोत्तरमरुणैकहायनीन्यायेन पार्ष्ठिकान्वयाद्रथघोषनियम इति शङ्क्यम् । समासावगतैकक्रियान्वयातिरिक्तस्य रथघोषयोः पार्ष्ठिकान्वयस्याननुभवादपेक्षाविरहाच्च तन्नियमानुपपत्तेः । इतरेतरयोगद्वन्द्वेन सहैव समाहारद्वन्द्वं दूषयति—इतरेतरेति । लक्षणार्थे समाहारलक्षणार्थे ॥

इति वर्णकसहितं नारिष्टहोमाधिकरणम् ॥ १ ॥

२

सर्वत्र तु० आपवादिकी सङ्गतिः । विषुवन्नामैकाहक्रतुः । अर्कम् एतन्नामकं ग्रहम् । येषामिति । आहवनीयादीनां पदादिभिर्बाधो व्रीह्यादीनाञ्च यवादि-

येषां मिथोऽनपेक्षाणां कार्येणैकेन सङ्गतिः ।
तेषां बाधो विकल्पो वा नैवमस्ति ग्रहे पुनः ॥

न हि यागनिर्वृत्तौ ग्रहावाक्यैर्विधीयन्ते बार्हस्पत्येन यजेतेति, येन निरपेक्षा यागं निर्वर्तयेयुः । प्रयोगवचनस्तु चोदकप्राप्तान् उपदिष्टांश्च ग्रहान् यौगपद्येन गृह्णन् सहितानामेव यागान्वयं गमयति । न च दृष्टार्थानि ग्रहणानि । विनापि ग्रहणेन यागनिवृत्तिसिद्धेः । यश्च ग्रहेषु देवतोद्देशः, सोऽप्यन्तादृष्टार्थ एव । न हि ग्रहणस्य देवतया किञ्चिद्दृष्टमस्ति । न चैकेन ग्रहणेन देवतोद्देशेन वा यद्दृष्टं तदन्येन क्रियत इत्यत्र प्रमाणमस्ति । अतो यथा प्रकृतावैन्द्रवायवादिग्रहाणां समुच्चयः, तथा प्राकृतवैकृतानामपि भवितुमर्हति ।

आह—भवत्वेवं ग्रहान्तरविधौ 'अर्कं गृह्णाती' त्यादौ । बार्हस्पत्ये तु प्राकृतेष्वेव देवतामात्रं विधीयते, न ग्रहान्तरमित्यनुदाहरणम् । ग्रहणविधाने श्रुतिः देवताविधाने वाक्यम् । अतो ग्रहणविधिरेव न्याय्य इति चेत्—न वाक्यार्थविधेरवर्जनीयत्वात् देवतापदस्याप्रमादपाठात् । तेनो-

---

भिर्विकल्प इत्यर्थः । नैवमित्यादि व्याचष्टे—नहीति । ग्रहाणां यागनिष्पत्तिरूपदृष्टार्थत्वेऽपि श्रुत्याद्यविनियुक्तानां प्रकरणसहकृतप्रयोगविधिना युगपदेव विधानान्न प्रकृतौ विकल्पो न वा विकृतौ बाध इत्यर्थः । एवञ्च प्रमाणसिद्धे समुच्चये ग्रहणरूपसंस्कारभेदाद्ग्राह्यभेदात्तत्तद्यागाभ्यासरूपकार्यभेदात्तदुपपत्तिरिति भावः । ननु प्रयोगवचनात्प्रागेव ग्रहाणां लिङ्गेनैव विनियोगादेकार्थतया 'भगो वां विभजत्वि'ति विभागमन्त्राणामिव न समुच्चयः स्यादित्याशङ्क्याह—न चेति । यत्र क्वचिदवस्थितसोमरसस्य देवतोद्देशेन त्यागसम्भवादित्यर्थः । तदुक्तम्—

शक्यते चागृहीतेऽपि यत्र क्वचिदवस्थिते ।
द्रव्येऽस्मिन् देवतोद्देशमित्यदृष्टार्थता विधेरिति ॥

देवतोद्देशरूपविशेषणमुखेन तु सुतरामदृष्टार्थतेत्याह—यश्चेति । न च निर्वाप इवात्राऽपि देवतास्मरणार्थत्वाद्दृष्टार्थत्वमाशङ्कनीयम् । तद्वदत्र पूर्वं देवतात्वानवगमादिति भावः । 'ग्रहैर्जुहोती'त्यादितस्तत्रत्यात्रस्थत्वेनैव यागसाधनत्वावगमाद्ग्रहणं च विना तदयोगाद्दृष्टार्थत्वमेव ग्रहणानामिति प्रौढिवादमात्रमिदमित्याहुः । प्राकृतेष्वेवेति ।

भयविधानाद्वरं देवतामात्रविधानम्। न चाविपरिवृत्तिः, ग्रहाणां चोदक-प्राप्त्या विपरिवृत्तेः। यद्यपि च चोदकः कार्यप्रधानत्वान्न स्वरूपेण पदार्थान् स्पृशति, तथाऽपि कार्यमुखेन तेषां विपरिवृत्तेः शक्यं तदनुवादेन गुणविधानम्। येषाञ्च कार्यप्राप्त्युत्तरकालं पदार्थानामपि पृथगतिदेश इष्टः तन्मते सुतरामस्ति विपरिवृत्तिः। यस्त्वेवं नेच्छति तस्य 'एकां गां दक्षिणां दद्या'दिति दानान्तरमेव विधीयेत। तेन समस्तप्राकृतं दाक्षिण्यं धेनुन्यायेन निवर्तेत। तथा 'अध्यूध्नीं होत्रे हरती'ति हरणान्तर-मप्राकृतं विधीयेत अध्यूध्नीप्रतिपत्त्यर्थम्। तत्राप्राकृतकार्यत्वात्प्राकृतं होतुरिडाभक्षणं न निवर्तयेत्। तस्माच्चोदकप्राप्तेषु बृहस्पतिमात्रविधानाद-नुदाहरणम्।

उच्यते—प्राकृतग्रहानुवादेन देवताविधौ तेषां बहुत्वात्, 'आग्नेया ग्रहा भवन्ती'तिवद् बहुवचनं स्यात्। यद्यपि चानुवाद्यगता सङ्ख्या न विवक्षिता, तथाऽपि बहुषु बहुवचनेनैव भवितव्यम्। सोऽयमभिधानबाधः। विशिष्टविधौ तु गौरवमात्रम्। तस्माद्देवताविशिष्टग्रहान्तरविधिरेव न्याय्य इति सूक्तमुदाहरणम्॥

इति बार्हस्पत्यग्रहादिभिरैन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम्॥ २॥

३

प्राजापत्येषु० वाजपेये श्रूयते—'सप्तदश प्राजापत्यान् पशूना-लभते' इति। सन्ति तु चोदकप्राप्ता आग्नेयादयः क्रतुपशवः। ते किं

---

अतिदेशेन प्रकृतितः प्राप्तग्रहानुवादेन बृहस्पतिदेवतामात्रविधिरित्यर्थः। येषां प्राभाकराणाम्। अध्यूध्नीम् पुंव्यजनावयवम्। आग्नेया इत्यग्निष्टुत्प्रकरणे वाक्यम्। शेषग्रन्थः सूत्रञ्च सुगमम्॥

इति बार्हस्पत्यग्रहादिभिरैन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम॥ २॥

३

प्राजापत्येषु० आतिदेशकी सङ्गतिः। क्रतुपशव इति। 'आग्नेयमग्निष्टोमे,

प्राजापत्यैर्निवर्त्यन्ते ? किं वा समुच्चीयन्ते ? इति। पशुत्वेन प्रकृतिलिङ्गेन संयोगान्निवृत्तिं मन्वानस्योत्तरम्—न पशुत्वं सवनीयादिकार्यमलमुपस्थापयितुमनेकसाधारणम्। न च प्राकृतपश्वनुवादेन गुणविधिः सम्भवति, देवतान्तरस्य सङ्ख्यान्तरस्य च विधौ वाक्यभेदात्। तस्मात्कर्मान्तराणि। तानि चादृष्टार्थत्वात् प्राकृतैः समुच्चीयन्ते ॥

इति वाजपेये क्रतुपशूनां समुच्चयाधिकरणम् ॥ ३ ॥

४

आमने० साङ्ग्रहण्यां श्रूयते 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोती'ति। सन्ति तु प्रकृतौ त्रयोऽनूयाजाः। ते किमामनहोमैर्बाध्यन्ते ? उत समुच्चीयन्ते ? प्रत्यक्षश्रुतत्वात् त्रित्वस्य च प्रकृतिलिङ्गत्वान्निवृत्तिः। अथवा 'यत्तिस्रो जुहोति, तदामनमसी'त्यादिभिर्मन्त्रैरित्यनुयाजेष्वेवमन्त्रविधिं मन्यते। त्रित्वविशिष्टहोमानुवादे विशिष्टानुवादाद्वाक्यभेदः। तस्मात्कर्मान्तराणि। न च त्रित्वमात्रमनेकसाधारणमनुयाजकार्यं शक्नोत्युपस्थापयितुमिति समुच्चयः ॥

इत्यामनहोमानां समुच्चयाधिकरणम् ॥ ४ ॥

---

ऐन्द्राग्नमुक्थ्ये' इति तत्तत्संस्थाकक्रतौ विहिता इत्यर्थः। पशुत्वेनेति। पशुयागत्वेनेत्यर्थः। अनेकेति। आग्नीषोमीयादिसाधारणमित्यर्थः। न च सुत्याकालीनपशुयागत्वसामान्यात्सवनीयकार्योपस्थितिः। तत्कारित्वे मानान्तराभावादेतद्वाक्यस्थालभतेश्च तल्लक्षकत्वे मानाभावाद्विधायकत्वेनोद्देश्यपरत्वायोगाच्चेति भावः। तदाह—अदृष्टार्थत्वादिति ॥

इति वाजपेये क्रतुपशूनां समुच्चयाधिकरणम् ॥ ३ ॥

४

आमने० अत्रापि सैव सङ्गतिः। साङ्ग्रहण्यामिति। 'वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामः' इति विहितेष्टावित्यर्थः। अनेकेति। परिध्यादिसाधारणमित्यर्थः। त्रित्वविशिष्टयागत्वन्तु विशिष्टानुवाददोषग्रस्तमित्युक्तमेवेति भावः ॥

इत्यामनहोमानां समुच्चयाधिकरणम् ॥ ४ ॥

५

उपगेषु० गवामयने महाव्रतं नामैकाहः। तत्र 'दिक्षु दुन्दुभयो नदन्ती'त्यादिविधाय श्रूयते 'पत्नय उपगायन्ती'ति। प्राकृतं च सामगानम् ऋत्विजश्चोपगातारः प्राप्ताः। तत्र पत्न्य उपगायन्त्यः किं सामगानस्य उपगातॄणामृत्विजाञ्च निवर्तिकाः? किं वा दुन्दुभ्यादिवादित्रनादानुपगायन्त्यो भिन्नविषयत्वादृत्विजामनिवर्तिकाः। इदमपरं सन्दिह्यते—किं गानस्योपचय उपगानम्? उतोपचयात्मकं गानमुपगानमिति? तत्र गानस्योपचय उपगानम्। गानशब्दश्च शारीर्याङ्गीतौ प्रसिद्धः। तस्माद्गानस्योपचयङ्काण्डवीणादिभिः कुर्वन्त्य ऋत्विजां निवर्त्तिकाः। भवतु वोपचयात्मकं गानमुपगानम् तथाऽपि गायतेः शारीरगीतिवचनत्वाच्छारीरमेवेदमुपगानं तच्छारीरस्योपचयो भवति, समानजातीयत्वात्। अतः सामगानस्यैवोपगाने पत्न्यो वर्त्तन्त इति ऋत्विजां निवृत्तिः—

उच्यते—नायमेकान्तः यच्छारीर एव गायतिरिति, तन्त्रीगानेऽपि प्रयोगात्। ततश्च यद्यपि गानस्येदमुपगानम्, तथाऽपि दुन्दुभ्यादीनां गानानामनन्तरविहितानां विपरिवर्तमानानामिदमुपगानं पत्नीभिः कर्त्तव्यम्। अपि चोपचयात्मकं गानमुपगानं सामानाधिकरण्यलाभात्। तच्च काण्डवीणादिभिः क्रियमाणं न कथञ्चिच्छारीरं सम्भवति। तेन

---

५

उपगेषु० आतिदेशिकी सङ्गतिः। उपगातार इति उद्गात्रादिकर्तृकसामगानस्य-उपबृंहणरूपगानकर्तार इत्यर्थः। उपगैश्च क्रियमाणं तत्सामगानमेवेति बोध्यम्। **इदमपरमिति**। गानस्योपचय इति पक्षे दुन्दुभिनादस्य गानत्वाभावात्पत्नीभिः क्रियमाणस्य तदुपचयत्वायोगेन प्राकृतसामगानोपगानस्यैवाङ्गीकार्यत्वेन प्राकृतोपगातृनिवृत्तिः। उपचयात्मकं गानमुपगानमिति पक्षे तु दुन्दुभ्यादिनादानां गानत्वाभावेऽपि पत्नीभिः क्रियमाणस्य गानत्वमात्रेण सन्निहितदुन्दुभिनादापेक्षयोपचयात्मकगानोपपत्तेर्भिन्नविषयतया न सामगानविषयप्राकृतोपगातृनिवृत्तिरिति सन्देहस्योपयोगो ज्ञेयः। **काण्डेति**। शरकाण्डादिनिर्मितवीणादिभिरित्यर्थः। शारीरगीतेः शारीर एवोपचय इत्यत्र मानाभावादिह काण्डवीणादिविधिबलादशारीरत्वेऽपि न क्षतिरिति भावः। सामानाधिकरण्ये-

वादित्रादिकमिदमुपगानम्, तत्कस्योपचय इति दुन्दुभ्यादीनां गानानां समानजातीयत्वात्प्रकृतत्वाच्च तेषामेवेदमुपगानम् पत्न्यः कुर्वन्तीति न सामविषयाणामृत्विजां निवृत्तिः ॥

इत्युपगानाधिकरणम् ॥ ५ ॥

६

संस्कारे० अस्त्यञ्जनाभ्यञ्जनं नाम सत्रम् । तत्र श्रूयते 'गौग्गुलवेन प्रातः सवने अभ्यञ्जते' इत्यादि । तत्किं प्राकृतस्य नवनीताभ्यञ्जनस्य निवर्तकम् ? नेति ? संशये, दृष्टार्थत्वादञ्जनाभ्यञ्जनयोः प्राकृतस्य वैकृतेन निवृत्तिः । सत्यम्, दृष्टार्थमभ्यञ्जनम्, तथाऽपि नैकार्थम्, नवनीताभ्यञ्जनस्य स्नेहनार्थत्वात्, गौग्गुलवादेस्तु चन्दनानुलेपनवद्रूक्षीकरणार्थत्वात् । न च प्राकृतेऽभ्यञ्जने गुणविधि, प्रातःसवन इति च, गौग्गुलवेनेति चानेकगुणश्रवणात् ॥

इति गौग्गुलवाभ्यञ्जनाधिकरणम् ॥ ६ ॥

---

नान्वयस्य ज्यायस्त्वात्तदभ्युपगमेनाह—भवतु वेति । शारीरमेवेति । काण्डवीणावादनं कुर्वन्तीभिर्मुखेन प्राकृतमुपगानं कार्यमित्याशयः । न कथञ्चिदिति । सामसाधनके प्राकृते उपगाने वीणादेः साधनत्वायोगाद्वीणादिसाधनकमुपगानान्तरमप्राकृतमत्र विधीयत इत्यर्थः ॥

इत्युपगानाधिकरणम् ॥ ५ ॥

६

संस्कारे० काण्डवीणादिविधिबलादुपगानान्तरसिद्धिवत् गौग्गुलवविधिबलात्कार्यान्तरसिद्धिरित्यतिदेशसङ्गतिः । गौग्गुलवेनेति । यन्त्रादिकृतगुग्गुलुद्रवेणेत्यर्थः । दृष्टार्थत्वात् उपलेपनाख्यदृष्टकार्यत्वात् । सिद्धान्तमाह—सत्यमिति । अत्र सत्यप्येककार्यत्वेऽभ्यञ्जनस्य कर्तृसंस्कारद्वारा प्रचारसौकर्यार्थत्वात्प्रातः सवनपूर्वभावितत्सिध्यर्थं नवनीताभ्यञ्जने विरोधाभावाद्भवत्येव समुच्चय इत्यप्याहुः । सूत्रेऽन्यसंयोगात् भिन्नकार्यत्वादित्यर्थः ॥

इति गौग्गुलवाभ्यञ्जनाधिकरणम् ॥ ६ ॥

७

आच्छादने० महाव्रते श्रूयते 'तार्प्यं यजमानः परिधत्ते, दर्भमयं पत्नी'ति । तत्र संशयः—किं तार्प्यं दर्भमयञ्च चोदकप्राप्तस्याहतस्य वाससो निवर्त्तकम्, नेति । तत्र 'कौपीनाच्छादने परिदधाती'ति प्रयुज्यते । तस्मिंश्च तार्प्येण कृते तत्कार्यस्याहतस्य निवृत्तिः । नैवम्, 'कम्बलं परिधत्ते' इत्युपरिवासस्यपि दर्शनात्, तार्प्यदर्भमययोश्च कौपीनाच्छादनेऽतीवायोग्यत्वात् तत्राप्याचारप्राप्तस्योत्तरीयस्य स्थाने विधीयते । किञ्चाधिकमिदं तार्प्यादिपरिधानं 'वासांसि विस्रंसयती'ति वासोबहुत्वानुवाददर्शनात् । तस्मादुपरिधारणे तार्प्यादिविधिरित्यहतस्यानिवृत्तिः ॥

इत्यहतवाससस्तार्प्यादिभिस्समुच्चयाधिकरणम् ॥ ७ ॥

८

साम० तत्रैव श्रूयते 'श्लोकेन पुरस्तात्सदसः स्तुवीत, अनुश्लोकेन पश्चादि' त्यादि । तत्र श्लोकादिभिः सामभिः प्राकृतानां गायत्रादिसाम्नां

---

७

आच्छादने० आतिदेशकी सङ्गतिः । तार्प्यम् घृताक्तकम्बलः । तृपाख्यवृक्षवल्कलमित्येक इति भट्टभास्करः । अहतं सद्यःकृतनुपभुक्तम् । तत्रेति । कौपीनं गुह्यम् । अतएव 'परिधानमधोंशुकमि'त्यमरः । दर्शनादिति । यद्यपि योगाद्रूढिर्बलीयसी तथाप्यतिदेशानुग्रहाय योगादर इत्याशयः । नन्वेवमप्युत्तरीयाहतबाध एवेत्यत आह—किञ्चेति । तथा च सिद्धवदनुवादसमुच्चयवचनेन न्यायप्राप्तबाधापवादात् कृत्वाचिन्तेयमित्याशयः । तेन यत्र न वासोबहुत्वदर्शनं तत्र वत्सत्वचं परिधत्त इत्यादिष्पुपरिधारणेऽहतनिवृत्तिरिष्टैवेति ध्येयम् ॥

इत्यहतवाससस्तार्प्यादिभिस्समुच्चयाधिकरणम् ॥ ७ ॥

८

साम० अत्रात्यातिदेशिकी सङ्गतिः । तत्रैव महाव्रते एव । सदसः सदोमण्डपात् । अनुश्लोकेन पश्चादित्यादिराद्यर्थः । उत्तरेति । स्तुत्यन्तरविधावनिवर्तकत्वे उक्ते सति

निवृत्तिः ? न वेति ? सन्देहे स्तुत्यर्थत्वान्निवृत्तिः । स्यादेवं यदि प्राकृतस्तुत्यनवादेन सामान्तरं विधीयेत, न त्वेवमस्ति । न हि प्राप्तस्तुत्यनुवादेन सामान्तरं 'पुरस्तात्सदसः' इति च देशान्तरं शाक्यं विधातुम् । अतः स्तुतिरेवात्र विधेया । सा चादृष्टार्था न प्राकृतीनां निवर्तिका भवितुमर्हति, एकार्थत्वानवगमात् । तदेतत् गतप्रायं विस्पष्टीकरणार्थमुत्तरविवक्षया वा ॥

इति श्लोकादिसाम्नां समुच्चयाधिकरणम् ॥ ८ ॥

९

अर्थे० क्वचिच्छ्रूयते—'कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः क्रौश्चानि भवन्ती'ति । किं कौत्सादीनि सामानि प्राकृतानां निवर्त्तकानि ? नवेति ? संशयः । तत्र साममात्रं श्रूयते, न स्तुत्यर्थता । तस्मात्स्तुत्यर्थानामनिवृत्तिः । सत्यम् न प्रत्यक्षः स्तुतिसंयोगः, प्रकरणात्तु क्रत्वर्थत्वेनावगतानि सामानि लिङ्गात्प्राकृतानां साम्नां कार्यमृगक्षराभिव्यक्तिमवलम्बमानानि प्राकृतानां निवर्त्तकानि भवन्ति ॥

इति प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम् ॥ ९ ॥

---

तद्विध्यभावे प्राकृतनिवृत्तिरित्युत्तराधिकरणसिद्धान्तसौकर्यमिति भावः । सामसु श्लोकादिष्वर्थान्तरस्य स्तुत्यन्तरस्य श्रुतेः प्राकृतानामबाध इति सूत्रार्थः ॥

इति श्लोकादिसाम्नां समुच्चयाधिकरणम् । ८ ॥

९

अर्थे तु० आपवादिकी सङ्गतिः । न स्तुत्यर्थतेति । तथा चादृष्टार्थत्वमिति भावः । लिङ्गादिति । दृष्टे सम्भवत्यदृष्टकल्पनायोगादिति भावः । अर्थे स्तुतिरूपप्रयोजने अश्रूयमाणेऽपि तद्द्वारैव शेषत्वात्प्राकृतस्य विकारो बाध इति सूत्रार्थः ॥

इति प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम् ॥ ९ ॥

१०

सर्वेषाम्० कौत्सादीनि निवर्तकानीत्युक्तम् । इदमिदानीं विचार्यते–किं कौत्सं सर्वेषां निवर्त्तकम्, तथा वसिष्ठस्य जनित्रे, तथा क्रौश्चानि ? उतैकमेकस्य, द्वे द्वयोः बहूनि बहूनामिति । अविशेषात्सर्वत्र सर्वेषां निवृत्तौ प्राप्तायामुच्यते—यत्रैकं श्रूयते, तत्रैकस्य निवृत्तिः यत्र द्वयं तत्र द्वयोः । यत्र बहूनि, तत्र बहूनामिति यावन्त्यत्र वैकृतानि, तावतामेव प्राकृतानां निवृत्तिः तावन्मात्रेणैव वैकृतसामोपदेशस्यार्थवत्त्वादितरनिवृत्तौ प्रमाणाभावात् ॥

इति कौत्सादिभिर्व्यवस्थया एकादिभिर्बाधाधिकरणम् ॥ १० ॥

११

स्तोमविवृद्धौ० प्रत्यक्षश्रुतैः सामभिस्तावत्सङ्ख्यानां प्राकृतानां विकार इत्युक्तम् । अथेदानीं विचार्यते–यत्र स्तोमविवृद्धिः यथा–द्वात्रिंशः पवमानोऽभिषेचनीयः' इत्यादौ, तत्र प्रत्यक्षश्रुतैः राजसामभिः प्राकृतानि विक्रियन्ते ? किं वा समुच्चय ? इति । तत्र विवृद्धस्तोमकेष्वागमेन सङ्ख्या-

---

१०

**सर्वेषाम्०** पूर्वत्रैव विशेषचिन्तनात्सङ्गतिरिति सूचयन्नाह—**कौत्सेति** । **अविशेषादिति** । सामविशेषकार्यस्तुतिविशेषार्थत्वाभावादित्यर्थः । **यत्रैकमिति** । बाधस्यागतिकगतित्वाद्यावतो बाधेन विना वैकृतोपदेशानुपपत्तिस्तावदेव बाध्यते नाधिकमिति भावः । तदाह **तन्मात्रेणेति** ॥

इति कौत्सादीनां व्यवस्थया बाधाधिकरणम् ॥ १० ॥

११

**स्तोम०** बाधाय बाधात्सङ्गतिः । **स्तोमः** स्तोत्रसाधनऋक्सङ्ख्या । **द्वात्रिंश इति** । अभिषेचनीयाख्यसोमयागो द्वात्रिंशस्तोमकपवमानाख्यस्तोत्रयुक्त इत्यर्थः । **प्रत्यक्षेति** । 'एकादश राजसामानी'ति वचनादित्यर्थः । **आगमेनेति** । सामान्तराणामानय-

पूरणं वक्ष्यते। तत्रागमेन विवृद्धौ पूरितायां प्रत्यक्षश्रुतानि राजसामानि विवृद्धाववकाशमलभमानानि प्राकृतबाधेन वर्तन्ते। तेनाविवृद्धौ विवृद्धौ च सर्वत्र बाध इति प्राप्ते ब्रूमः—

प्राकृतानामबाधेन वैकृतानामसम्भवः।
यत्र तत्रैव बाधः स्याद् विवृद्धौ त्वस्ति सम्भवः॥

न ह्यागमेन सङ्ख्यापूरणं वाचनिकम्। विवृद्ध्यन्यथानुपपत्त्या त्वागमः क्रियते। सा चेह विवृद्धिरुपदिष्टसामभिरेव सिद्ध्यतीति को नामाऽश्रुतानामागमं कृत्वाऽतिदिष्टानि बाधेत। तस्माद्विवृद्धौ समुच्चयः॥

इति स्तोमविवृद्ध्यधिकरणम्॥ ११॥

१२

पवमाने० अविवृद्धौ प्रत्यक्षश्रुतैः 'कौत्सम्भवती'त्यादिभिस्तावत्सङ्ख्यानां प्राकृतानामुद्वापः। विवृद्धौ तु प्रत्यक्षश्रुतानां राजसामादीनामधिकानामावाप इति स्थितम्। तत्र चिन्त्यते—किं यस्मिन्कस्मिंश्चित्स्तोत्रे यस्यां कस्याञ्चिदपि प्रत्यक्षश्रुतानामावापः, यतः कुतश्चिच्च प्राकृतानामुद्वापः? अथवा पवमानेष्वेव गायत्रीबृहत्यनुष्टुप्स्वावापोद्वापाविति? तत्र यत्र क्वचिदपि निवेशे वैकृतानामर्थवत्त्वादविशेषः।

---

नेनेत्यर्थः। पृथक्त्वनिवेशिन्याः सङ्ख्याया अभ्यासेनासिद्धेरिति वक्ष्यत इत्यर्थः। अविवृद्धाविति दृष्टान्तः। अविवृद्धाविवेत्यर्थः। शेषं सुगमम्। सूत्रार्थस्तु स्तोमविवृद्धावधिकसमुच्चयः द्रव्यस्य साम्नो विकारो बाधः इतरस्यागमस्येति॥

इति स्तोमविवृध्यधिकरणम्॥ ११॥

१२

पवमाने० पूर्वत्र विशेषचिन्तनाद्वृद्धिस्था? नात्मिकां सङ्गतिं दर्शयितुमुक्तं कीर्तयति अविवृद्धाविति। उद्वाप उद्धारः निवृत्तिरिति यावत्। आवापः प्रक्षेपः।

तन्निबन्धनश्च प्राकृतानामुद्वाप इति, सोऽप्यविशेषेणैव स्यात् । 'त्रीणि ह वै यज्ञस्योदराणि, गायत्री बृहत्यनुष्टुप् च, अत्र ह्येवाऽऽवपन्ति, अत एवोद्वपन्ती'त्येतत्तु हिशब्दोपबन्धात् वर्त्तमानापदेशरूपत्वाच्चाविधायकं नावापोद्वापौ नियन्तुमलम् । यद्यपि नियामकम्, तथाऽपि पवमानविषययोरेवावापोद्वापयोर्देशविधानार्थं न स्तोत्रान्तरपरिसङ्ख्यानार्थम् इति ।

उच्यते—अपूर्वत्वादस्यार्थस्य विधायकमेवेदं स्तुतिकल्पितविधिशक्तिकम् । अतो वचनात्पवमानेष्वेवावापोद्वापौ । ननु 'एकविंशेनातिरात्रेणे'त्यादौ स्तोमविवृद्धिरविशेषेण श्रुता सर्वत्र कर्त्तव्या । सा चावापेनैव नाभ्यासेन, अभ्यासस्याश्रुतत्वादिति वक्ष्यति । ततश्च सर्वस्तोत्रेष्वावापे कर्त्तव्ये प्रत्यक्षश्रुतानामपि तत्र क्वचिदावापः स्यात् । सत्यम्, यदि सर्वत्रावापः स्यात् । स तु न्यायात्सर्वत्र प्राप्तौ 'अत्र ह्येवावपन्ति, अत एवोद्वपन्ती'ति वचनाद् गायत्र्यादिभ्योऽन्यत्र परिसंख्यायते । न चेदमेवावापस्य वचनमिति निबन्धकारवचनाद्भ्रमितव्यम् । कौत्सादीनां पाठादेवावापसिद्धेः, अन्यत्रापि विवृद्धावागमेन संख्यापूरणम् वक्ष्यमाणन्यायसिद्धं न विधातव्यम् । एवकारोपहतविधिशक्तिकं चेदम् । तस्मात्परिसङ्ख्या । न च परिसंख्यायास्त्रिदोषत्वम्, एवकारेण तस्या एव श्रुतत्वात् । स्तो-

---

**तन्निबन्धनः** वैकृतसामोपदेशप्रयुक्तः । **पवमानेष्वेवेति** । पवमानगतगायत्र्यादिष्वेवेत्यर्थः । पवमानप्रकरणादत्रशब्देन तद्गतगायत्र्यादीनामेव ग्रहणात् । ननु पवमानेषु कर्तव्यौ यावावापोद्वापौ तौ गायत्र्यादिष्वेवेत्येवंविध्युपपत्तेर्न स्तोत्रान्तरेभ्य आवापपरिसङ्ख्या स्यादिति चेन्न; यज्ञस्येत्युपक्रमेण तत्सम्बन्ध्यावापोद्वापमात्रस्य गायत्र्याद्यधिकरणत्वनियमनात् । **नन्विति** । एकविंशस्तोमकेनातिरात्रसंस्थेन सोमयागेन प्रजाकामं भावयेदित्यादावित्यर्थः । **अविशेषेण** द्वात्रिंशत्पवमान इतिवत्स्तोत्रविशेषमनुपादाय । **वक्ष्यति** एतदुत्तरपादे सूत्रकार इति शेषः । तथा च स्तोत्रान्तरे सङ्ख्यापूरणार्थमावापस्यावश्यकत्वात्पवमानगतावापस्यैव गायत्र्याधारत्वं वचनार्थो न स्तोत्रान्तरेभ्यो निवृत्तिरित्याशयः । उक्तरीत्या वचनवशेनावापनिवृत्तावगत्याभ्यासेन सङ्ख्यासम्पादनं स्तोत्रान्तरेष्वित्याह— **सत्यमिति** । प्रसङ्गादेकदेशिमतं दूषयति **न चेदमिति** । **अन्यत्रापि** सामान्तरपाठाभावस्थलेऽपि । **न्यायः** संख्यायाः पृथक् निवेशस्वभावत्वरूपः । **एवकारेति** । आवापस्यैवकारार्थविशेषणत्वेन तद्विध्यनर्हत्वादिति भावः । **श्रुतत्वादिति** । तथा च श्रुतहान्यश्रुत-

त्रान्तरेष्वगत्याऽभ्यासेनैव पूरणम् । ननु कण्वरथन्तरन्यायेन कौत्सादीनां स्वयोनावेव गानान्न प्राकृतीषु ऋक्ष्वावापप्राप्तिः । असत्याञ्च प्राप्तौ कथंपरिसंख्या । तस्माद्विधिरेव गायत्र्यादिष्वावापस्य । नैतदेवम् ? 'कौत्सं भवती'त्यादिषु साममात्रमुपदिश्यते, तद्योनिभूतायास्त्वृचो नोपदेशेन नातिदेशेन प्राप्तिः । यदि परमक्लृप्तकल्पनाभयादध्ययनसिद्धरूपान्यथाभावभयाच्च स्वयोनावेव गीयते । तच्चायुक्तम्, प्राकृत्यो हि ऋचः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारिताः । सामानि च प्रति संस्कार्यत्वात्प्रधानभूता इहापि स्तोत्राङ्गत्वेनातिदेशतः प्राप्ता न शक्यन्ते बाधितुम् । अतः प्राकृतीष्वेव ऋक्षु प्रत्यक्षश्रु तान्यागम्यमानानि च सर्वाण्य पूर्वाणि सामानि गेयानीति प्राप्ते आवापे, परिसंख्यार्थमेव वचनम् । एवमेवकारः समर्थितो भवति । कण्वरथन्तरस्य तु यथा स्वयौनावेव स्वयोनेः उत्तरयोश्च गानम्, तथा वक्ष्यामः । तस्मात्पवमानेष्वावापोद्वापौ ॥

इत्यावापोद्वापाधिकरणम् ॥ १२ ॥

## १३

विधिशब्दस्य० दर्शपूर्णमासयोः श्रूयते 'आग्नेयोऽष्टकपालः'

---

कल्पनयोरभावान्न त्रिदोषतेत्यर्थः । साम्नामध्ययनसिद्धस्वयोनिष्वेव प्राप्तेर्नान्यत्रावापप्रसक्तिरिति परिसङ्ख्यानुपपत्तेरपूर्वविधित्वमेवात्र ह्येवेति वचनस्येति शङ्कते—**नन्विति** । यथा कण्वरथन्तराख्यसाम्नः स्वयोनावेव गानं वक्ष्यते तद्वदित्यर्थः । **प्राकृत्यो हीति** । यदि सामविधिबलादृचां प्रकृतावपि प्राप्तिः स्यात्तदा कौत्सादीनां योनावेव प्रकृतिवद् गानं स्यात् । ऋचां तु क्रमप्रकरणाभ्यां स्वत एव प्रकृतावप्यङ्गत्वादतिदेशेन च विकृतौ प्राप्तेर्न तद्बाधेन योनिप्राप्तिरित्यर्थः । प्रधानभूत ऋगनुरोधेन च सामान्यथाभाव ऊहात्मको न दोषायेति **सामानि** चेत्यनेनोक्तम् । अतएव प्राप्तस्यावापस्य व्यवच्छेदार्थ एवकारोऽप्युपपन्न इत्याह—**एवमिति** । **वक्ष्याम** इति । उत्तराग्रन्थे कण्वरथन्तरयोनेस्तदुत्तरयोश्च पाठादिति वक्ष्याम इत्यर्थः ॥

इत्यवापोद्वापाधिकरणम् ॥ १२ ॥

## १३

**विधिशब्दस्य०** आवापनियमवद्देवतावाचिशब्दनियमोक्तेरातिदेशिकी सङ्गतिः ।

इति। बहूनि चाग्नेरभिधानानि अग्निः शुचिः पावक इत्यादीनि। तत्र तद्वाचिषु निगमेषु येन केनचिच्छब्देनाग्नेरभिधानं कर्त्तव्यम्? उत विधिगतेनैवाग्निशब्देन? इति। तत्र

देवतात्वं विधायाग्नेश्चोदना विनिवर्त्तते।
प्रयोगकाल उद्देशो येन केनापि सिध्यति॥

अग्न्यर्थो देवता कर्त्तव्य इत्येतावांश्चोदनार्थः। तस्य शब्देनोद्दिश्यमानस्य देवतात्वमिति, प्रयोगावस्थायां शब्दोच्चारणमापतति। तन्नियमे तु नास्ति प्रमाणम्। पावकशब्देनापि ह्युद्दिश्यमाने चोदनाभिहितमग्नेर्देवतात्वं सम्पादितमेव भवति। तस्मादनियम इति प्राप्ते—

केचित्तावदाहुः—सत्यमर्थस्यैव देवतात्वं चोदनयोच्यते। तस्य त्विदमेव देवतात्वं यच्छब्देनोद्देशः। तेन तच्छब्दोच्चारणमेव पुरुषस्य व्यापारः। स्वव्यापारे चासौ नियोक्तव्यः। तेनार्थस्यापि देवतात्वमुक्त्वा तन्मात्रेणापर्यवस्यन्ती चोदना शब्दोच्चारणं यावद्विधाय पर्यवस्यति, तस्यां चावस्थायां विधिगतस्य शब्दस्य सन्निहितस्य परित्यागे कारणाभावात्तदुच्चारणमेव विधीयते न शब्दान्तरस्य, असन्निहितत्वात्। तस्माद्विधिशब्दनियमः इति।

अस्मिंस्तु पक्षे स्यादपि कथञ्चिद्विधिशब्द एव नियमः, किन्तु यत्र पर्यायेण शब्दद्वयेन देवताविधिः। यथा 'अग्नये पावकाय निर्वपेत्

---

तद्वाचिनिगमेष्विति। अग्निदेवतावाचित्यागाभिलापरूपेष्वग्नय इदं न ममेत्यादिष्विन्त्यर्थः। **अग्न्यर्थ इति।** उत्सर्गतः शब्दस्यार्थपरत्वव्युत्पत्तेरग्निरूपोऽर्थो देवतेति बोधनेन विधेः पर्यवसानम्। उद्देशस्त्वनुष्ठानकाले। तत्र च केनशब्देनेत्यपेक्षायां विधिगतशब्दासन्निधानादग्निरूपार्थद्वारा तद्वाचकशब्दानुसन्धानमिति सर्वेषामनियमेन प्राप्तिरित्यर्थः।

एकदेशिसिद्धान्तमाह **केचिदिति।** विधेः शब्दविशेषं विना पर्यवसानमिति यदुक्तं तदयुक्तम्, देवतात्वस्य शब्दकरणकोद्देशघटितत्वेन शब्दविशेषमन्तरेण विधिना तद्बोधनायोगात्। अतश्च सन्निधानाद्विधिगतशब्दनियम इत्यर्थः। **उच्चारणं यावत्** उच्चारणपर्यन्तम्। दूषयति—**अस्मिंस्त्विति।** परानुपस्थितस्यान्वयबोधविषयत्वा-

अग्नये शुचये' इति । तत्र द्वाभ्यामपि शब्दाभ्यामेकमर्थमभिधाय तस्य देवतात्वे विहिते शब्दाकाङ्क्षावेलायामुभयोः शब्दयोः सन्निहितत्वेऽप्येके-नैवार्थस्योद्देशसम्भवात् अगृह्यमाणविशेषत्वे विकल्पेनान्यतरस्यैवोपादानं स्यात्, न द्वयोः । न हि निरपेक्षयोरेककार्ययोः समुच्चयः । नन्वेकेनैव वाक्येन विधानात्समुच्चयः सिद्ध्यति । स्यादेवं यदि प्रथमोच्चारणे एव शब्दस्वरूपं वाक्यार्थान्वयि स्यात् । अर्थसमर्पणेन तु चरितार्थौ शब्दौ पश्चादाकाङ्क्षवशाद्गृह्यमाणावेकैकशस्तदाकाङ्क्षापूरणसामर्थ्याद्विकल्पेनैव गृहीतव्यौ । अथैकेनैवार्थस्य देवतात्वे सिद्धे द्वितीयः शब्दः स्वरूपपर इत्युच्यते, तथा सति तस्यैवोच्चारणं स्यात्, नेतरस्यार्थसमर्पणेन चरितार्थस्य । अथैवमादिषु शब्दस्यैव वाक्यार्थान्वयित्वं, तथा सति सर्वत्रैवमेव सिद्धान्तयितव्यम् । अवश्यं ह्यत्र शब्दोच्चारण एव पुरुषो नियोक्तव्यः । तत्र किमित्यर्थस्य देवतात्वं विधाय, पश्चाच्छब्दोच्चारणं विधीयते । प्रथममेव शब्दस्वरूपं वाक्यार्थान्वयित्वेन विधीयते । तद्विधानेन चार्थस्य देवतात्वं प्राप्तमेवानूद्यते । येन हि शब्देनोद्दिश्य हविस्त्यज्यते, तस्यार्थस्य देवतात्वं भवति, तस्माच्छब्दोच्चारणेन तस्यैव विधानान्न पर्यायप्रसक्तिः ॥

## विधिशब्दाधिकरणम् ॥ १३ ॥

---

योगात्कथञ्चिदित्युक्तम् । **प्रत्यक्षतः** उपस्थितिमात्रेणेत्यर्थः । **स्यादेवमिति** । तद्वाक्यजन्यान्वयबोधविषयत्वे समुच्चयो वाक्यवशेन स्यान्नतु तदस्तीत्यर्थः । आकाङ्क्षाकल्प्यान्वयस्तु समुच्चयानाकाङ्क्षणान्नेत्याह—**एकैकश इति** । **अथेति** । तथा च प्राथमिकस्यार्थमुखेन पश्चाद्विधेर्द्वितीयस्य प्रथममेव साक्षाद्विधेश्च समुच्चयः स्यादित्यभिप्रायः । एवं हि साक्षाद्विहितेनैवाकाङ्क्षाशान्तेर्नार्थमुखेनापरस्य विधिकल्पनेति परिहरति—**तथा सतीति** । एवं तर्हि शब्दद्वयस्याप्येवमादिषु प्रथममेव विध्यन्वयोऽस्त्विति शङ्कते—**अथेति** । नन्वत्र शब्दद्वयोपादानात्तथाङ्गीकारेऽप्यन्यत्र तथात्वे मानाभाव इत्यत आह—**अवश्यं हीति** । अग्निशब्दमुच्चार्य हविस्त्यजेदित्यर्थस्यावश्यकत्वात्प्रथमत एव तद्विधानं न त्वर्थतः पश्चादित्यर्थः । अन्यथा विधिद्वये गौरवमिति भावः । **तद्विधानेन चेति** । एवञ्च तद्धितस्याप्युपपत्तिरिति भावः । विधिशब्दस्य मन्त्रकार्यभाव उच्चारणं स्याद्यतस्तेन चोदनेति सूत्रार्थः ॥

इति विधिशब्दाधिकरणम् ॥ १३ ॥

१४

तथोत्तरस्यां० सौर्यादिषु विकृतिषु चिन्त्यते — चोदकप्राप्तेषु उज्जित्यादिनिगमेषु किं विधिशब्द एव वक्तव्यः ? उतादित्यादिशब्दा अपि ? इति संशयः । तत्र विधिवाक्ये हविस्त्यागमात्रे सूर्यशब्दो विधीयते नोज्जित्यादिषु निगमेषु । प्रकृतौ तूज्जित्यादिष्वग्निशब्द एव पठित इति तदाश्रयणम् । इह त्वसति पाठे येन केनचिदुपलक्षणमिति प्राप्ते—

अभिधीयते—प्रकृतावग्निशब्दो न यागरूपेण सम्बध्यते, किं तर्हि ? यागकरणके भावनापरनामधेये प्रयोगे । भावनया ह्यङ्गानि सम्बध्यन्त इति, सप्तमनवमाद्ययोर्व्याख्यातम् । तेनाग्निशब्दयुक्तः प्रयोगः कर्तव्यः । स तु क्रियत्कृत्वः, केषु च प्रदेशेषूच्चारयितव्य इत्यपेक्षायां याज्यानुवाक्यापाठादुज्जित्यादिपाठाच्च तावत्कृत्वस्तेषु च प्रदेशेषूच्चारणीय इति गम्यते । विकृतावपि सूर्यशब्दः प्राकृतस्याग्निशब्दस्य स्थाने निविशमानस्तेषु प्रदेशेषु वक्तव्यो भवति, तस्माद्विधिशब्द एव सर्वेषु निगमेषु विकृतिष्वपि वक्तव्यः ।

इत्यतिदेशस्थले वैधशब्देनैव देवताभिधानाधिकरणम् ॥ १४ ॥

---

१४

**तथोत्तरस्याम्०** आतिदेशिकी सङ्गतिः । अत्र चोद्देशत्यागातिरिक्ता एव निगमा उदाहरणमित्याशयेनाह- **चोदकेति** । 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादय उज्जित्यादिनिगमाः । पूर्ववैषम्येणाधिकाशङ्कामाह– **प्रकृतौ त्विति** । **उपलक्षणम्** प्रकाशनम् । एवं सति न्यायादेव विधिगतशब्दप्राप्तौ निगमेष्वग्निपदपाठोऽनर्थक इत्याशङ्क्याह– **स इति** । अपूर्वीयदेवतां विधिगतशब्देन प्रकाशयेदित्येतावन्मात्रं न्यायेनावगतं न त्वेतावद्वारं अमुकप्रदेशपाठेनेति । तदर्थं तत्र शब्दपाठ इत्यर्थः । विकृतौ सूर्यपदपाठाभावादाह—**विकृतावपीति** । उत्तरस्यां प्रकृतिपूर्विकायां ततौ विकृतिपङ्क्ताविति सूत्रार्थः ॥

इत्यतिदेशस्थले वैधशब्देनैव देवताभिधानाधिकरणम् ॥ १४ ॥

१५

प्राकृतस्य० सन्त्याधाने पवमानेष्टयः—'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति। तत्र संशयः तद्वाचिषु निगमेषु किमेक एवाग्निशब्दो वक्तव्यः? किमुभौ शब्दौ वक्तव्यौ-अग्नये पवमानाय निर्वपामि, अग्निं पवमानमावह, अग्नेः पवमानस्याहमुज्जितिमनूज्जेषमि'ति।

तत्रैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्वयोः।
स चाग्निशब्द एवैकश्चोदकानुग्रहाद्भवेत्॥

स्यादेवं यदि प्रथममर्थं विधाय पश्चाच्छब्दाश्रयणं भवेत्, शब्द एव तु भावनाङ्गत्वेन विधीयत इत्युक्तम्। तस्मादुभयोर्विधानादुभौ वक्तव्यौ॥

इति निगमेषु सगुणेनाभिधानाधिकरणम्॥ १५॥

१६

बुधन्वा० पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते 'बुधन्वानाग्नेयः कार्यः, पावकवान्सौम्यः' इति। तत्र संशयः—किं बुधन्वत्तया पावकवत्तया गुणेन सगुणमभिधानं निगमेषु कर्त्तव्यम्-बुधन्वन्तमग्निमावह, पावकवन्तं सोममावहे'ति? उताविकारेण प्रकृतिवन्निर्गुणमिति? तदर्थ-

---

१५

प्राकृतस्य० पर्यायबाधापवादात्सङ्गतिः। सिद्धान्तमाह स्यादेवमिति। उक्तम् एकदेशिमतनिरासेन प्रपूर्वाधिकरणे। सूत्रं स्पष्टार्थम्॥

इति निगमेषु सगुणेनाभिधानाधिकरणम्॥ १५॥

१६

बुधन्वान्० सगुणाभिधानापवादात्सङ्गतिः। बुधन्वन्तमिति। अत्र नकारस्य छान्दसत्वादूहस्य च लौकिकत्वात् बुधवन्तमिति वक्तव्येऽपि वैदिकपदोहस्यैव याज्ञिक

मिदं चिन्त्यते-किं देवताविशेषणं बुधन्वत्ता ? उत मन्त्रविशेषणमिति ? मन्त्रस्य स्वरूपप्रकरणाभ्यां प्राप्तत्वाद्देवतानिर्देशः। तदयमर्थः—आग्नेय आज्यभागो बुधन्वान्-बुधन्वच्छब्दयुक्तःकार्यः। तस्य च देवताद्वारेण बुधन्वच्छब्दवत्ता। तदनेन प्रकारेण देवतायाः बुधन्वत्ता विहिता भवति। तस्मात्सगुणमभिधानं कर्तव्यम्।

नैतदेवम्, मन्त्रान्तराण्यप्यग्निलिङ्गानि सोमलिङ्गानि च प्रकरणे विद्यन्ते। तत्र मन्त्रविशेषनियमार्थं वचनमुपपन्नम्। तेन मन्त्रद्वारेण बुधन्वत्ता अज्यभागस्य विधीयते। न चाहत्याग्नेर्बुधन्वत्ता विधीयते। तद्धितार्थे वृत्तस्योपसर्जनीभूतस्याग्नेर्विशेषणत्वेन विशेषणान्तरासहत्वात्। मन्त्रमेव चाऽग्नेयशब्देन निर्दिश्य तस्यैव बुधन्वत्ता साक्षाद्विधीयते। एवं चोदकप्राप्ता देवता न विकृता भवति॥

इति बुधन्वदधिकरणम्॥ १६॥

१७

विधिनिगम० ज्योतिष्टोमे श्रूयते 'गौरनुबन्ध्या' इति। तत्राग्नीषोमीयस्य पशोः 'छागस्य वपाया मेदसः' इति मन्त्रश्चोदकेन प्राप्तः। तत्र मन्त्रान्तरमाम्नातम् 'उस्राया वपाया मेदसः' इति। तत्र संशयः-किं

---

सम्मतत्वात् विधिगतत्वाच्च बुधन्वन्तमित्युक्तम्। बुधन्वत्तयेत्यादि स्वप्रयोगस्त्वनुकरणत्वात्साधुरिति बोध्यम्। **स्वरूपं** लिङ्गम्। **तदेनेनेति**। अग्नेस्तद्धितार्थोपसर्जनत्वेन साक्षात्तत्र बुधन्वत्ताया विधेयत्वायोगादिति भावः। यद्यपि यागे बुधन्वत्ताया आनर्थक्यात्तदङ्गावतारे मन्त्र इव देवतायामपि तत्साम्यं तथापि मन्त्रविशेषणत्वे नियमविधिलाघवं देवताविशेषणत्वे त्वपूर्वविधिगौरवमिति ज्ञेयम्। क्लिष्टकल्पनापरिहारायाह—**मन्त्रमेवेति**। **विकृता** अन्यथा कृताः। सूत्रं स्पष्टार्थम्॥

इति बुधन्वदधिकरणम्॥ १६॥

१७

**विधिनिगम०** आतिदेशिकी सङ्गतिः। **स्विष्टकृदिति**। सङ्कर्षे तथोक्तेरिति

गोशब्दादन्येन ये केनचिदभिधानं कर्त्तव्यम् ? उतोस्राशब्देनैवेति ? तथा पशौवनस्पतिं यजती'ति श्रुतम् । स्विष्टकृद्विकारश्च वनस्पतिः । तत्र निगमेषु किं विधिशब्दादन्येन केनचिदभिधानम् ? उत विधिशब्देनैवेति ? किं प्राप्तम् ? उभयत्रापि विधिशब्दादन्येन येनकेनचित्तदभिधानं तत्र निगमे स्यात् । प्रकतौ विधिनिगमभेदात् पशुशब्देन विधिः । छागशब्देन निगमः । तथा स्विष्टकृच्छब्दको विधिः'अग्निं स्विष्टकृतं यजति' इति । निगमस्त्वस्विष्टकृच्छब्दकः 'ये दैव्या ऋत्विजस्तेऽभिरग्ने' इति । यच्च प्रकृतौ श्रुतं तत् विकृतौ कर्त्तव्यम् । तस्मात् गोशब्दादन्येनाभिधानम् । तदपि येन केनचित् शब्देन उस्राया वपाया मेदस इति च पाठमात्रम्, न विधिरस्ति ।

तथा वनस्पतावपि विधिशब्दादन्येन येन केचिदभिधानमिति । मन्यते । उच्यते--प्रकृतावार्थिको विधिनिगमभेदः, न वाचनिकः । 'न चार्थिकं चोदकः प्रतिदिशति' । तेनानुबन्ध्याया द्रव्यत्वाद्विधिशब्दनियमाभावे विधिशब्देनान्येन वा येन केनचिदभिधाने प्राप्ते, प्रकरणाम्नानादुस्राशब्दस्य, तेनैवाभिधानम् । वनस्पतौ तु देवतात्वाद्विधिशब्देनैव ॥

इति विधिनिगमभेदाधिकरणम् ॥ १७ ॥

---

भावः । अन्येन वृक्षादिना । यच्चेति । यथा बुधन्वत्तातिदेशानुग्रहाय मन्त्रविशेषणं तथात्रापि तदनुग्रहाय येन केनचिदभिधानमिति भावः । ननूस्राशब्दनियमेऽपि विधिनिगमभेदसम्भव इत्यत आह--तदपीति । विधिनिगमभेदमात्रस्य चोदकेन बोधनादुस्राशब्दनियमे मानाभावादिति भावः । उस्रापदपाठमुपलक्षणतयाऽप्युपपन्नो न पूर्वप्रवृत्तातिदेशप्राप्तानियमविरोधे विशेषनियमविधिकल्पनायां समर्थ इत्याशयेनाह—उस्रेति । शब्दविशेषपाठोऽप्यनियमे तदभावे सुतरामित्याह---तथेति । आर्थिकः तादृशपाठकृतः । द्रव्यत्वादिति । देवतावत् द्रव्यस्य शब्दाघटितत्वेन शब्दविशेषस्य तत्राविधानादित्यर्थः ॥

इति विधिनिगमभेदाधिकरणम् ॥ १७ ॥

१८

स्विष्टिकृद्देव० अवभृथे श्रूयते—'अग्नीवरुणौ स्विष्टकृतौ यजती'-ति। किं निगमेष्वस्विष्टकृच्छब्दकं वचनमग्नीवरुणावावहेति ? उत स्विष्टकृच्छब्दकमग्नीवरुणौ स्विष्टकृतावावहेति ? यद्येषा वचनव्यक्तिः-स्विष्टकृत्कार्ये अग्नीवरुणाविति ततोऽग्नीवरुणयोर्देवतात्वदस्विष्टिकृच्छब्दकम्। अथैवं वचनं व्यज्यते-यत्स्विष्टकृद्गुणेन सगुणां देवतां यजति, तदग्नीवरुणौ, न केवलमग्निमिति। ततः स्विष्टकृत्वेनाग्नीवरुणयोर्विधानात्सस्विष्टकृच्छब्दकमिति। तत्सिद्ध्यर्थमिदं चिन्त्यते—किं स्विष्टकृच्छब्दः प्रकृतौ समुदायप्रसिद्ध्याग्नौ प्रयुक्तः ? उत स्विष्टकरणयोगेनेति ? तत्र भूतस्य स्विष्टकरणयोगस्याग्नावभावाद्रूढ्याऽयं शब्दोऽग्नेर्वाचकः। अतो नाग्नीवरुणयोः शक्नोति वर्त्तितुम्। अतः कार्यलक्षणार्थः स्विष्टकृच्छब्दः। स्विष्टकृत्कार्ये अग्नीवरुणौ निर्गुणौ विधीयेते। तस्मदस्विष्टकमच्छब्दकवचनम्। उच्यते—भूतकालतामात्रासम्भवेऽपि स्विष्टकरणयोगस्य तावत्सम्भवाद्भूतकालताया अपि प्रयोगान्तरापेक्षयोपपन्नत्वान्न समुदायप्रसिद्धौ प्रमाणमस्ति। तेन स्विष्टकृद्गुणकावग्नीवरुणौ यष्टव्याविति श्रौत एव स्विष्टकृच्छब्दः, न लक्षणा। तस्मात्सगुणयोरेव देवतात्वात्सगुणमभिधानम्॥

इत्यवभृथेऽग्नीवरुणयोस्सस्विष्टकृच्छब्देनाभिधानाधिकरणम्॥ १८॥

---

१८

**स्विष्टकृत्**० आपवादिकी सङ्गतिः। **भूतस्येति**। भूताधिकारे 'सुकर्म पापमन्त्रपुण्येषु कृञः' इति कर्मण्युपपदे भूतेऽर्थे कृञः कर्तरि क्विप्प्रत्ययविधानादत्र च 'स्विष्टं वेव इदं भविष्यती'त्याद्यर्थवादेन यागाराधितस्याग्नेः स्विष्टकरणहेतुत्वकीर्तनान्न योगार्थसम्भव इति भावः। एवञ्चाग्नीवरुणाभ्यां सामानाधिकरण्यायोगात्कार्यलक्षणेत्याह—**अत इति**। **उच्यत इति**। कालविवक्षायां भूतकालनियमः। इह तु न तद्विवक्षेति न विरोध इति भावः। **प्रयोगान्तरेति**। वेदार्थानुष्ठानस्यानादित्वादिति भावः। देवतान्यत्वे स्विष्टकृन्निवर्त्तेत। कुतः। तच्छब्दत्वात्। रुद्राग्निवाचकत्वादिति सूत्रार्थः॥

इत्यवभृथेऽग्नीवरुणयोस्स्विष्टकृच्छब्देनाभिधानाधिकरणम्॥ १८॥

१९

सगुणस्य० अग्नीषोमीयेपशौ पशुपुरोडाशः। तत्र चोदकप्राप्तस्य स्विष्टकृतः गुणलोपः श्रुतः—'अग्निं यजती'ति। किमयं प्रधानमात्रे गुणलोपः? उत सर्वेषु निगमेष्विति? प्रधानमात्रे, यजतीति लोपश्रवणात्। अवशिष्टेषु निगमेषु प्रकृतिवत्स्विष्टकृद्गुणयुक्तमभिधानं प्रयोग एव निर्गुणविधिरिति सर्वत्र गुणलोपः॥

इत्यग्नीषोमीयपशावग्निशब्देन निर्गुणेनाभिधानाधिकरणम्॥ १९॥

२०

स्विष्टकृद० दर्शपूर्णमासयोस्त्रयोऽनुयाजाः, तृतीयः स्विष्टकृद्देवत्यः स किमावापिकस्य 'उत्तरार्द्धात्स्विष्टकृते समवद्यती'त्यस्य स्विष्टकृतः संस्कारार्थः? उत आरादुपकारक इति। तत्र—

उभयोर्दर्शशेषत्वाद्विशेषानवधारणात्।
न मिथोङ्गाङ्गिभावः स्यात्तस्मादारादुपक्रिया॥

उच्यते—

देवतास्मरणं ह्यत्र दृष्टमेव प्रयोजनम्।
अनूयाजस्य तेनेह न युक्ताऽदृष्टकल्पना॥

---

१९

सगुणस्य० समुच्चयापवादेन सिद्धान्तमाह—प्रयोग एवेति। निगमेषु मध्ये यावदुक्तं यत्रैव प्रधानमात्रे उक्तं निर्गुणत्वं तत्रैवेति पूर्वपक्ष सूत्रार्थः॥

इत्यग्नीषोमीयपशावग्निशब्देन निर्गुणेनाभिधानाधिकरणम्॥ १९॥

२०

स्विष्टकृदा० तृतीय इति। 'अग्निं स्विष्टकृतं यजती'ति तद्विधिवाक्यादित्यर्थः। आज्यभागस्विष्टकृतोर्मध्ये आगन्तूनां प्रधानानामावापस्थानं तत्र भव आवापिकः। अनूयाजस्येति पूर्वान्वितम्। इष्टदेवतेति। मन्त्रांशेनेत्यर्थः। एवञ्च यत्र विकृतौ

न चागृह्यमाणविशेषत्वम् । आवापिकस्य द्रव्यप्रतिपत्त्येष्टदेवतास्मरणेन च कृतार्थत्वान्नानुयाजिकस्विष्टकद्देवतासंस्कारार्थत्वम् । अनूयाजस्य तु दृष्टप्रयोजनान्तराभावाददृष्टकल्पनापरिहारायावापिकस्विष्टकृत्संस्कारार्थत्वमध्यवसीयते ॥

इत्यनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम् ॥ २० ॥

२१

अन्वाहेति० दर्शपूर्णमासयोः 'तिष्ठन्याज्यामन्वाह आसीनः पुरोऽनुवाक्यामन्वाहे'ति । किं याज्यापुरोनुवाक्योच्चारणमर्थकर्म ? उत संस्कारकर्म अर्थप्रतिपत्त्यर्थमिति ? तत्रार्थप्रतिपत्त्यर्थत्वे रूपादेव प्राप्तमुच्चारणं न विधातव्यम् । तस्माददृष्टार्थम् । सत्यम् यद्युच्चारणं विधीयेत, रूपादेव तु प्राप्तमुच्चारणमनूद्य तिष्ठन् आसीन इति गुणविधानान्न वचनार्थक्यम् । अतो नादृष्टार्थता ॥

इति याज्यापुरानुवाक्ययोस्संस्कारकर्मताधिकरणम् ॥ २१ ॥

---

[1]स्विष्टकृति देवातान्तरं तत्र तृतीयानुयाजस्य बाध इति सङ्गतिः ॥

इत्यनूयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम् ॥ २० ॥

२१

अन्वाहेति० शस्त्रवत्कर्म अर्थकर्म । अन्वाहेति चोदनान्तरादिति पूर्वपक्ष सूत्रार्थः । अग्न्यादिपदानां याज्यादिगतानां सौर्यादौ बाधप्रतिपादनादध्यायानन्तरसङ्गती ॥

इति याज्यापुरोनुवाक्ययोस्संस्कारकर्मताधिकरणम् ॥ २१ ॥

२२

मनोतायां० अग्नीषोमीये पशावस्ति मनोतामन्त्रः 'त्वं ह्यग्ने प्रथमो मनोते'ति । तत्रैव चेदं वचनं 'यद्यप्यन्यदेवत्यः पशुः अग्नेय्येव मनोता कार्ये'ति । सोऽयं मनोतामन्त्रः किं विकृतिषु वायव्यादिपशुषु यथादेवतमूहितव्यः ? अथवाऽविकारेण प्रयोक्तव्यः ? इति संशयः । तदर्थं च 'यद्यप्यन्यदेवत्यः' इत्येतद्वचनं प्रकृत्यर्थम् ? उत विकृत्यर्थमिति ? तत्र पशोरग्नीषोमदेवत्यत्वात्केवलाग्निदेवत्या मनोता । तत्रासामर्थ्या-दुत्कृष्यमाणा वचनेनानेन वार्यते । यद्यपि द्विदेवत्यः, तथाऽप्येकदेवत्यैव मनोता तत्र कार्या, नोत्कष्टव्येति । न चानेन वचनेन विकृतिषूहः प्रतिषिध्यते । प्रकृतावेवार्थवत्किमिति विकृतिषु कार्यं कुर्यात्तद्वचनेनावस्था-पिता मनोता न प्रकृतावदृष्टार्था, येन विकृतिषु नोह्येत। शक्नोति चामा-वग्निद्वारेण लक्षणया देवताभूतावग्नीषोमौ प्रकाशयितुम् । तस्माद्वायव्या-दिषु यथादेवतमूहितव्येति प्राप्ते ब्रूमः –

अग्निद्वारेण मन्त्रोऽयमग्नीषोमौ प्रकाशयन् ।
अन्तरेणैव वचनं प्रकृतावव्रतिष्ठते ॥

न च विकृतिषु सामान्यसम्बन्धोऽस्ति, येन लिङ्गेन केवलाग्नि-देवत्यायाः उत्कर्षः स्यात् । तस्मान्नोत्कर्षप्राप्तिः, येन तन्निवारणेन प्रकृतावेव वचनं कार्यं कुर्यात् । तस्माद्विकृतिषु यथादेवतमूहे प्राप्ते तन्निवारणार्थं वचनमिति वायव्यादिष्वनूह इत्यग्निशब्दस्याबाधः ॥

इति मनोताधिकरणम् ॥ २२ ॥

---

२२

**मनोतायां तु०** बाधापवादात्सङ्गतिः । **प्रकृतावेवेति** । प्रकृतौ पाठात्तत्रैवार्थ-वत्वमुचितं न तु विकृतावूहनिषेधरूपं कार्यमित्यर्थः । ननु वचनाददृष्टार्थतया प्रकृतौ निवेशे विकृतावनूह एवेत्यत आह—**शक्नोति चेति** । सामान्येति । क्रतुसम्बन्धबोधकं नास्तीत्यर्थः । सङ्गतिं प्रदर्शयति—**इतीति** ॥

**इति मनोताधिकरणम् ॥ २२ ॥**

२३

पृष्ठार्थे० वैश्यस्तोमे श्रूयते 'कण्वरथन्तरं पृष्ठं भवती'ति । तत्र संशयः—किं कण्वरथन्तरं बृहद्योनौ, रथन्तरयोनौ वा गेयम् ? उत रथन्तरयोनावेव ? उत स्वयोनाविति ? तत्र कण्वरथन्तरशब्देन साममात्रं प्राकृतयोः साम्नोः स्थाने विधीयते, तद्योनिभूतयोस्त्वृचोः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारितयोरिह चोदकेन प्राप्तयोर्नास्ति किञ्चिन्निवर्त्तकम् । तस्मात्तयोरन्यतरत्र गानम् । अथवा कण्वस्य रथन्तरं कण्वरथन्तरमिति यौगिकोऽयं शब्दः, रथन्तरशब्दश्चारथन्तरे तद्धर्मातिदेशार्थः । तस्माद्रथन्तरयोनावेव गेयम् ।

नैतदेवम्, कण्वसम्बन्धे प्रमाणाभावात् । तस्माद्रूढोऽयं कण्वरथन्तरशब्दः न कण्वस्य रथन्तरम् इत्येवं प्रवृत्तः । तस्मान्न तावद्रथन्तरयोनावेव गेयम् । नापि बृहद्योनौ रथन्तरयोनौ वा, किन्तु स्वयोनावेव । कस्मात् ? उत्तराग्रन्थे तस्याः तदुत्तरयोश्च पठितत्वात् । क्रत्वर्थो ह्युत्तराग्रन्थः । 'एकं साम तृचे क्रियते स्तोत्रीयं यद्योन्यां तदुत्तरयोर्गायती'ति वचनार्थानुष्ठानाय ऋग्विशेषापेक्षायां तत्परिज्ञानाय योनयः उत्तराश्च प्रतिसाम विभक्ता उत्तराग्रन्थे पठ्यन्ते, नादृष्टार्थम् । कण्वरथान्तरयोनिरपि तत्रैव पठिता । सा यत्र कण्वरथन्तरं तदङ्गत्वेन ज्ञायते । तस्मात्स्वयोनौ गेयम् । एवं चाम्नानसिद्धपरित्यागः ऋगन्तरसञ्चारश्च न कल्पितो भवति । कौत्सादिसाम्नान्तु योनिरुत्तराग्रन्थे न पठितेति, तेषां प्राकृतीष्वेव ऋक्षु गानम् ॥

इति कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ॥ २३ ॥

---

२३

**पृष्ठार्थे०** विकृतौ मनोतायां प्राकृता एवाग्निशब्द इत्युक्ते कण्वरथन्तरे न प्राकृतमन्त्र इत्यपवादात्सङ्गतिः । तयोः बृहद्रथन्तरयोन्योः । सूत्रार्थस्तु–पृष्ठार्थे यद्रथन्तरादन्यत्कण्वरथन्तरं तत्तद्योनिरथन्तरयोनिकम् । नामातिदेशेन रथन्तरपूर्वत्वा दृचां प्रविभक्तत्वात्सामभेदभिन्नत्वादिति ॥

इति कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ॥ २३ ॥

२४

कार्यत्वादु० कण्वरथन्तरस्यैवोत्तरगाने संशयः—किं बृहदुत्तरयोः रथन्तरोत्तरयोर्वा गानम्? उत स्वयोन्युत्तरयोरपि? तत्र स्वयोन्युत्तरयोरपि गीयमानस्याम्नानासिद्धकर्पपरित्याग ऋगन्तरसञ्चारावपरिहार्यौ। तद्वर चोदकप्राप्तयोरेव गानमिति मन्यते। उत्तराग्रन्थे पाठस्तु स्वयोनिवदुत्तरयोरप्यविशिष्ट इति स्वयोन्युत्तरयोरेव गानम्॥

इति कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम्॥ २४॥

२५

ग्रहाणां० अग्निष्टुति श्रूयते 'आग्नेया ग्रहा भवन्ती'ति। प्रकृतौ नानादेवत्यानि स्तोत्रशस्त्राणि। तानि यदि देवतासंस्कारार्थानि, ततोऽग्निष्टुति यथादेवतमूहितव्यानि। तेषान्त्वर्थकर्मत्वं द्वितीये स्थितम्। तस्मादविकार इति द्वितीयसिद्धस्यैव प्रयोजनकथनमेतत्॥

इत्यग्निष्टुतिस्तोत्रशस्त्रयोरविकाराधिकरणम्॥ २५॥

---

२४

कार्यत्वात्० विशेषाशङ्कां दर्शयति—तत्रेति। सूत्रार्थस्तु—उत्तरयोः साम्नः कार्यत्वात्स्वतः सिद्धपाठाभावाद्यथाप्रकृतीति॥

इति कण्वरथन्डरस्य स्वयोन्युत्तरयोर्गानाधिकरणम्॥ २४॥

२५

ग्रहाणाम्० कर्मत्वादर्थकर्मत्वादिति सूत्रार्थः॥

इत्यग्निष्टुति स्तोत्रशस्त्रयोरविकाराधिकरणम्॥ २५॥

२६

उभयपाना० चातुर्मास्ये श्रूयते—'पृषदाज्येनानुयाजान् यजती'ति । सन्ति प्रकृतावाज्यपशब्दयुक्ताः निगमाः 'देवानाज्यपानावह स्वाहा देवान् देवतानामाज्यपानां प्रिया धामानि, देवा आज्यपा आज्यमजुषन्ते'ति । आज्यपशब्देन च तत्र प्रयाजानुयाजदेवता उच्यन्ते । अत्र च पृषदाज्येनानुयाजा यष्टव्याः । तदिह संशयः—आज्यपशब्दस्याज्यदधिपानित्येवं विकारः ? अथवा दधिपानिति ? उत पृषदाज्यपानिति ? अहोस्विदविकारेणैव प्रयोगः ? इति । यद्युभयं हविः ततः प्रथमः पक्षः । यदि दध्येव, ततो द्वितीयः । यदि पृषदाज्यं नाम द्रव्यान्तरं हविः ततस्तृतीयः । अथ त्वाज्यमेव हविः, तस्य तु पृषत्त्वं चित्रता संस्कारमात्रं तज्जननार्थं च दधि, ततः सिद्धान्तः ।

तत्र 'पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्च दधि चे'ति तुल्यवत्सङ्कीर्तनादुभयं हविः । नन्वेकेन प्रकृतौ देवतोपलक्षिता तेनेह यद्यप्युभयं हविः, तथाऽप्येकेन देवतोपलक्षणसिद्धेर्नोभयादरो यज्ञपतिशब्दवदिति चेत्, स्यादेवं यदि यज्ञपतिवत्परार्थं हविः । तदपि देवतावदनुष्ठानाङ्गत्वेन स्मर्तव्यमेव । तस्मादुभयोपलक्षणम् । अथवा 'द्विरुपस्तृणाति सकृदभिघारयती'त्युपस्तरणाभिधारणवादाद्धिसंस्कारार्थमाज्यं दध्येव हविः । ततो दधिपानित्येव वक्तव्यम् । नैतद् द्वयमपि युक्तम् । ग्रहणे हि दध्याज्ययोस्तुल्यत्वम् दध्नो वा प्राधान्यं गम्यते । यागे त्वाज्यमेव पृषत्त्वगुणकं करणत्वेन श्रुत्या विधीयते, नोभयम् । नापि दधि ।

---

२६

उभय० आज्यपदाबाधादापवादिकी सङ्गतिः । यज्ञेति । 'ये यज्ञपतिं वर्धानि'ति मन्त्रे यज्ञपतेर्मनुष्यविशेषणतयेडास्तुत्यर्थतया यथैकेनैवोपपत्तिर्न तु बहुयजमानके बहुवचनोहस्तथेहापीत्यर्थः । अथवेति । उपस्तरणाभिघारणयोः संस्कारत्वेनान्यत्र क्लृप्तत्वात् 'बर्हिषी अन्तर्धाय दधि गृह्णाती'ति मध्ये गृह्यमाणं दध्येव प्रधानं तत्संस्कारकमाज्यमित्यर्थः । नैतदिति । तुल्यत्वम् 'द्वयं वा इदं सर्पिश्च दधि चे'ति तुल्यत्वेन कीर्तनात् ।

यच्च यागद्रव्यं तदर्थो ग्रहणसंस्कारः । तस्माद्ग्रहणेऽप्याज्यमेव प्रधानम् । तस्य तु पृषत्तासम्पादनार्थं दधि गृह्यते । न स्वार्थेन, अनुपयोगित्वात् । तथाविधे तु दधनि तुल्यनिर्देश उपस्तरणादिवादेन च प्राधान्यनिर्देशोऽर्थवादमात्रम् । तस्मादविकारः । अन्यस्त्वाह—दध्ना आज्येन च द्रव्यान्तरं निष्पद्यते, तस्य वाचकः पृषदाज्यशब्दः । तच्च हविः 'पृषदाज्येनानूयाजान् यजती'ति वचनात् । तस्मात्पृषदाज्यपानिति वक्तव्यम् । स्यादेतदेवं यदि पृषदाज्यशब्दः समुदायशक्त्या द्रव्यान्तरमभिधत्ते, न त्वेवमस्ति । पृषच्छब्दो हि लोके चित्रत्ववचनः पृषद्रज्जुः पृषन्मणिरिति । तेन पृषदाज्येन चित्रेणाज्येनेत्यर्थः । तेन प्राकृतस्यैवाज्यस्य हविषश्चित्रतागुणमात्रविधानम् । एवं च गुणं सम्पादयितुं दधि गृह्यते । प्राधान्यनिर्देशोऽर्थवादमात्रम् । हविरेव च प्रकृतावुपलक्षितं न हविर्गुणः । अविकारेण तेनाज्यपानित्येवोपलक्षणं चोदकानुग्रहश्चैवमविकाराद्भविष्यति ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥



---

उपस्तरणशब्दाद्दध्नः प्राधान्यं वा **गुणवाक्ये** । प्रधानवाक्ये तु पृषत्ताविशिष्टमाज्यमेवेति प्रधानगतत्वात्तदेव बलवदिति भावः । तृतीयपक्षमवतारयति—**अन्यस्त्विति** । शेषं सुगमम् ॥

इति चातुर्मास्येष्वाज्यशब्दस्याविकारेणप्रयोगाधिकरणम् ॥ २६ ॥

इति श्रीमद्विद्वन्मान्यतत्सद्रामभट्टसूरिसूनुतत्सद्वैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां दशमाध्यायस्य चतुर्थः पादः ॥



# अथ दशमाध्याये पञ्चमः पादः

१

आनुपूर्व्य० प्राकृतानां बहूनामेकदेशे विकृतिषूपादातव्ये, किमादितः, मध्यतः, अन्ततो वा विकल्पेनोपादानम् ? उतादित एवेति ? संशयः। यथा—द्यावापृथिव्य एककपाले, आश्विने द्विकपाले, वैष्णवे त्रिकपाले, प्राकृतानां कपालानामेकदेशग्रहणम्। तथा 'एकां सामिधेनीमि'-त्यत्र सामिधेन्येकदेशः, तथा द्विरात्रादिषु द्वादशाहैकदेशः। तत्र विशेषाग्रहणादनियमे प्राप्ते, उच्यते—यः कपालोपधानानां मध्ये प्राचीनः पदार्थः तेन प्रथमः कपालः—उपस्थाप्यते, तस्योपस्थितस्य परित्यागे न किंचित्कारणमस्ति। तथा तेनापि द्वितीयः तेनापि तृतीय इत्येवं क्रमेणोपस्थापितेषूपात्तेषु चावशिष्टानि प्रयोजनाभावाल्लुप्यन्ते। तथा सामिधेन्यादिष्वपि। तस्मादाद्योपादानम् अन्त्यलोपः ॥

इत्येकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् ॥ १ ॥

---

## पञ्चमः पादः

१

**आनुपूर्व्यवताम्०** पदार्थबाधनिरूपणानन्तरमिह पदार्थैकदेशबाधश्चिन्त्यत इति पदान्तरत्वमानन्तर्यञ्च बोध्यम्। **कपालानामिति।** यद्यपि द्यावापृथिव्यमेककपालमिति विशिष्टविधानान्न कपालस्यातिदेश इति प्राकृतैकदेशत्वमसम्भवि, तथापि 'ध्रुवमसी'-त्यादि कपालोपधानमन्त्राभिप्रायेणैकदेशत्वोक्तिरादिममध्यान्तरभावश्चेति बोध्यम्। **विशेषाग्रहणादिति।** आद्योपधाने तत्पूर्वपदार्थोपस्थापितत्वानुरोधवदन्योपधानेन तदुत्तराङ्गोपस्थापकत्वानुरोधस्य साम्यादिति भावः। **तस्येति।** अन्त्यकपालोपधानोत्तरपदार्थस्तु न कर्तव्यतयोपस्थित इति न तदनुरोधेन पूर्वपदार्थकर्तव्यतेति भावः। आनुपूर्व्यं क्रमस्तद्वतामित्यर्थः। आगमवत् आगन्तूनां पूर्वाबाधकत्ववत् इति सूत्रार्थः ॥

**इत्येकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् ॥ १ ॥**

२

एकत्रिके० अस्त्येकत्रिको नाम क्रतुः 'अथैष एकत्रिकः, तस्यैकस्यां स्तोत्रीयायां बहिष्पवमानं स्तुवीत तिसृषु होतुराज्ये एकस्यां मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसिनः एकस्यामच्छावाकस्य तिसृषु माध्यन्दिनः पवमानः इत्येवमन्तादेका तिस्रश्च स्तोत्रीया व्यतिषङ्गेण कर्त्तव्याः श्रूयन्ते। प्रकृतौ माध्यन्दिनपवमाने त्रयस्तृचाः, गायत्रः प्रथमः, बार्हतो द्वितीयः, त्रैष्टुभस्तृतीयः। तत्रैव चेदं वचनं 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः' इति। तदिह नवानामृचां मध्ये तिसृषूपादातव्यासु भवति संशयः—किं त्रयाणां तृचानामाद्या ऋच उपादातव्याः ? उताद्यस्तृचः सकलो ग्राह्यः ? इति। तत्र त्रिच्छन्दस्त्वं श्रुत्या प्रकृतौ विहितम्। चोदकप्राप्तमनुगृहीतुं तृचाद्यानामुपादानम्। आद्ये हि तृचे गायत्रीमात्रोपसङ्ग्रहात् त्रिच्छन्दस्त्वं हीयते। नन्वाद्यया गायत्र्या द्वितीया गायत्र्युपस्थाप्यते, न तु द्वितीयस्य तृचस्याद्या बृहती। सा हि तृतीयया गायत्र्योपस्थाप्यते। तेन पाठक्रमोपस्थापनबलादाद्यस्तृच उपादेयः। सत्यम्, पाठप्राप्तः क्रमो लोपनीयः श्रुतिप्राप्तत्रिच्छन्दस्त्वानुग्रहायेति प्राप्ते—

ब्रूमः—प्रकृतावियं श्रुतिः, अयं पाठ इति बलाबलं चिन्त्यम्। विकृतौ तु सर्वस्य प्रकृतितो लब्धात्मकस्य प्राप्तस्य न तत्कृतः कश्चिद्-

---

२

एकत्रिके० पूर्ववदादित एवोपादानोक्तेरातिदेशिकी सङ्गतिः। मैत्रावरुणस्येत्यादि षष्ठ्यन्तेष्वाज्यमित्यनुषङ्गः। आज्यनामकं स्तोत्रमित्यर्थः। एका तिस्रश्चेति। अतएवैकत्रिकेति क्रतुनामेति बोध्यम्। व्यतिषङ्गः पर्यायः। तत्रैवेति। प्रकृतावेवेत्यर्थः। त्रिच्छन्दाः गायत्रीबृहत्यनुष्टुप्छन्दस्कऋक्साध्य इत्यर्थः। आवापः 'पञ्चदशो माध्यन्दिनःपवमान'इति पञ्चदशत्वसिद्ध्यर्थं ऋगन्तरागमयुक्तः। अतएवागम्यमानानामुक्तत्रिच्छन्दस्कत्वनियमार्थं वचनम्। प्रकृताविति। न च शिष्टाकोपाधिकरणन्यायेन

बलाबलविशेषः, किन्तु यद्विकृतावेव शीघ्रमुपतिष्ठते तदुपादेयम्। अतः क्रम एवात्र बलीयान्। प्रथमा हि गायत्री समाप्यमानैव द्वितीयां गायत्रीमुपस्थापयति, सोपस्थापितोपक्रान्तैव भवतीति नान्यस्यावसरः। तस्माद्आद्ये तृचे माध्यन्दिनः पवमानः स्तोतव्यः॥

इत्येकत्रिके आद्ये तृचे गानाधिकरणम्॥ २॥

३

त्रिकं० एकत्रिक एव क्रतौ व्यतिषङ्गेणैकस्यां तिसृषु च स्तोत्रेषु सम्पाद्यमानेषु, यानि प्रकृतौ धूर्गानसम्पाद्यानि स्तोत्राणि, तेषु यत् त्रिकं सम्पाद्यं तत्किं तिसृष्वृक्षु? उतैकस्या एवर्चो अभ्यासेन त्रिकं सम्पाद्यमिति? संशयः। तत्र तृचगानप्रापिचोदकानुग्रहाय गानान्तरवद्धूर्गानान्यपि त्रिस्तोमकानि तृचे गातव्यानि। 'आवृत्तं धूर्षु स्तुवते' इति तु वचनं तिसृष्वपि गीयमानस्य साम्नः प्रत्येकमावृत्तेस्तेनाभिप्रायेणानुवादमात्रमिति मन्यते। स्यादेतदेवम्, यदि सामावृत्तिरियमुच्यते, स्तोत्रावृत्तिस्त्वियम्। गुणकीर्त्तनश्च स्तुतिः। तयैकरूयैव स्तुतिरावर्त्तनीया। सा चैकस्यामेवर्चि क्रियमाणा तादृश्येवावृत्ता भवति। तद्भेदे तत्रान्यथाभावस्यावर्जनीयत्वात्। वचनञ्चैवमर्थवत्, इतरथा ह्यनुवादमात्रमनर्थकम्। तस्माद्धूर्गानानि त्रिस्तोमकान्येकस्यामेवर्च्यभ्यस्तव्यानि॥

इति धूर्गानाधिकरणम्॥ ३॥

---

पदार्थभूतत्रिच्छन्दस्त्वस्य तद्धर्मभूतक्रमाद्बलवत्त्वमिति शङ्क्यम्। मन्त्राङ्गच्छन्दोङ्गत्रित्वस्य मन्त्राङ्गक्रमात् दुर्बलत्वात्। त्रिच्छन्दस्त्वापेक्षया पूर्वोपस्थितत्वेन क्रमस्याप्यत्र बलवत्त्वाच्चेत्याहुः॥

इत्येकत्रिके आद्ये तृचे गानाधिकरणम्॥ २॥

३

त्रिकं० पूर्ववत्तृचोपादाने प्राप्ते तदपवादात्सङ्गतिः। धूर्गानेति। गायत्रसामविकारविशेषो धूर्गानम्। 'विकारो गायत्रस्य धुर'इति वचनात्। तत्रेति। एकं साम तृचे क्रियत इत्यस्यातिदेशात्तदनुग्रहायेत्यर्थः॥

इति धूर्गानाधिकरणम्॥ ३॥

४

चोदनासु० द्विरात्रादिष्वहर्गणेषु द्वादशाहः प्रवर्तेत इति स्थितम् । तत्र किं द्वादशाप्यहान्यादितः प्रवर्त्तन्ते ? उत प्रायणीयोदयनीये वर्जयित्वा माध्यमो दशरात्रः पृष्ट्यषडहच्छन्दोमचतुष्टयात्मकः ? इति संशये, विशेषाभावात् सर्वप्रवृत्तौ, उच्यते—'द्विरात्रे यत् प्रथमं तद् द्वितीयं यद् द्वितीयं तत् तृतीयं जगतीमन्तर्गच्छती'ति पार्ष्णिकतृतीयस्य जागतस्यान्तरायदर्शनादन्यैश्चैवंविधैर्लिङ्गैर्दशरात्रस्यैव प्रवृत्तिः । अस्ति च द्वादशाहे मध्यमस्य दशरात्रस्य पृथक्सङ्घातक्लृप्तिः । पृष्ठ्याद्यारभ्य हि प्रथममहर्द्वितीयमहरिति व्यवहारः । चतुर्थं छन्दोममहः, अविवाक्यं दशममहरिति व्यवहारः । सति च दशरात्रसङ्घाते तस्यैव प्रवृत्तिर्लिङ्गविशेषैरध्यवसीयते ॥

इति द्विरात्रादिषु दशरात्रविध्यन्तानुष्ठानाधिकरण ॥ ४ ॥

---

४

**चोदनासु०** आद्योपादानस्यापवादात्सङ्गतिः । **स्थितमिति** । अष्टमे 'गणेषु द्वादशाहस्ये'ति सूत्र इत्यर्थः । आद्यान्त्याहर्द्वयप्रवृत्तिबाधसङ्गत्या त्वत्रेयं चिन्तेति ज्ञेयम् । **पृष्ठ्येति** । रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यपृष्ठयुक्तः षडहः । तदुत्तरमहश्चतुष्टयं चतुर्विंशत्यादिगायत्र्यादिच्छन्दोगताक्षरसङ्ख्याकस्तोत्रीयायोगाच्छन्दोभिर्मीयत इति व्युत्पत्त्या छन्दोमसंज्ञमिति ज्ञेयम् । **यत्प्रथममिति** । द्विरात्रस्येति शेषः । **तत् द्वितीयम्** द्वादशाहस्येत्यर्थः । एवमुत्तरत्रापि । जगतीच्छन्दस्कं द्वादशाहस्य च चतुर्थमहः अन्तर्गच्छति त्यजतीत्यर्थः । पूर्वपक्षे जागतस्य तृतीयत्वेनोक्तिरसङ्गता, तस्य चतुर्थत्वात् । अन्यशब्देन गायत्रं प्रथममहः त्रैष्टुभं द्वितीयमिति द्वे लिङ्गे । बहुवचनं पूर्वोक्त्यपेक्षयेति ज्ञेयम् । पूर्वपक्षे प्रायणीयस्य नानाच्छन्दस्कत्वान्नानाच्छन्दस्कमिति स्यान्नतु गायत्रमिति । तथा प्रायणीयोत्तरस्य गायत्रत्वात् त्रैष्टुभत्वानुपपत्तिरित्यर्थः । लिङ्गमुक्त्वा न्यायमप्याह—**अस्ति चेति** । तमेव दर्शयति—**पृष्ठ्यादिति** । पृष्ठ्यषडहादारभ्येत्यर्थः । ननु षडहस्याप्यवान्तरगणत्वात्तस्यैवातिदेशः किं न स्यादत आह—**तस्यैवेति** । रात्रान्तशब्दवत्वरूपावान्तरसादृश्यादिति भावः । अत्र द्विरात्रादौ चतुर्थप्रभृति द्वादशाहिकधर्माणं बाधः प्रयोजनम् । सूत्रार्थस्तु-द्विरात्रादिचोदनासु प्रायणीयोदयनीययोरप्रकृतित्वाल्लिङ्गेन रात्रान्तशब्दवत्वेन यत्प्रथममित्यादिना च दशरात्रनियमः स्यादिति ॥

इति द्विरात्रादिषु दशरात्रविध्यन्तानुष्ठानाधिकरणम् ॥ ४ ॥

५

अपूर्वासु० प्राकृतानां बहूनामेकग्रहणे सत्याद्योपादानम्, अन्त्यलोप इति स्थितम्। यत्र तु प्रकरणपठितानां मन्त्राणामेकदेशग्रहणं यथाग्नावाधूननार्थानां, 'वेशीनां त्वा पत्मन्नाधूनोमी'त्येवमादीनामावपनार्थानां च 'या जाता ओषधयः' इत्येवमादीनाम्। सप्तभिराधूनोतीति, चतुर्दशभिर्वपतीति। तत्रापि किमाद्योपादानम्? उतानियम इति संशये, क्रमानुग्रहायाद्योपादाने प्राप्ते—

बलीयसा प्रकरणेन सर्वेषामङ्गत्वावगमात्सङ्ख्याश्रुतेश्चानियमेन तत्संख्योपादानेऽप्यविराधात् क्रमबाधेनादितो मध्यतो, अन्ततो वा सप्तानां चतुर्दशानां चोपादानम्॥

इत्यग्नावाधूननावपनादिमन्त्राणामनियमोपादानाधिकरणम्॥ ६॥

६

स्तोमविवृद्धौ० विवृद्धस्तोमकेषु क्रतुषु 'एकविंशेनातिरात्रेण प्रजाकामं याजयेदि' त्यादिषु किं प्राकृतानामेव साम्नामभ्यासेन स्तोमविवृद्धिसम्पादनम्? उताप्राकृतानां साम्नामागमेनेति? सन्देहे, अन्येषामश्रवणात्सङ्ख्यायाश्च प्राकृताभ्यासेनापि सम्पत्तेरभ्यास एवं न्याय्यः।

---

५

अपूर्वासु० प्रत्युदाहरणसङ्गत्यभिप्रायेणाह—यत्र त्विति। अग्नौ चयने। आधूननेति। उखापचने यदाधूननं तदर्थानामित्यर्थः। आवपनेति। कृष्टेऽग्निक्षेत्रे नानाबीजावपनार्थानामित्यर्थः। सूत्रं स्पष्टार्थम्॥

इत्यग्नावाधूननावपनादिमन्त्राणामनिमेनोपादानाधिकरणम्॥ ५॥

६

स्तोमववृद्धौ० सप्तभिरित्यादिसङ्ख्याविधानप्रसङ्गात्सङ्गतिः। पूर्वपक्षमाह—अन्येषामिति। सामान्तराणामश्रवणात्सङ्ख्यायाश्च प्रयाजैकादशत्ववन्निर्णीतसङ्ख्ये-

नैवम्, संख्या हि पृथक्त्वनिवेशनी स्तोत्रीयागता सम्पाद्या। स्तोत्रीयापृथक्त्वसिद्ध्यर्थं सामान्तरागममाक्षिपति। अभ्यासे हि मुख्यपृथक्त्वाभावादसमञ्जसा सङ्ख्या स्यात्। तस्मादागमः। स च साम्नामेव नर्चाम्। 'त्रीणि ह वै यज्ञस्योदराणि, गायत्री बृहत्यनुष्टप् च अत्र ह्येवाऽवपन्ति, अत एवोद्वपन्ती'ति वचनेनावपन्यानां गायत्र्याद्याधारत्वनियमादृचां चक्ष्वर्वावापासम्भवादनेनैव वचनेन न्यायप्राप्तोऽप्यागमः पवमानविषय एव कृत इति स्तोत्रान्तरेष्वगत्याऽभ्यासेनैव सङ्ख्यापूरणमित्युक्तम्॥

इति त्रिवृद्धस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणम्॥ ६॥

७

बहिष्पवमाने० बहिष्पवमानेऽपि किं सामागमः? उतनागिम इति संशये? पूर्वेण न्यायेन सामागमे प्राप्ते—

ब्रूमः, 'एकं हि तत्र सामेति ब्रूयात्, स्वरसामैव गायती'ति

---

ष्यतिदिष्टस्तोत्रेष्वभ्यासेनोपपत्तेरिति भावः। **स्तोत्रीयेति**। न चैवमपि क्रतुगतसङ्ख्यायारतत्पृथक्त्वं विना कथमुपपत्तिरिति वाच्यम्, ऋचां प्रगीतत्वेनैव स्तोत्रसाधनतया सामभेदेन तद्रूपभेदोपपत्तेः। अतएव स्तोत्रीयापृथक्त्वेत्युक्तम्। स्ववाक्ये सङ्ख्येयमुद्दिश्य सङ्ख्याविधौ च प्रयाजैकादशत्वन्यायः। न च प्रकृते प्राकृत्य ऋचः सङ्ख्येया उपात्ता इति तद्वैषम्यमिति भावः। ननु सामवदृचामपि कुतो नागमस्तत्राह—**स चेति**। नन्वावापस्य गायत्र्याद्याधारत्वनियमः पवमानान्यस्तोत्रेभ्यः परिसङ्ख्या चेति वाक्यभेद इत्यत आह—**अनेनैवेति**। पवमानप्रकरणादेव स्तोत्रान्तरपरिसङ्ख्यालाभादिति भावः। **उक्तम्** पूर्वपादे। **सूत्रे** अविकारात् आगमे ऋगन्तरसञ्चाररूपविकारापत्तेरित्यर्थः। अन्यत्सुगमम्॥

इति त्रिवृद्धिस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणम्॥ ६॥

७

**बहिष्पवमाने०** सामागमापवादात्सङ्गतिः। **पूर्वेणेति**। सङ्ख्यायाः पृथक्त्वनिवेशन्यायेनेत्यर्थः। यद्यपि बहिष्पवमाने प्रकृतावेकं हि तत्र सामेति श्रुतम्, तथाप्यत्रैकविंशतिसङ्ख्याया औपदेशिकत्वात्तदनुरोधेन सामैकत्वं बाध्यमिति भावः। नन्वागमस्य

वचनात्सामागमो न सम्भवति। न चाभ्यासेनापि सङ्ख्यापूरणं भवति। 'पराग्बहिष्पवमानेन स्तुवीते'त्यनभ्यासवचने पराक्छब्देनाभ्यासस्य श्रुत्यैव निषिद्धत्वात्। तस्मादृगागमः॥

इति पवमाने ऋगागमाधिकरणम्॥ ७॥

८

अभ्यासेन० यत्र सामिधेनीविवृद्धिः 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये' त्यादौ, तत्र किं प्राकृतीभ्य एकादशभ्योऽधिकानामागमः? उत प्रथमोत्तमयोरेवाभ्यासेन सङ्ख्यापूरणम्? उत यावदुक्तं त्रिरभ्यासम्प्रथमोत्तमयोः कृत्वा, अवशिष्टानामागमः? इति संशये, सङ्ख्यासामञ्जस्यादेकादशभ्यः प्राकृतेभ्योऽतिरिक्तानां सर्वासामागमः। नैवम्। प्रकृतौ हि पञ्चदशसु सामिधेनीषु विहितासु एकादशसु सामिधेनीषु पठितासु वचनं 'त्रिः प्रथमामन्वाह त्रिरुत्तमामि'ति सङ्ख्यापूरणं यावद्भवति, तावत्प्रथमोत्तमयोरभ्यसितव्यमित्येवंपरम्। पूरणसङ्ख्याभिप्रायश्च त्रिशब्दः, दृष्टार्थत्वात्। त्रित्वस्वरूपपरत्वे हि अदृष्टार्थता स्यात्। तस्मात्प्रथमोत्तमयोरभ्यासेन सङ्ख्यापूरणमिति प्राप्ते—

---

गायत्र्याद्याधारत्वनियमादृचाञ्च तत्रावापासम्भवादभ्यासेनैव सङ्ख्यापूरणं स्यादत आह—**न चेति**। **अभ्यासेन** ऋगभ्यासेन। सामैकत्ववचनानुरोधेन सामाभ्यासस्यावश्यकत्वादनभ्यासवचनं ऋङ्मात्रविषयमिति भावः। **तस्मादिति**। गायत्र्याद्याधारत्वनियमस्त्वावापस्य बहिष्पवमानगत ऋगागमव्यतिरिक्तविषय इति भावः॥

इति बहिष्पवमाने ऋगागमाधिकरणम्॥ ७॥

८

**अभ्यासेन०** आतिदेशिकी सङ्गतिः। **प्राकृतीभ्य इति**। काम्यानुवचनस्य नित्यानुवचनप्रकृतिकत्वस्य तृतीये स्वयमभिधानात्प्रकृतौ नित्यभूतपञ्चदशानुवचने भवाभ्य इत्यर्थः। **यावदुक्तम्** 'त्रिः प्रथमामन्वाह त्रिरुत्तमामि'ति वचनोक्तम्। द्वितीयपक्षमाह—**प्रकृताविति**। त्रिरुत्तमामिति वचनमित्यन्वयः। वाक्यभेदपरिहारायार्धमन्तर्वेदीति न्यायेन त्रिशब्दस्य पञ्चदशत्वपूरकसङ्ख्यालक्षणया तावत्सङ्ख्याभ्यास-

ब्रूमः—स्यादेवं यदि पूरणसङ्ख्यायाः त्रित्वस्य च सम्प्रतिपत्तिः स्यात्, न त्वेतदस्ति। न ह्यवश्यं प्रथमोत्तमाभ्यासेन सङ्ख्यायां पूर्यमाणायामेकैकस्यास्त्रिरभ्यासो भवति, द्विश्चतुरभ्यासेनापि तत्पूरणसम्भवात्। तस्मात् त्रिरभ्यास एव तत्र विवक्षितः, न यावत्पूरणमभ्यासः। तेन विकृतिष्वपि त्रिरभ्यास एव प्राप्तः, न यावत्पूरणमभ्यासः। तस्मात्प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानामाग्नेयीनां दाशतयीभ्य आगमः। किं पुनरागम्यमानानां कर्मसम्बन्धे प्रमाणम्? न तावल्लिङ्गं तस्याऽन्यादिस्वरूपमात्रविषयत्वेन क्रत्वर्थत्वे प्रमाणाभावात्। सर्वत्र हि लिङ्गं यत्किञ्चित्प्रमाणकं क्रतुसम्बन्धसामान्यमपेक्ष्य द्वारविशेषमात्रे प्रमाणमिति याज्यापुरोऽनुवाक्याकाण्डे व्याख्यातम्। न चान्यदपि प्रमाणं पश्यामः। उच्यते—सङ्ख्येयानां कर्माङ्गत्वे प्रमाणम्। तथा हि सामिधेनीपरिच्छेदद्वारा क्रतोरुपकर्त्तव्यम्। अग्निसमिन्धनप्रकाशिकाश्चर्चः सामिधेन्य उच्यन्ते। तेन तत्समर्थाः या काश्चिदृचोऽवश्यमुपादातव्याः। एवं सर्वत्रागमे द्रष्टव्यम्॥

इति सामिधेनीविवृद्धावागमेन सङ्ख्यापूरणाधिकरणम्॥ ८॥

९

षोडशिनो० अस्ति ज्योतिष्टोमे षोडशी। स च 'षोडशिना वीर्यं-

---

विधानम्। त्रित्वस्वरूपमात्रविवक्षायां तन्नियमादृष्टकल्पनागौरवात्। सम्प्रतिपत्तिः अविनाभावः। तथा च त्रिस्त्रिरिति नित्यवदनुवादायोग इति भावः। वस्तुतस्तु 'समं स्यादश्रुतत्वादि'ति न्यायेन नित्यवत्त्रित्वप्राप्तिसम्भवेऽप्यविनाभावाभावेनाभ्यासपूरकसङ्ख्यालक्षणैव न सम्भवतीत्यत्रैव तात्पर्यम्। तस्मादिति। पञ्चदशसङ्ख्यासम्पादकत्वान्नादृष्टार्थता। नियमादृष्टमात्रन्तु श्रुतिवशेन कल्प्यत इति न दोष इति भावः। व्याख्यातमिति। 'लिङ्गक्रमसमाख्यानामि'ति सूत्रे तृतीयाध्याय इत्यर्थः। शेषं सुगमम्॥

इति सामिधेनीविवृद्धावागमेन सङ्ख्यापूरणाधिकरणम्॥ ८॥

९

षोडशिनः० त्रिरभ्यासस्येव षोडशिनोऽपि प्रकृतिविकृत्युभयसम्बन्धोक्तेराति-

कामः' इति पुरुषार्थतया विहितोऽपि पुनः क्रत्वर्थतया श्रूयते 'अग्न्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अत्युक्थ्ये ग्राह्योऽतिरात्रे ब्राह्मणस्योत्तरेऽहनि द्विरात्रस्य गृह्यते माध्यमेऽहंस्त्रिरात्रस्य चतुर्थेऽहन्यहीनस्य गृह्यते' इति । तत्र क्रत्वर्थषोडशिनं प्रति सन्देहः—किं प्रकृतौ स्यात् उत विकृतिष्वेवोत्क्रष्टव्यः ? इति । 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यादिवचनैर्विकृतिसम्बन्धावगमादग्निष्टोमे राजन्यस्येत्यादिवचनस्य च वैकृताग्निष्टोमाभिप्रायत्वेनाप्यविरोधात् प्रकरणं बाधित्वा वाक्येनोत्कर्षे प्राप्ते—

ब्रूमः—प्रकृतिप्रकरणाम्नातैरग्निष्टोमादिशब्दैस्तत्रैव सम्भवद्भिः किमित्यसन्निहिताऽपि विकृतिरभिधीयते । तस्माद्वाक्येनैव प्रकृतौ स्यात् । तत्र राजन्यादिनिमित्तेन विहितः स विकृतिष्वनैमित्तिको विधीयते 'उत्तरेऽहन्द्विरात्रस्ये'ति ॥

इति षोडशिनो ज्योतिष्टोमाङ्गत्वाधिकरणम् ॥ ९ ॥

१०–११

तस्यां० षोडशिन्येव सन्देहः—किमसावाग्रयणात्, उक्थ्याद्वा ग्रही-

---

देशिकी सङ्गतिः । प्रकरणसम्बन्धबाधाबाधचिन्तनादध्यायसङ्गतिश्च बोध्या । **अस्तीति** । 'य एवं विद्वान् षोडशिनं गृह्णाती'त्युत्पन्न इति शेषः । प्रकृत्यर्थता किं प्रकरणादुताऽग्निष्टोम इति वाक्यादिति विकल्प्याह—**उत्तरेऽहन्निति** । प्रकरणात् वाक्यस्य प्राबल्यादिति भावः । द्वितीयकल्पं निरस्यति—**अग्निष्टोम** इति । न च विकृतिपरत्वे मानाभावः । उत्तरेऽहन्नित्यादि विकृतिप्रायपाठस्यैव मानत्वादिति भावः । प्रकरणसहकृतश्रुतेः प्रायपाठमात्राद्बलवत्त्वात्प्रकृत्यङ्गत्वमवर्जनीयमित्याह—**प्रकृतीति** । एवं सत्यतिदेशादेव प्राप्तिसम्भवे द्विरात्रादिषु तद्विधिरनर्थक इत्याशङ्क्याह—**तत्रेति** । सूत्रार्थस्तु—षोडशिनो वैकृतत्वमेव । तत्र विकृतौ कृत्स्नैर्वाक्यैर्विधानादिति ॥

इति षोडशिनो ज्योतिष्टोमाङ्गत्वाधिकरणम् ॥ ९ ॥

१०–११

**तस्य०** प्रसङ्गसङ्गतिं सूचयति—**षोडशिन्येवेति** । अत्र संशये उक्थ्याद्वेति

तव्यः ? उताग्रयणादेवेति ? तत्र 'आग्रयणाद्गृह्णति उक्थ्यान्निगृह्णाती' ति वचनद्वयाद्विकल्पेन, समुच्चयेन वा द्वाभ्यां गृह्यते। एवमपर्यवसिते पूर्वपक्षे, मध्ये चिन्ता।

तृतीयसवने० वचनात् किं षोडशी सवनत्रये ग्राह्यः ? उत तृतीयसवन एवेति ? किं पुनः कारणमन्तरा चिन्तायाः ? मूलाधिकरणसिद्धान्ते कालोपलक्षणत्वमुक्थ्यस्य स्थास्यति। स्थिते च तस्मिन्पूर्वयोः सवनयोर्ग्रहणमाशङ्कितुमशक्यम्, तयोरुक्थ्याभावात्। तस्मान्मध्ये चिन्तितमिति केचित्। तदयुक्तम्, एवमपि पूर्वपक्षं समाप्य कर्त्तव्येयं चिन्ता स्यात्, न मध्ये। किं च 'प्रातः सवने ग्रहीतव्यः' इत्यादिवचनादस्य सवनत्रये ग्रहणमाशङ्क्यते। न च वचनस्य परिपन्थी सम्भवति। तस्माद्यद्यपि पूर्वयोः सवनयोरुक्थ्याभावात्तदुत्तरकालता न सम्भवति तथाऽपि वचनबलाद् ग्रहीतव्यः। कालवचनन्तु तार्त्तीयसवनग्रहणाभिप्रायं भविष्यति। विद्यते च पूर्वयोरपि सवनयोरुक्थ्यम्। तस्माद्विचित्रगतिः सूत्रकारश्चिन्तान्तरमध्येऽपि प्रसङ्गात् चिन्तान्तरं कृतवानित्येव वक्तव्यम्। तत्र 'प्रातः सवने गृह्णाती'त्यादिभिर्वाक्यैः सवनत्रयेऽपि विधानात् त्रिष्वपि ग्राह्यः—

नैवम्, प्रातः सवनाद्यनुक्रमणं निन्दाद्वारेण तृतीयसवनस्तुत्यर्थम्। सवनत्रयं ह्यनुक्रम्य 'यत्प्रातः सवने गृह्णीयात् वज्रो वै षोडशी' त्यादीनां

---

विकल्पकोटिरुक्थादपीति समुच्चयरूपलक्षणमिति समुच्चयेन वेत्यनेन सूचितम्। **एवमिति**। एवंविधे पूर्वपक्षेऽसमाप्ते सतीत्यर्थः॥

सतृतीय० अन्तरा चिन्तायामेकदेशिमते कारणमाह—**मूलेति**। **उक्थ्याभावादिति**। 'पशुकाम उक्थ्यं गृह्णीयादि'ति काम्योक्थ्यग्रहस्य यज्ञायज्ञियस्तोत्रानन्तरभावितया पूर्वसवनयोरभावादिति भावः। **एवमपीति**। क्त्वाचिन्तायाः प्रायशः पूर्वपक्षसमाप्तावेव दर्शनादिति भावः। मुख्यदूषणमाह—**किञ्चेति**। **कालेति**। 'उक्थ्यान्निगृह्णाती'ति वचनमित्यर्थः। वस्तुतः काम्योक्थ्यस्य पूर्वसवनयोरसत्वेऽपि क्रत्वर्थस्योक्थ्यस्य तत्रापि सत्वान्नोक्तशङ्काया असम्भव इत्याह—**विद्यते चेति**। स्वमतेनान्तराचिन्तामुपपादयति—तस्मादिति। सिद्धान्तमाह—**नैवमिति**। **निन्दाद्वारेण** आद्यसवनद्वयनिन्दाद्वारेण। जर्तिलयवागून्यायेनेति भावः। ननु तैत्तिरीयशाखायां 'सवने सवनेऽभिगृह्णा-

सवनद्वयं निन्दित्वा' तृतीयसवने ग्राह्य इति श्रूयते। तस्मात्सर्वमिदमेकं वाक्यं तृतीयसवने षोडशिविधानार्थमिति, तत्रैवास्य ग्रहणम्।

स्थितादुत्तरम्। 'उक्थ्यान् निगृह्णाति षोडशिनमि'ति वचनादुक्थ्यादपि ग्रहीतव्यमित्युक्तम्। यदपि शाखान्तरवचनं 'तं पराञ्चमुक्थ्यात् षोडशिनं गृह्णाती'ति। तत्राप्युक्थ्यादित्यपादानपञ्चमी न दिक्छब्दयोगनिमित्ता, पराक्शब्दस्य 'पराचोः सामिधेनीरि' तिवदनभ्यासवाचित्वेन दिक्छब्दत्वाभावात्। तस्मादुभाभ्यां ग्रहणमिति प्राप्ते ब्रूमः—

कृत्स्नस्याग्रयणादेव ग्रहणं नित्यवच्छ्रुतम्।
न युक्तं बाधितुं तस्मान्न विकल्पसमुच्चयौ॥

यत्तु वचनादिति। तन्न; 'पराञ्चमुक्थ्यादि'त्यत्र पराक्शब्दोऽनभ्यासवचनः सन्नपकर्षकः स्यात्, अभ्यासस्य प्राप्त्यभावात्। तस्माद्दिक्छब्दोऽयं कालवचनः, तन्निमित्ता चेयं पञ्चमी। उक्थ्यादूर्ध्वकाले षोडशिनं गृह्णातीत्यत्रापि दिक्छब्दनिमित्तैव पञ्चमी। न ह्यवश्यं दिक्छब्दयोगापेक्षैव सा। विनाऽपि तेन मासात्प्रवक्ष्यामीत्यादिषु दर्शनात्। तेनेयं सह युक्ते तृतीयावदर्थमात्रापेक्षा न शब्दमात्रयोगमपेक्षते। एवं चाग्र-

---

ती'ति श्रवणात्तदेकवाक्यतयाऽत्रापि सवनत्रयविधिरित्याशङ्क्य प्रतीयमानैकवाक्यत्वसम्भवे भिन्नवाक्यत्वायोगान्न्यायतस्तृतीयसवन एवात्र विधिः। शाखान्तरे तु सवन त्रयेऽपीति विकल्पः फलमुखतया न दोष इत्याशयेनोपसंहरति। **तस्मादिति।**

**स्थितादिति।** उक्थ्यादपि ग्राह्य इति समुच्चयपूर्वपक्षे स्थितात्पूर्वाधिकरणात् शङ्कानिरासोत्तरमुच्यते। 'अनभ्यासे पराक् शब्द' इति पूर्वपक्षसूत्रान्तरेणेति शेषः। शङ्का तन्निरासश्चाह -- **यदपीति।** उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात्पराक् शब्दस्यानभ्यानरूपार्थपरत्वमेव युक्तमिति भावः। **प्राप्त्यभावादिति।** वस्तुतः कादाचित्कस्यावृत्याप्युक्थ्यपात्रात्षोडशिग्रहपूरणस्य रागतः प्राप्तावपि षोडशिग्रहणोद्देशेनोक्थ्यापादानकत्वानभ्यासोभयविधाने वाक्यभेदप्रसङ्ग इति दूषणं ज्ञेयम्। कालवचन-

यणात् कृत्स्नस्य नित्यवद्ग्रहणं न बाधितं भवति। तस्मादाग्रयणादेव ग्रहीतव्यः ॥

इत्याग्रयणादेव तृतीयसवन एव च षोडशिग्रहणाधिकरणम् ॥ १०, ११ ॥

१२

उक्थ्याऽग्निष्टोम० षोडशिन्येव 'यदाऽप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः' इत्यादिवचनादग्निष्टोमोक्थ्ययोर्वा गृह्यते, तदा किमस्तुतशस्त्रः स्यात्? उत तदाऽपि सस्तुतशस्त्रः? इति संशये,

उक्थ्याग्निष्टोमसंयोगे नास्य स्तोत्रादिकं भवेत्।
षोडशिस्तोत्रसंस्थायां नोक्थ्याग्निष्टोमता भवेत् ॥
अग्निष्टोमादिशब्दा हि स्तोत्रसंस्थानिमित्तकाः।
षोडशिस्तोत्रसंस्थायां नाग्निष्टोमः क्रतुर्भवेत् ॥

तत्राग्निष्टोमे ग्राह्य इत्येतदेव विरुध्यते। तस्मादस्तुतशस्त्रः स्यात्।

सत्यं संस्थान्यतापत्तिर्वचनात्तु न दुष्यति।
पूर्वसंस्थोपमर्देन संस्थैवान्या विधीयते ॥
उक्थ्यसंस्थो हि यः प्राप्तस्तथाऽग्निष्टोमसंस्थितिः।
राजन्यस्य तथा नासौ किन्तु षोडशिसंस्थितिः ॥

---

त्वात्कथं दिक्शब्दत्वमत आह—**तस्मादिति**। दिशि दृष्टः शब्दो दिग्वचन इति रीत्या दिग् देशकालवाचिनां वैयाकरणैर्दिक् शब्दत्वाङ्गीकारादिति भावः ॥

इत्याग्रयणादेव तृतीयसवन एव षोडशिग्रहणाधिकरणम् ॥ १०,११ ॥

१२

**उक्थ्या०** पूर्वोक्तसमुच्चयाभावापवादेनेह स्तोत्रसमुच्चयोक्तेः सङ्गतिः। **संयोगे इति** पृथक्पदम्। उत्तरार्धे यत इत्यध्याहार्यम्। स्तोत्रेण संस्थासमाप्तिः **स्तोत्रसंस्था**। **पूर्वेति**। नात्राग्निष्टोमसंस्थायां निमित्तभूतायां षोडशिसंस्थता विधीयते येन विरोधः स्यात्किन्तु राजन्यकर्तृकत्वे निमित्तेऽग्निष्टोमादिसंस्थाबाधेन षोडशिसंस्थाविधिरित्यर्थः। किमित्येवं व्याख्यायते इत्याशङ्क्य संस्थावाचकषोडशिशब्दस्वारस्यादिति। **तस्मादिति**।

इत्येष वचनस्यार्थस्तस्मात्सस्तुतशस्त्रकः ।
तदङ्गत्वेन हि स्तोत्रं शस्त्रं चाहत्य चोदितम् ॥

'एकविंशं स्तोत्रं भवति, प्रतिष्ठित्यै' 'हरिवच्छस्यते' इति विहितं स्तुतशस्त्रमसति विरोधे किमुक्थ्याग्निष्टोमसंस्थस्य न क्रियते ? तस्मात्सस्तुतशस्त्रः ॥

इति षोडशिग्रहस्य सस्तोत्रशस्त्राधिकरणम् ॥ १२ ॥

१३

अभावादिति० अङ्गिरसां द्विरात्रे श्रूयते 'वैखानसम्पूर्वेऽहन् साम भवति, षोडश्युत्तरे' इति किमिदमप्राप्तस्य षोडशिनो विधानार्थम् ? उत प्राप्तस्य परिसङ्ख्यार्थमिति ? संशये, विधिः प्राप्त्यभावात् । न तावच्चोदकेन प्राप्तिः, स ह्यानुमानिकः । तत्प्राप्तेः प्रागेव प्रत्यक्षेण वचनेन विधीयते 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनेन । अथवा वैकल्पिकी चोदकप्राप्तिः, प्रकृतावतिरात्रे षोडशिनो वैकल्पिकत्वात् । तत्र नियमार्थं विधानम् । विहिते च तस्मिन्नानुमानिको न प्रापयति । तस्मान्न तावच्चोदकप्राप्तिमपेक्ष्य तत्परिसङ्ख्या । न चानेनैव 'उत्तरेऽहन्द्विरात्रस्य

---

हेत्वन्तरमाह—तदङ्गत्वेनेति । हरिवत् हरिशब्दयुक्तम् । शस्यते शस्त्रं क्रियत इत्यर्थः । ननु काम्यषोडशिविषयं स्तोत्रादिविधानं स्यादत आह—असतीति । किं कुतः उक्थ्याग्निष्टोमसंस्थत्वेन प्रसक्तस्य क्रतोः षोडशिस्तोत्रं नैमित्तिकं न क्रियते ? किन्तु कर्तव्यमेवेत्यर्थः । तथा च काम्यविषयत्वेन सङ्कोचे मानाभाव इति भावः । सूत्रे-सति स्तोत्रशस्त्रे संस्थान्यत्वापत्तेरित्यर्थः ॥

इति षोडशिग्रहस्य सस्तोत्रशस्त्राधिकरणम् ॥ १२ ॥

१३

अभावात्० अत्र पूर्वव्याख्याने द्विरात्रान्तरे षोडशिबाधादपवादरूपा । उत्तरव्याख्याने तु द्विरात्रान्तरेऽपि षोडशिसमुच्चयादातिदेशिकी सङ्गतिरिति बोध्यम् । प्राप्तिः किमतिदेशादुत 'उत्तरेऽहन् द्विरात्रस्ये'ति प्रत्यक्षवचनात् । तत्र नाद्य इत्याह—न तावदिति । ननु शीघ्रप्रवृत्यापि विधानमनर्थकमत आह अथवेति । आद्यपक्षदूषण-

गृह्यते' इति सामान्यवचनेन प्राप्तत्वात् षोडश्युत्तरवचनं परिसङ्ख्यार्थमिति वाच्यम्। सामान्येन हि सर्वद्विरात्राणामिदं वचनं तत्प्राप्तेः प्रागेवाङ्गिरसां द्विरात्रे षोडश्युत्तर इति विशेषवचनेन विधीयते। तस्मादप्राप्तविधिः 'षोडश्युत्तरे' इति। नैतदेवम्, यद्यपीदं सामान्यवचनं तथाऽपि प्रत्यक्षेणैव वाक्येन द्विरात्रेषूत्तरेषामह्नां विकल्पेन प्राप्तः षोडशी नियतः। 'षोडश्युत्तरे' इत्यत्र तु नास्तिप्रत्यक्षो द्विरात्रादिसंयोगः। प्रकरणात्तु कल्प्यते। तच्च दुर्बलं वाक्यात्। तस्मात्सामान्यवचनेनैव वैकल्पिकीं चोदकप्राप्तिमपोह्य नियम्यमानः षोडशी 'षोडश्युत्तरे' इत्यनेन द्विरात्रान्तरेषु तु यथाचोदकं विकल्प एव स्यात्।

तदिदं वृत्त्यन्तरकारव्याख्यानमधिकरणस्यानुपपन्नमिति मत्वा भाष्यकारेण व्याख्यानान्तरमारब्धम्। तत्र यः पूर्वस्मिन् व्याख्याने सिद्धान्तः स एव पूर्वपक्षः परिसङ्ख्येति। सिद्धान्तस्तु—परिसङ्ख्यायास्त्रिदोषत्वाद्व्याख्यानसविधिशेषोऽयं न विधिः, परिसङ्ख्या वा। तस्मात्सर्वद्विरात्रेषूत्तरेषामह्नां नियत एव षोडशी, सामान्यवचनेन प्राप्तत्वात्। वचनान्तरेणापरिसङ्ख्यातत्वात्॥

इत्यङ्गिरसां द्विरात्रे षोडशिनियमाधिकरणम्॥ १३॥

---

मुपसंहरति-**तस्मादिति**। **तत्परिसङ्ख्या** तस्य षोडशिनो द्विरात्रान्तरेभ्यः परिसङ्ख्या। द्वितीयपक्षं दूषयति—**न चेति**। **प्रत्यक्षेणैवेति**। प्रत्यक्षपठितद्विरात्रपदयुक्तेनेत्यर्थः। तथा च सामान्यरूपोऽपि वाक्यप्रमाणकोऽयं विनियोग इति बलवानित्यर्थः। सिद्धान्तमाह **तस्मादिति**। प्रत्यक्षवचनस्य नियमार्थत्वात्तत्प्राप्तनियमपरिसङ्ख्येयमित्यर्थः। चोदकप्राप्तपरिङ्ख्यापक्षे तु द्विरात्रान्तरे षोडशिनैव ग्राह्य इति स्वरूपपरिसङ्ख्या स्यादिति विशेषो ज्ञेयः। **सूत्रार्थस्तु** षोडशी अङ्गिरसां द्विरात्रातिरिक्तेष्वतिरात्रेष्वभावात्तत्रैव नियतो गृह्यत इति॥

इत्याङ्गिरसां द्विरात्रे षोडशिनियमाधिकरणम्॥ १३॥

१४

चतुर्थे० षोडश्येव 'चतुर्थे चतुर्थेऽन्यहीनस्य गृह्यते' इति श्रूयमाणः सन्दिह्यते किमेकस्यैवाहीनस्य चतुर्थे गृहीत्वा पुनस्तत्पुरस्ताच्चतुर्थेऽभ्यासेन ग्रहीतव्यः ? उतैकस्याहीनस्यैकस्मिन्नेव चतुर्थे सकृद्ग्रहणं वीप्सा तु नानाभिप्रायेति ? तत्र नानाऽहीनाभिप्रायत्वे न्यायप्राप्तत्वेन वीप्सानर्थक्यादहीनस्येति चैकवचनश्रवणादेकस्मिन्नहीने चतुर्थे चतुर्थेऽभ्यासः । नैवम्, अहीनस्य चतुर्थ इत्युच्यते । एकस्य चाहीनस्यैकं चतुर्थमहः । यत्तु चतुर्थाच्चतुर्थं तत् अहीनस्याष्टमं भवति । तत्र गृह्णन्नाहीनस्य गृह्णीयात् । तस्मात्सकृद्ग्रहणम् । एकवचनं तु सामान्याभिप्रायं वीप्सा च न्यायप्राप्तानुवादः ॥

इति नानाहीने षोडशिग्रहणाधिकरणम् ॥ १४ ॥

१५

जगत्साम्नि० ज्योतिष्टोमे श्रूयते 'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रानि'ति । किमाग्रयणाग्रता ज्योतिष्टोमे निविशते ?

---

१४

चतुर्थे० द्विरात्रान्तरेषु षोडशिनियमस्य समुच्चयवदष्टरात्रादावहर्द्वये तत्समुच्चयमाशङ्क्यापवादात्सङ्गतिः । न्यायेति । वचनस्य त्रिरात्राधिकसर्वाहीनविषयत्वन्यायप्राप्तत्वेनेत्यर्थः । अन्यत्सुगमम् । सूत्रे भोजनवदित्यस्य यथा चतुर्थे चतुर्थेऽहनि देवदत्तो भुङ्क्त इत्येकस्मिन्नेव पक्षे चतुर्थाच्चतुर्थ इति गम्यते तद्वदित्यर्थः ॥

इति नानाहीने षोडशिग्रहणादिकरणम् ॥ १४ ॥

१५

जगत्० पूर्ववदाग्रयणाग्रताया ज्योतिष्टौमिकाङ्गान्तरैः समुच्चयाभावोक्तेराति-

किं वोत्कृष्येतेति ? संशये, प्रकरणात् ज्योतिष्टोमे स्यात् । जगत्साम-शब्देनापि ज्योतिष्टोम एव प्रकरणाद्यथाकथं चिदुच्यत इति प्राप्ते ब्रूमः—न जगन्नाम साम ज्योतिष्टोमे अन्यत्र वा कुत्रचिदस्ति । तेनाय-मृग्द्वारेण व्यपदेशः । जगत्यामृच्युत्पन्नं साम जगत्साम, तद्यत्र स ज-गत्सामा । न च ज्योतिष्टोमे तदस्ति । विद्यते तु विषुवति । तस्मा-द्विषुवान् जगत्सामा । तत्संयुक्ता चाग्रयणाग्रता प्रकरणादुत्क्रष्टव्या ॥

एवं वा-'यदि जगत्सामा आग्रयणाग्रानि'त्यत्रैव जगत्सामशब्दे सन्देहः, किमनेन ज्योतिष्टोम एव रथन्तरसामा बृहत्सामा वोच्यते ? किं वा स एवोभयसाम ? अथ वा रथन्तरसामैव ? उत यत्र जगत्यामुत्पन्नं साम विषुवति, सोऽनेनाभिधीयते ? इति । प्रकरणात् ज्योतिष्टोम एवान्य-तरसामाऽभिधीयते । तथा सति पूर्वाभ्यामग्रताभ्यामाग्रयणाग्रताया विकल्प एव स्यात् । तस्मादुभयसामा जगत्सामा । जगच्छब्दो हि कृत्स्नवचनः । कार्त्स्न्यञ्च समुच्चये स्यात् । यस्मात्समुच्चितोभयसामा जगत्सामा । नैवमपि युक्तम् । एवं हि सति जगत्सामेत्यनर्थकं स्यात् । आग्रयणाग्रान् गृह्णीयादित्येतावतैवोभयसामपक्षे निवेशसिद्धेः अन्यतरसामत्वपक्षयोः पूर्वाभ्यामग्रताभ्यामवरुद्धत्वात् । नचोभयसामत्वं ज्योतिष्टोमेऽस्ति, बृहद्रथन्तरयोर्वचनेनैव विकल्पविधानात् । तस्मात् 'ईशानमस्य जगतः स्वर्दृशमि'त्येवं जगच्छब्दवत्यामुत्पन्नं रथन्तरमेव जगत्साम । अतस्तत्साम जगत्सामेति प्राप्ते, ब्रूमः—पदद्वारेण ऋक्, ऋचा च साम लक्षयितव्यं स्यात् । तत्र लक्षितलक्षणा स्यात् । तस्माज्जगत्यामुत्पन्नेन साम्नाऽसौ

---

देशिकी सङ्गतिः । अधिकाङ्क्षका तु ज्योतिष्टोमप्रकरणाम्नानात् । यथाकथञ्चिदिति । 'ईशानमस्य जगत' इति जगत् पदयुक्तायामृच्युत्पन्नं रथन्तराख्यं समास्येत्येवमित्यर्थः । तथा च पूर्वाभ्यामग्रताभ्यां सहास्या अग्रताया विकल्प इति भावः । विषुवान्नामैकाहः सोमयागः । एतदेव विस्तरेण वर्णकान्तरेण भाष्यकृतोक्तं तदनुसारेण स्वयमप्याह—**एवं वेति** । **निवेशेति** । अग्रतान्तराविरोधादिति भावः । वस्तुतो निमित्तमेवासिद्धं ज्योति-

विषुवानेव जगत्सामा। तदर्थं चाग्रयणाग्रत्वम्। पूर्वव्याख्यायायां नैमित्तिकमाग्रयणाग्रत्वं विचारितं तद्धेतुत्वेन तु जगत्सामशब्दप्रस्तावः। इह तु स एव साक्षाद्विचारित इति भेदः॥

इति जगत्सामाधिकरणम्॥ १५॥

१६

उभयसाम्नि० यत्र बृहद्रथन्तरपृष्ठयोः समुच्चयः संसवगोसवादिषु, तत्र यत् प्रकृतौ रथन्तरनिमित्तं बृहन्निमित्तञ्च 'उपवतीं रथन्तरपृष्ठस्य प्रतिपदं कुर्यात्, अग्रवतीं बृहत्पृष्ठस्ये'त्यादि, तदुभयं विकल्पेन कर्त्तव्यम्? उत रथन्तरनिमित्तम्? अथवोभयं न कर्त्तव्यमिति? संशयः। तत्रोभयसामत्वेऽपि रथन्तरस्य बृहतश्च सद्भावात् सत्तया चोभयोः क्रतुविशेषणत्वादुभयमपि प्राप्तम्। समुच्चयासम्भवाद्विशेषाग्रहणाच्च विकल्पः। अथवा मुख्यत्वाद्रथन्तरनिमित्तमेव स्यादिति प्राप्ते ब्रूमः—बृहद्रथन्तरे हि प्रकृतौ निरपेक्षया सत्तया, परस्परव्यवच्छेदेन वा क्रतुंविशिंषती

---

ष्टोम इत्याह—**न चेति**। व्याख्ययोर्भेदमाह—**पूर्वेति**। सूत्रं सुगमम्॥

इति जगत्सामाधिकरणम्॥ १५॥

१६

**उभय०** अत्राप्युभयसामकेषु प्रतिपद्द्वयस्याङ्गान्तरैः सह समुच्चयाभावोक्तेरातिदेशिकी सङ्गतिः। **समुच्चय इति**। 'संसव उभे कुर्याद्गोसव उभे कुर्यादि'ति वचनादित्यर्थः। **उपवतीमिति**। रथन्तरं पृष्ठमस्यैवंविधस्य ज्योतिष्टोमस्य सम्बन्धि यद्बहिः पवमानस्तोत्रं तत्र 'उपास्मै गायतानरः' इति ऋचं प्रतिपदं प्रथमां कुर्यादित्यर्थः। बहिष्पवमानावान्तरप्रकरणात्तद्विषयोऽयं विधिः। रथन्तरपृष्ठस्य तु क्रतोर्निमित्तत्वं विशेषणीभूतरथन्तरपर्यवसितं बोध्यम्। एवमग्रिमवाक्येऽपि। अग्रवती च 'पवस्व वाचो अग्रिय' इति ऋक्। **सत्तयेति**। पाक्षिकत्वेऽयोगव्यावृत्त्या सत्तया विशेषणत्वमन्यव्यावर्तकत्वेऽपि युक्तमिति भावः। **मुख्यत्वात्** प्राथम्यात्। **निरपेक्षेति**। प्रकृतौ वैकल्पि-

निमित्ततामुपगते। अत्र तूभयोः सहैव क्रतुसम्बन्धात्सापेक्षयोः नान्यतरेणापि क्रतुर्विशेष्यते। तस्मान्निमित्तविघातादकर्त्तव्यम् ॥

इति उभयसामाधिकरणम् ॥ १६ ॥

१७

ऐन्द्रवायव० ज्योतिष्टोमे उपांश्वन्तर्यामावधाराग्रहौ विधाय, 'ऐन्द्रवायव-मैत्रावरुणादीनां धाराग्रहाणामुपक्रमे श्रूयते-'वाग्वा एषा यदैन्द्रवायवः, यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते, वाचमेवानुप्रयन्ति 'अण्व्या धारया गृह्णाती'ति। तत्र संशयः—किमैन्द्रवायवः सर्वादित उपांश्वन्तर्यामाभ्यामपि पूर्वं ग्रहीतव्यः? उत पाठप्राप्तस्थाने? इति। तदर्थमिदं विचार्यते—किमैन्द्रवायवप्रभृतीनां ग्रहाणामेतद्विधायकम्? उत ग्रहानुवादेनैन्द्रवायवाग्रताधर्मोऽङ्गत्वेन विधीयते? इति। तत्र ग्रहाणां वचनान्तरैरेव प्राप्तत्वात्तदग्रताविधिरयम्। तच्चाविशेषेण सर्वग्रहाणामङ्गमुपांश्वन्तर्यामयोरपि संपादयितव्यम्। इतरथा तयोर्वैगुण्यं स्यात्। अतः सर्वादितः

---

कत्वान्निरपेक्षसत्तामात्रेणायोगव्यावृत्त्या विशेषत्वसम्भवेऽन्यत्र समुच्चयवशेन तदयोगाद्व्यवच्छेदकत्वेनाऽपि च तदसम्भवान्न विशेषणत्वमिति निमित्तासम्भव इत्यर्थः ॥

इत्युभयसामाधिकरणम् ॥ १६ ॥

१७

**ऐन्द्रवायवस्य०** अत्र पाठप्राप्तग्रहक्रमस्य बाधमाशङ्क्य तदपवादात्सङ्गतिः। 'धारया गृह्णाती'त्येवं गृहीता धाराग्रहा इतरे अधाराग्रहाः। **वचनान्तरैः** 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाती'त्यादिभिः। **तदग्रतेति**। ऐन्द्रवायवाग्रतेत्यर्थः। **तच्च** ऐन्द्रवायवाग्रत्वञ्च। **ग्रहविधिस्त्विति**। पदश्रुतेरिति भावः। ननु

सर्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे।

विधिशक्त्युपसङ्क्रान्तेः स्याद्धातोरनुवादतेति ॥

न्यायादग्रताविधिरेव युक्त इत्याशयेनाह—**कथमिति**। समाधत्ते—**धारेति**। धारावाक्यसन्निधानादित्यर्थः। **अत्र** ऐन्द्रवायवाग्रता विधौ। नन्वेवं ग्रहाणामपि प्राप्तैर्वाक्यवैय्यर्थ्यपरिहारायाधाराग्रहणस्याप्यत्रोपादानं स्यादत आह—**अत इति**। अनुपस्थिता-

प्रतिकर्षः । स्यादेवं, यद्यग्रताविधिः स्यात् । ग्रहविधिस्त्वयम् । कथं ? धारासंयोगाद्धि धाराग्रहाणामत्र गृह्णातिनोपादानम् । तेषाञ्च पाठप्राप्त-मैन्द्रवायवाग्रत्वम् । अतो वक्ष्यमाणानामैन्द्रवायवादीनां ग्रहाणां संक्षेपेणा-यमुपक्रमः । तस्मात्स्वस्थानस्यैवैन्द्रवायवस्य ग्रहणम् ॥

इत्यैन्द्रवायवस्य सर्वादौप्रतिकर्षाभावाधिकरणम् ॥ १७ ॥

१८

कामसंयोगे० तत्रैव संक्षेपेणोपक्रम्य प्राग्विस्तारवचनेभ्यः काम-संयुक्तानि वचनान्याम्नातानि 'ऐन्द्रवायवाग्रान् गृह्णीयात्, यः कामयेत यथापूर्वं प्रजाः कल्पेरन्नि'ति । तत्र किं सर्वादितः प्रतिकर्षः, उत तत्रापि स्वस्थान एव ग्रहणमिति । तत्र ग्रहाणां नित्यत्वान्न कामे विधानम् । अतो अत्रैन्द्रवायवाग्रतागुणः कामाय विधीयत इति सर्वादितः प्रतिकर्षः ।

नैवम् गुणो हि विधीयमानः प्रकृतान् ग्रहानाश्रित्य विधीयेत । धाराग्रहाश्च प्रकृताः । तेषां च स्वरूपवदैन्द्रवायवाग्रताऽपि पाठादेव प्राप्ता सतीकामे विधातव्या । तद्वरं श्रुत्यर्थविधानाय ग्रहणमेव कामे विहितम् । अतः कामसंयोगेऽपि स्वस्थान एवैन्द्रवायवः ॥

इत्याकामसंयोगेऽप्यैन्द्रवायवस्यादावप्रकिर्षाधिकरणम् ॥ १८ ॥

---

धाराग्रहग्रहणायोगादित्यर्थः । संक्षेपेण सामान्यरूपेण । उपक्रमो विधिः । तत्प्रयोजनं तु अनन्तरश्रुतकाम्याग्रतादिगुणाश्रयत्वस्य धाराग्रहेष्वेव सिद्धिरित्यग्रे वक्ष्यते ॥

इत्यैन्द्रवायवस्य सर्वादौ प्रतिकर्षाभावाधिकरणम् ॥ १७ ॥

१८

कामसंयोगे० आतिदेशिकी सङ्गतिः । नित्यत्वादिति । क्रत्वर्थत्वेन फलाना-काङ्क्षत्वादित्यर्थः । तद्वरमिति । उभयोरपि क्रत्वर्थतया फलाकाङ्क्षाविरहसाम्ये पदश्रुत्यनुरोध एव युक्त इत्यर्थः ।

इति कामसंयोगेऽप्यैन्द्रवायवस्यादौ प्रतिकर्षाभावाधिकरणम् ॥ १८ ॥

१९

परेषु० तत्रैव श्रूयते 'शुक्राग्रान् गृह्णीयात् प्रतिष्ठाकामः, मन्थ्यग्रानभिचरन्नि'त्यादि । तत्र संशयः— किं शुक्राग्रादीनामपि कामसंयोगे स्वस्थाने ग्रहणम् ? उत प्रतिकर्षः ? इति । तत्र पूर्ववदेव शुक्रप्रभृतीनां नित्यानां ग्रहाणां कामे विधानात्स्वस्थाने प्राप्ते उच्यते—न हि प्राकृता धाराग्रहाः पाठतः शुक्राग्राः, येन तदनुवादेन ग्रहाणां कामे विधिः स्यात् ऐन्द्रवायवाग्रा हि ते । तत्र ग्रहान्कामे, ग्रहेषु च शुक्राग्रतां विदधद्वाक्यं भिद्यते । तस्माद्ग्रहणाश्रितः शुक्राग्रतादिगुणः कामाय विधीयत इति प्रतिकर्षः ॥

इत्याश्विनाग्रादीनां ग्रहाणामप्रतिकर्षाधिकरणम् ॥ १८ ॥

२०

पुरस्तादैन्द्र० स्थिते प्रतिकर्षे चिन्त्यते—किं सर्वादितः प्रतिकर्षः ? उतैन्द्रवायवात्पूर्वमिति । विशेषाग्रहणात्सर्वग्रहाणां पुरस्तच्छुक्रोऽपकृष्टव्यः इति प्राप्ते ब्रूमः—कामाय हि गुणो विधीयमानः प्रकृतान् ग्रहानाश्रित्य विधीयते, प्रकृताश्च 'यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते' इत्यनेन साधारणेनोपक्रमेणोपक्रान्ताः ऐन्द्रवायवाद्या धारा ग्रहा वक्ष्यमाणाः । तेन तानेवाश्रित्य

---

१६

परेषु० आपवादिकी सङ्गतिः । शेषं सुगमम् ॥

इत्याश्विनाग्रतादीनां प्रतिकर्षाभावाधिकरणम् ॥ १९ ॥

२०

पुरस्तात्० पूर्वत्र विशेषचिन्तनात्सङ्गतिरिति दर्शयति—स्थित इति । यदुक्तं

शुक्राग्रता गुणः कामाय विधीयत इति न सर्वादितः प्रतिकर्षः । इदमेव च वक्ष्यमाणानां ग्रहाणां साधारणोपक्रमस्य प्रयोजनम् । कथम् नाम सर्व एव वक्ष्यमाणा ग्रहाः काम्यानां गुणनामाश्रयत्वं प्रतिपद्येरन्निति ॥

इत्याश्विनादीनामैन्द्रवायवस्य पुरस्तात् प्रतिकर्षाधिकरणम् ॥ २० ॥

२१

सादनं० धाराग्रहाणां पूर्वं पूर्वं गृहीत्वा सादयित्वा उत्तरोत्तरस्य ग्रहणम् । सर्वेषु च गृहीतेष्वासादितेषु च पश्चात्क्रमेण प्रदानमित्येषा तावन्नित्यक्लृप्तिः । कामाय तु शुक्राग्रादिग्रहणेष्वपकृष्यमाणेषु किं सादनं प्रतिकृष्यते ? नेति ? संशये वचनाभावान्न प्रतिकर्ष इति प्राप्ते उच्यते— सादनस्यैतत्प्रयोजनं यदुत्तरग्रहाणां साहित्यसम्पादनम् । न ह्यनासाद्यैकम् अपरो ग्रहीतुं शक्यते । तस्माद्ग्रहणशेषत्वात्सादनस्य तत्प्रतिकर्षे प्रतिकर्षः ॥

इति सादनस्यापि प्रतिकर्षाधिकरणम् ॥ २१ ॥

२२

प्रदानं० तथा प्रदानं किं प्रतिकृष्यते ? नेति ? संदेहे प्रदानोप-

---

सामान्योपक्रमस्य प्रयोजनमग्रे वक्ष्यत इति तदाह—इदमेवेति ॥

इत्यैन्द्रवायवस्य पुरस्तात्प्रतिकर्षाधिकरणम् ॥ २० ॥

२१

सादनं० आतिदेशिकी सङ्गतिः । नित्यक्लृप्तिः । नित्यप्रयोगप्रकारः । उत्तरग्रहाणामिति । पूर्वग्रहैः सहेति शेषः । कथं तत्राह—नहीति । तस्मात् एकसादनमकृत्वाऽपरस्य ग्रहणायोगाद्ग्रहणोपकारकतया तदङ्गसादनमित्यर्थः ॥

इति सादनस्यापि प्रतिकर्षाधिकरणम् ॥ २१ ॥

२२

प्रदानम् ० आपवादिकी सङ्गतिः । नहीति । ग्रहणोत्तरमेव प्राप्ते प्रदाने मध्ये

क्रमत्वाद्ग्रहणस्य तत्प्रतिकर्षे प्रदानस्य प्रतिकर्षः । नैवम् । न ह्यवदानवत्प्रदानोपक्रमो ग्रहणम् । सर्वेषु गृहीतेषु पश्चात्प्रदानं नित्यक्लृप्तावित्युक्तं अवगतस्वरूपं च ग्रहणं कामेऽपि प्रतिकृष्यत इति, न प्रतिकृष्यमाणस्यापि प्रदानोपक्रमत्वम् । तस्मान्न प्रदानापकर्षः ॥

इति प्रदानस्यापि प्रतिकर्षाभावाधिकरणम् ॥ २२ ॥

२३

त्र्यनीकायां० द्वादशाहे त्र्यनीकाऽऽम्नाता—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः, अथैतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रं, अथ आग्रयणाग्रं, अथैन्द्रवायवाग्रं, अथ शुक्राग्रमि'त्यादि । तत्र प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रता शुक्राग्रता च श्रुता । सा तयो रथन्तरसामत्वाद्बृहत्सामत्वाच्च प्रकृतित एव प्राप्ता सती किमर्थं श्रूयत इति चिन्त्यते ? अनुवादमात्रमित्येकः पक्षः । तथा सत्यानर्थक्यं स्यात् । तस्मादङ्गान्तरपरिसंख्यार्थम् । साऽपि त्रिदोषा । तस्मादर्थवादार्थम् । तृतीयेऽहन्याग्रयणाग्रता न्याय्या । पूर्वयोरैन्द्रवायवाग्रतायाः शुक्राग्रतायाश्चानुष्ठितत्वादजामित्वायेति सिद्धान्तस्तु—प्रकृतौ रथन्तर-

---

ग्रहणान्तरविधानेन प्रदानोपक्रमताया बाधादिति भावः । ननु नित्यास्य प्रदानानुपक्रमत्वेऽपि प्रतिकृष्यमाणस्य काम्यस्य प्रदानोपक्रमत्वं स्यादत आह—**अवगतेति** ।

इति प्रदानस्यापि प्रतिकर्षाभावाधिकरणम् ॥ २२ ।

२३

**त्र्यनीकायाम्** ० अग्रता विचारप्रसङ्गात्सङ्गतिः । **त्र्यनीकेति** । त्रयाणामैन्द्रवायवाद्यग्रतारूपाणामनीकानां नवाहस्सम्बन्धिनां समाहार इत्यर्थः । **प्रायणीयम्** प्रथमम्हः । **उदयनीयम्** अन्त्यम् । **तत्र** त्र्यनीकायाम् क्रमेणेति शेषः । **रथन्तरेति** । प्रायणीयोत्तरं पृष्ठ्यषडहाम्नानात्तत्र च क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यसामविधानादिति भावः । **प्रकृतित एवेति** । 'यदि रथन्तरसामा सोमः स्यादि'ति ज्योतिष्टोमे वचनादिति भावः । **अर्थवादेति** । आग्रयणाग्रतादि विधिस्तुत्यर्थं षोडश्युत्तर इतिवदि-

सामत्वेन बृहत्सामत्वेन च निमित्ते नैमित्तिके ऐन्द्रवायवाग्रताशुक्राग्रते विहिते । तथैव चोदकेन प्राप्येते । इदं त्वनैमित्तिकार्थं वचनम् । तस्य च प्रयोजनं तद्विकृतिष्वसत्यपि रथन्तरबृहत्सामत्वे ऐन्द्रवायवग्रताशुक्राग्रतयोः सिद्धिः ॥

इति त्र्यनीकाधिकरणम् ॥ २३ ॥

२४

द्वादशाहस्य० ग्रहाग्रताविशेषद्वैविध्यात् द्विविधो द्वादशाहः-समूढः, व्यूढश्च । समूढः-पूर्वोक्तः, व्यूढस्त्वैन्द्रवायवाग्रौ प्रायणीयोदनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम् । अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवाप्रवाग्रे इति । तत्र किं द्वे अपि रूपे द्वादशाहस्य नैसर्गिके वैकल्पिके क्रत्वङ्गे ? उत समूढमेव नित्यं व्यूढरूपन्तु तस्यैव काम्यो विकारः ? इति । तत्र व्यूढस्याप्यकामसंयुक्तस्योत्पन्नस्य वाक्यान्तरेण कामसंयोगे सत्यपि 'एकस्य तूभयत्वे संयोगपृथक्त्वमि'त्यनेन न्यायेन क्रत्वर्थता, पुरुषार्थता च तस्मात्समूढवद्व्यूढोऽपि क्रत्वर्थः ।

---

त्यर्थः । तद्विकृतिष्विति । द्वादशाहविकृतिष्वित्यर्थः । यथा गर्गत्रिरात्रे द्वितीयमहर्वामदेव्यसामकमिति तत्रासत्यपि बृहत्सामकत्वे निमित्ते शुक्राग्रतासिद्धिरित्यर्थः । सूत्रार्थस्तु—त्र्यनीकायां न्यायोक्तेषु अतिदेशप्राप्तेषु पुनराम्नानं गुणार्थं प्रशंसार्थमिति ॥

इति त्र्यनीकाधिकरणम ॥ २३ ॥

२४

द्वादशाहस्य० परिसङ्ख्यानिरासेनेतराङ्गैरैन्द्रवायवाग्रतायाः समुच्चय उक्तः । इह तु व्यूढरूपस्य नित्यं न समुच्चय इत्यपवादात्सङ्गतिः । वाक्यान्तरेणेति । 'यः कामयेत बहुस्यां प्रजायेयेति स व्यूढेन यजेते'त्यनेनेत्यर्थः । संयोगेति । व्यूढाख्यगुणे फले विधीयमानेऽप्याश्रयव्यूढस्वरूपसिद्ध्यर्थं प्रकरणोपजीवनात्तत्कृतविनियोगाबाधेनैव

उच्यते—न दध्यादिवत् व्यूढस्योभयार्थत्वं युक्तम्। तत्र हि दध्नः इन्द्रियसंबन्धं विदधत् वाक्यं लोकतो दधिस्वरूपं प्रकरणेन चाश्रयासम्बन्धं लब्ध्वा न दध्ना जुहोतीत्येतं दधिविधिमपेक्षते। व्यूढस्वरूपस्य तु लोकतोऽप्रसिद्धेरवश्यं वाक्यान्तरसिद्धेव व्यूढोत्पत्तिः कामवाक्येन फले विधातव्या। अतः प्रत्यक्षेण कामवाक्येन फललाभाद् व्यूढोत्पत्तिवाक्यं न प्रकरणेन क्रत्वङ्गतां भजते। तस्मात्समूढविकारो व्यूढः॥

इति व्यूढद्वादशाहस्य समूढद्वादशाहविकारत्वाधिकरणम्॥ २४॥

२५

ऐकादशिनवत्० गवामयने एकषष्टयधिकानि त्रीणि शतान्यहानि। अशीतिशतं पूर्वपक्षः तथोत्तरं मध्ये त्रिषुवान्। तत्राहः क्लृप्ति ताण्डकिनः समामनन्ति 'प्रायणीयं प्रथममहः चतुर्विशं द्वितीयं ततश्चत्वारोऽभिप्लवाः षडहाः' एकः पृष्ट्यः षडहः। स मासः। स द्वितीयः, स तृतीयः, स चतुर्थः, स पञ्चमः, ततस्त्रयोऽभिप्लवाः षडहाः। एकः पृष्ठयः षडहः। अभिजिन्नामैकाहः। त्रयः स्वरसामानः इत्यष्टाविंशति-

---

फले विधानमिति भावः। **न दध्यादिवदिति**। दध्ना जुहोतीत्यस्यानन्यार्थत्वात्क्रत्वङ्गताबोधकत्वमिह तु व्यूढवाक्यस्य व्यूढस्वरूपज्ञापकतया फलवाक्यशेषत्वान्न क्रत्वङ्गताबोधकत्वमिति वैषम्यमित्यर्थः। सूत्रे पृष्ठवदित्यस्य ज्योतिष्टोमे रथन्तरबृहत्पृष्ठवद्विकल्प इत्यर्थः॥

इति व्यूढद्वादहास्य समूढद्वादशाहविकारत्वाधिकरणम्॥ २५॥

२५

**ऐकादशिनी०** त्र्यनीकाप्रसङ्गात्सङ्गतिः। **पक्षस् इति**। सान्तं नपुंसकं पूर्वार्द्धमित्यर्थः। **तथेति**। उत्तरार्धमप्यशीत्यधिकशतसुत्यात्मकमित्यर्थः। ताण्डकाख्यशाखाध्येतारस्ताण्डकिनः। **चतुर्विशम्** चतुर्विशस्तोमकम् **अभिप्लवास्तदाख्यस्तोत्र**वन्तः। रथन्तरादिपृष्ठयुक्तः **पृष्ठ्यः**। स्वराख्यसामवन्तः **स्वरसामानः**। **त्रयस्त्रिं**-

रहानि, आद्यान्त्याभ्यामहोभ्यां सह षण्मासाः । तदिदं-पूर्वं पक्षः । ततो विषुवान् । अथोत्तरं पक्षः—अथः स्वरसामानः विश्वजिन्नामैकाहः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः । त्रयोऽभिप्लवाः षडहाः । तान्यष्टाविंशतिरहानि, पुनः षडहस्त्रयस्त्रिंशारम्भणः, चत्वारोऽभिप्लवाः षडहाः । स मासः, स द्वितीयः, स तृतीयः, स चतुर्थः, ततस्त्रयोऽभिप्लवाः षडहाः । आयुर्गौरिति द्वे अहनी । द्वादशाहस्य दशाहानि,, महाव्रतश्चातिरात्रश्चेति—'द्वात्रिंशदहानि आद्यैरष्टाविंशत्यहोभिः सह षण्मासाः' इति । तदत्र भाष्यकारेण प्रायणीयोदयनीयमध्यवर्तिनीं द्वादशाहिकीं त्र्यनीकां चोदकप्राप्तामाश्रित्य विचारितम्—किं दण्डकलितवदावर्तनीया ? किं वा—नवानामप्यनीकानां स्वे स्वे स्थाने विवृद्धिरिति ? तदर्थश्च विचारितम् 'ऐन्द्रवायवाग्रं प्रथममहरित्यहर्ग्रहणं विवक्षितम्, अतश्च प्रथमादीनामह्नामङ्गभूता ऐन्द्रवायवाग्रत्वादयोऽहरपूर्वप्रयुक्ताः ? उत प्रथमादीनां यज्ञभागानां धर्माः परमापूर्वप्रयुक्ताः ? इति । तत्राहर्ग्रहणस्य श्रुतत्वादहर्धर्मत्वम् । अतश्च प्रायणीयानन्तरस्याह्नो धर्म ऐन्द्रवायवाग्रता । तदनन्तरस्य शुक्राग्रता, तदनन्तरस्याग्रयणाग्रता । गवामयनेऽपि तथैव प्राप्नोति । नवभिश्चानीकैर्नवस्वहस्सु समनुष्ठितेषु पुनरैन्द्रवायवाग्रं प्रथममहरित्येतदेवोपतिष्ठते । तथा ततः परमपि । तस्माद्दण्डकलितवदावृत्तिरिति प्राप्ते—

सिद्धान्तितम्—उद्दिश्यमानस्य हि प्रथमादेरह्ना विशेषणं न सम्भवति । तस्मात्प्रथममैन्द्रवायवाग्रं अथ शुक्राग्रमित्येतावद्विवक्षितम् नवानां चानीकानां नवधा विभागः । गवामयनेऽपि पूर्वं पक्षो नवधा

---

शेति । त्रयस्त्रिंशस्तोमकं यत्पृष्ठ्यषडहस्यान्त्यमहरभिजितः प्राक्तनं पूर्वपक्षसि, तेनारम्भणं यस्य तादृश इत्यर्थः । उत्तरस्मिन् पक्षसि प्रातिलोम्यस्य वक्ष्यमाणत्वात् । दण्डेति । दण्डेन कलितं मापनं तद्वदित्यर्थः । क्षेत्रमापनं यथा कृत्स्नमानदण्डं क्वचिन्निपात्य तदनन्तरदेशेऽपि तथैव पुनस्तत्पातनेन क्रियते तथाऽत्रापि कृत्स्नां त्र्यनीकामनुष्ठाय तथैव पुनः पुनरनुष्ठानेन पूर्वपक्षः पूरणीयमिति फलितार्थः । स्वे स्वे स्थाने स्वस्वानुष्ठाने । पूर्वं पक्षो नवधा विभज्यैकैकस्मिन्नैन्द्रवायवाग्रतानुष्ठानवृद्धिरित्यर्थः । उतेति । तथात्वाह-

विभज्य प्रथमादिभागेषु नवस्वैन्द्रवायवाग्रतादीनां नवानामनीकानामनुष्ठानं कर्त्तव्यमिति स्वस्थानविवृद्धिः सिद्धा भवति। एवञ्च कृत्वा उत्तरे पक्षसि पञ्चमे षाडहिके त्रयस्त्रिंशेऽहन्याग्रयणाग्रतादर्शनमुपपन्नं भवति। 'जगतीं वै छन्दांसि प्रत्यवरोहन्ति, आग्रयणं वै ग्रहाः, बृहत्पृष्ठानि त्रयस्त्रिंशस्तोमः इति दण्डकलितवदावृत्तावभिप्लवादारभ्य नवकैरहस्सु सङ्कल्प्यमानेषु, उत्तरस्मिन्नपि पक्षसि एकमहर्व्याप्य त्र्यनीका समाप्यते। ततः पुनरैन्द्रवायवाग्रत्वादारभ्याऽनुष्ठीयमाने द्वितीयमहरैन्द्रवायवाग्रं तृतीयं शुक्राग्रं विश्वजिदाग्रयणाग्रम्, त्रयस्त्रिंशमहरैन्द्रवायवाग्रं प्राप्नोति। स्वस्थानविवृद्धौ पुनः पूर्वस्मिन्पक्षसि नवधा विभक्ते नवमे भागे आग्रयणाग्रतायामनुष्ठितायाम्, उत्तरे पक्षस्यावृत्तो प्रातिलोम्येन प्रथमभागे आग्रयणाग्रता भवति। तदन्तर्गतं च त्रयस्त्रिंशमहरिति। तत्र आग्रणाग्रतादर्शनमुपपन्नं भवति इति।

तदिदं भाष्यकारीयमधिकरणव्याख्यानं लिङ्गोपवर्णनञ्चानुपपन्नम्। न ह्यत्र चोदकेन त्र्यनीका प्राप्यते। अभिप्लवेषु हि 'ज्योतिर्गौरायुरि'ति नामधेयैरेकाहज्योतिरादिधर्मप्राप्तिः। एकाहेषु च रथन्तरसामस्वैन्द्रवायवाग्रता, बृहत्सामसु च शुक्राग्रता। तेनाभिप्लवेऽपि षडहे प्रथम-तृतीय-पञ्चमानां रथन्तरसामत्वादैन्द्रवायवाग्रता, द्वितीय-चतुर्थ-षष्ठानां बृहत्सामत्वाच्छुक्राग्रता न तु त्र्यनीकाप्राप्तिः। चोदकादपि

---

ग्रहणमहस्सङ्घातरूपप्रथमादिभागानुवादः। प्रथमादिपदमेवोद्देश्यसमर्पकमित्यर्थः। द्वितीयादिवाक्येष्वप्यथशब्दबोधितद्वितीयादिभागानामुद्देश्यत्वात्। लिङ्गदर्शनमाह—**एवञ्चेति**। 'आवृत्तं पक्ष उपयन्ती'त्यनेन यत्पूर्वपक्षसो विहितं तत्प्रातिलोम्यस्योत्तरे पक्षसि विधानादग्रताछन्दःस्तोमादीनां च पूर्वपक्षसि विहितानामुत्तरत्र प्रातिलोम्येनानुष्ठानादिति भावः। लिङ्गमप्यत्राह—**जगतीमिति**। जगतीमारभ्येत्यर्थः। एवमुत्तरत्रापि। **प्रत्यवरोहन्ति** प्रातिलोम्यं प्राप्नुवन्तीत्यर्थः। पृष्ठ्यषडहे क्रमाद्गायत्रं त्रैष्टुभं जागतं गायत्रं त्रैष्टुभं जागतं इति छन्दांसीति प्रातिलोम्ये जगतीच्छन्दः प्रथमं ततस्त्रैष्टुभमिति क्रमेणानुष्ठानं लिङ्गम्। पूर्वपक्षे लिङ्गानुपपत्तिं सिद्धान्ते च तदुपपत्तिं दर्शयति—**दण्डेति**। आवृत्ते इत्यस्य व्याख्यानम्—**प्रातिलोम्येनेति**। उत्तमाष्टमान्त्ये 'भूयसां स्यात्सधर्मत्व-

बलीयो नामधेयमित्युक्तम् । बहुशोऽभिप्लवविकाराण्येव गवामयनेऽहानि । तेन न त्र्यनीका स्यात् ।

अस्तु वा चोदकेन त्र्यनीकाप्राप्तिः, तथाऽपि नवधा विभागो न युक्तः । न हि द्वादशाहे प्रायणीयोदयनीययोरन्तरालं नवभिरनीकैः पूरितं, किन्तु दशभिः । दशमे चैन्द्रवायवाग्रता 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाऽहरि'ति वचनात् । अतश्च गवामयनेऽपि सर्वस्मिन्पक्षसि दशधा विभज्यमाने, दशमो भागः—ऐन्द्रवायवाग्रः स्यात् । उत्तरस्मिंश्च पक्षसि प्रातिलोम्येनानुष्ठीयमाने प्रथमो भाग ऐन्द्रवायवाग्रः स्यात् । तदन्तर्गतं च 'त्रयस्त्रिंशमहरि'ति तत्राप्यैन्द्रवायवाग्रताप्राप्तेराग्रयणाग्रताऽनुपपत्तिः-सिद्धान्तेऽपि स्यात् । अपि च पूर्वपक्षे त्वहर्धर्मत्वात् त्र्यनीकायां गवामायनिके च पृष्ठ्यषडहे नामधेयेन द्वादशाहिकपृष्ठ्यषडहधर्मप्राप्तेस्तत्र च त्रयस्त्रिंशस्यान्ह आग्रयणाग्रत्वात्, इहापि यत्र क्वचिदवस्थितस्यापि त्र्यस्त्रिंशस्याग्रयणाग्रता भवतीति विपरीतं लिङ्गम् । अन्यानि च दूषणानि तन्त्ररत्न एव दर्शितानीति नेह प्रपञ्च्यन्ते ।

तस्माद्यथावार्तिकमधिकरणं वर्ण्यते । सत्यं न चोदकेन त्र्यनीका प्राप्यते, प्रत्यक्षेण तु वचनेन त्र्यनीका विधीयते । ऐन्द्रवायवाग्रं प्रथममहः' अथ शुक्राग्रमम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रन्, अथाग्रयणाग्रमि'ति । तत्र संशयः—किमेते दण्डकलितवदावर्तनीयाः ? उत नवधा विभज्य नवस्वपि भागेषु नवानामनीकानां निवेश इति ।

---

मि'ति न्यायेनाऽपि नामातिदेशप्राबल्यमाह—**बहुश** इति । अतिदेशतस्त्र्यनीकाप्राप्तिमभ्युपेत्यापि दूषणमाह—**अस्तु वेति** । द्वादशाहान्तर्गतदशरात्रप्रवृत्तेरेव विकृतिषु प्रागुक्तत्वेन नवाहस्सम्बन्धि त्र्यनीकामात्रप्राप्तेरसम्भवाद्दशानामग्रतानां प्राप्तानां निवेशाय दशधा विभाग एव स्यादित्यर्थः । दूषणान्तरमाह—**अपि चेति** । भागधर्मत्वे हि तदन्तर्गतपृष्ठ्यषडहेऽपि त्र्यनीका स्यादतोऽहर्धर्मत्वमुक्तम् । **विपरीतम्** पूर्वपक्षसाधकम् । **अन्यानि चेति** । त्र्यनीकाया अतिदेशतः पूर्वपक्षस्येव प्राप्तौ मानाभावात्कृत्स्नस्यैव गवामयनस्य नवधा विभागः स्यात्स च चत्वारिंशद्दिनात्मक इति न पूर्वपक्षसि त्र्यनीका समाप्तिः । अतश्च पूर्वपक्षसि विहितस्यैवोत्तरत्र प्रातिलोम्यविधानात् त्र्यनीकाया अताद्द-

तत्र प्रथममहरिति वचनादुत्तरेष्वप्यहर्ग्रहणस्यानुषङ्गात्प्रथमादह्नः आरभ्यान्तादैन्द्रवायवशुक्राग्रयणानां व्यतिषङ्गेणाग्रत्वमनेन वचनेन विधीयते। ऐन्द्रवायवाग्रता, शुक्राग्रता, आग्रयणाग्रतेति त्रिष्वहस्सु तथा। परेष्वपि त्रिषु तथा, परेष्वपि, एवमान्तात्कुर्यादिति वचनार्थं मन्यते पूर्वपक्षवादी।

सिद्धान्तस्तु—उद्दिश्यमानस्य भागस्य, अह्नो वा प्राथम्येन विशेषणासम्भवात्प्रथममहरिति चोद्देश्यम्। तत्राहरुद्देशेऽहर्मात्रोद्देशात्, अथेति निर्देशानुपपत्तिः। तस्मात्प्रथममैन्द्रवायवाग्रम्, अथ शुक्राग्रमित्येतावद्विवक्षितम्, अहर्ग्रहणं त्वहःसङ्घाते। तस्मात्प्रथमादीनां भागानां धर्माः नवानां चाग्रतानां विधानान्नवधा विभागः। गवामयने च धर्मा विधीयमाना अवान्तरप्रकरणेन पूर्वस्मिन्पक्षसि निविशन्ते। अतश्च पूर्व पक्षो नवधा विभज्य नवाप्यनीकानि निवेशनीयानि। तत्र चान्त्ये भागे आग्रयणाग्रता भवति। उत्तरस्मिंश्च पक्षसि यत्पूर्वस्मिन्पक्षसि विहितं तत् प्रातिलोम्येनानुष्ठेयम्। ततश्च प्रथमे भाग आग्रयणाग्रता भवति। तदन्तर्गतं च पाष्ठिकं 'त्रयस्त्रिंशमहरि'ति, तत्राग्रयणाग्रत्वदर्शनमुपपद्यते।

दण्डकलितवदावृतौ त्वाद्ये द्वे अहनी वर्जयित्वा त्र्यनीका प्रारब्धव्या। तयोरैन्द्रवायवाग्रताया आहत्य विधानात्। आदितो ह्यारभ्यमाणा सा द्वितीये अहनि आहत्य चोदितेनैन्द्रवायवाग्रत्वेन विरुध्येत। तस्माद् द्वे अहनी वर्जयित्वाऽभिप्लवादिकात्प्रथमादह्नोऽभिवृत्त आरभ्य प्रवर्तते। ततश्च पूर्वस्मिन्पक्षस्यान्तिमे पर्याये सप्तानामह्नां परिशेषाद-

---

शत्वेन तत्र प्रातिलोम्याप्रवृत्तेर्लिङ्गानुपपत्तिरित्यादीनीत्यर्थः। अहर्मात्रोद्देशादिति। सर्वेष्वहस्सु एकैकाग्रतापत्तावथशब्दवैयर्थ्यम्। उत्तरपक्षसि प्रातिलोम्यसिद्ध्यर्थं पूर्वपक्षसि त्र्यनीकाविधानमुपपादयति—**अवान्तरेति**। पूर्वपक्षे लिङ्गानुपपत्तिमाह—**दण्डेति**। यद्यपि पूर्वपक्षेऽप्यादितः प्रवृत्तावपि पूर्वपक्षसि समानताया उत्तरत्र प्रातिलोम्येऽप्याद्यमाग्रयणाग्रं द्वितीयं शुक्राग्रं तृतीयमैन्द्रवायवाग्रं चतुर्थं पुनराग्रयणाग्रं पञ्चमं त्रयस्त्रिंशं शुक्राग्रं स्यादिति लिङ्गानुपपत्तिरस्त्येव, तथापि वस्तुगतिमनुरुध्येत्थं लिङ्गानुपपत्तिरुक्तेति ज्ञेयम्। नचैवं सिद्धान्ते त्र्यनीकाविधिवशादेवाद्ययोरप्यह्नोरैन्द्रवायवाग्रताप्राप्तौ पुनस्तद्विधिवैयर्थ्यमिति वाच्यम्। भागधर्मतया परमापूर्वप्रयुक्तत्वेन त्र्यनीकाविधितः प्राप्तावपि

समाप्तैव त्र्यनीका विषुवन्तमुत्तरस्मिंश्च पक्षस्येकमहर्व्याप्य समाप्यते। ततश्चासौ पूर्वस्मिन्पक्षसि साकल्येनासम्भवन्ती सामर्थ्यात्मकेन लिङ्गेन अवान्तरप्रकरणं बाधित्वा महाप्रकरणेन गवामयनस्य विधीयमाना न पूर्वस्य पक्षसो विहितेति शक्यं वक्तुम्। यच्च पूर्वस्य पक्षसो विहितं तस्योत्तरस्मिन्प्रातिलोम्यमिति, न त्र्यनीकायाः प्रातिलोम्यमित्यानुलोम्येनैवासावान्तात्प्रवर्तत इति, त्रयस्त्रिंशेऽहन्यैन्द्रवायवाग्रत्वप्रसङ्गादाग्रयणाग्रताऽनुपपत्तिः। सिद्धान्ते त्वविरोधादादित आरभ्य प्रवर्तते। उत्तरे च पक्षसि प्रातिलोम्यं लभत इत्युपपन्नं लिङ्गम्॥

इति गवामयने त्र्यनीकाविवृद्ध्याऽभ्यासाधिकरणम्॥ २५॥

२६

छन्दो व्यति॰ व्यूढात्मके द्वादशाहे छन्दोव्यतिक्रम आम्नातः 'छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन्' 'गायत्री त्रिष्टुभा, त्रिष्टुब्जगत्या, जगती गायत्र्या' इति। तत्र संशयः—किं भक्षाणां पवमानानां परिधीनां कपालानाञ्च मन्त्रार्थवादेषु गायत्रादिशब्दैरभिलपितानां मन्त्राणाम्, अर्थानाञ्च छन्दांस्यतिक्रमयितव्यानि? उत मन्त्रगतानामेव

---

तत्तदहरपूर्वप्रयुक्तत्वसिद्ध्यर्थं पुनर्विधानात्। तत्प्रयोजनं च तदहर्मात्रे विकृतावसत्यपि रथन्तरसामत्वे ऐन्द्रवायवाग्रत्वसिद्धिरिति। सूत्रे—एकादशिनीवदित्यस्य यथा पश्वेकादशिनी गवामयने दण्डकलितवदावर्तते तथेत्यर्थः॥

इति गवामयने त्र्यनीकाविवृध्याभ्यासाधिकरणम्॥ २५॥

२६

**छन्दो व्यतिक्रमात्॰** अग्रतावद्भक्षादीनां स्थानबाधमाशङ्क्य तदपवादात्सङ्गतिः। **व्यतिक्रमः** स्वस्थानात्स्थानानन्तरप्राप्तिः। **लोकम्** स्थानम्। **पवमानानाम्** बहिष्पवमानादीनां त्रयाणां स्तोत्राणाम्। **परिधीनाम्** अग्न्यायतनदक्षिणोत्तरमध्यगतानाम्। **कपालानाम्** अष्टाकपालैकादशकपालद्वादशकपालानां क्रमेण प्रातरादि सवन-

छन्दसां व्यतिक्रमः ? इति । विशेषाभावात् सर्वेष्वर्थेषु मन्त्रेषु च छन्दोव्यतिक्रमः, तेन गायत्रशब्दनिर्दिष्टः प्रातःसवनीयो भक्षः त्रैष्टुभशब्दितस्य माध्यन्दिनीयस्य भक्षस्य स्थाने माध्यन्दिने सवने कर्त्तव्यः। माध्यन्दिनीयश्च जागतशब्दितस्य तार्तीयसवनिकस्य स्थाने तृतीयसवने। तार्तीयसवनिकश्च प्रातःसवने, तथा बहिष्पवमानो माध्यन्दिने, माध्यन्दिनपवमानस्तृतीयसवने, आर्भवःपवमानः प्रातः सवने। तथा—मध्यमः परिधिः स्थविष्ठो दक्षिणस्य स्थाने, दक्षिणश्चाणीयानुत्तरस्य, उत्तरश्चाणिष्ठो मध्यमस्थाने परिधातव्यः। तथा अष्टाकपालो माध्यन्दिने एकादशकपालस्तृतीयसवने, द्वादशकपालश्च प्रातः-सवने कर्त्तव्यः। तथा मन्त्रगता गायत्रादिशब्दाः 'श्येनोऽसि गायत्रच्छन्दाः' इत्यादयस्त्रिष्टुबादिशब्दानाम्, 'सुपर्णोऽसि त्रिष्टुप्छन्दाः' इत्यादीनां स्थाने 'सुपर्णोऽसि गायत्रच्छन्दा इत्येवमूहितव्या इति प्राप्ते—

ब्रूमः—मन्त्रगतानामेव व्यतिक्रमः नार्थानाम्। न हि तेषां गाय-

---

स्थानाम्। **मन्त्रेति**। भक्षाणां तन्मन्त्रे गायत्रछन्दसस्त्रिष्टुप् छन्दसो जगच्छन्दस इति। **पवमानानामपि**। 'श्येनोसि गायत्रछन्दाः' 'सुपर्णोसि त्रिष्टुप् छन्दाः' 'सरवासि जगतीच्छन्दा' इति मन्त्रेषु गायत्रादिशब्दैरभिलापः। परिधीनान्तु 'गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तर' इत्यर्थवादे। कपालानामपि जातेष्टचर्थवादे यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति। यदेकादशकपालस्त्रिष्टुभा यत् द्वादशकपालो जगत्ये'त्यभिलापः। मन्त्राणामर्थानाञ्च मध्ये यानि छन्दांसि त्वेनाभिलपितानि व्यतिक्रमयितव्यानीत्यर्थो बोध्यः। अर्थव्यतिक्रमस्यैव पूर्वपक्षत्वादिति। **उतेति। मन्त्रगतानां छन्दसाम्**। तद्वाचकगायत्रादिशब्दानाम्। व्यतिक्रमस्वरूपं दर्शयति—**तेनेत्यादिना**। अत्र च सूक्तवाकन्यायेन भक्षमन्त्रेऽपि विभागाद्वसुमद्गणस्याप्रातः सवनस्य गायत्रछन्दस इन्द्रपीतस्ये'त्यसाधारणैः साधारणैश्चान्यैः पूर्वापरैः पदैरुपेतप्रातः सवनभक्षाङ्गमन्त्रव्यतिक्रमादेव भक्षव्यतिक्रमः। एवमितरयोरपीति ज्ञेयम्। स्वरूपतस्तद्व्यतिक्रमस्य विशेषाभावेनासम्भवात्। पवमानपरिधिकपालानान्तु स्वरूपभेदात्तद्व्यतिक्रम एवेति शेषः। **नहीति**। न च गायत्रादिशब्दानां व्यतिक्रमविधिगतगायत्रीशब्दावाच्यत्वस्य तुल्यत्वात्कथं तेषामपि तद्विषयत्वमिति वाच्यम्। एकदेशविकृतन्यायेन गायत्रशब्दस्याऽपि छन्दोवाचकतया स्वार्थवाचकत्वरूपसम्बन्धेन गायत्रीपदेन तल्लक्षणाया लाघवात्।

त्रादिशब्दवत्त्वमस्ति । स्तुतिमात्रन्तु तेषु गायत्र्यादिभिः निर्देशः । शक्यते त्वेकस्मिन्मन्त्रे प्रकाशितं छन्दो मन्त्रान्तरे गायत्रादिशब्दप्रक्षेपेण प्रकाशयितुम् । तस्मान्मत्रगतानामेव छन्दसां व्यतिक्रमः ॥

इति व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् ॥ २६ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
दशमाध्यायस्य पञ्चमः पादः ।



---

अन्येषान्तु गौणीगम्यतया विलम्बितोपस्थितिकत्वादित्याशयात् । **शक्यते चेति ।** स्तोत्रान्तरेऽपि तत्सद्भावादिति भावः । सूत्रार्थस्तु—भक्षादिमन्त्रान्तानां मध्ये वचनं मन्त्रोच्चारणमेवोहवदूहार्हम् । यतो वचनमेव यथापत्ति व्यतिक्रमापत्युचितमिति ॥

**इति व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् ॥ २६ ॥**

इति श्रीमद्रामचन्द्रसूरिवरात्मजतत्सद्वैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां
दशमाध्यायस्य पञ्चमः पादः



## अथ दशमाध्यायस्य षष्ठः पादः

१

एकर्चस्थानानि० सन्ति ज्योतिष्टोमे रथन्तरादीनि स्तोत्रीयाणि सामानि। तानि किमेकैकस्यामृचि गेयानि? उत तृचे? इति संशये स्वाध्यायवेलायामेकस्यामृचि गीतत्वात् तद्वैलक्षण्याय यज्ञेऽप्येकस्यां भवेयुः, 'एकं साम तृचे क्रियते' इति तु वर्तमाननिर्देशसरूपं न विधिक्षममित्येतावत्पूर्वः पक्षः। 'ऋक् सामोवाचे' त्याद्यर्थवादविभावितविधिशक्तेः, एकं साम तृचे क्रियते इति वचनात्तृचे गातव्यानीति सिद्धान्तः॥

इति साम्नां तृचगानाधिकरणम्॥ १॥

२

स्वार्दशं० 'रथन्तरे प्रस्तूयमाने संमीलयेदि'ति विधाय श्रूयते 'स्वर्दशं

---

### षष्ठः पादः

१

**एकर्च०** इह बाधस्य प्रकारविशेषचिन्तनाध्यायसङ्गतिः पादान्तरत्वञ्चेत्याहुः। **स्वाध्यायेति**। तथा च क्लृप्तऋगक्षराभिव्यक्तिद्वारैव साम्नः स्तुतिसाधनत्वादध्ययनस्य क्रतुप्रयोगप्राशुभावरूपदृष्टार्थत्वाच्च योनावेव गेयानीत्यर्थः। **ऋगिति**। 'ऋक्सामोवाच मिथुनी सम्भवावेति सोऽब्रवीत् न वै त्वं ममालभसि जायात्वे' इत्याद्यनन्तरं 'ते द्वे भूत्वौ-चतुरि'त्याद्युक्त्वा 'तास्तिस्त्रो भूत्वोचुः सोऽब्रवीत्सम्भवामे'त्यर्थवादे साम्न एकया द्वाभ्यां च मिथुनीभावनिरासपूर्वं तिसृभिर्ऋग्भिस्तदङ्गीकारोक्तेस्तत्कल्पितविधिशक्तिकेन तृचाधारत्वविधिरित्यर्थः॥

इति साम्नां तृचगानाधिकरणम्॥ १॥

२

**स्वर्दृशम्०** स्तोत्रीयसामविचारप्रसङ्गात्सङ्गतिः। निमीलनस्योत्तरासु बाध-

प्रतिवीक्षेते'ति। तत्र सन्देहः किं स्वर्दृक्छब्दस्य वीक्षणस्य च कालार्थः संयोगः? उताङ्गाङ्गिसम्बन्धः? इति। तत्र कालार्थत्वे स्वर्दृक्छब्दस्य लक्षणा-प्रसङ्गादङ्गिसम्बन्ध एवान्याय्यः। स्वर्दृक्छब्दो वा वीक्षणाङ्गं स्वर्दृक्छब्दं समुच्चारयन् वीक्षते, नान्यथेति। वीक्षणं वा स्वर्दृक्छब्दस्याङ्गं वीक्षमाणः स्वर्दृक्छब्दमुच्चारयेन्नान्यथेति प्राप्ते ब्रूमः—

अनपेक्षितसम्बन्धाद् वाक्यभेदप्रसङ्गतः।
न युक्तोऽङ्गाङ्गिसम्बन्धस्ततस्तस्मात्कालार्थता वरम्॥

अभिवत्येकदेशो हि स्वर्दृक्छब्दः पृष्ठस्तुत्यर्थत्वान्न वीक्षणं प्रयोजनमपेक्षते। स्वर्दृक्छब्दः कर्तृवचनत्वाद् द्वितीयान्तत्वाच्च 'नो नुमः' इत्यनेन सम्बध्यमानः स्तुतिमेवालमभिनिर्वर्तयितुं न वीक्षणं प्रकाशयितुम्। तथा वीक्षणमपि रागप्राप्तं दृष्टेनैव प्रयोजनेन निराकाङ्क्षं न स्वर्दृक्शब्दतया विधातव्यम्, सम्मीलनविधिना चावधिप्रतिपादनेनैका-र्थ्यसम्भवान्न वाक्यान्तरत्वमवकल्पते। प्रतिशब्दश्च स्वर्दृक्शब्दस्य श्रुत्यैव लक्षणतामाचष्टे। अतः काललक्षणैव न्याय्या। तेनायमर्थः—रथन्तरे प्रस्तूयमाने संमीलयेदास्वर्दृक्छब्दोच्चारणात्, तस्मिंस्तु काले वीक्षेतेति॥

इति स्वर्दृक्छब्देन वीक्षणस्य कालार्थताधिकरणम्॥ २॥

---

कथनाच्चाऽध्यायसङ्गतिः। स्वर्दृक्शब्दो वेति भावे क्विबन्तस्य स्वर्दृक् शब्दस्य स्वर्गदर्शनार्थत्वेन वीक्षणप्रकाशकतया दृष्टविधयैवाङ्गत्वमिति भावः। रागप्राप्तवीक्षणस्य प्रकाशकानपेक्षत्वात्स्वर्दृक्छब्दस्य च स्तोत्राङ्गस्य प्रयोजनापेक्षाविरहात्पादान्तरैक-वाक्यतापन्नस्य च पार्थक्येन कालान्तरीणवीक्षणकाले समुच्चारणानौचित्यात्स्वर्दृश-मिति द्वितीयया तृतीयार्थलक्षणापत्तेश्चास्वरसादाह **वीक्षणं वेति**। एवञ्च स्वर्दृक् छब्दो-च्चारणकाले वीक्षणमाद्यन्तयोस्तु निमीलनमिति फलितम्। श्लोकं व्याचष्टे— **अभिवतीति**। 'अभित्वा शूर नो नुम' इत्यस्या उत्तरार्द्धे 'ईशानमस्य जगतः स्वर्दृ-शमि'ति पठित इत्यर्थः। द्वितीयपूर्वपक्षं निरस्यति—**तथेति**। अत्र स्वर्दृक् शब्दश्च दृष्टेनैवोपन्नाऽङ्गैकदेशश्च नादृष्टार्थं वीक्षणमपेक्षत इत्यपि ज्ञेयम्। **ऐकार्थ्येति**। तथा च वीक्षेतेत्यनुवादः। स्वर्दृक्पदावधि सम्मीलयेदित्येकवाक्यतेत्यर्थः। प्रयोजनमुक्तप्रायम्। सूत्रं सुगमम्॥

इति स्वर्दृक्शब्देन वीक्षणस्य कालार्थताधिकरणम्॥ २॥

३

पृष्ठ्यस्य० द्वादशाहे पृष्ठ्यः षडह उत्पन्नः । तत्र षण्णामप्यन्हां क्रमेण रथन्तरबृहत्वैरूप-वैराज-शाक्वर-रैवतानि पृष्ठसमानि । गवामयनादिषु श्रूयते 'पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः' इति । तेन वैरूपादिकं निवर्तते । बृहद्रथन्तराभ्यामेव पृष्ठस्तुतिर्निर्वर्तयितव्या । तत्र संशयः—किमेकैकस्मिन्नहनि द्वे द्वे स्याताम्? उत क्वचित् बृहत् क्वचिद्रथन्तरम्? इति । तदर्थमिदं विचार्यते किं बृहद्रथन्तरसामेति द्वन्द्वगर्भो बहुव्रीहिः बृहच्च रथन्तरञ्च बृहद्रथन्तरे इति प्रथमं द्वन्द्वं कृत्वा पश्चाद्बृहद्रथन्तरे सामनी अस्येत्यन्यपदार्थो बहुव्रीहिः, उताकृत्वैव द्वन्द्वम् अनेकपदबहुव्रीहिः, बृहच्च रथन्तरं च सामास्येति । तत्र 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनमि' ति कात्यायनवचनादेवं विषये द्वन्द्वस्य नित्यत्वात्, कृत्वैव द्वन्द्वं बहुव्रीहिः । तेनेतरेतरयुक्तयोः साम्नोः षडहसम्बन्धाद्यत्रैकं प्रयोक्तव्यं तत्रेतरेतरसहितमेव कार्यमित्येवमवगमादेकैकमेवाहो बृहद्रथन्तरसामकं कार्यमिति प्राप्ते—

ब्रूमः—क्वचित्किञ्चित्स्यात् । एवमेकैकस्येतरेतरनिरपेक्षस्य प्रापकश्चोदकोऽनुगृहीतो भवति । न च वचनविरोधः । यद्यपि तावद् द्वन्द्वगर्भो बहुव्रीहिः स्यात्, तथाऽपि षडहापेक्ष एवेतरेतरयोगो द्वन्द्वेनावगम्यते, न षडहावयवापेक्षः । षडहापेक्षश्चेतरेतरयोगः क्वचित्कस्यचिन्निवेशेऽपि न विरुध्यते । स च यदि विभागेन निवेशे प्रमाणं न स्यात्

---

२

पृष्ठ्यस्य० अत्रापि रथन्तरप्रसङ्गात्किमुभाभ्यामितरसामबाध उतैकैकेनेति बाधप्रकारचिन्तनात्सङ्गतिः । **क्वचिदिति** । आद्ये रथन्तरं द्वितीये बृहदित्येवमित्यर्थः । **द्वन्द्वगर्भ** इत्यस्यैव व्याख्यानं **बृहच्चेत्यादि** । पूर्वपक्षमाह—**तत्रेति** । यद्यपि द्वन्द्ववेलायां समासचरमपदरूपोत्तरपदाभावात् द्वन्द्वानुपपत्तिस्तथापि भाविनीं वृत्तिमाश्रित्योत्तरपदसत्वमित्याशयेनैतदुक्तम् । **वाक्तवचेति** । अत्र 'द्वन्द्वाच्चुदहान्तात्समाहार' इति टच्

ततः सर्वत्रेतरेतरयोगः स्यात्, अविशेषात् । अस्ति तु प्रमाणं चोदकः । तस्मादेकस्मिन्नहन्येकम्, इतरस्मिंश्चेतरत्प्रयोक्तव्यम् । न चाऽवश्यं द्वन्द्वगर्भोऽयं बहुव्रीहिः । विभाषावचनेन द्वन्द्वस्यानित्यत्वात् । कात्यायनीयन्तु वचनं शब्दानुशासनपरत्वाद्यत्र सतोर्द्वन्द्वतत्पुरुषयोरन्यशब्दरूपम् असतोश्चान्यद्भवति तत्र समासकृतरूपनियमार्थं तत् यथा—वाक्त्वचप्रियः पञ्चगवधन इत्यत्र द्वन्द्वतत्पुरुषयोरकरणे वाक्त्वक्प्रियः पञ्चगोधन इति अकृत्वाऽपि समासान्तं प्रयोगः प्रसज्येत । तद्व्यावृत्त्यर्थं नित्यं समासवचनम् । बृहद्रथन्तरसामेत्यादिषु तु द्वेधाऽपि स्वरूपस्याभेदात्, न्यायतोऽर्थो निर्णेतव्य इति प्रत्येकप्राप्तिचोदकानुग्रहायानेकपदबहुव्रीह्याश्रयणम् । तस्मात्क्वचित्किञ्चित्प्रयोक्तव्यं, न प्रत्यहं द्वे द्वे स्याताम् ॥

इति गवामयने पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम् ॥ ३ ॥

४

समास० द्वादशाहे श्रूयते 'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्नि'ति । तत्र किं सर्वे प्रायणीये सर्वे चोदयनीये आलब्धव्याः ? उत विभज्य केचित्प्रायणीये, केचिच्चोदयनीये ? इति

---

प्रत्ययः । पञ्च गव इत्यत्र तु 'गोरतद्धितलुकी'ति टच् प्रत्ययः । न चावश्यमिति । न च केवलं बहुव्रीहौ पूर्वपदप्रकृतिस्वरापत्तेरन्तोदात्तत्वसिद्ध्यर्थं द्वन्द्वावश्यकतेति वाच्यम् । स्वरस्यार्थप्रयुक्तसमासनिष्पादितयार्थस्य चातिदेशरूपतात्पर्यग्राहकानुसारेण निर्णयेन बाहुलकत्वेनाप्युपपत्तेः । सूत्रार्थस्तु—पृष्ठ्यषडहस्य एकाहवत्संसवाद्येकाहवत् द्विसामत्वं बृहद्रथन्तरोभयसामकत्वम् युगपद्विधेः द्वन्द्ववशेनेतरेतरसाहित्येन विधेरिति ॥

इति गवामयने पृष्ठ्यषडहे बृहद्रथन्तरविभागाधिकरणम् ॥ ३ ॥

४

समासस्तु० साहित्यबोधकद्वन्द्वप्रसङ्गात्सङ्गतिः । ऐकादशिनान् एकादशपशून् । अतिरात्रयोस्तत्संस्थयोः देशप्रदेशशब्दौ कालपरौ । तथा च प्रायणीयोदयनीययोरिति

संशये प्रायणीयोदयनीययोः प्रधानत्वेनोद्देश्यत्वात् द्वन्द्वावगतसाहित्यस्याविवक्षितत्वात् प्रतिप्रधानमैकादशिनाः आलब्धव्या इति प्राप्ते ब्रूमः—द्वादशाहप्रकरणे प्रागेव वचनान्तरेणैकादशिनी विहिता, प्रकरणाद् द्वादशाहाङ्गत्वेनावगता साऽनुष्ठातव्या सती क्व प्रदेश आलब्धव्येत्यपेक्षायां देशविधित्सायां प्रायणीयोदयनीयौ श्रूयेते, न प्रधानतया। द्वादशाहस्य प्रधानस्यावगमात् देशश्चाङ्गम्। न च प्रत्यङ्गमावर्तते प्रधानम्। तस्माद्विभाज्यालम्भः॥

इति प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणम्॥ ४॥

५

सर्वपृष्ठे० 'विश्वजित्सर्वपृष्ठो भवती'ति श्रूयते तत्र षाडहिकानां रथन्तरादिपृष्ठानां विधिरिति स्थितं सप्तमे। तत्र संशयः—किं षण्णामपि साम्नां पृष्ठस्तुतिसाधनत्वं ततश्च पृष्ठदेशे माध्यन्दिनपवमानमैत्रावरुणसाम्नोः मध्ये निवेशः? उत वैरूपस्यैव तत्साधनत्वेन तत्र विनिवेशः अन्येषां स्तोत्रान्तरसाधनत्वेन तत्तद्देशे प्रयोगः? इति। तत्र षडहे तेषां

---

न षष्ठी, किन्तु सप्तमी। **न च काललक्षणा**। योग्यतया कालिकसम्बन्धेनैव तयोरधिकरणतायाः सप्तम्याभिधानादिति भावः। **प्रधानतया** शेषितया। **अवगमादिति**। प्रकरणेनेति शेषः। **विभज्येति**। प्रायणीये पञ्च उदयनीये षडित्येवमित्यर्थः। अवशिष्टस्यैकस्यान्ते निवेशनीयत्वात्। सूत्रार्थस्तु–ऐकादशिनेषु समासस्तत्प्रकृतित्वात् ज्योतिष्टोमगतसमासप्रकृतित्वादिति। यथा ज्योतिष्टोमे समासस्तथाऽत्रापीत्यर्थः। न चैवं सति वचनवैयर्थ्यम्। अन्वहमालभेतेति वचनबाधितसमासप्रतिप्रसवार्थत्वादिपूर्वपक्षाशयादिति॥

इति प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणम्॥ ४॥

५

**सर्वपृष्ठे०** पूर्ववद्रथन्तरादीनामपि विभज्यप्रयोगोक्तेरातिदेशिकी सङ्गतिः। **पृष्ठस्तुतीति**। होतुः पृष्ठस्तुतीत्यर्थः। एवमग्रेऽपि। **पवमाने** माध्यन्दिने। **मध्यत** इत्यस्य

पृष्ठसाधनत्वेनेहापि पृष्ठशब्देन तत्साधनत्वावगमात्पृष्ठदेश एव प्रयोगः सर्वेषामिति प्राप्ते—

ब्रूमः—'रथन्तरं बहिष्पवमाने कुर्यात्, आर्भवे बृहत् मध्यत इतराणि' वैरूपं होतुः पृष्ठे, इत्यादिवचनाद्वैरूपस्यैव पृष्ठसाधनत्वम्। इतराणि स्तोत्रान्तरसाधनानि। न च पृष्ठस्तुतौ प्रयुक्तानामेव पुनर्वचनात्स्तोत्रान्तरेऽपि प्रयोगोऽस्त्विति वाच्यम्। वैरूपस्य पृष्ठे विधेरानर्थक्यप्रसङ्गात्। किं च सर्वपृष्ठशब्देन लक्षणया पृष्ठसाधनभूतानि रथन्तरादीनि सामानि षाडहिकानि विधीयन्ते, स्तुतेर्बहुत्वाभावेन सर्वशब्दविषयत्वासम्भवात्, तेषाञ्च साम्नामिहातिदिष्टानां कार्याकाङ्क्षिणां वाचनिकैरेव कार्यैरुपपत्तौ को नाम सर्वेषां पृष्ठसाधनत्वं कल्पयेत्। तस्माद्विभज्यैव निवेशः॥

इति सर्वपृष्ठे साम्नां व्यवस्थाधिकरणम्॥ ५॥

६

वैरूपसामा० 'उक्थ्यो वैरूपसामा, एकविंशः षोडशी वैराजसामे'-त्यत्र किं वैरूपवैराजयोः साम्नोः सर्वेषु सामकार्येषु निवेशः? उत

---

विवरणं वैरूपमित्यादि। 'वैराजं ब्रह्मसाम' शाक्वरं मैत्रावरुणसाम' 'रैवतमच्छावाकसामे'ति वाक्यत्रयमादिपदार्थः। आनर्थक्येति। तथा च वैरूपमेव होतुः पृष्ठे नान्यथेति परिसङ्ख्येत्यर्थः। ननु रथन्तरादिसाधनकपृष्ठस्तोत्रस्यैवातिदेशात्कथं स्तोत्रान्तरे रथन्तरादिनिवेश इत्यत आह—किञ्चेति। कार्यैरित्यनेन वचनात्प्राकृतकार्यबाधेऽपि न दोष इत्युक्तम्। सूत्रं सुगमम्॥

इति सर्वपृष्ठे साम्नां व्यवस्थाधिकरणम्॥ ५॥

६

वैरूप० अत्र वैरूपादेः पृष्ठदेशत्वोक्तेरापवादिकी सङ्गतिः। विशेषेति। क्रत्वङ्गत्वेन विहितस्य साम्नो द्वारापेक्षायां स्तोत्राणां सर्वेषामपि द्वारतासम्भवेन विनिगमकाभावादित्यर्थः। एवंविधेति। सामान्तबहुव्रीहिरूपेत्यर्थः। तथा च वैरूपं भवतीत्येताव-

पृष्ठस्तुतावेव ? इति संशये विशेषाग्रहणात्सर्वेष्विति प्राप्ते—प्रकृतावेवं-विधस्य निर्देशस्य रथन्तरसामा बृहत्सामा वेति पृष्ठविषये दृष्टत्वात्, इहापि तेन प्रकृतिलिङ्गेनपृष्ठस्तुतेर्बुद्धावारोहात् तद्द्वारेण च साम्नोः क्रतुसम्बन्धोपपत्तेः पृष्ठसाधनस्यैव रथन्तरादेर्विकारो वैरूपादिः ॥

इति वैरूपसामाधिकरणम् ॥ ६ ॥

७

त्रिवृति० 'त्रिवृदग्निष्टुदग्निष्टोमः' इति श्रूयते । त्रिवृच्छब्दोऽयं त्रैगुण्यवचनो लोके त्रिवृद्रज्जुरित्यादौ, वेदे च 'रशना त्रिवृद्भवती'ति प्रयोगादवगतः । स्तोत्रीयानवकवचनोऽपि वेदेऽवगतः 'त्रिवृद्बहिष्पव-मानमित्युक्त्वा स्तोत्रीयाणां नवानामनुक्रमणात् । तदेवमुभयार्थत्वे सति, यत्र त्रिवृदग्निष्टुदि'त्यादौ वाक्यशेषादर्थविशेषो नावगम्यते, तत्र विचार्यते-किं त्रैगुण्यवचनः सन् सर्वेषां क्रतुसाधनानां सङ्ख्याविकारः ? उत स्तोत्रीयानवकवचनः सन् स्तोमस्यैव विकारः ? इति । तत्र शास्त्रस्य महाविषयत्वलिप्सया सर्वद्रव्याणां त्रैगुण्यविधिरिति प्राप्ते ब्रूमः—त्रैगुण्यं ह्यसौ ब्रुवन्नवयवप्रसिद्ध्या ब्रूयात् । रूढ्या च स्तोत्रीयानवकम् । सा च बलीयसी । तस्मात्स्तोत्रीयासङ्ख्याविकारस्त्रिवृत्त्वम् ॥

इति त्रिवृति स्तोमगतसंख्याविकाराधिकरणम् ॥ ७ ॥

---

तैवोपपत्तौ बहुव्रीह्यन्तनिर्देशवैयर्थ्यात्स एव विनिगमक इत्याशयः । वैरूपसामा क्रतुरेक-सामा वैरूपाख्यैकसामयुक्तः स्यात्, समस्तक्रतुसंयोगात् । यथा त्रिवृदग्निष्टुदिति त्रिवृत्स्तोम एक एव भवति तद्वदिति सूत्रार्थः ॥

इति वैरूपसामाधिकरणम् ॥ ६ ॥

७

त्रिवृति० यथा वैरूपस्य न कृत्स्नसामबाधकत्वं तथा त्रिवृत्वस्यापि न कृत्स्न-सङ्ख्याबाधकत्वमित्यातिदेशिकी सङ्गतिः । अवयवेति । त्रिर्वर्तते आवर्तत इति इत्येव-मित्यर्थः ॥

इति त्रिवृति स्तोमगतसङ्ख्याविकाराधिकरणम् ॥ ७ ॥

८

उभयसाम्नि० यत्र संसवादौ 'उभे बृहद्रथन्तरे भवतः' इति श्रुतम् तत्र किमुभयोः पृष्ठसाधनत्वम्? उतैकेन पृष्ठम् इतरेण स्तोत्रान्तरं साधयितव्यम्? इति संशये, चोदकेन वैकल्पिकपृष्ठप्राप्तेस्तदनुग्रहायैकमेव पृष्ठसाधनम्, इतरत्तु साम विश्वजिद्वत् स्तोत्रान्तरेऽपि स्यात्। नैवम् विश्वजिति वाचनिकः कार्यान्तरे निवेशः, न त्विह तादृग्वचनमस्ति। येन कार्यान्तरे निवेशः स्यात्। तेन विकल्पेन प्राप्तयोः पृष्ठयोः—समुच्चयमात्रं वचनेन क्रियते। चोदकबाधस्तु स्तोत्रान्तरसाधनत्वेऽपि तुल्यः। तस्मात्पृष्ठ एव निवेशः॥

इत्युभयसाधिकरणम्॥ ८॥

९

पृष्ठ्ये० द्वादशाहे 'त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, स्त्रिणवः, त्रयस्त्रिंशः' इति षडहं विधाय श्रूयते 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वेति। गवामयनादौ पृष्ठ्यषडहस्य प्रातिलोम्यं विहितं 'पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणस्त्रिवृदुत्तमः कार्यः' इति। तत्र किं त्रयस्त्रिंशेऽहनि संस्थिते मध्वशनम्? उत षडहान्ते? इति। तत्र

---

८

उभय० अत्र त्रिवृत्वस्य सर्वस्तोत्रसङ्ख्याबाधकत्ववद् बृहद्रथन्तरान्यतरस्य सर्वस्तोत्रीयसामबाधकत्वमाशङ्क्यापोद्यत इति सङ्गतिः। वाचनिक इति। 'रथन्तरं पवमाने कुर्यादि'त्यादिपूर्वोक्तवचनविहित इत्यर्थः। मात्रमित्यनेन स्तुत्यन्तरसम्बन्धबोधनव्यावृत्तिः। समुच्चयविशिष्टसामविधौ गौरवात्प्राप्तसामानुवादेन समुच्चयमात्रविधानम्। प्राप्तिश्च तयोः पृष्ठस्तोत्र एवेति नाक्लृप्तस्त्रोत्रसम्बन्धप्रसक्तिरिति भावः॥

इत्युभयसामाधिकरणम्॥ ८॥

९

पृष्ठ्ये० पूर्वोक्तप्राकृतस्थानतापवादात्सङ्गतिः। त्रिवृदुत्तमः त्रिवृदन्त्यः।

त्रयस्त्रिंशेऽहनि संस्थिते मध्वशनभुत षडहान्त इति। तत्र त्रयस्त्रिंशेऽहनि प्रकृतावनुष्ठितत्वात्तदङ्गं मध्वशनं मन्वानः पूर्वानुष्ठिते त्रयस्त्रिंशे तदन्त एव मध्वशनं मन्यते सिद्धान्तस्तु—

द्वादशाहाङ्गता ह्यस्य गम्यते प्रक्रियावशात्।
वाक्याद्वा षडहाङ्गत्वं त्रयस्त्रिंशाङ्गता क्रमात्॥

अनुष्ठानसंनिधिलक्षणेन हि क्रमेण त्रयस्त्रिंशाङ्गता मध्वशनस्य स्यात्। प्रकरणात्तु द्वादशाहाङ्गत्वं षडहाङ्गत्वं समभिव्याहाराद्वा। तत्र सत्यपि संस्थाशब्दे वैमृधवत्पौर्णमास्याः षडहस्यैवाङ्गं षडहावसाने च विधीयते, न त्रयस्त्रिंशावसाने। तस्मात् षडहान्ते स्यात्॥

इति मध्वशन–घृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम्॥ ९॥

१०

अभ्यासे॰ यत्र षडहस्य पुनः पुनः प्रयोगः, तत्र किं मध्वशनस्य पुनः प्रयोगः? उत सर्वाभ्यासान्ते सकृदिति? संशये, षडहाङ्गत्वात्, तदावृत्तावावृत्तिः। षडहसंस्थायाश्च पुनः पुनर्भावात्तन्निमित्तं मध्वशनमावर्तनीयम्। नैवम्, संस्था नाम तद्विषयव्यापारोपरमः पुनः पुनः प्रवर्त्तमानस्य च नोपरमोऽस्ति। तस्मात्सत्यप्यङ्गत्वे निमित्ताभावान्ना-

---

वैमृधवदिति। यथा वैमृधः पौर्णमास्या अङ्गं तथेत्यर्थः। तथा च षडहावसाने निमित्ते षडहाङ्गतया विधिर्न त्रयस्त्रिंशाङ्गतयेत्यर्थः॥

इति मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम्॥ ९॥

१०

अभ्यासे॰ इहापि प्राकृतस्थानतापवादादातिदेशिकी सङ्गतिः। संस्थारूपनिमित्ताभावादनावृत्तिशङ्कां निरस्यति—पुनः पुनरिति। तद्विषयेति। न तु प्रयोगसमाप्तिमात्रमिति भावः। भाष्यकारेण षडहसंस्थारूपे निमित्ते प्रकरणात् द्वादशाहाङ्गत्वं न तु षडहाङ्गत्वमित्युक्तं तत्प्रौढ्यातिशयार्थमित्याह—अङ्गत्वेति। न च षडहशब्दस्य संस्थायां विशेषणत्वेन घृताशने चाङ्गित्वेन चान्वयासम्भवः। घृताशनेऽङ्गित्वेन शब्दस्यान्यत्र

वृत्तिः । अङ्गत्वनिराकरणन्तु भाष्येऽतिशयोक्तमिति नातीवादर्त्तव्यम् ॥

इति षडहावृत्तौ मध्वशन-घृताशनयोस्सकृदनुष्ठानाधिकरणम् ॥ १० ॥

११

आवृत्तिस्तु० यत्र गवामयनादावभिप्लवादिभिर्व्यवेतस्य षडहस्याभ्यासाः, तत्रापि—किं सर्वान्ते मध्वशनम्? उत प्रत्यभ्यासमिति। पूर्वेण न्यायेन सर्वान्ते इति प्राप्ते उच्यते—अत्र षडहादुपरम्यैवाभिप्लवादिषु व्याप्रियते, न तु पूर्ववदनुपरमः। तस्मान्निमित्तभूतसंस्थावृत्तेर्नैमित्तिकस्य मध्वशनस्यावृत्तिः॥

इति गवामयने मध्वशन-घृताशनयोः प्रतिमाससमावृत्त्यधिकरणम् ॥ ११ ॥

१२

मधु० सत्रम् अहीनश्च द्वादशाहः। तत्र सत्रे मध्वशनं कर्त्तव्यम्? नेति? सन्देहे, यजमानानामेव सत्रे दीक्षितानामृत्विक्त्वात् दीक्षितस्य च ब्रह्मचर्यविधानात्, ब्रह्मचारिणश्च मधुप्रतिषेधान्न कर्त्तव्यं सत्रे मध्वशनम्। न च वैगुण्यम्, घृताशनेन साद्गुण्यसम्भवात्। मध्वशनं

---

चार्थिकस्यान्वयस्य 'संस्थाप्य पौर्णमासी'मित्यादावङ्गीकारादिति भावः॥

इति षडहावृत्तौ मध्वशनघृताशनयोस्सकृदनुष्ठानाधिकरणम् ॥१०॥

११

आवृत्तिस्तु० आपवादिकी सङ्गतिः। सुगममन्यत्॥

इति गवामयने मध्वशनघृताशनयोः प्रतिमाससमावृत्त्यधिकरणम् ॥ ११ ॥

१२

मधु० न्यायप्राप्तमध्वशनस्य सत्रे आक्षिप्य समाधानात्सङ्गतिः। ऋत्विक्त्वादिति। आशयेदिति णिजन्तस्य प्रकृतानध्वर्य्वादीनित्यर्थात्तत्कर्तृकमशनमदृष्टार्थतया

चाहीनविषयं भविष्यतीति प्राप्ते, अभिधीयते—यस्तावत्प्रतिपदोक्तो मध्वशनप्रतिषेधो ब्रह्मचारिणः, स तु—पुरुषार्थो न क्रत्वर्थं मध्वशनं बाधितुमर्हति, विषयभेदात् । यस्तु ज्योतिष्ठोमे दीक्षितस्य क्रत्वर्थत्वेन ब्रह्मचर्यविधानादिहाप्यतिदेशेन क्रत्वर्थतया 'ब्रह्मचर्यप्राप्तेर्ब्रह्मचारिधर्मगतो मध्वशनप्रतिषेधः क्रत्वर्थतया प्राप्तः, स प्रत्यक्षविहितं मध्वशनं नाहीनविषयत्वेन सङ्कोचयितुमर्हति । वरमतिदेशस्यैवानुमानिकस्याङ्गान्तरेषु सङ्कोचः । तस्मात्सत्रे मध्वशनं स्यात् ॥

इति सत्रे मध्वशनाधिकरणम् ॥ १२

१३

मानसं० द्वादशाहे दशमस्याह्नोऽधिकारे मानसो ग्रहः श्रूयते 'अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्रजापतये जुष्टं गृह्णामी'ति मानसं प्राजापत्यं गृह्णातीति । तत्र संशयः—किमहरन्तरचोदनेयं यागान्तरचोदनेत्यर्थः? उत दशमस्यन्हो अङ्गभूतग्रहाभ्यासान्तरं चोद्यते? इति । तत्र 'वाग्वै द्वादशाहः, मनो मानसमि'त्यादिभिर्व्यपदेशभेदादिभिर्हेतुभिर्यागान्तरशङ्कायाम् उच्यते—व्यपदेशभेदादेरवयवावयव्यभेदादप्युपपत्तेर्ग्रहण-

---

षडहाङ्गमिति भाव. । मध्वशनप्रतिषेधो द्विविधः—पुरुषार्थत्वेन ब्रह्मचारिणो विहितः स्मृत्युक्त एकः । क्रत्वर्थतया प्रकृतावपरः । तत्र स्मार्तस्य पुरुषार्थत्वाद्भिन्नविषयत्वेन न क्रत्वर्थबाधकत्वम् । द्वितीयस्त्वानुमानिकत्वान्न प्रत्यक्षविहितमध्वशनबाधक इत्याह—**यस्तावदित्यादिना** ॥

**इति मध्वशनाधिकरणम् ॥ १२ ॥**

**१३**

**मानसं० अनयेति** । समुद्रम् त्वां अनया रसया पृथिव्या तद्रूपेण पात्रेण प्रजायतये जुष्टं यथा स्यात्तथा गृह्णामीति मन्त्रार्थः । अचोदकाश्चेत्यादि पशुसोमाधिकरणशेष सूत्रं द्वितीये दर्शितम् । अत्र पूर्वपक्षे दशरात्रस्यैव विकृतौ प्रवृत्तेर्मानसस्य तदनन्तर्गतत्वाद-

चोदनानां च 'अचोदकाश्च संस्काराः' इत्यनेन संस्कारमात्रपर्यवसायित्वेन यागान्तरकल्पकत्वाभावाद्दशमेऽहनि 'मानसाय प्रसर्पयन्ती'त्यादिदर्शनैश्च दशमस्याह्नो ग्रहाभ्यासान्तरम्, नाहरन्तरम् ॥

इति मानसग्रहाधिकरणम् ॥ १३ ॥

१४

सत्रमेकः० सत्राणि किं कामिन एवैकैकशः कुर्युः ? उत बहवः संहत्य ? इति । चोदकानुग्रहाद्बहुवचनस्य चैकैकशोऽपि लोके बहवः कामिनः सत्रं कुर्वन्तीत्यनेनाभिप्रायेणानुवादत्वोपपत्तेरेकैकशः कुर्युः । नैवम्, आख्यातगता हि कर्तृसङ्ख्या प्रकृतिवदिहापि प्रयोगाङ्गतया विवक्षिता । न हि तस्याः किंचिदविवक्षाकारणमस्ति । सा च चोदकप्राप्तमेकत्वं बाधते । तस्माद्बहवः प्रयुञ्जीरन् ॥

इति सत्रस्य बहुकर्तृकत्वाधिकरणम् ॥ १४ ॥

---

प्रवृत्तिः । सिद्धान्ते तु प्रवृत्तिरिति सङ्गतिप्रयोजने । सूत्रे द्वादशाहवद्भेदेन व्यपदेशादित्यर्थः ॥

इति मानसग्रहाधिकरणम् ॥ १३ ॥

१४

सत्रमेकः० पूर्वत्र यथा दशमस्याह्नो गुणविधिस्तथात्र सत्रे बहुरूपगुणविधिरित्यातिदेशिकी सङ्गतिः । शेषं स्पष्टम् ॥

इति सत्रस्य बहुकर्तृकत्वाधिकरणम् ॥ १४ ॥

१५

अन्ये० सत्रेष्वेव किमन्यैरार्त्विज्यम् ? उत यजमानैरेव ? इति । सन्देहे, चोदकानुग्रहाय 'ये यजमानाः त ऋत्विजः' इति वचनं यच्छब्दोपबद्धयजमानोपदेशेन तत्संस्कारार्थतयाऽऽर्त्विज्यविधिः, न त्वार्त्विज्ये यजमानविधिः । तेनार्त्विज्यमन्यैः कार्यम् । यद्वा 'अध्वर्युर्गृहपतिं दीक्षयित्वे'त्यनेन ऋत्विजां संस्कारार्थेन दीक्षा विधीयत इति तद्योगादृत्विगेव यजमानशब्दगोचरः-इत्यनुवादः । नैवम्, अप्राकृतकार्यत्वप्रसङ्गात् वचनानर्थक्याच्च । न चार्त्विज्यस्य यजमानसंस्कारत्वम्, अप्राकृतकार्यत्वप्रसङ्गादेव । तस्मात्प्राकृतकार्यस्यैवार्त्विज्यस्य यजमानाः कर्त्तारो विधीयन्ते । अतोऽन्येषां चोदकप्राप्तानां बाधः ॥

इति सत्रे यजमानानामेवार्त्विज्याधिकरणम् ॥१५ ॥

१६

द्वादशाहस्य० सत्रप्रसङ्गात् द्वादशाहगतस्य सत्रस्वरूपस्य लक्षणम्, तत्प्रसङ्गाच्च तद्गतस्यैवाहीनरूपस्य लक्षणं सूत्रद्वयेनोच्यते । तत्र त्रयो-

---

१५

अन्ये स्युः० अप्राकृतेति । दीक्षाया ऋत्विक् संस्काररूपकार्यस्य प्रकृतावसत्वादित्यर्थः । वचनेति । ये यजमाना इतीत्यर्थः ॥

इति सत्रे यजमानानामेवार्त्विज्याधिकरणम् ॥ १५ ॥

१६

द्वादशाहस्य० द्वितीयसूत्रे अस्थितं अनियतमेकद्वयादिपरिमाणं सङ्ख्या येषां

दशरात्रादिष्वासनोपायिचोदनेषु वेदे अध्येतृप्रयोगेषु च सत्रशब्दप्रयोगाद्, द्वादशाहेऽपि प्रयुज्यमानस्य सत्रशब्दस्य तन्निमित्तता। द्विरात्रादिषु च यजतिचोदनेष्वहर्गणेष्वहीनशब्ददर्शनाद् द्वादशाहेऽपि तदेव तस्य निमित्तम्॥

इति सत्राहीनयोर्विवेकाधिकरणम्॥ १६॥

१७

अहीने० पौण्डरीको नामाहीन एकादशरात्रः। तत्र श्रूयते 'अयुतं दक्षिणां दद्यात्, अश्वसहस्रमेकादशमि'ति। तत्र संशयः किमयुतम्, अश्वसहस्रं च प्रत्यहं दातव्यम्? उतैकमेवायुतम्, अश्वसहस्रं च दातव्यम्? इति। तत्र—

दक्षिणा ह्यहरङ्गत्वात् प्रत्यहं भेदमर्हति।
एकप्रयोगपातात्तु तन्त्रेणैका प्रदीयते॥

सत्यं प्रत्येकमह्नामङ्गं दक्षिणा, तथाऽपि कर्त्रानतिद्वारत्वात् कर्तॄणां च चिकीर्षितार्थमुपादानादेकप्रयोगचोदितानामेकादशानामप्यह्नां युगपच्चिकीर्षितत्वात्तन्त्रेण सर्वेषां पुरुषाणामुपादानम्। तदानतिश्चैकैव तन्त्रेण। तत्सिद्ध्यर्था च दक्षिणेति सापि तन्त्रेण सम्भवादेकैव दीयते। ननु पौण्डरीकप्रकृतौ द्वादशाहे प्रत्यहं दक्षिणा भेदेन दत्ता, 'अन्वहं

---

तस्मादित्यर्थः। 'एको द्वौ बहवो वाहीनेन यजेरन्नि'ति वचनादिति भावः॥

इति सत्राहीनयोर्विवेकप्रतिपादनाधिकरणम्॥ १६॥

१७

अहीने० सिद्धान्तमाह—**एकेति**। श्लोकं व्याचष्टे **सत्यमिति**। यद्यपि ज्योतिष्टोमे 'दक्षिणाः सोमस्ये'ति वचनात्प्रधानमात्रार्था दक्षिणा, तथापि प्रधानप्रयोगीयकर्त्रानतिद्वारैव प्रधानार्थत्वान्नाङ्गेषु पृथक् तदनुष्ठानम्। प्रधानमात्रार्थत्वविधेस्तु प्रयोजनमङ्गविकृतिष्वनतिदेशः। एवञ्चेहापि कर्त्रानतिरूपद्वारैक्यात्तन्त्रतेत्यर्थः। **नन्विति**। परमप्रकृतावभेदेपि साक्षात्प्रकृतौ दक्षिणाभेदाम्नानादिहापि भेदः स्यादित्यर्थः। **अन्वहमिति**

द्वादशशतं ददाती'ति वचनात्। तेनेहापि द्वादशशतविकारो अयुतम्, अश्वसहस्रं च प्रत्यहं भेदमर्हति। उच्यते— द्वादशाहेऽप्येकप्रयोगत्वादेकैवानतिरिति प्रत्यहं द्वादशशते दीयमाने यावती भवति, तावती भवति दक्षिणैकैव। तस्मादिहाप्येकमेवायुतम् अश्वसहस्रं दातव्यम्॥

इति पौण्डरीके सकृदेव दक्षिणादानाधिकरणम्॥ १७॥

१८

प्रत्यहं० प्रकृतौ माध्यन्दिने सवने दक्षिणानयनं श्रुतम्। पौण्डरीके चायुतमश्वसहस्रं माध्यन्दिने सवने प्रत्यहं नेतव्यम्? उतैकस्मिन्नहनि? अथवा विभज्य प्रत्यहं सहस्रं नेतव्यम्? अश्वसहस्रन्त्वेकादशेऽन्हि नेयमिति? संशये, प्रकृतावात्मीये माध्यन्दिने सवने नीतेति, इहापि प्रतिकर्मावसायी चोदकः प्रतिमाध्यन्दिनं नयनं प्रतिपादयति। समस्ता चेयं सर्वेषामन्हां दक्षिणेति सर्वत्र प्रत्यहं नेतव्या। दक्षिणासंस्कारत्वान्नयनस्य सकृत्संस्कृतायाश्च न पुनः संस्कारेण प्रयोजनमित्येकस्मिन्कस्मिंश्चिन्माध्यन्दिने नयनम्। नैवम्। द्वादशाहे हि विभज्य नयनं विहितम् 'अन्वहं द्वादशशतं ददाती'ति। तेनेहापि तद्वदेव विभज्य नयनम्॥

इति पौण्डरीके दक्षिणानां विभज्य नयनाधिकरणम्॥ १८॥

---

वाक्येन दक्षिणाभेदविधौ कर्त्रानतिरूपकार्यबाधस्तस्यैकदक्षिणयैव सिद्धेः। अतो द्वादश शतरूपसाधनस्यैव बाधमङ्गीकृत्यैकस्या एव द्वादशसङ्ख्यद्वादशशतसमुदायरूपदक्षिणाया विभागमात्रमन्वहमिति वाक्येन विधीयत इति पौण्डरीकेऽप्येकैव दक्षिणेत्याशयेनाह उच्यत इति॥

इति पौण्डरीके सकृदेव दक्षिणादानाधिकरणम्॥ १७॥

१८

प्रत्यहम्० आत्मीये तत्तद्यागसम्बन्धिनि॥

इति पौण्डरीके विभज्य दक्षिणादानाधिकरणम्॥ १८॥

१९

लिङ्गेन० क्वचिद्विकृतौ श्रूयते 'मनोॠचः सामिधेन्यो भवन्ती'ति। तत्र किं सर्वा एव मनोॠचः सामिधेनीत्वेन वक्तव्याः? उत यावतीभिः सङ्ख्या पूर्यते प्राकृती तावत्य एवेति? प्रत्यक्षेण वचनेन सर्वासामविशेषेण प्राप्त्यवगमाच्चोदकप्राप्तसङ्ख्याबाधेन सर्वासामुपादानमित्येतावान्पूर्वः पक्षः। नावश्यं प्रत्यक्षवचनेन सर्वासां प्राप्तिः। न हीदमृक्संस्कारार्थम् अग्निसमिन्धनार्थं ह्यत्रर्च उपादीयन्ते? तत्र बहुवचनात् त्रित्वे प्राप्ते त्रित्वमतिक्रम्य पञ्चदशोपादीयन्ते। अधिकानां त्वनाशङ्क्यमेवोपादानम्॥

इति मानवीषु पञ्चदशानां सामिधेनीत्वाधिकरणम्॥ १९॥

२०

वाससि० ज्योतिष्टोमे सोमस्य मानम्, उपावहरणं च वासः

---

१९

**लिङ्गेन०** सकलदक्षिणानयनाभावात्सकलानां मनोॠचामानयनाभावोक्तेरातिदेशिकी सङ्गतिः। संस्कार्यत्वे हि यासामनुवचनं न क्रियते तासां संस्कारहानिरिति सर्वोपादानं स्यान्नतु तदस्तीत्यर्थः। **त्रित्व इति।** कपिञ्जलाधिकरणन्यायेनेति भावः। **पञ्चदशेति।** पञ्चदशत्वसङ्ख्याया अतिदेशप्राप्तत्वादत्र सङ्ख्याया न विधिः, किन्तु तदंशेऽनुवादमात्रमित्यधिकोपादानमनाशङ्क्यमिति भावः। पञ्चदशत्वन्तु एकादश ऋचः समानीय 'त्रिः प्रथमामन्वाह त्रिरुत्तमामि'ति प्रकृतिवदेवेति ज्ञेयम्। सूत्रे आग्नेयवत् आग्नेयैः सूक्तैरिष्टका उपदधातीत्यत्र यथा सकलाग्नेयसूक्तग्रहणं तद्वदित्यर्थः।

**इति मानवीषु पञ्चदशसामिधेनीत्वाधिकरणम्॥ १९॥**

२०

**वाससि० मानम्** 'दशमुष्टिभिर्मिमीत' इति तद्वाससि कृत्वा तत्र सोमो बध्वा शकटे स्थाप्यते। अभिषवकाले ततस्तेन वाससा उपावहरणमभिषवार्थमाहरणमिति प्रकृतौ

साधनकं 'वाससि मिनोति वाससोपावहरती'ति वचनादिति। उत्तरविवक्षया प्राप्तिः क्रियते ॥

इति वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् ॥ २० ॥

२१

तत्र० स्थितं वाससि मानं वाससा चोपावहरणमिति। द्वादशाहादावहर्गणे किमुपावहरणार्थं प्रत्यहं वासोभेदः स्यात्? उत नेति? भेदे प्रमाणाभावान्नेति प्राप्ते ब्रूमः—अर्थाद्वाससो भेदः स्यात्। हविर्द्धाने शकटेऽवस्थितः सोमः प्रत्यहं भेदेनाभिषवार्थं यावानेकस्याह्नः पर्याप्तः, तावान्सोमो वाससोपावहर्त्तव्यः। अवशिष्टश्च शकट एव वाससोपनद्धोऽवतिष्ठते। तस्मादर्थादहर्भेदे वासोऽन्तरमुपावहरणार्थमुत्पादयितव्यम् ॥

इत्यहर्गणे वासोऽन्तरोपादानाधिकरणम् ॥ २१ ॥

२२

मानं० यदेतदुपावहरणार्थमन्यद्वास उत्पाद्यते, तत्किं मानकाल

---

स्थितिरित्यग्रिमविचारार्थमुच्यत इत्यर्थः ॥

इति वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् ॥ २० ॥

२१

तत्र० प्राकृतसामिधेनीसङ्ख्याया अबाधवद्वस्त्रैक्याबाधप्राप्तौ तदपवादात्सङ्गतिः। **वासोन्तरमिति।** उत्तमादन्हः प्रागित्यर्थः। उत्तमेऽहनि तु प्रकृतिवन्मानवस्त्रेणैवेति ज्ञेयम्। न चोत्तमात्प्रागपि मानवस्त्राद्भिन्नमेकमेवोपावहरणार्थं वासः स्यान्नाहर्भेदेन भिन्नमिति वाच्यम्। उपावहरणवाससो ग्रावस्तुदुत्साहार्थं तस्मै दानविधानेन भेदस्यावश्यकत्वात् ॥

इत्यहर्गणे वासोऽन्तरोपादानाधिकरणम् ॥ २१ ॥

२२

**मानम्० मानकाल एवेति।** तावत्सु वस्त्रेषु मानं कार्यम्। मानवासस एवो-

एवोत्पाद्यम्? उतोपावहरणकाले? इति संशये, प्रकृतौ यस्मिन्वाससि क्रयकाले मानं कृतं तेनैवाभिषववेलायामुपावहरणस्य दर्शनात् अहर्गणेऽपि मानवाससोपावहरणेन भवितव्यम्। तस्मान्मानकाल एवोत्पाद्यम्। नैवम्, आर्थिकं हि प्रकृतौ मानवाससोपावहरणं न शास्त्रीयम्। एतावद्धि श्रूयते 'वाससोपावहरती'ति। तत्र प्रकृतौ यस्मिन्वाससि सोमो मितः, उपनह्य शकटे स्थापितः, तेनैव सौकर्यादुपावहरणमनुष्ठितम्। अहर्गणे तु मानवेलायामनुपपत्त्यभावादेकस्मिन्नेव वाससि सर्वेषामन्हां सोमे मित्वा उपनह्य स्थापिते अभिषववेलायामुपावहरणार्थमनुपपत्तिवशादन्यदुत्पाद्यते ॥

इत्युपावहरणार्थमेव वासोन्तरोत्पादनाधिकरणम् ॥ २२ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
दशमाध्याये षष्ठः पादस्समाप्तः ॥



पस्थितस्य लाघवादुपावहरणे विनियोगादित्याशयः। गुणवाक्यानां परस्परानपेक्षत्वादार्थिकं प्रकृतौ वस्त्रैक्यं न शास्त्रीयमित्याह--नैवमिति ॥

इत्युपावहरणार्थमेव वासोऽन्तरोत्पादानाधिकरणम् ॥ २२ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां दशमाध्या-
यस्य षष्ठः पादः।



## अथ दशमाध्याये सप्तमः पादः

१

पशावेक० 'अग्नीषोमीयं पशुमालभेते' त्यत्र संशयः—किं कृत्स्नः पशुरेकं हविः, तेन च देवतायै दीयमानेन पयो विक्रियते तत एव चावदाय होमः ? उत पश्वङ्गं हृदयादि हविरिति ? तत्र—

तद्धितेन पशोरेव देवतान्वयचोदनात् ।
समस्तस्य पशोर्दानमैन्द्रस्य पयसो यथा ॥

'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः' इत्यादीनि वचनानि पशोरेवावदानप्रदेशलक्षणार्थानि, मध्यपूर्वार्धवचनवत् हृदयप्रदेशेऽवद्यतीत्येकादशानाञ्च प्रदेशानामुपदेशाद् द्व्यवदानमपोद्य एकादशकृत्वोऽवदाय हूयते । तस्मिन्नेव च काले समस्तः पशुर्देवतायै त्यज्यते-पुरोडाशवत् । तस्मात्पशुरेकं हविरिति प्राप्ते ब्रूमः—

खण्डनं प्राकृतार्थं हि हृदयादिषु दृश्यते ।
तस्मात्तत्प्रकृतित्वेन देवतासङ्गतिः पशोः ॥

हृयदादिशब्दा हि मांसविशेषवचना न युक्तं यत् पशुप्रदेशलक्षणार्थतां नीयन्ते, हृदयादीनामेवावदानोपपत्तेः । अवदानञ्च प्रकृतौ हविस्संस्कारार्थमिति, इहाप्यवदानं हविष एव युक्तम् । तच्च हृदयादिषु दृश्यत इति

---

### सप्तमः पादः

१

पशौ० कस्य बाध इति पूर्वत्र चिन्ता । इह केन बाध इति चिन्तेति पादान्तरत्वमित्याहुः । विक्रियते बाध्यते । तत एव पशोरेव । कायिकानुष्ठानभेदमुक्त्वा मानसं तमाह—तस्मिन्निति । पुरोडाशवदिति वार्तिककारमतेन दृष्टान्तः । खण्डनम् अव-

हृदयादीनामेव हविष्ट्वं निश्चीयते। न चोत्पत्तिवाक्यशिष्टपशुविरोधः, तस्य हृदयादिप्रकृतित्वेन यागसाधनत्वेनापि देवतासम्बन्धोपपत्तेः। यदि हि प्रणाड्यां प्रमाणं न स्यात्, ततः पशुरेव साक्षाद्दीयेत। अस्ति तु प्रमाणं हृदयादिष्ववदानवचनं विशसनवचनञ्च। तस्माद्धृदयादीनि हवींषि देवतायै देयानि तेभ्य एव च द्रव्यवदानं गृहीत्वा हूयते तत्प्रकृतिश्च पशुः॥

इति पशौ हृदयादीनामेव हविष्ट्वाधिकरणम्॥ १॥

२

हविर्भेदात्० पश्वङ्गानि हवींषीति स्थिते चिन्त्यते—किमेकेन केनचिदङ्गेन यागः कर्त्तव्यः? उत सर्वैरङ्गैः? अथवा हृदयादिभिरेकादशभिरिति? तत्र—

एकेनापि पशोर्यागसाधनत्वोपपत्तितः।
तन्मात्रेणैव यागः स्यात्सर्वैर्वा युगपन्मतेः॥

पश्वाकृतिर्हि देवतासम्बन्धित्वेन श्रुता। तेन तया परिच्छिन्नेन

---

दानम्। प्राकृतः हविस्संस्काररूपोऽर्थो यस्य तत्। अत्रैवं प्रयोगः—हृदयादीनि हवींषि, हविस्संस्कारार्थावदानसम्बन्धित्वात्पुरोडाशादिवदिति। विशसनेति। 'पशुं विशास्ती'ति वचनमित्यर्थः। सिद्धान्तप्रयोजनं दर्शयति—तस्मादिति। सूत्रं स्पष्टार्थम्॥

इति पशौ हृदयादीनां हविष्ट्वाधिकरणम्॥ १॥

२

**हविर्भेदात्०** हृदयादीन्येव हवींषि किं वा सर्वाङ्गानीति विचारस्य पूर्वोपजीवकत्वात्सङ्गतिरिति दर्शयति— **पश्वङ्गानीति**। हृदयादीनामेकस्यैव कस्यचिद्यागसाधनत्वेऽथेति क्रमानुपपत्तेः पूर्वपक्षान्तरमाह— **सर्वैरेवेति**। न तु हृदयादिभिरेवेत्यर्थः। **युगपन्मतेरिति** हेतुं व्याचष्टे— **पश्वाकृतिर्हीति**। किमर्थं तर्हि हृदयस्याग्र इत्यादि वचनमत आह—

द्रव्येण यष्टव्यम्। सा चावयविद्रव्यं साक्षात्परिच्छिनत्ति। तस्य विशसनादिविधानात् न साक्षाद्यागसाधनता सम्भवतीति तदवयवानामवयविद्वारेण पश्वाकृत्या परिच्छिन्नानां साधनत्वम्। अवयवी चावयवेषु व्यासज्यवर्तमानः सहैव सर्वावयवेषु धियमादधाति, न जातिरिव व्यक्तिषु प्रत्येकम्। अतो विशेषतः सर्वैर्यष्टव्यम्। हृदयादिवचनं तु द्रव्यवदाननियमार्थम्। एवंहि श्रूयते 'एकादश वै पशोरवदानानि, तानि द्विर्द्विरवद्यती'ति नियमश्च। नैवम्—एकादशैवावदेयानि नाधिकानीति, किं तर्हि यान्येकादश तानि द्विरवद्यति, नाधिकानीति। तेनाधिकान्यङ्गानि पशोः पश्वावदानवचनात् त्रिस्त्रिरवद्यन्ते। तस्मात्सर्वेभ्योऽवदेयम्। नैतदेवम्।

अविशेषाद्धि सर्वेषां हविष्ट्वमवगम्यते।
अवदानवचोभ्यस्तु विशेषोऽत्रावधार्यते॥

यदा हि हृदयादीनामवदानवचनेन हविष्ट्वमवगतम्, तदा तत्प्रकृतित्वेनैव पशोर्देवतासम्बन्धोपपत्तेर्न किंचिदङ्गान्तराणां हविष्ट्वे प्रमाणमस्ति। न च द्विसङ्ख्यार्थं हृदयादिश्रवणम्, भिन्नवाक्यत्वात्। 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः' इत्यादीन्यवदानविधानानि। 'एकादश वै पशोरवदानानि, तानि द्विर्द्विरवद्यती'ति सङ्ख्याविधानम्। तस्माद्धृदयादिभ्यः परिगणितेभ्योऽवदानम्, नाधिकेभ्यः॥

इति पशोरङ्गविशेषैर्यागानुष्ठानाधिकरणम्॥ २॥

---

हृदयादीति। 'तानि द्विर्द्विरि'ति वाक्ये तच्छब्देन परामर्शार्थम् हृदयादीन्येकादशैवावदानान्वयितयाऽनूद्यन्त इत्याशयेनाह--**एवं हीति**। इदमुपलक्षणम्। हृदयादिवाक्यानां क्रमविधानार्थतयाऽर्थवत्वसम्भवादिति सिद्धान्तमाह--**नैतदिति**। प्राकृतावदानस्य हृदयादिसम्बन्धविधावर्थादितिरेषां हविष्ट्वनिवृत्तिः। यदुक्त द्व्यवदाननियमार्थमिति तद्दूषयति--**नचेति**। हृदयादिवाक्येष्ववदानविध्यभावे हि तद्गतक्रमस्यानपेक्षितत्वेन विध्यभावप्रसक्तावथेत्यादिक्रमनिर्देशासङ्गतिः स्यादिति भावः॥

इति पशोरङ्गैर्यागानुष्ठानाधिकरणम्॥ २॥

३

इज्या० पशावेव चोदकप्राप्तः स्विष्टकृद्यागः किं प्रधानहविर्भ्यो हृदयादिभ्यः उत्तरार्द्धं गृहीत्वा कर्तव्यः ? उताङ्गान्तरेभ्यः ? इति संशये, प्रधानशेषप्रतिपत्त्यर्थत्वात्प्रकृतौ पशावपि प्रधानशेषेभ्यः कर्तव्यः। 'त्र्यङ्गैः स्विष्टकृतं यजती'ति वचनं चोदकप्राप्तेषु सर्वेषु प्रधानहविःषु त्रित्वविधानार्थम् तेन तेषामेव मध्ये त्रिभिः स्विष्टकृदिज्येति प्राप्ते ब्रूमः—

त्रित्वं नाङ्गानुवादेन विधातुं शक्यते तथा।
तस्य प्रसरभेदेन सामर्थ्यं हि विहन्यते॥

एकं हीदं समासपदं त्र्यङ्गैरिति। तदेकप्रसरं युक्तं सकलमुद्देशकम्, उपादायकं वा ? उत्तरार्द्धन्तूद्दिश्य पूर्वार्द्धे विधीयमाने प्रसरभेदात्सामर्थ्यविघातात्समासो न स्यात्। अपि च 'दोः पूर्वार्धस्य, गुदं मध्यतः, श्रोणिं जघनार्धस्ये'ति वाक्यशेषेऽनिज्याशेषाणां कीर्तनाद्धिरष्टमनिज्याशेषाणां विधानम्। तैश्च प्रत्याम्नानादिज्याशेषाणां बाधः। नन्वनिज्याशेषाणामङ्गत्वेन विधानात्, इज्याशेषाणां च चोदकेन प्रतिपाद्यत्वेन प्रधानतया प्राप्तानां विषयभेदादयुक्तो बाधः। प्रधानभूतानामपि निर्वर्त्तकत्वात्तस्मिंश्चांशेऽनिज्याशेषाणां विधानादार्थिकमस्त्येव तुल्यविषयत्वम्। न ह्यनिज्याशेषैः क्रियमाणो यागस्तेषां प्रतिपत्तयेऽलं भवति। तेन गुणभूतैरपि युक्तः प्रधानबाधः। किं चानिज्याशेषाणामपि हृदयाद्यर्थलब्धपश्वनुनिष्पन्नानामाकीर्णकराणां प्रतिपत्त्यपेक्षत्वाच्चोदकेनेज्याशेषप्रतिपत्त्यर्थतया

---

३

**इज्या०** इहापि परिगणितेभ्य एव स्विष्टकृदवदानोक्तेरातिदेशिकी सङ्गतिः। **त्रित्वमिति**। तथेत्यस्योत्तरार्द्धेऽन्वयः। तथासतीत्यर्थः। **तस्य** अङ्गैरिति पदस्य। ननु- त्रित्वं स्विष्टकृदनुवादेन विधीयतां तच्चाङ्गद्वारेणेति न दोष इत्यत आह—**अपि चेति**। पूर्वार्धस्य दक्षिणहस्तपूर्वार्धादित्यर्थः। **गुदं** गुदस्येत्यर्थः। **श्रोणिम्** श्रोणेर्जघनार्धादित्यर्थः। **अङ्गत्वेनेति**। अङ्गैरिति तृतीयाश्रुतेरित्यर्थः। आर्थिकसाधनत्वांशमादायैकविषयत्व-

प्राप्तः स्विष्टकृद्यागस्तत्प्रतिपत्तौ वचनेन विनियुज्यते-यत्स्विष्टकृता प्रतिपाद्यं तत ऽत्र्यङ्गानि, न हृदयादीनि । तस्माद्युक्तो बाधः ॥

इति अनिज्याशेषैस्त्र्यंगैस्स्विष्टकृद्धोमानुष्ठानाधिकरणम् ॥ ३ ॥

४

अध्यूघ्नी० पशावेव श्रूयते 'अध्यूघ्नीं होत्रे हरन्तो'ति । सेयमध्यूघ्नी किं प्राकृतस्य होतुरिडाभक्षस्य विकारः? उत नेति? यद्यत्यन्ताप्राप्ताऽध्यघ्नी इयं विधीयते ततो विकारः । अथ पक्षे होतुः प्राप्ता सती नियम्यते, ततोऽविकारः । तत्र—'अनस्थिऽभिरिडां वर्धयन्ती'ति वचनादिडायामन्तर्गताऽध्यूघ्नी इडायाम् ऋत्विग्भिर्विभज्य भक्ष्यमाणायां कदाचिद्धोतृभागे स्यात्, कदाचिदन्यस्य भागे, सा होतृभागे नियम्यते । ततो यजुर्युक्तरथवन्नेडाभक्षस्य विकारः । उच्यते—'अनस्थिभिरिडां वर्धयन्ती'ति वर्तमानापदेशसरूपत्वादनुवादोऽयम् । कथं प्राप्तिः? 'अथ यत्परिशिष्टं, तत्समवत्तधान्यामावपन्ति, यद्धृदयं प्रास्यति, जिह्वां वक्षः तनिमानः तस्यै वनिष्ठुमि'ति । न च तन्मध्येऽध्यूघ्नी कीर्तिता । तस्मादप्राप्ता । तेन नैवं वचनव्यक्तिः—यदध्यूघ्नीं हरन्ती, तद्धोत्रे इति । किं तर्हि? यद्धोत्रे हरन्ति, तदध्यूघ्नी'मिति प्राकृतं

---

मस्तीत्याह---प्रधानेति । एवं सति स्विष्टकृतः प्रतिपत्त्यर्थत्वाभावादप्राकृतकार्यत्वमित्यरुचेराह--किञ्चेति । एवञ्च तृतीयाश्रुतिभङ्गेन प्रधान्यमेवाङ्गानामित्यर्थः ॥

इत्यनिज्याशेषपश्वङ्गैः स्विष्टकृदनुष्ठानाधिकरणम् ॥ ३ ॥

४

अध्यूघ्नी० वैकृतसंस्कारान्तरेण प्राकृतबाधोक्तेरातिदेशिकी सङ्गतिः । **अध्यूघ्नी** पुंव्यञ्जनम् । पूर्वपक्षमाह--**तत्रेति** । **अनस्थिभिः** अस्थिशून्यैरवयवैः । **नियम्यत इति** । यदध्यूघ्नीं हरति तद्धोत्र एवेति नियम इत्यर्थः । यथा यद्यजुर्युक्तं रथं ददाति तदध्वर्यव एवेति नियम्यत इति दृष्टान्तः । एवञ्च सम्प्रदानान्तरनिवृत्तिर्न तु सम्प्रदेयान्तरनिवृत्तिरिति भावः । **समवत्तधान्याम्** इडापात्रे । **आवपन्ति** प्रक्षिपन्ति । **तनिमा** तनुत्वं **तद्वन्तः**

होतृसम्प्रदानकं हरणमध्यूध्नीप्रतिपादने विनियुज्यते। तस्मादिडाभक्षविकारः॥

इत्यध्यूध्न्या इडाविकारताधिकरणम्॥ ४॥

५

अग्नीधश्च० तत्रैव श्रूयते 'वनिष्ठुमग्नीधे हरन्ती'ति। तत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः। विशेषाशङ्का तु वनिष्ठोरिडायां प्रासनवचनादस्ति प्राप्तिरिति। सत्यमस्ति प्रासनम्। तत्त्विडासंस्कारार्थम् उपस्तरणादिवत्। अतो नास्येडात्वम्। न च भक्षसंयोगोऽस्य, भक्षयितुं प्रास्यतीति। न चतुर्थी निर्देशः-प्रासनविधावस्ति। तस्मादप्राप्तो वनिष्टुः 'अग्नीधे वनिष्ठुमि'ति चतुर्थ्याऽग्नीत्सम्प्रदानके हरणे विधीयत इति प्राकृतस्येडाभक्षस्य विकारः॥

इति वनिष्ठोर्भक्षविकारताधिकरणम्॥ ५॥

६

अप्राकृत० मैत्रावरुणो नामाऽस्तिपशावृत्विक्। स किम् इडां भक्षयेन्नेति सन्देहे, नास्य प्रकृततो भक्षः प्राप्नोति, अप्राकृतो ह्यसौ। हौत्राध्वर्यवकारित्वात्, कार्यतस्त्वस्ति भक्षणम्। प्राकृता हि भक्षाः प्राकृतकर्तृनियमांशेन कर्तृसंस्कारार्था अपीत्युक्तम्। अतोऽध्वर्युहोतृसंस्कारत्वाद्भ-

---

सूक्ष्मखण्डा इत्यर्थः। वनिष्ठुर्वपासदृशोऽवयवविशेषः॥

इत्यध्नूध्या इडाविकारताधिकरणम्॥ ४॥

५

अग्नीधश्च० सुगमम्॥

इति वनिष्ठोर्भक्षविकारताधिकरणम्॥ ५॥

६

अप्राकृतत्वात्० अत्रेडाभक्षसाधनादापवादिकी सङ्गतिः। उक्तमिति। तृतीयाऽ-

क्षस्य मैत्रावरुणे प्रैषकरणादध्वर्युकार्यम्, अनुवचनकरणाच्च होतृकार्यं कुर्वाणेऽस्ति प्राप्तिः ॥

इति मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् ॥ ६ ॥

७

द्विभागः० किमयं मैत्रावरुणो द्वौ भागौ भक्षयेत् ? उतैकमिति ? द्वयोः कर्मकुर्वन्द्वौ लभेतेति प्राप्ते ब्रूमः—

अध्वर्योर्यावती तृप्तिर्होतुस्तृप्तिश्च यावती ।
तन्त्रेण तावती तृप्तिर्भागेनैकेन लभ्यते ॥

तस्मादेकभागः स्यात् ।

इति मैत्रावरुणस्यैकभागताधिकरणम् ॥ ७ ॥

८

प्रतिप्रस्थातुश्च० तत्रैव प्रतिप्रस्थातुरिडायामस्ति भक्षः, नेति संशये, अध्वर्युकार्यं हविः श्रपणम् । असौ च करोति वपाश्रपणम् । तस्माद्भक्षयेत् । सत्यमसौ वपां श्रपयति । तस्यास्तु सर्वप्रदानत्वान्नास्ति शेषः । प्रकृतौ च यस्यापूर्वस्य यः कर्त्ता, स तच्छेषस्य भक्षयिता । भिन्नं चाङ्गापूर्वेभ्यो वपापूर्वम् । अतस्तस्य कर्त्ता प्रतिप्रस्थाता तच्छेषमेव भक्षयितुमर्हति । सा च निःशेषा । तस्मान्नास्य भक्षः । नन्वङ्गेभ्योऽपि हृदयादिभ्योऽयमवदानं

---

ध्यायचतुर्थपादान्ते इत्यर्थः । कर्तृगततृप्तिरेव हि आनुषङ्गिकं फलं कर्तृनियमस्येति तत्रोक्तम् । अत इति । तत्तदपूर्वसाधनत्वेन होत्रादेः संस्कार्यत्वात्तत्कार्यपत्या मैत्रावरुणेऽपि प्राप्तिरित्यर्थः ॥

इति मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् ॥ ६ ॥

७

द्विभागः० प्रसङ्गः सङ्गतिः । शेषं सुगमम् ॥

इति मैत्रावरुणस्यैव भक्षभागताधिकरणम् ॥ ७ ॥

८

प्रति० हृदयाद्यपूर्वे प्रतिप्रस्थातुः कर्तृत्वात्तद्भक्षमाशङ्कते —**नन्विति** ।

कुर्वन्भक्षं लभेत, 'दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यती'ति वचनात्। यस्यां शाखायामध्वर्यैरेवावदानं तद्विषयमिदमधिकरणं प्रतिप्रस्थात्रवदानपक्षे त्वस्त्येव भक्ष इत्ययमेव परमार्थपरिहारः। यत्त्वाप्राकृतमिदमवदानम्, अप्राकृतकार्यश्च प्रदानारम्भत्वाभावादित्युक्तम्। तद्युक्तम्, यद्यपि 'दैवतान्यवदाय, न तावत्येव होतव्यं सौविष्टकृतान्यवद्यतीति' मध्ये पदार्थान्तरविधानान्नायं प्रदानाऽऽरम्भः, तथाऽपि प्रदानार्थमेवेदमवदानं नादृष्टार्थम्। तथा चावदानदर्शनाद्धृदयादीनां हविष्टवमुक्तम्। अदृष्टार्थे अवदाने हि न तेषां हविष्ट्वं सिध्येत्। तस्मादवद्यन्प्रतिप्रस्थाता लभेतैव भक्षम्। अध्वर्य्ववदानपक्षे तु नास्य भक्षः, वपाया निःशेषत्वादित्येतावानाधिकरणार्थः ॥

इति प्रतिप्रस्थातुः भक्षाभावाधिकरणम् ॥ ८ ॥

९

विकृतौ० चातुर्मास्येषु साकमेधे पर्वणि गृहमेधीयेष्टिः। तत्र श्रूयते 'आज्यभागौ यजति यज्ञतायै' इति। तदिहाज्यभागश्रवणेऽष्टौ पक्षा विचार्यन्ते। किं चोदकप्राप्तानुवादमात्रम्? उत द्वाभ्यां विधानम्? अर्थवादार्थं वा? कर्मान्तरविधिर्वा? परिसङ्ख्या वा? तद्वर्जातिदेशो वा? तयोरेवातिदेशो वा? अपूर्वो वा गृहमेधीय इति।

तत्र प्रकृतितः प्राप्तेश्चोदकेनाज्भागयोः।
गुणान्तरस्य चाभावादनुवादत्वमिष्यताम् ॥

---

दक्षिणतः दक्षिणे वेदिभागे। स्पष्टमन्यत् ॥

इति प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ॥ ८ ॥

९

विकृतौ० पूर्वं भक्षबाधवदिह प्रयाजादिबाधकथनादातिदेशिकी सङ्गतिः। **गृहेति**। 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनं निर्वपेदि'ति विहितेत्यर्थः। **द्वाभ्याम्** उपदेशातिदेशाभ्याम्। **तद्वर्जेति**। आज्यभागवर्जेत्यर्थः। **तयोः** आज्यभागयोः। **अपूर्वः**

आनर्थक्यप्रसङ्गात्तु न त्वेतद्धृदयङ्गमम् ।
तस्मादुभाभ्यां विष्यन्तो दार्शिकोऽत्र विधीयते ॥

आज्यभागश्रवणं निर्वपत्यादिश्रवणवत्प्रकृतिसादृश्यमापादयच्चोदकस्य निमित्तं भवति । चोदकस्त्वैष्टिकं विष्यन्तं नियच्छतीत्येवमुभाभ्यामैष्टिकविष्यन्तविधिः ।

नैतदपि युक्तम्, औषधद्रव्यकत्वादैष्टिकातिदेशसिद्धेः । तस्माच्चोदकप्राप्तैष्टिकविष्यन्तप्रशंसार्थमिदम्-एवमयं दर्शपूर्णमासविष्यन्तः प्रशस्तो यत्—तत्राज्यभागावपि स्तः, तौ च यज्ञतायै इति । विध्येकवाक्यत्वाभावादिदमप्यन्याय्यम् । तस्मात्कर्मान्तरविधिः । प्रसिद्धाज्यभागप्रत्यभिज्ञानात्तदपि न सारम् । तस्माच्चोदकेन सर्वेष्वङ्गेषु प्राप्तेष्वाज्यभागयागपुनःश्रवणं समिदादियागानां परिसङ्ख्यार्थम्—आज्यभागावेव यजति, न समिदादियागानिति । तदप्यनुपपन्नम् । परिसङ्ख्यायास्त्रिदोषत्वात् । तस्मात्प्रत्यक्षवचनसिद्धत्वादाज्यभागयोस्तद्वर्जमन्यान्यङ्गानि चोदकः प्रापयति । तदप्यचतुरस्रम् । न हि चोदकस्य प्रत्यङ्गं व्यापारभेदोऽस्ति, येनाज्यभागविषये न व्याप्रियेत । एकेनैव व्यापारेणासौ सर्वाण्यङ्गानि प्रापयति । तेनैव चाज्यभागयोरपि प्राप्तत्वादनर्थकमेव पुनः श्रवणं स्यात् । तस्माच्चोदकोपसंहारोऽयं-प्रकृतिवत्कुर्यात् । किं तत्सादृश्यम् ? आज्यभागौ यजति । तदप्यपेशलम् । न हि प्रत्यक्षश्रुतोऽतिदेशः, येनैवमाश्रीयते कल्प्यो ह्यसौ । तद्यदि कल्पितेऽपि तस्मिन्नाज्यभागावेवानुष्ठातव्यौ तयोः प्रत्यक्षेणवचनेन सिद्धेः, अनर्थकश्चोदकाङ्गीकारः ।

तस्मादपूर्वतैव स्यात् गृहमेधीयकर्मणः ।
प्राकृताङ्गनिराकाङ्क्षं न तच्चोदकमर्थयेत् ॥

---

प्रकृतिशून्यः । **प्रकृतिसादृश्यमिति** । तादृशवाक्यवत्वमाज्यभागरूपतदर्थवत्वं वा सादृश्यमित्यर्थः । **विध्येकवाक्यत्वाभावात्** गृहमेधीयविध्येकवाक्यत्वाभावात् । **एकेनैवेति** । प्राकृतकरणोपकारत्वेनातिदेशे तज्जनकतयार्थात्सर्वेषामपि प्राप्तिं करोतीत्यर्थः । सामान्यरूपस्यातिदेशस्य वैयर्थ्यापत्तेस्तदुपसंहारो न युक्त इत्याह—**तदपीति** । सिद्धान्तमाह—

आज्यभागोहिं प्रकृतौ श्रुतयागरूपव्यतिरेकेण प्रकरणाम्नानकल्पितं स्वापूर्वद्वारेण यागगतव्यापाररूपमपरमस्ति। तद्रूपलक्षणार्थं चेदमाज्यभागश्रवणम्, अन्यथा आनर्थक्यात्। अतश्च गृहमेधीयप्रयोगवचनो यागगतं व्यापारमपेक्षमाणः प्रत्यक्षवचनविहिताज्यभागनिराकाङ्क्षो न प्रकृतिमपेक्षते। विकृत्यन्तरे यानि त्वप्राकृतान्यामनहोमादीन्यङ्गानि, तेषां यागगतव्यापाररूपस्याक्लृप्तत्वात्तद्रूपानपेक्षः प्रयोगवचनः सन्निहितान्यपि तान्यतिक्रम्य प्राकृतान् क्लृप्तोपकारान् गृहीत्वा पश्चात्समीपाम्नाताङ्गानर्थक्यपरिजिहीर्षया तान्यपि गृह्णातीति, न तैश्चोदकलोपः। किं च यदि गृहमेधीयः प्रकृतिपूर्वः स्यात्, नाज्यभागग्रहणं क्रियेत। कृतश्च तत्। अतोऽवगच्छामो नूनमत्र नास्ति चोदक इति। तस्माद्यत्र प्राकृतमङ्गं निर्गुणं श्रुतम्। तत्रापूर्वत्वम्॥

इत्याज्यभागाधिकरणम्॥ ९॥

१०

ततोऽपि० गृहमेधीय एव स्विष्टकृदिडादि कर्त्तव्यं नेति संशये, निराकाङ्क्षत्वादाज्यभागाभ्यां न कर्तव्यम्।

प्रत्यक्षश्रुतत्वाविशेषात्तु कर्तव्यम्। न च विकल्पः, प्रकृताविव प्रकरणेन सर्वेषां युगपद्ग्रहणात्॥

इति गृहमेधीये स्विष्टकृदानुष्ठानाधिकरणम् १०॥

---

तस्मादिति। एतन्न्यायवैषम्यमप्राकृतेऽङ्गे दर्शयति—विकृत्यन्तर इति। तद्रूपानपेक्षः आमनहोमत्वरूपानपेक्षः। कथमिति प्रकारस्यैवाकाङ्क्षितत्वादिति भावः। प्रकारान्तरेणापि वैषम्यमाह—किञ्चेति। तथा च प्राकृताङ्गविधिवैयर्थ्यवशादेव तावतैवाकाङ्क्षोपरमकल्पनयातिदेशलोपकल्पनम्। आमनहोमविधेस्तु वैयर्थ्याभावान्नातिदेशलोपकत्वमिति वैषम्यमित्यर्थः॥

इत्याज्यभागाधिकरणम्॥ ९॥

१०

ततोऽपि० स्विष्टकृदादि बाधमाशङ्क्य तदपवादात्सङ्गतिः। अन्यत् सुगमम्॥

इति गृहमेधीये स्विष्टकृदनुष्ठानाधिकरणम्॥ १०॥

११

स्विष्टकृति० गृहमेधीय एव प्राकृताङ्गपुनःश्रवणं परिसङ्ख्यार्थमिति कृत्वा चिन्त्यते । तदा हि समानजातीयमेव शीघ्रोपस्थापनात्परिसंख्यायते, नान्यत् । तेनाज्यभागाभ्यां यागान्तराणि परिसङ्ख्यायन्ते, न शेषकार्याणि । स्विष्टकृत्तु किं प्राशित्रादीनां शेषकार्याणामपरिसङ्ख्यां करोति, नेति चिन्तायाम् । इडोपह्वानदर्शनान्नेति प्राप्ते ब्रूमः । परिसंचष्ट एव प्राकृतः स्विष्टकृत्पुनःश्रूयमाणः शेषकार्यान्तराणि । इडादिदर्शनं तु वचनान्तरविहितत्वादुपपन्नं नान्यस्य शेषकार्यस्यानिवृत्तिं सूचयति ॥

इति गृहमेधीये प्राशित्रभक्षणाभावाधिकरणम् ॥ ११ ॥

१२

शंय्विडान्तत्वे० ज्योतिष्टोमे श्रूयते 'शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्ति, इडान्ताऽऽतिथ्या सन्तिष्ठते, नानुयाजान् यजती'ति । तत्र संशयः किं प्रायणीयातिथ्ये शंय्विडान्ते वा ? कृत्स्नसंस्थे वा ? उत शंय्विडान्ते एवेति ? तत्र शंय्विडान्तवचनेन परेष्वङ्गेषु सर्वेष्वकर्तव्येषु पुनः पत्नीसंयाजानूयाजानामकर्त्तव्यत्ववचनं परिसङ्ख्यारूपेणाङ्गान्तराणां अकर्त्तव्यताप्रतिषेधेन कर्तव्यताविधानार्थं पत्नीसंयाजानेव न कुर्याद् अन्यानि तु कुर्यादेवेति । तेन पत्नीसंयाजानुयाजप्रतिषेधेन कृत्स्नसंस्थाविधानाच्छंय्विडान्तवचनेन तत्संस्थाविधानाद् द्वयोः संस्थयोर्विकल्पः । नैवम्—

---

११

**स्विष्टकृत्**० इह बाधोक्तेरापवादिकी सङ्गतिः । **वचनान्तरेति** । 'अथेडामवद्यती'त्येवमित्यर्थः ॥

इति गृहमेधीये प्राशित्रभक्षाभावाधिकरणम् ॥ ११ ॥

१२

**शंय्विडान्तत्वे**० परिसङ्ख्याप्रसङ्गान्न पत्नीः संयाजयन्तीत्यस्यापि परिसङ्ख्या-

वाक्यभेदो हि न न्याय्यो विकल्पश्चाष्टदोषभाक् ।
त्रिदोषा परिसङ्ख्या च तस्मात्स्तुत्यैकवाक्यता ॥

शंय्विडान्तविधेरेवायमर्थवादार्थोऽनुवादः । पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति न विध्यन्तरम् । तस्मान्नियमेन शंय्विडान्ते एव प्रायणीयातिथ्ये ॥

इति प्रायणीयातिथ्ययोश्शंय्विडान्ततानियमाधिकरणम् ॥ १२ ॥

१३

प्रतिषेध० शंय्विडान्तयोरेव सन्देहः । प्रकृतौ द्वौ शंयू—पत्नीसंयाजानां पुरस्तादेकः, पश्चादपरः । तथेडे अपि द्वे-अनुयाजानां पुरस्तादेका, पश्चादपरा । तत्र किं—पूर्वाभ्यां शंय्विडाभ्यां तदन्तता ? उतोत्तराभ्याम् ? उतानियमः ? इति विशेषाभावादनियमे प्राप्ते अभिधीयते—उत्तराभ्यामेव । कुतः ? इदं तावत्पर्यग्निकृतोत्सर्गवचनवच्छंय्विडान्ताङ्गरीतिविधानम् । अतो ये शंयोः इडायाश्च प्राञ्चः पदार्थाः ते कर्तव्याः । ये चोत्तराभ्यां शंय्विडाभ्यां प्राञ्चः, तेषामपि शंय्वि-

---

त्वमाशङ्क्यापोद्यत इति सङ्गतिः । स्तुत्या स्तावकत्वेन ॥

इति प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम् ॥ १२ ॥

१३

प्रतिषेधा० 'न पत्नीरि'त्यस्यार्थवादत्वमुक्तमाक्षिप्य समाधीयत इति सङ्गतिः । प्रकृताविति । प्रधानयागनारिष्टहोमप्राशित्रादिभक्षेडाभक्षानुयाजसूक्तवाकशंयुवाकपरिधिप्रहरणहविःशेषभक्षपत्नीसंयाजाज्येडाशंयुवाका इत्येवं क्रमक्लृप्तिवाक्ये द्वौ शंयुवाकौ द्वे चेडे उक्त इत्यर्थः । इति विशेषाभावादित्येकग्रन्थः । 'पर्यग्निकृतं पात्नीवतमि'ति न्यायेन द्वितीयपूर्वपक्षमाह—उत्तराभ्यामेवेति । पर्यग्निकृतमितिवदत्र प्रायणीयाद्यनुवादेन क्लृप्तोपकारशंय्विडान्ताङ्गरीतिविधानादतिदेशलोपे तदुपरितनाङ्गनिवृत्तिरार्थिकी सन्तिष्ठत इत्यनेनानूद्यते । एवञ्च शंय्विडान्तपदार्थविधानात्पूर्वशंय्विडोत्तरपदार्थानामप्युत्तरशंय्विडान्तत्वाविशेषाद्विधानप्राप्तेस्तदुत्तरभाविपदार्थानामेव निवृत्तिरित्यर्थः ।

डाभ्यां पूर्वभावित्वमस्तीति कर्त्तव्यता गम्यते। तस्मादुत्तराभ्यामेव तदन्तता। तथा च पत्नीसंयाजानूयाजप्रतिषेधोऽर्थवान्भवति, वाद्मात्र ह्यनर्थकम्।

स्यादेवं शंय्विडान्ताङ्गरीतिर्यदि विधीयते।
प्रवृत्तयोस्तु संस्थानं चोद्यते शंय्विडान्तयोः॥

सन्तिष्ठतिना हि संस्थानामुपरमो विधीयते, नाङ्गरीति। तेन प्रवृत्ते प्रायणीयातिथ्ये शंय्विडान्ते सत्यौ सन्तिष्ठेते तामवस्थां प्राप्य ततः परं न प्रवर्तितव्यमुपरन्तव्यम्। तेन शंय्विडे चेत्साक्षात्कृते कर्तव्य मवस्थानमिति पूर्वयोः कृतयोः कर्त्तव्यं संस्थानमिति पूर्वाभ्यामेव तदन्तता, पत्न्यनूयाजप्रतिषेधस्त्वेकवाक्यत्वादर्थवादार्थोऽनुवाद इत्युक्तम्॥

इति प्रायणीयातिथ्ययोः पूर्वाभ्यां शंय्विडाभ्यां संस्थाधिकरणम्॥ १३॥

१४

उपसत्सु० ज्योतिष्टोमे सन्त्युपसदः। ताः प्रकृत्य श्रूयते 'अप्रयाजास्ताः, अननूयाजास्ताः' इति। तथा 'स्रुवेणाघारमाघारयती'ति।

---

एवञ्चोत्तरशंय्विडापूर्वभाविपत्नीसंयाजप्रसक्तौ न पत्नीरिति प्रतिषेधोऽपि सार्थक इत्याह—**तथाचेति**। प्रतिषेधोऽत्र पर्युदासः, अन्यथा विकल्पापत्तेरित्यूह्यम्। सिद्धान्तमाह—**स्यादेवमिति**। शंय्विडान्ताङ्गरीतिविधौ धातोरत्यन्तपारार्थ्यापत्तेः शंय्विडान्तत्वे निमित्ते संस्थैवोपरमरूपा विधीयत इति पूर्वयोः शंय्विडयोः कृतयोर्निमित्तप्राप्तौ कर्तव्य एवोपरम इत्यर्थः। पर्यग्निकृतवाक्ये तूपरमविधौ यागस्याप्यकरणापत्तेरङ्गरीतिविधिराश्रित इति वैषम्यमिति भावः।

इति प्रायणीयातिथ्ययोः पूर्वाभ्यां शंय्विडाभ्यां संस्थाधिकरणम्॥ १३॥

१४

**उपसत्सु०** पूर्वमपूर्वतापवादे कृते तदपवादादत्र सङ्गतिः। **उपसद** इति।

तत्र सन्देहः—किं प्रतिषिद्धप्रयाजादिवर्जमन्यत्सर्वं प्राकृतं कर्त्तव्यम् उत प्रत्यक्षवचनविहिताघारादिना परिसङ्ख्यानाद्, अपूर्वतापरत्वाद्वा सर्वमश्रुतमकर्त्तव्यमिति ? परिसङ्ख्यापक्षस्तु गृहमेधीयवन्निरस्तोऽपि सम्भवमात्रेणोपन्यस्त इति द्वावेव पक्षौ। तत्र केनापि कारणेनाघारादीनामभावमाशङ्क्य प्रतिप्रसवं कुर्वदिव वचनमिदं प्रतिभाति। 'नाघारादिभ्योऽन्तामाहुतिमौपसदीं पुरस्ताज्जुहुयात्' यदन्यामाहुतिं पुरस्ताज्जुहुयात् अन्यन्मुखं कुर्यात्, स्रुवेणाघारमाघारयती'ति। आघारादयो हि सर्वेष्टीनां मुखम्। अतः तेन प्रतिषिद्धप्रतिप्रसवार्थमिदं न परिसङ्ख्याम्, अपूर्वतां वा शक्नोति कर्त्तुम्। अथवा चोदकप्राप्तानुवादमात्रमिदमस्तु। नन्वानर्थक्यं स्यात्। अपूर्वतापक्षेऽपि 'अप्रयाजास्ताः, अननूयाजास्ताः' इति वचनद्वयमनर्थकमेव स्यात्, तद्वरमेकस्यैवानर्थक्यम् तस्मात्प्रतिषिद्धवर्जमन्यत्सर्वं कर्त्तव्यम्॥

उच्यते—न तावदभावाशङ्कान्घारादीनामस्ति, येन प्रतिप्रसवः क्रियेत। तस्मादपूर्वतापरमेवैतत्। अप्रयाजाननूयाजवचनन्त्वनुवादमात्रम्

---

'अग्निमनीकं सोमं शल्यं विष्णुं तेजनमि'ति यागत्रयमुपसदाख्यमित्यर्थः। **तथेति**। अग्निमनीकमित्यनन्तरमग्निर्हि मुखमि'त्युक्त्वा 'नान्यामाहुतिं पुरस्ताज्जुहुयात्, यदन्याहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात्स्रुवेणाघारमाघारयती'ति श्रूयत इत्यनुषङ्गः। पूर्वपक्षमाह—**तत्रेति**। **इदम्** नान्यामित्यादि आघारयतीत्यन्तम्। कथमित्याशङ्कायां तदर्थं दर्शयति—**नाघारेति**। अग्निमनीकमिति प्रधानविधेरग्निर्हि मुखमित्येतावतैव स्तुतिपर्यवसानान्नान्यामित्यादिः स्रौवाघारविधेरर्थवादः। आघारस्थाने अन्याहुतिप्रसङ्गेन आघाराभावमाशङ्क्य तन्निन्दाद्वारेणाघारप्रतिप्रसवविधेः स्तुतिरित्यर्थः। **प्रतिषिद्धेति**। पर्युदस्तेत्यर्थः। वस्तुतो नान्यामित्यादेराग्नेयीतो नान्यां प्रधानाहुतिं पुरस्ताज्जुहुयात्किन्तु यथाक्रममाग्नेयीमेव यतोऽग्निर्मुखमित्येवमग्निमनीकमित्येतत्प्रधानवाक्यशेषत्वादाघारप्रतिषेधप्रसक्त्यभावाच्चाघारवाक्यं तत्प्रशंसार्थमेवेति द्वितीयपक्षमाह—**अथवेति**। **नन्विति**। स्तावकत्वेऽपि अप्रवृत्तिविशेषकरत्वादिति भावः। प्रथमपक्षं दूषयति—**न तावदिति**। एकस्यैवानुवादत्वं युक्तं न द्वयोरित्युक्तं द्वितीयपक्षं दूषयति—**अप्रयाजेति**।

आख्याताभावात् । स्रुवाघारवचनेत्वाख्यातसद्भावा'द्यज्ञस्य प्रज्ञात्यै' इति च स्तुतिसम्बन्धाद्विधायकं सदपूर्वताङ्गमयतीति विशेषः ॥

इत्युपसदामपूर्वकर्मताधिकरणम् ॥ १४ ॥

१५

अवभृथे० अवभृथे श्रूयते 'अप्सुमन्तावाज्यभागौ यजती'ति । तथा 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनूयाजौ यजती'ति च । तत्र किमवभृथे बर्हिःसंज्ञं चतुर्थं प्रयाजं बर्हिः संज्ञं प्रथममनूयाजञ्च वर्जयित्वा, अन्यत्सर्वं कर्त्तव्यम्? उत प्रत्यक्षश्रुतव्यतिरिक्तमन्यत्सर्वं परिसंख्यानात्, अपूर्वत्वाद्वा न कर्त्तव्य मिति? संशयः। तत्राज्यभाग-वचनमप्सुमत्तागुणविधानार्थं नापूर्वतां गमयति । तस्माद्बर्हिर्वर्जमन्यत्सर्वं कर्त्तव्यम् । नैवम् । लिङ्गक्रमाभ्यामेव'अप्स्वग्ने सधिष्ठव'अप्सु मे सोमो-अब्रवीदि'ति मन्त्रप्राप्तेः प्राप्तैवाज्यभागयोरप्सुमत्ता, सा न विधातव्या । तेनाज्यभागविध्यर्थमेव वचनमित्यपूर्वोऽवभृथः । 'अपबर्हिषः प्रयाजान् यजती'त्यादिवचनं बर्हिर्व्यतिरिक्तप्रयाजविधानार्थं न बर्हिः प्रतिषेधार्थम् ॥

इत्यवभृथे आज्यभागयोरपूर्वताधिकरणम् ॥ १५ ॥

---

विधित्वस्यैवाप्रसक्तौ नैकत्वानेकत्वयोर्विनिगमकत्वमिति भावः। आख्याताभावादित्यर्थ-वादाभावस्याप्युपलक्षणम् । नन्वाधारवाक्येऽप्याख्यातसत्वेऽपि न विधिसत्वमत आह— **यज्ञस्येति** । प्रज्ञातिः प्रख्यातिः । तथा च विधिं विनार्थवादानुपपत्या तत्कल्पनमिति भावः ॥

इत्युपसदामपूर्वकर्मताधिकरणम् ॥ १४ ॥

१५

**अवभृथे०** अत्राप्यपूर्वत्वसाधनादातिदेशिकी सङ्गतिः । अन्यत्सुगमम् ॥

इत्यवभृथे आज्यभागयोरपूर्वताधिकरणम् ॥ १५ ॥

१६

विरोधिना० यत्र चोदकेनानेकेषां प्राप्तानामेकं प्रत्यक्षं श्रूयते यथा 'खादिरो यूपः, बृहत्पृष्ठं, यवमयः पुरोडाशः' इत्यादिषु। तत्र किं श्रुतस्य खादिरादेः, अतिदिष्टस्य पालाशादेः प्रकृतिवद्विकल्पः? अथवा-श्रुतस्यैव नियम इति संशये, विकल्पः प्रकृतिवत्। प्रत्यक्षवचनं तु न खादिरादेर्विधायकम्, प्राप्तत्वात्। पालाशादिनिवृत्त्यर्थत्वे त्रिदोषा परिसङ्ख्या स्यात्। तस्मादनुवादमात्रमिति यथाचोदकं विकल्पः। नैवम्। यथैव प्रकृतावर्थादनियतानेकद्रव्यकत्वे प्राप्ते व्रीहि-खदिरादिश्रवणं नियमार्थम्, एवं चोदकेनाप्यनियमेन खादिरादि प्राप्यमाणं प्रत्यक्षवचनेन नियम्यते। तन्नियमाच्चार्थाभावात्पालाशादेर्निवृत्तिः॥

इति चोदकप्राप्तानां यूपादीनां खादिरत्वादिनियमाधिकरणम्॥ १६॥

१७

सर्वासाञ्च० अध्यायादावर्थलोपाद्बाधो वर्णितः। प्रत्याम्नानस्य तु बाधकत्वं सिद्धवत्सर्वत्र व्यवहृतम्। इदानीन्तु तदेव चिन्त्यते—किं

---

१६

विरोधिनाम्० अप्सुमत्ताया इव खादिरत्वादेरनुवादत्वमाशङ्क्यापोद्यत इति सङ्गतिः। अत्र वार्थादनियतानेकप्राप्तावेकविधिर्नियमः खादिरत्वादेस्त्वनेकस्यानियताप्राप्तिर्नार्थात्किन्त्वतिदेशशास्त्रादिति न नियमविधिसम्भव इति पूर्वपक्षाशयः। अनियतानेकप्राप्तावेकविधिर्नियमो न त्वर्थादित्यपि विवक्षितम्। प्रयोजनाभावादिति सिद्धान्तमाह—नैवमिति। सूत्रे यथा शरश्रुतेः कुशबाधस्तथात्रापि खादिरादिश्रुतेः पलाशादिबाध इति साम्यमित्यर्थः॥

इति चोदकप्राप्तयूपादीनां खादिरत्वादिनियमाधिकरणम्॥ १६॥

१७

सर्वासां० प्रत्याम्नानाद्बाधस्य तत्र तत्र सिद्धवदुक्तस्याप्यत्रैवाक्षेपसमाधानपूर्वकं प्राधान्येन निरूपणं क्रियत इत्याह—अध्यायादाविति। पूर्वपक्षमाह—तत्रेति। अनार-

प्रत्यक्षश्रुतेन श्यामाकादिना प्रत्याम्नानाच्चोदकप्राप्तं व्रीह्यादि बाधितुं शक्यम् ? उतोभयं तुल्यबलमिति विकल्पः ? समुच्चयो वा ? तत्र तद्वर्ज-प्राप्तिनिराकरणाच्चोदकेन तावद्व्रीह्याद्यपि प्राप्यते। न च प्राप्तं शक्यं केनचिद्बाधितुम्, शास्त्रप्रामाण्याविशेषात्। तथा च 'नार्षेयं वृणीते' इति प्रत्यक्षोऽपि प्रतिषेधः पक्षे चोदकप्राप्तेन वरणेन विकल्प्यत, इति वक्ष्यते—तत्तुल्यत्वादुभयं शब्दलक्षणमि'ति। न च सत्यपि चोदकप्राप्त्याऽङ्गत्वे, व्रीह्यादेरननुष्ठानम्। कार्यनिमित्तं ह्यननुष्ठानं तत् साधनत्वे सति व्रीहीणां को नाम निराकुर्यात्। तस्माद्विकल्पः, समुच्चयो वा। सत्यम्, यदि पारमार्थिकी चोदकप्राप्तिः स्यात्, न त्वेवम्। चोदको हि यद्यपि सर्व-पदार्थानुरक्तं यागगतं व्यापारं प्रापयन्नेकेनैव व्यापारेण सर्वाण्यङ्गानि प्रापयति न प्रत्येकम्, तथाऽपि व्रीह्यादिविशेषे प्रत्यक्षवचनविरोधमालोच्य तद्व्यतिरिक्ताङ्गपरत्वेन व्यवस्थाप्यते। तदिदमुक्तं भाष्यकारेण 'यदुक्तम-ग्रहणाद्ग्रहणमिति। तदिह सिद्ध'मिति सिद्धान्तत्वेन स्थापितमित्यर्थः।

---

भ्याधीतानां प्रकृतौ निवेश इति सिद्धान्तोपपत्त्यर्थं तृतीये गृहमेधीयाधिकरणे चापूर्वता-सिध्यर्थं तद्वर्जातिदेशनिराकरणात्प्रकृतिवदिति सामान्यतः प्रकारमात्रातिदेशेन प्रत्यङ्गं तद्व्यापाराभावाच्चेत्यर्थः। गुरुमतेनाशङ्कते—**नचेति**। दूषयति—**कार्येति**। तदिति पृथक्पदम्। प्रकृतिवच्छब्दस्योत्पत्तिवाक्यशेषत्वादुपदिष्टातिदिष्टायोरेकवाक्योपात्तत्वेन नैरपेक्ष्यानवगमादाह—**समुच्चयो वेति**। सिद्धान्तमाह—**सत्यमिति**। **तद्व्यतिरिक्तेति**। प्रकारत्वेन प्राकृतोपकारातिदेशोत्तरं तज्जनकपदार्थातिदेशवेलायां यदुपकारजनकपदार्थ-स्यविकृतावाम्नानं तदुपकारजनकातिरिक्तपदार्थानामेवातिदेशादाकाङ्क्षाभावेन वा तदतिदेशस्यैवाकल्पनान्न परमार्थतस्तत्प्राप्तिरित्यर्थः। पर्णतादेस्तु प्रकृत्यर्थत्वमावश्यकम्। विकृत्यर्थत्वन्तु तद्वर्जातिदेशेन द्विरुक्ततापरिहारे सति स्यात्। विकृत्यर्थत्वे च सति द्विरुक्तिपरिहाराय तद्वर्जातिदेश इत्यन्योन्याश्रयात्तद्वर्जातिदेशनिरासः। गृहमेधीयेऽपि सम्भवत्प्राप्तिकयोराज्ययोः प्रयोजनान्तराभावे तद्वर्जातिदेशकल्पनया विधिवैयर्थ्यात्तन्निरा-सेनापूर्वतारूपप्रयोजनसाधनमिति वैषम्यमित्याशयः। अत्र तद्वर्जातिदेशमनङ्गीकुर्वतां गुरूणां दूषणं स्वोक्तार्थे भाष्यसम्मतिप्रदर्शनेन तद्विरोधरूपमाह—**तदिदमिति**। **गृहमेधी-याधिकरणे अग्रहणादिति चेदिति** सूत्रे ग्रहणमित्यध्याहारेण चोदकेनाग्रहणादत्राज्य-

समुच्चयस्य तूत्तरं प्राप्तमपि प्रयोजनाभावान्नानुष्ठीयत इति। न ह्यतिदिष्टमपि व्रीह्यादि यवैः सिद्धे यागेऽनुष्ठातव्यमित्यभिप्रायः। तस्मात्प्रत्यक्षश्रुतं द्रव्यदेवतं चोदकप्राप्तं बाधते ॥

इति काम्येष्टिषु प्राकृतद्रव्यदेवतस्य निवृत्त्यधिकरणम् ॥ १७ ॥

१८

तथैकार्थविकारे० क्वचिच्छ्रूयते 'औदुम्बरो यूपो भवती'ति। तत्र किं प्राकृतं खादिरं यूपद्रव्यं प्रवर्त्तते? नेति? संशये, द्वयोरपि सह नियोजनसम्भवात्, असति विरोधे न युक्तो बाधः। तस्माद् द्वयोरपि यूपयोः समुच्चयः। नैवम्, निरपेक्षो हि खादिरश्चोदकेन प्राप्यते, निरपेक्षश्चौदुम्बर उपदेशेन, समुच्चये द्वयोरपि बाधः। किं च औदुम्बर-वचनेन न यूपान्तरं विधीयते, किं तर्हि? प्राकृतस्यैव यूपस्य खादिरतां व्युदस्य, औदुम्बरता विधीयत इति स्पष्टो बाधः ॥

इति पशौ खादिरयूपस्य नियमाधिकरणम् ॥ १८ ॥

---

भागग्रहणमिति पूर्वपक्षे यदुक्तं तदिह सिद्धान्तत्वेन स्थापितमित्यर्थः। प्राप्तमपीत्यादि ग्रन्थस्य तात्पर्यमाह—नहीति। अतिदिष्टमपि अतिदिष्टतया ततोऽवगतमपि। एवं-प्राप्तमपीत्यस्यापातत इति शेषाध्याहारेणार्थो बोध्यः। सर्वासां वैकृतचोदनानां अप्रवृत्तेऽतिदेशे सति गुणार्थत्वाच्छ्यामाकाद्यङ्गार्थत्वात्तस्यैव ग्रहणमिति सूत्रार्थः ॥

इति काम्येष्टिषु प्राकृतद्रव्यदेवतस्य निवृत्त्यधिकरणम् ॥ १७ ॥

१८

तथैकार्थ० आतिदेशिकी सङ्गतिः। अधिकाशङ्कामाह—द्वयोरपीति। प्रवृत्तौ हि विकल्पस्स्यात् स च न युक्त इति सूत्रार्थः ॥

इति पशौ खादिरयूपस्य नियमाधिकरणम् ॥ १८ ॥

१९

विकृतौ० यत्र प्राकृतानां वैकल्पिकानामन्यतमद्वैकल्पिकगुणान्तरसहितं कर्मोत्पत्तिवाक्ये श्रूयते। यथा 'सोमारौद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणां' नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणामि'ति। तत्र संशयः— किं व्रीहियवयोर्विकल्पः? व्रीहिपक्षे च शुक्लकृष्णविधिः? उत सर्वदा व्रीहय एवेति? तत्र व्रीहिग्रहणस्य शुक्लादिगुणसम्बन्धार्थत्वेनाविधायकत्वान्न यवानां बाधः। तस्माद्विकल्पः। नैवम्, न ह्येकेन वाक्येन यागस्य चोदकप्राप्तव्रीह्युद्देशेन गुणस्य च विधानं सम्भवति। तस्माद्द्रव्यगुणविशिष्टकर्मविधानादुपदिष्टा व्रीहयो यवान् बाधेरन्॥

इति काम्येषु व्रीहिभिरेव यागानुष्ठानाधिकरणम्॥ १९॥

२०

यथाश्रुतीति० अग्नीषोमीये पशौ श्रूयते 'यद्यपि चतुरवत्ती यजमानः, पञ्चावत्तैव वपा कार्ये'ति। तत्र किं पञ्चावदानं वपायामेव? उत हृदयादिष्वप्यङ्गेषु सङ्क्रीयत इति संशये, वपोद्देशेन विधानाद् वपापूर्वस्य चाङ्गापूर्वेभ्यो भिन्नत्वाच्चमसाधिकरणन्यायेनासंस्कारे प्राप्ते अभिधीयते—

---

१९

विकृतौ० अत्रापि सैव सङ्गतिः। अधिकाशङ्कामाह—तत्रेति। सूत्रे यदेति स्यादित्यस्य यदा व्रीहिद्रव्यं तदेति व्यवस्थितं स्यादित्यर्थः॥

इति काम्येषु व्रीहिभिरेव यागानुष्ठानाधिकरणम्॥ १९॥

२०

यथा० आतिदेशिक्यैव सङ्गतिः। पूर्वपक्षमाह—वपोद्देशेनेति। समासे त्र्यङ्गैरितिवदुद्देश्यविधेयभावायोगेनावदानोद्देशेन पञ्चत्वविध्यसम्भवात्पञ्चत्वविशिष्टावदानान्तरमेव प्राकृतचतुरवत्तस्थानापन्नं वपोद्देशेन विधेयमिति भावः। एतदेव प्रपञ्चयन्

वपामुद्दिश्य चोद्येत यदि पञ्चावदानता ।
स्यादेवमवदाने तु पञ्चसङ्ख्याऽत्र चोद्यते ।।

न हि वपामुद्दिश्य पञ्चत्वविशिष्टमवदानं विधीयते, अवदानस्य प्राप्तत्वात् । अतोऽवदानोद्देशेन पञ्चत्वसंख्याविधानात्, उद्दिश्यमानस्य च वपया विशेषणसम्भवात्प्राकृतावदानमुद्दिश्य पञ्चत्वं विधीयते । वपाग्रहणन्तु प्रदर्शनार्थमिति सर्वेषां पञ्चावदानम् । ननु समासैकदेशमवदानमुद्दिश्यैकदेशान्तरं पञ्चत्वं त्र्यङ्गवन्न शक्यं विधातुम् । अतो वपामेवोद्दिश्य पञ्चसंख्याविशिष्टमवदानान्तरं प्राकृतावदानकार्यमध्वर्युप्राकाशदानवद्विधीयते । वपाग्रहणं चैवमर्थवद्भविष्यति, इतरथाऽवयुत्याऽनुवादः, लक्षणा वा स्यात् । सत्यपि पशुयागतदपूर्वयोरेकत्वेऽभ्यासापूर्वभेदान् मैत्रावरुणादिश्रवणवद्वपापूर्वप्रयुक्तत्वात्पञ्चावदानस्य नाङ्गेषु संस्कारो भवति ।

उच्यते—'एकादश वै पशोरवदानानि, तानि द्विर्द्विरवद्यती'ति यदेतद् द्व्यवदानवचनमिदमत्र सिद्धान्तस्य मूलयुक्तिः । वपामात्रविषये हि पञ्चावदाने प्रकृतित एव 'द्विर्हविषोऽवद्यती'ति प्राप्तत्वात् द्व्यवदानवचनमनर्थकं स्यात् । सर्वविषये तु पञ्चावदाने सङ्ख्यासम्पत्तये हविषोऽपि त्र्यवदाने प्राप्ते द्व्यवदानविधानमर्थवद्भवति । सकलवचनानर्थक्याद्वरमेकस्य वपाग्रहणस्योपलक्षणार्थत्वमङ्गीकृतम् । तस्मात्सर्वविषयं पञ्चत्वम् । तच्चाङ्गेषु द्व्यववदानवचनादुपस्तरणविवृद्ध्या, अभिघारणविवृद्ध्या

---

सिद्धान्तमाक्षिपति—नन्वित्यादिना । एवं वार्तिकमतेनाक्षिप्य तन्मतेन सिद्धान्तोपपत्तिमाह—उच्यत इति । ननु वपाया उद्देश्यत्वेन चमसवद्विवक्षितत्वात्कथं पञ्चावदानं सर्वविषयमत आह—सकलेति । तानीत्यादिवचनवैयर्थ्यपरिहाराय वपापदं हविर्मात्रलक्षकमित्यर्थः । तच्चेति । हृदयादिभ्यः पञ्चावदानसम्पत्यर्थं त्रिरवदाने प्राप्ते

वा सम्पद्यते । तस्मादङ्गेष्वपि पञ्चावदानम् ।।

इति पशौ पञ्चावदानताधिकरणम् ।। २० ।।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
दशमाध्यायस्य सप्तमः पादः ।। ७ ।।



---

तानि द्विरेवेति नियमादुपस्तरणाभिघारणान्यतरवृद्धिराक्षिप्यत इत्यर्थः । वपायां तूपस्तरणाभिघारणद्वयं हिरण्यशकलद्वयं वपा चेति पञ्चावदानसम्पत्तिर्वाचनिकीति ज्ञेयम् ।।

इति पशौ पञ्चावजताधिकरणम् ।। २० ।।

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मज वैद्यनाथकृतायां शास्त्रदीपिकाटीकायां
प्रभाख्यायां दशमस्याध्यायस्य सप्तमः पादः ।



# अथ दशमाध्याये अष्टमः पादः

१

प्रतिषेधः० महापितृयज्ञे दार्शपौर्णमासिके विध्यन्ते प्रदिष्टे श्रूयते-'नार्षेयं वृणीते, न होतारमि'ति । तथाऽनारभ्य श्रूयते 'यजतिषु येयजामहं करोति, नानूयाजेषु येयजामहं करोती'ति । तत्र विचार्यते—किं महापितृयज्ञे वरणस्य प्रदिष्टस्य तत्प्रतिषेधस्य च विकल्पः । तथाऽनुयाजेषु येजामह तत्प्रतिषेधयोः ? उत नियोगतो वर्जनमेवेति ? तदर्थमिदं चिन्त्यते—नार्षेयं नानूयाजेष्विति किमयं प्रतिषेधः ? उत पर्युदासः ? इति ।

तत्र श्रुत्यर्थलाभाय प्रतिषेधोऽन्यथा पुनः ।
पदद्वयमपि ह्यन्यपरत्वाल्लक्षणां व्रजेत् ॥

प्रतिषेधपक्षे हि चोदकप्राप्तमार्षेयवरणं श्रुत्यैवानूद्यते, श्रुत्यैव च तत्प्रतिषिध्यते । अनारभ्यवादप्राप्तश्च येयजामहः पर्युदासपक्षे पुनर्नानूयाजशब्दाभ्यां यागान्तराणि, नञ्वृणोतिभ्यां च वरणव्यतिरिक्तचोदकप्राप्ताङ्गान्तराणि लक्षणया प्रतिपाद्येरन् । न च श्रुतिसम्भवे लक्षणा युक्ता । किञ्चानूयाजशब्दसम्बन्धे नञ्समासप्रसङ्गः । 'नित्यो ह्यस्य नशब्दस्य-

---

## अष्टमः पादः

१

**प्रतिषेधः०** अर्थलोपप्रत्याम्नानाभ्यां बाधो निरूपितः । अत्र तु प्रतिषेधाद्बाधो निरूप्यत इति पादान्तरत्वम् । शब्दप्रमाणकत्वसाम्याच्च प्रत्याम्नानानन्तर्यं बोध्यम् । महापितृयज्ञश्चातुर्मास्यगताऽपित्र्येष्टिः । पूर्वपक्षमाह—**तत्रेति** । **श्रुत्यर्थलाभाय** मुख्यार्थाबाधाय । ये यजामह इत्यनन्तरं श्रुत्यैवेत्याद्यनुषङ्गः । **पदद्वयमपीति** व्याचष्टे —**नानुयाजशब्दाभ्यामिति** । नञनुयाज पदाभ्यामित्यर्थः । नञ् मात्रेणान्यलक्षणायां तदर्थैकदेशेभेदेऽनुयाजान्वयायोगादुभाभ्यामनुयाजान्यलक्षणा । एवं नार्षेयमित्यादावपीति भावः । पर्युदासपक्षे दोषान्तरमाह—**किञ्चेति** । ननु विभाषावचनान्न समासप्रसङ्ग इत्या-

सुबन्तसम्बन्धेन समासः' इति ब्रुवन्वार्तिककारो वावचनानर्थक्यं मन्यते। एवं हि वदन् वाक्यसमासयोर्भिन्नार्थतां मेने। सति ह्यैकार्थ्ये समासनियमाद्वाक्यं निवर्तेत। तन्मा निवर्तिष्टेति कर्त्तव्यं वावचनमिति तदाऽनर्थक्यं न ब्रूयात्। आनर्थक्यवचनात्तु नास्त्यैकार्थ्यमिति गम्यते। ततोऽननुयाजेष्विति समासगम्यः पर्युदासस्तदेव लभ्यत इति तद्विवक्षायां नित्यः समासः स्यात्। असति तु समासे नानूयाजेष्वित्याख्यातसम्बन्धी सन् नञ् प्रतिषेधार्थः एव ज्ञायते। अतश्च प्रदेशानारभ्यवादाभ्यां विहितत्वात् आभ्यां वचनाभ्यां च प्रतिषिद्धत्वाद्वरणयेयजामहयोर्विकल्पः।

ननु सामान्यविषयस्य विधेः विशेषविषयस्य च प्रतिषेधस्यातुल्यबलत्वाद्युक्तो बाधः, न विकल्पः। तथाऽऽनुमानिकस्य चोदकस्य प्रत्यक्षस्य च सुतरामयुक्त इति चेत्, नैवम्। तन्नाम प्रत्यक्षं विशेषशास्त्रं सामान्यस्यानुमानिकस्य च बाधने क्षमं यत् तन्निरपेक्षमात्मानं लभते। यथा शरपदशास्त्रे कुशाहवनीययोः। नहि शरविधिः कुशप्राप्तिमपेक्षते, तत्कार्यमात्रापेक्षत्वात्। पदविधिरपि होममात्रापेक्षो नाहवनीयप्राप्तिमपेक्षते। तेन प्रागेव कुशाहवनीयप्राप्तेः प्रत्यक्षेण विशेषशास्त्रेण शीघ्रं विहिते शरपदे पश्चात्सामान्यद्वारा लक्षणया प्राप्यमाणयोः प्राप्तिं निवारयत इति युक्तो बाधः। अत्र तु प्रतिषेधस्य प्राप्त्यपेक्षत्वादवश्यं प्रतिषेधता शास्त्रेणैव प्रतिषेध्ययोर्वरणयेयजामहयोर्महापितृयज्ञे, अनूयाजेषु च प्राप्तिः

---

शङ्क्याह—नित्यो हीति। अस्य नञः। वा वचनेति। वा वचनानर्थक्यं स्वभावसिद्धत्वादिति तदुक्तेरित्यर्थः। वावचनम् विभाषावचनं। कथं वावचनानर्थक्योक्त्या नञ् सुबन्तसमास नित्यतासिद्धिस्तदुपपादयति—एवं हीति। तदैव समासे सत्येव। भिन्नार्थत्वं विशदयति—तत इति। प्रदेशोऽतिदेशः। बाधस्यायं विषयो न तु विकल्पस्येति शङ्कते नन्विति। दुर्बलोऽपि चोदक उपजीव्यत्वान्न बाध्यत इति वक्तुं शरपदाद्यनुपजीव्यत्वं चोदकसामान्यशास्त्रयोर्बाध्यत्वबीजमिति वैषम्यमाह—तन्नामेति। प्रत्यक्षविशेषशास्त्रयोर्हि शीघ्रप्रवृत्तिकृतं बाधकत्वम्। न चात्र शीघ्रप्रवृत्तिकत्वमस्ति प्रापकप्रवृत्तिसापेक्षत्वादित्यर्थः। ननु 'न कलञ्जं भक्षयेदि'ति निषेधः प्राप्त्यपेक्षोऽपि नित्य-

प्रतीक्षितव्या । प्राप्तिश्च निर्दोषशास्त्रकारितत्वादशक्या मिथ्या कर्तुम् । तस्माद्विकल्पः इति प्राप्ते, ब्रूमः—

यत एव विकल्पोऽयं प्रतिषेधे प्रसज्यते ।
अतस्तत्परिहाराय पर्युदासाश्रयो वरम् ॥

नित्यवच्छ्रुतयोर्विधिप्रतिषेधयोः पक्षेऽप्यत्यन्ताविद्यमानमिथ्यात्वकल्पनादत्यन्तायुक्तो विकल्प इति वरं लक्षणयाऽपि पर्युदासाश्रयणम् । न चानूयाजशब्दसम्बन्धे नञ्समासापत्तिः, विभाषाध्ययनात्पाणिनेः । कात्यायनीयन्तु वावचनानर्थक्यं न्यायविरोधादनादर्त्तव्यम् । अस्ति हि वृत्तिवाक्ययोरैकार्थ्यम्, य एव हि राजपुरुष इति वृत्तेरर्थो राजविशिष्टः पुरुषः स एव राज्ञःपुरुष इति वाक्यस्यापि । विशेषस्त्वेतावान् वृत्तावभिधानद्वयमप्यनन्याक्षिप्तस्वार्थं सदेकं विशिष्टं प्रतिपादयति, वाक्ये त्वर्थान्तराक्षेपं सहते । यथा 'ऋद्धस्य राज्ञः पुरुषः' इति राजपदमृध्याक्षेपमनुभवन्पुरुषं विशिनष्टि । न चैतावताऽर्थभेदः, प्रतिपाद्याभेदात् । यदि चैतावता भेदेन समासो वाक्यस्यानिवर्त्तक इत्यङ्गीक्रियेत, ततो विभाषावचनात् प्राग्विहितोपकुम्भादिसमासेनापि वाक्यं न निवर्तेत । तथोपपदसमासेन कुम्भकारादिना, न चैवमिष्टम् । तस्मादवश्याऽध्येयं विभाषावचनमिति, अन्यार्थं तदानर्थक्यम् । तस्मादसमासेऽपि विकल्पपरिजिहीर्षया युक्तं पर्युदासाश्रयणम् । एवं च प्रदेशानारभ्यवादयोरेवायं वाक्यशेषः—प्रकृतिवत्कुर्यादार्षेयवरणव्यतिरिक्तं पितृयज्ञे, अनूयाजव्यतिरिक्तेषु च येयजामहं कुर्यादिति । ततश्च विधेरङ्गान्तरयज्ञान्तरविषयत्वादविहित-

---

बाधक इतीहापि तथा स्यादत आह—प्राप्तिश्चेति । तत्र रागतः प्राप्तेरत्यन्तबाधेऽपि नात्र तत्सम्भवः । शास्त्रस्याप्रामाण्यायोगादित्यर्थः । न्यायविरोधमेवोपपादयति अस्ति हीति । अनन्येति । अन्यानन्वित स्वार्थमित्यर्थः । अर्थान्तराक्षेपम् अर्थान्तरान्वयम् । एतावता अर्थान्तरान्वययोग्यत्वतदभावाभ्याम् । प्रतिपाद्येति । राजसम्बन्धिपुरुषरूपेत्यर्थः । पर्युदासप्रकारं दर्शयति एवं चेति । पर्युदासाङ्गीकारे विकल्पाप्रसक्तिं दर्शयति—ततश्चेति । न विकल्प इत्यनन्तरं किन्त्विति शेषः । सोऽयमिति । प्रतिषेधपदेन

मेव वरणम्, अनूयाजेषु च येयजमाहः। तस्मान्न विकल्पः, अननुष्ठानमेव। सोऽयं प्रतिषेधनिबन्धनः प्राकृताङ्गबाधः। शरैः कुशानां प्रत्याम्नानात्; स्वयंदितादिषु लवनादीनामर्थलोपादिति त्रेधा बाधो वेदितव्यः॥

इति पर्युदासाधिकरणम्॥ १॥

२

अपूर्वे० दर्शपूर्णमासयोः 'आज्यभागौ अग्नीषोमाभ्यां यजती' त्येवं विधाय श्रूयते 'न तौ पशौ करोति, न सोमे' इति। किमयं प्रतिषेधः? पर्युदासो वा? अर्थवादो वेति संशयः। तत्रासमस्तत्वात्प्रतिषेधः, विकल्पभयाद्वा पूर्ववत्पर्युदासः। ननु सोमस्योपदेशातिदेशाभ्यामाज्यभागप्राप्त्यभावादुभयमप्ययुक्तम्। सत्यम्, साक्षात्सोमे नाज्यभागौ स्तः दीक्षणीयादिद्वारेण त्वाज्यभागाभ्यां सोमस्यास्ति सम्बन्धः स प्रतिषिध्यते। तदनेन प्रकारेण सोमाङ्गेषु दीक्षणीयादिषु आज्यभागप्रतिषेधः, पर्युदासो वेति प्राप्ते, ब्रूमः—यद्युपदेशेनातिदेशेन वाऽऽज्यभागौ सोमे

---

तद्बोधकनञ्ग्रहणम्। सूत्रे प्रदेशे विकृतिप्रकरणे यः प्रतिषेध इत्यर्थः। शेषं सुगमम्॥

इति पर्युदासाधिकरणम्॥ १॥

२

अपूर्वे० अत्र प्रतिषेधसाधनादापवादिकी सङ्गतिः। **किमयमिति**। न सोम इतीत्यर्थः। पशुवाक्यस्याग्रे विचार्यत्वात्। अर्थवादपक्षस्य तत्रासम्भवाच्चेति ज्ञेयम्। **असमस्तत्वादिति**। नञो समस्तत्वादेवमपि पर्युदासाङ्गीकारे लक्षणापत्तेरित्यर्थः। **पर्युदास इति**। सोमभिन्ने आज्यभागाविति आज्यभागवर्जं सोमभिन्ने इति वेत्यर्थः। **नन्विति** सोमे आज्यभागप्रसक्त्यभावात्तत्प्रतिषेधानुपपत्तिः। एवं सोमभिन्न इति पर्युदासस्याऽपि सोमासोमसाधारणातिदेशाभावेन सोमे प्रसक्त्यभावादेवानुपपत्तिः। एवमाज्यभागभिन्नं सोम इति पर्युदासस्यापि सोमस्यापूर्वत्वेन तद्विषयातिदेशाभावेनाज्यभागप्रसक्त्यभावादयुक्ततेत्यर्थः। आनर्थक्य तदङ्गन्यायेन सोमपदेन तदङ्गलक्षणान्नानुपपत्तिरित्याह—**सत्यमिति**। ननु 'सप्तदशरात्निर्वाजपेयस्ये'तिवद्विभक्त्यैव परम्परासम्बन्धाभिधानान्न सोम-

प्राप्नुयातां ततो निषेधः स्यात् । यदि च सोमासोमसाधारणमाज्यभागविधानमभविष्यत्, ततः असोम इति पर्युदासः, प्रतिषेधो वा कल्प्यः स्यात् । न त्वेवमस्ति । न च दीक्षणीयादिषु तत एव तद्विकारेषु निरूढादिपशुष्वपि प्राप्त्यभावात्पशाविति प्रतिषेधोऽनर्थः स्यात् । सोमशब्दस्य चैवं लक्षणा स्यात् । न च वाजपेयस्येव यूपेनाङ्गद्वारकः सोमाज्यभागसम्बन्धो निर्दिश्यते, षष्ठी हि सम्बन्धमात्रमभिधत्ते, सप्तमी त्वाधाराधेयभावमेव । न चाङ्गाङ्गत्वेनाधाराधेयभावः सम्भवति । तस्मादङ्गाङ्गिभावनिर्देशोऽयम् । स चाप्राप्त इति तत्प्रतिषेधपर्युदासावयुक्तौ । तस्मान्न पशावित्यस्यायमर्थवादः । यथा सोमस्य नाज्यभागौ, एवं पशावपीति ।

अथ 'न पशावि'ति किमयं प्रतिषेधः ? पर्युदासो वा ? विकल्पपरिहाराय पर्युदास इति केचित् । तदयुक्तम्, अनन्तरवृत्तस्याज्यभागाङ्गविधेः केवलदर्शपूर्णमासविषयत्वेन पशवपशुसाधारण्याभावात् । न च पाशुकस्य प्रकृतिवच्छब्दस्यायं वाक्यशेषः, तस्य ह्यसन्निधानात् । तच्छेषत्वे च 'न सोमे' इत्यर्थवादो नावकल्पते । न ह्येवं सम्भवति यथा सोमस्याज्यभागव्यतिरिक्तमङ्गमैष्टिकं कर्तव्यं तथा पशोरपीति, सोमस्यापूर्वत्वादैष्टिकाङ्गाभावात् । सम्भवति त्वेवं यथा सोमस्याज्यभागौ न कर्तव्यौ, तथा पशोरपीति । तस्मात् प्रतिषेधः । ततश्च पशावाज्यभागयोर्विकल्पः ॥

इति 'न सोमे' इत्यस्यार्थवादताधिकरणम् ॥ २ ॥

---

पदेऽङ्गलक्षणेत्याशङ्क्य तद्वैषम्यमाह-**न चेति** । सम्बन्धसामान्यवाचिषष्ठ्यभावादित्यर्थः । **तस्मादिति** । अङ्गस्य हि प्रधानाश्रयत्वं तद्गतोपकारजनकत्वादस्तीति सप्तमीसङ्गतिरिति भावः । पशुवाक्यं विचारयति—**अथेति** । पशुभिन्ने आज्यभागादिति वा, आज्यभागवर्जं पशाविति वा पर्युदासः । नाद्य इत्याह—**अनन्तरेति** । अव्यवहितपूर्वपठितस्येत्यर्थः । द्वितीयं दूषयति—**न चेति** । नन्वसन्निहितेन-पदैकवाक्यत्वायोगेऽप्यत्राख्यातभेदाद्वाक्यैकवाक्यता स्यादत आह—**तच्छेषत्वे चेति** । सूत्रे अपूर्वे सोम इति शेषः ॥

इति न सोम इत्यस्यार्थवादताप्रतिपादनाधिकरणम् ॥ २ ॥

३

शिष्ट्वा० सामान्यविषये विधौ विशेषविषयो नञ् पर्युदासरूपेण विधेरेव वाक्यशेष इत्युक्तम् । अप्राप्तविषयस्तु नञ् अर्थवाद इति । अथ क्वाऽयं प्रतिषेधो भवतीति । तत उच्यते—यत्रैकमर्थं शिष्ट्वा, तद्विषय एव नकारः श्रूयते । यथा—'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे' इति । तत्र—प्रतिषेधपर्युदासार्थवादासम्भवात्, अगत्या च करणाकरणयोर्विकल्पः प्रतिषेधार्थवत्त्वाय, अकरणेऽपि क्रतुसिद्धिरस्तीति कल्प्यते । विध्यर्थवत्त्वाय चास्यानुष्ठाने फलभूयस्त्वमित्युभयोरुपपत्तिः ॥

इति षोडशिनो विकल्पाधिकरणम् ॥ ३ ॥

४

न चेदन्यं० अस्येदानीमपवादः क्रियते । शिष्ट्वापि श्रूयमाणो नञ् क्वचित्प्रतिषेधार्थमपहाय, अर्थवादार्थो भवति, यत्र विध्यन्तरेणैकवाक्यत्वम् । तथाहि—अग्निहोत्रे 'जर्तिलयवाग्वा वा जुहुयात् गवेधुकयवाग्वा वे'त्युक्त्वा 'अनाहुतिर्वै जर्तिलाश्च गवेधुकाश्चे'त्युक्तम् । ततः पुनः 'पयसाऽग्निहोत्रं जुहुयादि'ति श्रुतम् । तत्र संशयः—किं जर्तिलगवेधुकानामनाहुतिवादः प्रतिषेधः ? उत पयोहोमस्यार्थवादः ? इति । तत्र

---

३

शिष्ट्वा तु० पूर्वाधिकरणे भाष्यकृता पर्युदाससिद्धान्तोक्तेस्तदनुसारेण सङ्गतिमाह—सामान्येति । अथेत्यनेनापवादिकी सङ्गतिरुक्ता, पर्युदासार्थवादत्वयोरभावात् । वार्तिकमते स्वोक्ते आतिदेशिकी सङ्गतिः स्पष्टेति न दर्शिता । अन्यत्सुगमम् ॥

इति षोडशिनो विकल्पाधिकरणम् ॥ ३ ॥

४

न चेदन्यम्० जर्तिलाः आरण्यकतिलाः । गवेधुकाः आरण्यगोधूमाः । किमिति ।

पूर्वेण न्यायेन प्रतिषेधार्थता। जर्तिलगवेधुकास्तावद्विस्पष्टेन लिङ्प्रत्ययेन विहिताः। तेषामयमनाहुतिवादः प्रतिषेधः, पयोविधिश्च वाक्यान्तरमिति प्राप्ते अभिधीयते—यद्यपि जर्तिलगवेधुका विहिताः स्युः, तथाऽप्यनाहुतिवादो नैव प्रतिषेधः, अनर्थकत्वात्। विकल्पार्थत्वेन हि प्रतिषेधः। स चेह विकल्पः पयोविधिनैव जर्तिलगवेधुकानां सिद्ध इति व्यर्थः प्रतिषेधः। परेण च विधिनाऽस्य समस्तस्यैकार्थत्वमर्थवादतया सम्भवतीति, न युक्तो वाक्यभेदः। तस्मादनाहुतिवादस्तावज्जर्तिलादिनिन्दाद्वारेण पयसः स्तुत्यर्थः। यदा चैवं तदा जर्तिलादिविधिरपि तन्निन्दाद्वारेण पयसः प्रशस्ततरत्वं ज्ञापयन्नर्थवाद एव न विधिः। एकवाक्यत्वसम्भवे ह्यनेकादृष्टानुबन्धिवाक्यभेदकल्पनमन्याय्यम्। तस्मात्पयोमात्रं विधीयते अन्यस्तु सर्वोऽर्थवादः॥

इति जर्तिलयवाग्वधिकरणम्॥ ४॥

---

अत्राहुतिशब्देन समस्तस्य नञो जर्तिलान्वयायोगादजर्तिलयवाग्वा जर्तिलयवाग्वेति व्याघाताच्चाजर्तिलयवाग्वा पयसेत्युक्तौ च पयःशब्देनैव सिद्धेर्वैयर्थ्याच्च पर्युदासासम्भवान्न तदुपन्यास इति बोध्यम्। अनर्थकत्वमेवोपपादयति—**विकल्पार्थेन हीति**। न चानाहुतिवादो जर्तिलगवेधुकानां पयोऽनुकल्पत्वबोधनार्थः स्यादत आह—**परेण चेति**। नन्वेवमपि न ग्राम्यानित्यर्थवादसहितस्य जर्तिलादिविधेः पयोविधिशेषत्वसम्भवात्कथं समस्तस्यैकवाक्यत्वमित्याशङ्कां निरस्यति—**यदा चेति**। पश्वपेक्षया प्रशस्तयोरपि जर्तिलगवेधुकयोः पयोपेक्षया निन्द्यत्वमेव पय एव तु प्रशस्ततरमिति रीत्येत्यर्थः। उपसंहरति—**तस्मादिति**। सूत्रार्थस्तु न चेदन्यं प्रकल्पयेद्विधिमिति शेषः। तदा प्रतिषेधः स्यादिति पूर्वसूत्रस्थानुषङ्गः। प्रक्लृप्तौ विधिसत्वे तदर्थवादः स्यात् प्रतिषेधत्वे आनर्थक्यात् परेण विधिनैकवाक्यत्वसामर्थ्याच्चेति॥

इति जर्तिलयवाग्वधिकरणम्॥ ४॥

५

पूर्वैश्च० आधाने श्रूयते 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः, यद्यजुषा जुहुयात्, अयथापूर्वमाहुतीः जुहुयात्, यन्न जुहुयात् अग्निः पराभवेत्, तूष्णीमेव होतव्यमग्निहोत्रमि'ति। तथा चातुर्मास्येषु त्र्यम्बकानधिकृत्य श्रूयते 'अभिघार्या३ नाऽभिघार्या३ इति मीमांसन्ते, यदभिघारयेत् रुद्रायाऽऽस्ये पशूनभिदध्यात्, नाभिघारयेत् न रुद्रायास्ये पशूनभिदध्यात्। अथो खल्वाहुरभिघार्या इति, तन्न सूक्ष्यम्, अभिघार्या एव, नहि हविरनभिघृतमस्ति' इति। तत्र संशयः—किं होमाभिघारणयोर्विकल्पः? उतानुष्ठानमेवेति? तत्र होमाभिघारणयोर्विधेयत्वमविवादम्। अतो होतव्यम् अभिघार्या इति च विध्यर्थमेव, न जर्तिलश्रवणवदन्यार्थम्। एवञ्च 'न होतव्यं नाभिघार्या' इति च प्रतिषेधार्थमेव भवति, न मीमांसाविशेषणम्। न ह्येकपक्षावलम्बिनी मीमांसा सम्भवति। तस्माद्धोतव्यमिति विधेः, न होतव्यमिति च निषेधाद्विकल्पः। सति च विकल्पे अन्यतरपक्षपरिग्रहाय प्रयोगदशायां मीमांसा भवतीति तदभिप्रायेणाऽनुवादो मीमांसाशब्दः। अन्ते 'तूष्णीं होतव्यमि'ति तूष्णीं भावगुणविधानार्थं वचनम्। अपि च 'रुद्रयाऽऽस्ये पशूनभिदध्यादि'त्यभिघारणनिन्दाकथनं तद्विधेः शेषो भवेत्। तस्मान्निषेधशेष एवायम्। अन्ते 'त्वभिघार्या' इति वचनमनुवादः इति प्राप्ते ब्रूमः—सत्यम् होमाभिघारणे विधेये, तथाऽप्युपक्रमे श्रवणं न विध्यर्थम् उभयोरपि होमाहोमयोर्मीमांसासम्बन्धावगमात्। अन्ते

५

पूर्वैश्च० आतिदेशिकी सङ्गतिः। यजुषा प्रातः कालोचितेन 'सूर्यो ज्योति'रित्यनेन यदि जुहूयाद् यथापूर्वं व्युत्क्रमेण जुहूयादग्न्याहुतेः प्राथम्यत्यागादित्यर्थः। त्र्यम्बकान् तत्संज्ञकहोमान्। नहीति। मीमांसा हि नात्र विधीयते किन्त्वनूद्यते। कोटिद्वयप्रसक्तौ च तत्प्राप्तिरिति विकल्प एव तदुपपत्तिरित्यर्थः। अत इति। त्वत्पक्षे तु विशिष्टविधाने गौरवमिति भावः। अन्ते त्विति। पश्चाच्छ्रवणस्य ह्यनुवादत्वं युक्तमिति भावः। तथापीति। मीमांसाविशेषणत्वेन श्रुतयोर्विध्यन्वयानर्हत्वादिति भावः। निन्दायाः कथं

त्वनन्यपरं श्रवणं विध्यर्थम् । तदर्थवादीया निन्दापि च प्रशस्ततरत्वज्ञापनार्थैव । एवमिदमभिघारणं प्रशस्तं यत्सन्तमपि दोषमनादृत्य कर्तव्यमिति । तस्मान्न विकल्पः । नियते एव होमाभिघारणे ॥

इति त्रैयम्बकादावभिघारणादीनामर्थवादताधिकरणम् ॥ ५ ॥

६

उपवादश्च० अग्न्याधेये वारवन्त्यादिसामगानं विधाय श्रूयते 'न ब्रह्मा सामानि गायेदि'ति । तत्र संशयः— किमयं प्रतिषेधो नित्यं सामगानम् ? उत प्रतिषेधार्थमेवेदं विकल्पः सामगानस्येति । तत्र ब्रह्मणो गानप्राप्त्यभावादनुवादोऽयं निषेधः । तेन नित्यं गानम् । नैवम् अनुवादमात्रस्यानर्थकत्वात् । तस्माद्गाननिषेधोऽयम् । ब्रह्मशब्दस्तु ब्राह्मणपरोऽनुवादः ॥

इत्युपवादाधिकरणम् ॥ ६ ॥

---

विध्यर्थत्वमत आह—निन्दापीति । होमाहोमयोरभिघारणानभिघारणयोश्च तेन तेन हेतुना प्रशस्तयोरपेक्षया विधानाद्धोमाभिघारणे एव प्रशस्ततरे इति रीत्येत्यर्थः । अन्त्यविधितः प्राक् सन्देहेन च मीमांसोपपत्तिरिति भावः । सूत्रार्थस्तु—पूर्वोदाहृतैर्जर्तिलादिवाक्यैस्तुल्यकालत्वादन्तिमविधिपूर्वपाठात्तद्वदेवार्थवादत्वमिति ॥

इति त्र्यम्बकादावभिघारणादीनामर्थवादताधिकरणम् ॥ ५ ॥

६

उपवादश्च० अत्र प्रतिषेधत्वसाधनादापवादिकी सङ्गतिः । स्पष्टमन्यत् । सूत्रार्थस्तु 'उपवीता वा एतस्याग्नयो भवन्तीत्युपशब्दोपक्रमेण वादो न ब्रह्मेति । तद्वत् शिष्ट्वा तु प्रतिषेध इतिवदिति व्यवहितपरामर्शेन बोध्यः ॥

इत्युपवादाधिकरणम् ॥ ६ ॥

७

दीक्षितस्य० जोतिष्टोमे श्रूयते 'दीक्षितो न ददाति न जुहोति न पचती'ति। तत्र विचारः—किमयं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानां चोपदिष्टानाम् अतिदिष्टानाञ्च प्रतिषेधः? उतातिदिष्टानां पुरुषार्थानाञ्च? अथवा पुरुषार्थानामेवाग्निहोत्रादीनामिति? तत्राविशेषात्सर्वेषाम्। आहत्य विहितानान्तु 'ग्रहैर्जुहोती'त्यादीनां बलवत्त्वात् तद्वर्जमातिदेशिकानां चतुरवत्तहोमादीनामग्निहोत्रादीनां च बाध इति प्राप्ते ब्रूमः—विकल्पप्रसङ्गात् न क्रत्वर्थप्रतिषेधः। तस्मात्पुरुषार्थानामेव। तत्रापि प्रतिषेधपक्षे विकल्पदोषः स्यादेव। तस्मात्पर्युदासोऽग्निहोत्रादिविधेः शेषोऽयम्-अदीक्षितोऽग्निहोत्रादि कुर्यादिति। न त्वेतद्युक्तम्, असन्निहितत्वादग्निहोत्रादिविधेः। तस्मात्प्रतिषेध एवायम्। न च विकल्पप्रसक्तिः, ऐकार्थ्याभावात्। यद्युभावपि विधिप्रतिषेधौ पुरुषार्थौ क्रत्वर्थौ वाऽभविष्यताम् ततो व्यकल्पिष्यताम्। पुरुषार्थतया तु विहितानामग्नि-

---

७

**दीक्षितस्य०** पूर्वं प्रतिषेध उक्तः। इह भाष्यकृता पर्युदासोक्तेरापवादिकी सङ्गतिः। वार्तिकमतेऽपि सत्यपि प्रतिषेधे विकल्पाभावात्सैवेति ज्ञेयम्। **उपदिष्टानाम्** 'ग्रहैर्जुहोती'त्यादीनाम्। **अतिदिष्टानाम्** सोमाङ्गदीक्षणीयादिष्वतिदिष्टानां चतुरवत्तहोमादीनाम्। **आहत्येति**। प्रत्यक्षविहितानामित्यर्थः। **बलवत्त्वादिति**। विशेषरूपतयेत्यर्थः। अत एतद्विपरीतमातिदेशिकमग्निहोत्रादिकञ्चानुमानिकत्वात्सामान्यरूपत्वाच्च बाध्यमित्यर्थः। सिद्धान्तमाह—**विकल्पेति**। प्राप्तिं विना निषेधायोगात् दुर्बलस्याप्यतिदेशस्योपजीव्यत्वेनात्यन्तबाधायोगान्न तौ पशावित्यादिवद्विकल्पापत्तेरित्यर्थः। एवञ्च पुरुषार्थानामेव क्रत्वर्थो निषेधो भिन्नविषयत्वेन स्त्र्युपगमनादि निषेधवद्विकल्पानापादकतया युक्त इत्याशयेनाह—**तस्मादिति**। भाष्यसिद्धान्तं वक्तुमाह—**तत्रापीति**। भिन्नविषयत्वेऽपि प्राप्तिनिषेधयोरेकविषयत्वावश्यम्भावादिति भावः। दूषयति—**न त्वेत-**

होत्रादीनां क्रतुमध्येऽपि प्राप्तानां प्रतिषेधः क्रत्वर्थतया क्रियते स्त्र्युपगमादिप्रतिषेधवत् । अतः क्रतुमनुतिष्ठताऽवश्यं वर्जनीयान्यग्निहोत्रादीनि भवन्तीति नास्ति विकल्पप्रसङ्गः ।

यदा च प्रतिषेधपक्षेऽप्यविकल्पः, तदा श्रुत्यर्थलिप्सया प्रकरणानुजिघृक्षया च प्रतिषेधत्वमेव न्याय्यम् । पर्युदासपक्षे हि नशब्द-दीक्षित-शब्दावुभावपि दीक्षितव्यतिरिक्तपुरुषलक्षणार्थौ स्याताम् । तस्मात्प्रतिषेधः । तथाऽपि विकल्पाभावात्फलतः पर्युदासत्वं भवतीति मत्वा सूत्रभाष्यकाराभ्यां पर्युदासत्वमुक्तम् ।

यदि च पर्युदासः स्यात्, ततो वरं क्रत्वर्थानामेव होमादीनां पर्युदासः । यद्यपि प्रत्यक्षेण विशेषरूपेण चोपदिष्टानां 'ग्रहैर्जुहोति, औदुम्बर्यां जुहोती' त्येवमादीनामशक्यः पर्युदासः, तथाऽपि सामान्यतोऽतिदेशेन प्राप्यमाणानां चतुरवत्तहोमनारिष्टहोमानामाषयवरणवत्पर्युदासः

---

दिति । दूरस्थेनैकवाक्यत्वायोगात्प्रकरणबाधाच्चेति भावः । स्त्र्युपगमादीति । तदुक्तम्–

स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयादिति ॥

ननु भिन्नविषयत्वेऽपि निषेधस्य प्राप्तिसापेक्षत्वात्कथं विकल्पपरिहार इति चेत्, अत्राहुरस्मत्पितृचरणानां मातामहचरणाः श्रीमद्भट्टरघुनाथवाजपेययाजिनः यावज्जीवादिविधितः सामान्यतो दीक्षितादीक्षितसाधारण्येन होमादिप्राप्तिमात्रेणोपपन्नो निषेधो न दीक्षितावस्थायां विशेषतस्तत्प्राप्तिमपेक्षते, येन तत्रापि सामान्यविधेः प्रवृत्तिमनुमन्यमानस्तदितरावस्थाविषयत्वकरणरूपबाधासम्भवात्तेन सह विकल्पेत । भिन्नविषयत्वोक्तिरप्येतदर्थैव । यदि हि क्रत्वर्था एव निषेध्याः स्युश्चतुरवत्तहोमादयस्तदा तेषां तत्क्रत्वर्थता परमार्थतस्तद्विषयविधिं विना न सम्भवतीति न भिन्नविषयत्वरूपबाधसम्भव इति स्यादेव विकल्पः' इति । एवञ्च लक्षणाप्रकरणबाधदूरस्थसम्बन्धरूपदोषत्रयपरिहाराय प्रतिषेधत्वमेव युक्तमित्याह––यदा चेति । सूत्रभाष्ययोः पर्युदासोक्तिमपि स्वमतमुपपादयति—तथापीति । यथाश्रुते दोषान्तरमाह – यदि चेति । वरमित्यनेन दूरस्थसम्बन्धप्रकरणबाधरूपदोषद्वयाभावसूचनम् । अतिदेशस्य दीक्षितविषयत्वाद्दीक्षितभि-

स्यात् । ननु ते दीक्षितस्यैव विधीयन्त इति कथन्तेषु दीक्षितस्य पर्युदासो विधीयते ? नैवम् । न दीक्षितशब्देन सह नञः पर्युदासत्वम् अदीक्षित इति । कथं तर्हि ? ददात्यादिशब्दैः दीक्षितो दानहोमपाकव्यतिरिक्तानि प्राकृतान्यङ्गानि कुर्यादिति । एवमतिदेशपर्युदासेन प्रकरणगतानामेव प्रायणीयादिविधीनां दीक्षोत्तरकालभाविनां शेषो भवन्नयं पर्युदासेनासन्निहिताग्निहोत्रादिशेषतामवलम्बते । तस्माल्लक्षणापरिहाराय पर्युदासपक्षं परित्यज्य श्रुत्यर्थतृष्णया प्रतिषेधत्वमेवाङ्गीकृत्य, क्रत्वर्थप्रतिषेधे विकल्पप्रसङ्गात्पुरुषार्थानामेव प्रतिषेधः क्रत्वङ्गतया विधीयत इत्येतदेव समञ्जसम् ॥

इति दीक्षितदाननिषेधस्य पर्युदासताधिकरणम् ॥ ७ ॥

८

अविशेषेण० नञ्प्रसङ्गं परिसमाप्याधुना प्राप्तबाधप्रसङ्गात् सामान्यविशेषबाधं चिन्तयति । 'यदाहवनीये जुहोती'ति सामान्यविहितस्याऽऽहवनीयस्य 'पदे जुहोति' 'वर्त्मनि जुहोति' 'गार्हपत्ये पत्नीसंयोजान् जुहोती'ति विशेषविहितैः पदादिभिः किं विकल्पः ? अथवा बाधः ? इति सन्देहः । यदि सामान्यविशेषयोस्तुल्यबलत्वं ततो विकल्पः । विशेषबलीयस्त्वे तु बाधः । तत्र—

---

न्नश्वतुरवत्तादिहोमान् कुर्यादिति पर्युदासोऽनुपपन्न इति शङ्कते—नन्विति । अतिदेशपर्युदासेन अतिदेशप्राप्तहोमादिपर्युदासेन । स्वमतमुपसंहरति—तस्मादिति ॥

इति दीक्षितदानादेः निषेधस्य पर्युदासताधिकरणम् ॥ ७ ॥

८

अविशेषेण० प्रकरणसङ्गतिमाह—नञ् प्रसङ्गमिति । अनन्तरसङ्गतिस्तु पूर्वं सामान्यतः प्राप्तानामग्निहोत्रादीनां दीक्षितविषये विशेषरूपेण प्रतिषेधेन बाध उक्ते तदाक्षेपसमाधानात् बोध्या । पदं एकहायन्याः सोमक्रयार्थं नीयमानायाः सप्तमम् ।

सामान्यस्यापि लब्धत्वात्प्रत्यक्षेण विशेषवत् ।
नास्ति लिङ्गादिवद्बाधो नापि बाधोऽतिदेशवत् ॥

लिङ्गादिकल्प्यस्य हि शास्त्रस्य शीघ्रक्लृप्तेन शास्त्रेण कल्पनानिरोधाद्युक्तो बाधः । तथाऽतिदेशस्यानुमानिकत्वात्प्रत्यक्षेण शरादिशास्त्रेण विरोधे सति तद्विषयं परिहृत्य, विषयान्तरपरिकल्पनाद्युक्तः कुशानां बाधः । सामान्यशास्त्रन्तु क्लृप्तं प्रत्यक्षश्रुतञ्च विशेषशास्त्रवदिति तुल्यबलत्वाद्विकल्प एव युक्त इति प्राप्ते ब्रूमः--

प्राप्तिः सामान्यशिष्टस्य विशेषे लक्षणावशात् ।
श्रुत्या विशेषशिष्टस्य तस्मादस्ति बलाबलम् ॥

पत्नीसंयाजादिषु होमविशेषेषु होमसामान्ये श्रुतस्याऽऽहवनीयस्य लक्षणया प्राप्तिः, गार्हपत्यादि तु श्रुत्यैव होमविशेषे विधीयते । तेनास्मिन् विशेषे श्रुत्या शीघ्रप्राप्तं गार्हपत्यादिकं लक्षणया मन्थरप्राप्तमाहवनीयं निरुणद्धीति बाधः ॥

इति विशेषशास्त्रेण सामान्यशास्त्रस्य बाधाधिकरणम् ॥ ८ ॥

---

**वर्त्म** हविर्धानशकटयोः । **लब्धत्वात्** सिद्धत्वात् । एतच्च लिङ्गादिवैषम्यम् । **प्रत्यक्षेणे** त्यतिदेशवैषम्यम् । **शीघ्रशास्त्रेण** श्रौतविनियोगेन । **श्रुत्येति** । यद्यपि 'पदे जुहोती'त्यादावपि होमत्वसामान्यवाचकस्य जुहोतेर्विधेयहोमविशेषे लक्षणैव, तथापि तस्य विधिश्रुतिबलेन शीघ्रोपस्थितत्वाच्छ्रुत्येत्युक्तम् । होमानुवादेऽपि वा तस्य प्रकरणादितः शीघ्रोपस्थितिकत्वमेव । यदाहवनीय इति सामान्यशास्त्रे त्वनुवाद्यव्यक्तीनामनेकत्वात्तत्तत्प्रापकप्रमाणालोचनया विलम्बेन तदवगतिरिति मन्थरत्वम् । एवमग्निहोत्रादेर्विधेयस्यापि दीक्षितादीक्षिताश्रितानेकव्यक्तिरूपतया तद्विधेः दीक्षितनिषेधात् विशेषविषयान्मन्थरत्व मिति बोध्यम् । यद्यपि होमस्याधिकरणाकाङ्क्षाया अभावादाहवनीयस्यादृष्टार्थत्वं 'न देवताग्निशब्दक्रियमि'ति षाष्ठसूत्रे उक्तम्, तथाप्याधारतारूपदृष्टद्वारैव तदिति तद् द्वारकोऽस्त्येव पदादिभिर्विरोध इति न समुच्चयशङ्कावकाशः । सूत्रार्थस्तु—अविशेषेण सामान्येन यच्छास्त्रं तद्विकल्पस्यान्याय्यत्वाद्विशेषे सन्दिग्धमारात् दूरे च । अतो विशेषविहितमेव स्यादिति ॥

इति विशेषशास्त्रेण सामान्यशास्त्रस्य बाधाधिकरणम् ॥ ८ ॥

९

अप्रकरणे० 'सप्तदश सामिधेनीरनुब्रूयादि'त्यनारभ्य विहितं साप्तदश्यं प्रकृतौ पाञ्चदश्येन बाधितं विकृत्यर्थमिति स्थितम् । विकृतिष्वपि कासुचित् वैमृधपशुमित्रविन्दाऽध्वरकल्पादिषु प्रकरणे साप्तदश्यं श्रुतम् । तदिदं प्राकरणिकं सप्तदशसामिधेनीवचनं किमाज्यभागविधिवदपूर्वतापरम् उतोपसंहारार्थम् ? इति सन्देहे—

क्लृप्तोपकाराः प्रकृतौ सामिधेन्यो यतस्ततः ।
ताभिरेव निराकाङ्क्षा नेच्छन्ति प्राकृतान्वयम् ॥
साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यते ।
सामिधेन्यस्तु चोद्यन्ते ताभिश्चापूर्वता स्फुटा ॥
भवेदेवमपूर्वत्वं सामिधेनीविधिर्यदि ।
साप्तदश्यविधिस्त्वेषः तस्मान्नाऽपूर्वता भवेत् ॥

साप्तदश्यविधौ किमित्यपूर्वता न भवति ? तस्य न सामिधेनीभिः सम्बन्धः, तासां चोदकप्राप्तेर्न चोदकलोपः सम्भवति । चोदकलोपे चापूर्वत्वमिति न साप्तदश्यविधावपूर्वत्वम् । किं च साप्तदश्यं ह्यनारभ्यवादेन सामिधेनीसम्बन्धितया श्रुतम् । यावत्तद्बलेन क्रत्वङ्गतां नैव कल्पयति, तावत्प्राकरणिकैर्वचनैरध्वरकल्पादिसम्बन्धे कृते, क्षीणार्थापत्तिर्न

---

९

अप्रकरणे० अत्रापि सामान्यप्राप्तपाञ्चदश्यबाधकत्वात्साप्तदश्यस्यातिदेशिकी सङ्गतिः। अपूर्वतापरतया त्वधिकाशङ्का । स्थितमिति । तृतीय इति शेषः । नन्वनारभ्यवादेनैव साप्तदश्यप्राप्तौ तद्विधिवैयर्थ्यमित्याशङ्कायामाह—किञ्चेति । तद्बलेन क्रत्वव्यभिचारिसामिधेनीसम्बन्धिताबलेन । तथा चानारभ्यविहितसाप्तदश्यस्य क्रत्वङ्गताबोधे विलम्बात्प्राकरणिकमेव क्रत्वङ्गताबोधकमित्यर्थः । ननु विलम्बेनापि सिध्यतोऽर्थस्य बोधने वैयर्थ्यं

कर्मान्तरसम्बन्धं कल्पयति । तेन साप्तदश्योपसंहारार्थानि प्राकरणिकानि वचनानीति नापूर्वत्वम् ॥

इत्युपसंहरान्यायप्रदर्शनाधिकरणम् ॥ ९ ॥

१०

मन्त्रेषु० अनारभ्य श्रूयते 'स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति । केषुचिद्दर्विहोमेषु पुनः स्वाहाकारः पठ्यते 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहे'ति । तदिदमनारभ्यवादप्राप्तस्य स्वाहाकारस्य विशेषेषु पुनः श्रवणं साप्तदश्यवदुपसंहारार्थमिति मन्वानस्य उत्तरम्—पृथिव्यादिशब्दास्तावन्मान्त्रवर्णिकदेवताविधानार्थाः । स्वाहाकारपाठस्तु वषट्कारवैकल्पिकत्वेनानियतप्राप्तस्य स्वाहाकारस्य नियमार्थः नोपसंहारार्थः । तस्माद्धोमान्तरेष्वपि नास्ति स्वाहाकारस्य बाधः ॥

इत्युपसंहारन्यायापवादप्रदर्शनाधिकरणम् ॥ १० ॥

---

तदवस्थमत आह—तेनेति । न चैवमप्यनारभ्यवादवैयर्थ्यमेवेति वाच्यम्, तस्य सामिधेनीरूपद्वारसम्बन्धार्थत्वात् । अन्ततोऽभ्युदयशिररकत्वस्य वा कल्पनादिति भावः । पूर्वपक्षसूत्रं स्पष्टार्थम् ॥

इत्युपसंहारन्यायप्रदर्शनाधिकरणम् ॥ ९ ॥

१०

मन्त्रेषु० उपसंहारापवादात्सङ्गतिः । उपसंहारे सति सामान्यविधेर्वैयर्थ्यम् । 'आग्नेयं चतुर्धाकरोति'तिवच्छाखाभेदाभावात्साप्तदश्यवत्त्र तद्द्वारसम्बन्धरूपबोध्यभेदाभावाच्चेति मन्वानस्येत्यनेन सूचितम् । सूत्रार्थस्तु—मन्त्रेष्ववाक्यशेषत्वमनुपसंहारार्थत्वं नियमरूपगुणोपदेशादिति ॥

इत्युपसंहारन्यायापवादप्रदर्शनाधिकरणम् ॥ १० ॥

११

अग्न्यति० अग्निरनारभ्यवादविहितः । स वाक्येन प्रकृतौ विकृतिषु च कासुचिद्विनियुज्यते । 'अथातोऽग्निमग्निष्टोमेनानुयजति तमुक्थ्येन, तमतिरात्रेण, तं त्रिरात्रेणे' त्येवमाद्वादशरात्रादनुक्रान्तः । सोऽयमग्निर्यासु विकृतिषु वाक्येन नोपदिष्टो यथा षोडशिषु वाजपेये च । तत्र किं चोदकप्राप्त्याकर्त्तव्यः ? नेति ? संशयः । तथाऽतिग्राह्या नाम ग्रहाः प्रकृतौ श्रुताः । विकृतिष्वपि कासुचिदुपदिष्टाः—'उक्थ्ये गृह्णीयात्, विश्वजिति प्रग्रहीतव्याः' इति । तेऽपि विकृत्यन्तरेषु ग्राह्याः ? नेति ? संशयः । तत्र—

चोदकेनाग्न्यतिग्राह्यं विकृतौ न प्रदिश्यते ।
कासुचिच्छ्रवणं तस्य तथा हि स्यादनर्थकम् ॥
तस्मात्तदर्थवत्त्वाय प्रदेशो नेति कल्प्यते ।
तेन यत्रोपदेशोऽस्य तत्रैवान्यत्र न क्रिया ॥

---

११

अग्न्यति० स्वाहाकारस्यैव विकृत्यन्तरेष्वग्न्यतिग्राह्यस्य बाधाभावोक्तेरातिदेशिकी सङ्गतिः । अग्निरिति । 'य एवं विद्वानग्निं चिनुते' इति विहित इत्यर्थः । चयनेनाग्निं संस्कुर्यादिति तदर्थः । चयननिष्पादिते स्थण्डिलेऽग्निं स्थापयेदिति यावत् । चयनस्य स्थण्डिलोत्पादकस्य साक्षादग्निसंस्कारकत्वायोगात् । 'अथातो अग्निमि'त्यादिवाक्यस्य चयननिष्पादिते स्थण्डिले आहवनीयादिस्थापनानन्तरं तस्मिन्नग्निष्टोमादिभिर्यजेतेत्यर्थः । तथेति । 'उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः' इति विहिता इत्यर्थः । पूर्वपक्षमाह—तत्रेति । ननु वैकृतविधेरपि प्रकृतिसमकालत्वात्क्लृप्तोपकारकत्वाभावेनाज्यभागविधिवदपूर्वतापरत्वायोगात्कथं प्रदेशो नेति कल्प्यत इत्युच्यत इत्याशङ्कायामाह—तेनेति । द्विरात्रादिष्वेवाग्न्यतिग्राह्यं न विकृत्यन्तरेष्विति परिसङ्ख्याप्रदेशो नेत्यनेनोक्तं नापूर्वतेति भावः । न च त्रैदोष्यम् पुनः श्रवणस्य वैयर्थ्यान्यथानुपपत्या अग्न्यतिग्राह्यांशे चोदकाभावज्ञापकतया परिसङ्ख्याया आर्थिकत्वात् । सिद्धान्त-

उच्यते—

अङ्गान्तरवदस्यापि प्राप्तिश्चोदकतो ध्रुवा ।
चोदकार्थस्य कृत्स्नत्वात्कासुचिच्छ्रवणं पुनः ॥
सामानविध्यसिध्यर्थं नातिदेशं निवारयेत् ।
कोऽर्थः सामानविध्ये चेद् गुणकामप्रवर्त्तनम् ॥

यासु विकृतिषु विधीयते, तासु प्रकृतौ च समानं विधानं भवति । विकृत्यन्तरेषु तु चोदकतः प्राप्तिरिति न प्रकृतितुल्यं विधानम् । समानविधानत्वे च प्रयोजनमग्न्याश्रितानां गुणकामानां 'श्येनचितं चिन्वीत स्वर्गकामः' इत्यादीनान्तास्वपि विकृतिषु प्रवृत्तिः । गुणकामा हि प्रकृतमग्निमाश्रयन्ति । प्रकृतश्चाग्निः प्रकृतिविकृतिसाधारणभूत इति तथा भूतस्याश्रयत्वाद्विकृतिष्वपि गुणकामप्रवृत्तिः । यासु तु विधिर्नास्ति तासु न गुणकामाः प्रवर्त्तन्ते 'निवृत्तिर्वा कर्मभेदादि'ति न्यायात् । तदेवं गुणकामप्रवृत्त्यर्था विकृतिषु कासुचिच्छ्रवणमिति न तद्बलेनातिदेशाभावः शक्यते कल्पितुम् । तस्मादस्त्यतिदेशः ।

अत्र केचिदाहुः—अनारभ्याधीतोऽग्निः प्राकरणिकोत्तरवेदिविरोधात्प्रकृतौ न लभते निवेशम् । अप्राकृतश्च न विकृतिष्वतिदिश्यते । तेनोपदेशेनैवास्य विकृतिषु प्राप्तिरित्यनुपदेशतः षोडशिवाजपेययोर्ना-

---

माह—उच्यत इति । कृत्स्नत्वात् सर्वाङ्गसाधारणत्वात् । तथा चाङ्गान्तराणामपि बाधापत्तिरिति भावः । कथं तर्हि द्विरात्रादिष्वग्न्यादिश्रवणवैयर्थ्यपरिहारस्तत्राह—कासुचिदिति । सामान्यविध्ये सति विकृतौ गुणकामप्रवृत्तिमुपपादयति—गुणकामा हीति । प्रकृतम् प्रकृतापूर्वसाधनम् । तथा च तत्तद्विकृत्यपूर्वाणामपि प्रकृतत्वात्तत्साधनीभूतचयनस्याप्याश्रयत्वेन गुणकामप्रवृत्तिरित्यर्थः । यासु त्विति । तदपूर्वस्याप्रकृतत्वेन तत्साधनीभूतचयनस्य प्रकृतापूर्वसाधनत्वाभावेनाश्रयत्वाभावादिति भावः । नन्वेवमुभयमपि प्रयोजनं स्यादत आह—तदेवमिति । उपस्थितलघुतरगुणकामप्रवृत्तिरूपप्रयोजनसम्भवेऽनुपस्थितातिदेशसङ्कोचकल्पना न युक्तेत्याशयः । कर्कभाष्यादिमतं दूषयितुमुपन्यस्यति—अत्रेति । न लभत इति । पाश्चदश्यावरुद्धायां प्रकृतौ साप्तदश्य-

ग्निश्चेतव्य इति । तदयुक्तम्, अग्निष्टोमवाक्येन प्रकृतावपि विधानात् न तु विकृत्यग्निष्टोमाभिप्रायं तद्भविष्यति । प्रकृतौ प्राकरणिकोत्तरवेदिविरोधात् न प्रकरणेन वाक्यसङ्कोचो युक्तः । किञ्च प्रकृतेरेवाग्निष्टोमत्वमनन्यापेक्षं विकृतीनान्त्वतिदेशापेक्षमिति प्रकृतिरेवानेनाभिधीयते । न चात्र साप्तदश्यन्यायः । साप्तदश्यस्य हि सामिधेनीमात्रसम्बन्धो वाक्येनाऽवगम्यते, क्रतुसम्बन्धः कल्पयितव्यः । पाञ्चदश्यस्य तु प्रकरणेन सम्बन्धः क्लृप्त इति युक्तं बलाबलम् । अग्निष्टोमशब्दस्तु क्रतुमेवाभिधत्त इति तत्सम्बन्धो वाक्यकृत इति न प्रकरणेन बाधमर्हति । तस्मादस्ति प्रकृतावग्निरिति विकृतिष्वप्यतिदिश्यते । तत्र साद्यस्क्रेषु च सत्रेष्वशक्यत्वात् काममग्निर्न चीयतां षोडशि-वाजपेययोस्तु चेतव्यः ॥

इत्यग्न्यतिग्राह्याधिकरणम् ॥ ११ ॥

१२

उत्पत्ति० दर्शपूर्णमासयोः 'उपस्तृणाति, द्विर्हविषोऽवद्यति, अभिघारयती'ति विधाय श्रूयते 'चतुरवत्तं जुहोती'ति । तत्र संशयः—किं चतुरवत्तहोमे हविष एव चतुरवदानम् । उपस्तरणाभिघारणे त्वधिके,

---

मिवेति भावः । साप्तदश्येन वैषम्यमाह—न चात्रेति तथाचोत्तरवेद्या सहाग्नेर्विकल्प इति भावः । अशक्यत्वादिति । अल्पकालसाध्यत्वात्साद्यस्क्रे बहुकालसाध्यचयनस्याशक्यत्वम् । सारस्वते शम्यापरा समीयुरिति विधेर्देशभेदादशक्यतेति भावः । सूत्रे अप्रवृत्तिरित्यस्य विकृत्यन्तर इति शेषः ॥

इत्यग्न्यतिग्राह्याधिकरणम् ॥ ११ ॥

१२

उत्पत्ति० अग्नेर्वैकल्पिकत्वे उक्ते द्व्यवदानचतुरवत्तयोस्तदपवादात्सङ्गतिः । तत्रेति । होतव्यमित्यस्य पूर्वार्धे अन्वयः । चतुः चतुर्वारम् । पञ्चमे 'चतुरवत्तं जुहोती'

द्व्यवदानश्च पक्षान्तरम् ? उतोपस्तरणाभिघारणाभ्यां सह चतुरवत्तं हविषो नित्यं द्विरेवावदानम् ? इति ।

तत्र द्वितीयासंयोगाच्चतुःखण्डनसंस्कृतम् ।
होतव्यं हविषस्तस्माद्धोतव्यात्खण्डनं चतुः ॥

'चतुरवत्तमि'ति द्वितीयानिर्देशाद्धोतव्यमेव चतुरवत्तं कर्तव्यं हविश्च होतव्यं नाज्यम् । तस्माद्धविष एव चतुरवदानम् । उपस्तरणाभिघारणन्त्वधिकम् । न च तेनाधिकेन होमे चतुरवत्तविघातः, तस्याहोतव्यत्वात् । द्व्यवदानचतुरवदानयोर्विकल्प इति प्राप्ते, ब्रूमः—

चतुःसंख्यावदानस्था होमाङ्गं चोद्यते यदि ।
तत एवं भवेत्सा तु यथा प्राप्ताऽनुकीर्त्यते ॥

'चतुरवत्तं जुहोती'ति नात्र चतुःसङ्ख्याविशिष्टमवदानं होमानुवादेन विधीयते, होमस्याग्नेयादिवाक्यैरप्राप्तत्वेनानुवादासम्भवात् । न चतुरवत्ताविशिष्टहोमविधिः, गौरवात् । न चाविहितस्याङ्गत्वम् । अतो न चतुः सङ्ख्याहोमाङ्गम् । का तर्हि वचनव्यक्तिः ? यच्चतुरवत्तमित्युपस्तरणादिवाक्यकल्पितचतुरवत्तानुवादेन तत्संस्कारतया जुहोतिना त्यागदेवतोद्देशावुत्पत्तिवाक्यसिद्धावनूद्य प्रक्षेपो विधीयते । उपस्तरणाभिघारणाभ्याञ्च सह चतुरवत्तं प्राप्तमिति यथाप्राप्तानुवादात् सहैवोपस्तरणाभिघारणाभ्यां चतुरवत्तम् । यद्यपि होमाङ्गतया चतुरवत्तविधिः, तथाप्यवत्तमात्रं विधीयते न चतुः सङ्ख्या, वाक्यान्तरप्राप्तानुवादत्वेनापि सम्भवतो विधाने गौरवापत्तेः । यद्यपि संख्या होमाङ्गतया विधीयते,

---

त्यनेनार्थप्राप्तेऽवदाने सङ्ख्यामात्रं 'द्विर्हविषोऽवद्यती'त्यनेन विधीयत इत्युक्तम् । तत्पक्षेऽपि सिद्धान्तसिद्धिरित्याह—यद्यपीति । अभ्युपेत्यवादेनाह—यद्यपीति । ननु होमाङ्गचतुःसङ्ख्यया तदङ्गावदानाङ्गद्वित्वसङ्ख्याया बाधः स्यात्, न तु द्वित्वेन चतुःसङ्ख्याया

तथाऽपि साधनमात्रपरिच्छेदेनाङ्गत्वोपपत्तेराज्यस्यापि च संस्कारद्वारेण होमसाधनत्वात्, उपस्तरणाभिघारणाभ्यां चतुरवत्तमित्याश्रीयते। एवञ्च द्व्यवदानस्य पाक्षिको बाधो न कल्पितो भवति ॥

इत्युपस्तरणाभिघारणाभ्यां सहैव चतुरवदानसम्पत्त्यधिकरणम् ॥ १२ ॥

१३

सान्नाय्य० कृत्वा चिन्तेयम्। यदा चतुः सङ्ख्या होमाङ्गतया विधीयते, तदा किमाज्यद्रव्यके उपांशुयाजे चतुरवदानं कर्त्तव्यम्? नेति? संशये, चतुरवत्तं विहितं कथं सम्पादनीयमित्यपेक्षायाम्, उपस्तरणादिप्रकारविधानात्, तस्य च केवलसान्नाय्यौषधविषयत्वात्, तत्रैव चतुरवदानमुपसंह्रियते, सान्नाय्यवदिति प्राप्ते उच्यते— चतुरवत्तमविशेषविहितं सर्वहोमाङ्गम्। न च तच्छेषत्वेनोपस्तरणादिविधिः। हविः संस्कारार्थतया तूपस्तरणाभिघारौ विहितौ। ताभ्यामेव तु सान्नाय्यौषधयोश्चतुरवत्तसम्पत्तेः न हविश्चतुरवदीयते। यत्र त्वाज्यभागे उपस्तरणादि न

---

आज्यविषयत्वरूपो बाध इत्याह—**एवञ्चेति**। द्वित्वस्य सर्वथा बाधायोगाद्विकल्पस्य चोक्तरीत्या विषमशिष्टत्वेनाष्टदोषत्वेन चायोगाच्चतुःसङ्ख्याया आज्यादिविषयत्वेनैव सङ्गतिरुचितेति भावः। सूत्रे–लोकवदित्यादेर्यथाप्रस्थभोजी देवदत्त इत्यादौ शाकाद्याधिक्येऽपि प्रधाने ओदनादौ प्रस्थपरिमाणं तथा चतुरवत्तं प्रधानहविषि स्यात्। आज्याद्युत्पत्तेर्गुणभूतत्वादित्यर्थः ॥

इत्युपस्तरणाभिघारणाभ्यां सहैव चतुरवदानसम्पत्त्यधिकरणम् ॥ १२ ॥

१३

**सान्ना०** पूर्वपक्षमाह—**चतुरवत्तमिति**। स्रुच्यसंसर्गार्थत्वान्नोपस्तरणादेरुपांशुयाजाज्यार्थता। आज्यस्य संसर्गाप्रसक्तेरित्याह—**तस्य चेति**। सिद्धान्तमाह—**उच्यत इति**। होमाङ्गत्वेन चतुरवत्तं विधीयते। तस्य च सान्नाय्यौषधयोरुपस्तरणादिनाप्युपपत्तेर्न द्विर्हविष इति द्वित्वबाधकत्वम्। उपांशु याजाज्ये तु द्वित्वबाधं विना गत्यभावाद्धविष

श्रुतम् तत्रान्यतः सम्पत्त्यभावाद्धविष एव चतुरवदानम्। परमार्थस्तु नात्र चतुःसंख्या विधीयते। अन्यपरे वाक्येऽनुवादत्वेनापि सम्भवन्त्यां विधानस्यान्याय्यत्वात्। अतोऽवत्तानुवादेन होमविधिः, न होमाङ्गतयावत्तविधिः। उपांशुयाजाज्ये 'चतुर्गृहीतं जुहोती'ति वाक्याच्चतुर्गृहीतविधिः न चतुरवत्तवाक्यात्॥

इत्युपांशुयाजे चतुरवत्तस्यावश्यकत्वाधिकरणम्॥ १३॥

१४

पुरोडाश० दर्शपूर्णमासयोः श्रूयते—'पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेतावाग्नेयश्चैन्द्राग्नश्च, सान्नाय्येन तु सोमयाजिनमि'ति। तत्र पुरोडाशाभ्यामेव सोमयाजिनमिति किमयं विधिः? उतानुवादः? इति संशयः। विधित्वे च बहवः पक्षाः। अधिकृतोपदेश इत्येकः, कर्मान्तरविधिरित्यन्यः, याजनविधिरित्यन्यतरः, कालोपदेश इत्यपरः, आग्नेयस्यानुवादः ऐन्द्राग्नस्य पौर्णमास्यां विधिरित्यन्यः। तत्रार्थवत्त्वाद्विधिः, अनुवादस्यानर्थक्यात्। तत्राधिकृतविधिः पुरोडाशाभ्यामेव सोमयाज्यधिक्रियते, न सान्नाय्येनेति। असोमयाज्येव वा ताभ्यामधिक्रियते, न सोमयाजीति। तदयुक्तम्, समस्ताभ्यां हि दर्शपूर्णमासाभ्यां

---

एव चतुरवदानमित्यर्थः। क्रत्वाचिन्तामुद्घाटयति—**परमार्थे**ति। शेषं सुगमम्॥

इत्युपांशुयाजे चतुरवत्तस्यावश्यकत्वाधिकरणम्॥ १३॥

१४

**पुरोडाशाभ्याम्**। पूर्ववद्विधित्वाभ्युपगमेन क्रत्वाचिन्तनानुवादत्वसिद्धान्ताच्चातिदेशिकी सङ्गतिः। पञ्चसु विधिपक्षेष्वाद्यपक्षमाह—**तत्रे**ति। अधिकृतस्य फलकामस्यासोमयाजिनः पुरोडाशनियमविधिरित्यर्थः। नन्वसोमयाजिनोऽपि 'तदुसन्नयेदि'ति सान्नाय्यविधेस्तद्विरोध इत्यत आह—**असोमयाज्येवे**ति। एवकारो भिन्नक्रम इति भावः। **समस्ते**ति। न केवलं तदुसन्नयेदिति विरोधः किन्तु पौर्णमासीबाधोऽपीति

चोदितं फलं न केवलाभ्यां पुरोडाशाभ्यामसोमयाजिनः उत्पत्तुमर्हति। नापि नित्ययोः पुरोडाशयोरनित्यमसोमयाजिनं प्रति सम्भवति विधिः। तस्मात्कर्मान्तरे एते विधीयेते।

नैवम्, प्रकृतप्रत्यभिज्ञानात्, एवकारानर्थक्याच्च। याजन-विधिस्तर्हि भवतु। न, फलाश्रवणात् परस्मैपदनिर्देशाच्च। न फलकल्पनाऽपि शक्यते। तेन कालविधिरेव ज्यायान्, असोमयागकाले पुरोडाशाविति। तदपि न चतुरस्रम्। सान्नाय्यवैकल्पिको ह्यैन्द्राग्नः। सान्नाय्यश्च 'नासोमयाजी सन्नयेदि'ति वचनात्सोमयागकालात्परतः प्रवर्त्तते। तेन तद्वैकल्पिकस्यैन्द्राग्नस्य प्राक्कालः प्राप्त एवेति तद्विधिर्व्यर्थः। तस्मादाग्नेयस्य पर्वद्वयेऽपि प्राप्तत्वादनुवादः। ऐन्द्राग्नस्य त्वमावास्यायां विहितस्य पौर्णमास्यामप्राप्तस्य विधिरिति युक्तम्, एवकारानर्थक्यात्। समुच्चितयोश्च पुरोडाशयोरेकेन लिङ्शब्देन कस्याचिदनुवादः, कस्याचिद्विधिरिति वैषम्यमयुक्तम्। तस्मात्पूर्वोक्त एव कालविधिरस्तु। न च प्राप्तः कालः, सान्नाय्यं ह्यसोमयाजिनोऽपि विहितम्, 'तदुह सन्नयेदि'ति प्रागूर्ध्वश्च सोमात्सान्नाय्यस्य काल एवेति तद्वैकल्पिकस्यैन्द्राग्नस्योभयोः प्राप्तौ सम्भवन्त्यां प्राक्काल एव नियम्यते। तन्नियमाच्च प्राक्सोमादैन्द्राग्नसान्नाय्ये विकल्प्येते। पश्चात्तु सान्नाय्यमेव भवतीति

---

भावः। वचनन्तु वक्ष्यमाणगतिकत्वान्नैतत्साधकमित्यर्हतीत्यनेन सूचितम्। द्वितीयपक्षं दूषयति—**नापीति**। यावज्जीवविधिवशेन सोमोत्तरमपि कर्तव्ययोरसोमयाजिनं प्रत्येक विधानायोग इत्यर्थः। **परस्मा इति**। तथा च। विश्वजिन्न्यायेन फलकल्पनायां परगामिफलबोधकपरस्मैपदं न स्यात्किन्त्वात्मनेपदं स्यादित्यर्थः। न च रागप्राप्तयाजनस्यैव सोमयाजिनं नेति परिसङ्ख्येति वाच्यम्। सोमयाजिनो ऋत्विगभावापत्तेरिति। **वैकल्पिक इति**। 'ऐन्द्राग्नेन वा सान्नाय्येन वा यजेते'ति वचनादित्यर्थः। सिद्धान्त-

युक्तः कालविधिः । नैवम् असोमयाजिना कालो लक्ष्यते । न चैतद्युक्तम् । तस्मात् 'सान्नाय्येन सोमयाजिनमि'त्यस्यायमर्थवादः ॥

इत्याग्नेयैन्द्राग्नयोरनुवादाधिकरणम् ॥ १४ ॥

१५

उपांशुयाज० उपांशुयाजस्य द्रव्ये सन्देहः—किमर्थप्राप्तं यत्किञ्चित्स्यात् ? उताज्यमेव ध्रौवमिति ? तत्र विशेषाश्रवणादनियमः । 'आज्यस्यैव नानुपांशु पौर्णमास्यां यजन्नि'त्यस्य कालविधिपरत्वेन द्रव्यविधावसामर्थ्यात् । 'सर्वस्मै वा एतद्यज्ञाय गृह्यते, यद्ध्रुवायामाज्य-मि'त्यस्य वैशब्दोपबद्धस्य वर्तमानापदेशसारूप्यविधिसामर्थ्याभावादिति प्राप्ते ब्रूमः—यद्यपि तावद्विधिर्न स्यात् । तथाऽप्यसंयुक्तोत्पन्नं ध्रौवमाज्यं प्रयोजनमपेक्षमाणमश्रुतद्रव्यकेषु प्रकृतेषु यागेषु द्रव्याकाङ्क्षेषु निविशते, किमुत यदा विस्पष्टं तादर्थ्यं चतुर्थीसंयुक्तं विपरिणामलब्धविधिसामर्थ्यं 'सर्वस्मै वा एतदि'ति वचनमेव विद्यते । तस्मात् ध्रौवाज्यमस्य द्रव्यम् ॥

इत्युपांशुयाजस्य ध्रौवाज्यताधिकरणम् ॥ १५ ॥

---

माह—तस्मादिति । सोमयाजिनः सान्नाय्यनियमविधेरर्थवाद इत्यर्थः । सूत्रं सुगमम् ॥

इत्याग्नेयैन्द्राग्नयोरनुवादताधिकरणम् ॥ १४ ॥

१५

उपांशु० पूर्वत्रानुवादत्वमुक्तमिह तु विधित्वं सर्वस्मै वेत्यस्योच्यत इत्यपवाद सङ्गतिः । निविशत इति । अधिकाराख्यप्रकरणेनेत्यर्थः । विपरिणामः पञ्चमलकार-कल्पनम् । शेषं सुगमम् ॥

इत्युपांशुयाजस्य ध्रौवाज्यताधिकरणम् ॥ १५ ॥

१६

तद्वच्च० उपांशुयाजस्यैव देवतायां सन्देहः—किमर्थप्राप्ता या काचिदनियमेन स्यात् ? उतास्ति कश्चिन्नियमः ? इति । तत्र 'विष्णुरुपांशु यष्टव्योऽजामित्वाये'त्यादेरर्थवादत्वादन्यस्य च देवताविधेरदर्शनाद-नियमः । नाऽविहिता देवता भवति । तस्माद्देवतापेक्षोऽयमुपांशुयाजविधिः प्रकरणवशाद्दर्शपूर्णमासतन्त्रगताभिरेकवाक्यतां यातीति, नानियमः ॥

इत्युपांशुयाजस्य देवतानियमाधिकरणम् ॥ १६ ॥

१७–१८

धर्माद्वा० तान्त्रिक्यो देवता इति स्थिते, का तासामिति चिन्त्यते देवताविचारसमानहेतुकत्वाच्च कालविचारोऽपि सहैव तेन क्रियते । तदयमत्र विचारः—किं प्रजापतिर्देवता ? उताग्निः ? उत विष्णुः । अमावास्यायां चोपांशुयाजः ? किं चोभयोः पर्वणोर्विष्णुः, प्रजापतिः, अग्नीषोमौ च व्यवस्थितविभाषया देवताः ? यदाऽमावास्यायां तदा विष्णुः । पौर्णमास्यान्तु प्रजापतिरग्नीषोमौ चेति । अथवा पौर्ण-

---

१६

तद्वच्च० आतिदेशिकी सङ्गतिः । **अनियम इति** । देवतां विना यागासम्भवादा-क्षेपतो या काचिद्देवता प्राप्येतेत्यर्थः । सिद्धान्तमाह नेति । लोके हि न काचिद्देवता प्रसिद्धा यस्या आक्षेपतः प्राप्तिः । या तु यत्रोद्देश्यतया विहिता सा तत्र देवतेति न तदाक्षेपसम्भव इत्यर्थः । **नानियम इति** । या काचिदित्यनियमो न किन्तु दर्शपूर्णमास तन्त्रगतेत्येवं नियम इत्यर्थः ॥

इत्युपांशुयाजे देवतानियमाधिकरणम् ॥ १६ ॥

१७

**धर्माद्वा०** सङ्गतिं दर्शयन्नाह—**तान्त्रिक्य इति** । **किमिति** । 'मनसा प्रजापतये जुहोती'ति पूर्वाघारदेवताविधिगतचतुर्थ्यन्तप्रजापतिपदानुषङ्गेणेति भावः । **उतेति** ।

मास्यामेवोपांशुयाजो विष्णवाद्याश्च तिस्रो देवतास्तत्रैव विकल्प्यन्त इति तत्र धर्मसम्प्रतिपत्तेः प्रजापतिर्देवतेति गम्यते । स हि यत्किञ्चित्प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत्क्रियते' इति वचनादुपांशुधर्मा यागोऽपि चायं तद्धर्मेति प्राजापत्यत्वाध्यवसानं न प्रजापतिरुपांशुत्वधर्मा तूष्णींभावः, तस्य धर्मः 'प्रजापतिं मनसा ध्यायेदि'ति विधेः । तदर्थवादस्त्वयं यत्किञ्चित्प्राजापत्यमिति । तस्मात्सम्प्रतिपत्त्यभावान्न प्रजापतिः । मुख्यत्वात्त्वग्निः स्यात् । सोऽपि न, विष्णुस्तु मन्त्रवर्णात्स्यात् । आग्नेयैन्द्राग्नयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवं याज्यानुवाक्यायुगलमाम्नातम् । यागश्चायं पुरोडाशद्वयमध्ये विहित इति स्थानसामान्याद्वैष्णवमन्त्रद्वयमस्याङ्गं भवद्विष्णुं देवतां परिकल्पयति । आग्नेयैन्द्राग्नमध्यवर्तित्वाच्च मन्त्रयोरमावास्याकालत्वावगमादविशेषविहितोऽपि यागो मन्त्रवशादमावास्याकाल इति निश्चीयते । सत्यम्, मान्त्रवर्णिकी देवता, न तु विष्णुरेव । मन्त्रवशादेव तु तिस्रोऽपि देवता व्यवस्थितविकल्पेन स्युः, उभयोश्च पर्वणोरुपांशुयाजः स्यात् । तथाहि 'जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाये'त्यविशेषेण पुरोडाशद्वयोपलक्षिते काले विधानादुभयोश्च पर्वणोः पुरोडाशद्वयसम्भवादुभयत्रोपांशुयाजः स्यात् । नन्वमावास्यायां जामितादोषः पाक्षिकः, सोमयाजिनः ऐन्द्राग्नाभवात् तुल्यं पौर्णमास्यामपि पाक्षिकत्वम् । असोमयाजिनोऽग्नीषोमीयाभावात् । तस्मात्पाक्षिकेणैव जामित्वापनयनेनोभयत्रार्थवाद इत्यु-

---

आग्नेयवाक्यगततद्धितान्ताग्नेयपदानुषङ्गादिति भावः । **विष्णुरिति** । आग्नेयैन्द्राग्नयाज्यानुवाक्या युगलयोर्मध्ये वैष्णवयाज्यानुवाक्याम्नानादैन्द्राग्नस्य चामावास्याकालिकत्वादुपांशुयाजोऽपि विष्णुदेवत्यस्तत्रैवेत्यर्थः । **मुख्यत्वात्** । प्रथमोपस्थितत्वात् । लिङ्गेन देवताप्राप्त्यङ्गीकारे विष्णुमात्रप्राप्तिरयुक्तेत्याह—**सत्यमिति** । **सोमयाजिन** इति । 'सान्नाय्येन सोमयाजिन'मिति पूर्वोक्तवचनादित्यर्थः । **अग्नीषोमीयाभावादिति** । 'आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवती'त्यादिवाक्येन सोमोत्तमेवाग्नीषोमदैवत्ययागर्हता प्रतिपादनादिति भावः । कालभेदेन देवताव्यवस्थापक्ष-

मयत्राप्युपांशुयाजः स्यात् । तत्र 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु-पौर्णमास्यां यजन्नि'त्यनेन पौर्णमासीकालवर्तिनोऽग्नीषोमदेवताविधानान्मन्त्रवर्णाच्च स्यातामग्नीषोमौ । प्रजापतिश्च मन्त्रवर्णात्स्यात् । आग्नेयाग्नीषोमीययाज्यानुवाक्यामध्ये तैत्तिरीयाणां प्राजापत्ययाज्यानुवाक्याम्नानात् । विष्णुस्तु पूर्वोक्तेन न्यायेनामावास्यायां स्यादिति प्राप्ते, ब्रूमः—

विष्ण्वाद्या देवताः सत्यं मन्त्रवर्णाद्विकल्पतः ।
न तु कालद्वये यागः पौर्णमास्यान्तु वाक्यतः ॥

'उपांशु पौर्णमास्यायां यजन्नि'त्यनेन प्रत्यक्षवचनेन पौर्णमासीविधानात्पौर्णमास्यामेव कालविधानं ह्येतत्, न देवताविधानम्, मन्त्रवर्णादेव देवतानां लब्धत्वात् । पौर्णमासीकालविशिष्टयागानुवादेन च देवताविधौ विशिष्टानुवाददोषापत्तेः । तस्मादुपांशुयाजानुवादेन कालविधानमेतत् । अग्नीषोमग्रहणं तु मान्त्रवर्णिकीनां देवतानामुपलक्षणार्थम् ।

ये त्वाश्वलायनाः कालविधिमनिच्छन्तः पर्वद्वयेऽप्युपांशुयाजमाहुः, ते कथमिव 'त्रयोदशामावास्याया मि'ति लिङ्गं समर्थयेरन् । काल-

---

माह तत्रेति । पौर्णमासीकालवर्तिन इत्यस्याग्नीषोमावित्यत्राप्यन्वयः । पौर्णमास्यामित्यस्योद्देश्योपांशुयाजविशेषणत्वायोगाद्विध्यश्रवणाच्चाह मन्त्रेति । आग्नेयाग्नीषोमीययोर्मध्येऽग्नीषोमदेवत्यमन्त्राम्नानादित्यर्थः । प्रजापतिश्चेत्यनन्तरं पौर्णमासीकालवर्तिन इत्यनुषङ्गः । पूर्वोक्तेन आग्नेयैन्द्राग्नमध्यपठितमन्त्रकत्वरूपेण । सिद्धान्तमाह—विष्ण्वाद्या इति । विकल्पतः विकल्पेन । भवन्तीति शेषः । न त्विति । वैष्णवयाज्यानुवाक्यायुगलस्यामावास्याक्रमपाठात्तत्कालकत्वं प्रत्यक्षवचनेन पौर्णमासीविधानाद्बाध्यत इत्यर्थः । पुराकल्परूपार्थपादेन विध्युन्नयनान्नतदश्रवणं दोष इति भावः । त्रयोदशेति । सवषट्काराहवनीयाहुतीनामियं सङ्ख्या । तेनाघारपत्नीसंयाजाद्याहुतिभिर्नाधिक्यमाशङ्कनीयम् । ताश्च पञ्चप्रयाजास्त्रयोऽनूयाजाद्वावाज्यभागौ स्विष्टकृदित्येकादश । प्रधानाहुतीर्द्वे आग्नेयपुरोडाशस्यैकम् । सान्नाय्यस्याऽपि सम्प्रतिपन्नदेवताकत्वादेकेत्यमावास्यायां त्रयोदशाहुतयः । पौर्णमास्यान्तु प्रधानाहुतित्रयमिति चतुर्दश । उपांशुयाजसत्वे तु तत्रापि चतुर्दशैव स्युरिति त्रयोदशसङ्ख्यानपपत्तिरित्यर्थः ।

विध्यभावे च पौर्णमासीवाक्येनानुवादासम्भवात् पूर्णमासशब्देनापि न फले विनियुज्येतेति प्राधान्यमुपांशुयाजस्य न स्यात्। आज्यभागादिवदङ्गता स्यादित्यास्तां तावत्। तस्मात्पौर्णमासीकालस्य वाचनिकत्वात्प्रधानानुवर्तित्वाच्च देवतानां तिसृणामपि तत्रैव विकल्पः॥

इत्युपांशुयाजस्य विष्ण्वादिदेवताकत्वाधिकरणम्॥ १७॥

१८

द्विपुरो० पौर्णमास्यामेवोपांशुयाज इति स्थिते, चिन्त्यते–किं द्विपुरोडाशायामेव स्यात्? उतैकपुरोडाशायामपीति? तत्रैकपुरोडाशायामन्तरालगुणालाभेन वैगुण्यात् द्विपुरोडाशायामेव स्यात्। सिद्धान्तैकदेशी त्वाह–यागस्याविशेषेण श्रवणादुभयत्रानुष्ठानम्। गुणस्तु यदा द्विपुरोडाशा तदा भविष्यतीति। तदयुक्तम्, विधीयमान एव यागोऽन्तरालकालगुणविशिष्टो विधीयते, अनुपादेयश्चान्तरालगुणः। तेन यत्रैवायंगुणः,

---

दूषणान्तरमाह कालेति। पौर्णमासी वाक्येन 'य एवं विद्वान् पौर्णमासीं यजते' इति वाक्येन। प्रत्यक्षवचनावगतपौर्णमासीकालानामेव तत्र ग्रहणादन्यथाऽऽज्यभागादीनामप्युपादाने तेषामपि फलसम्बन्धापत्तेरिति भावः। नन्वमावास्याक्रमपठितवैष्णवमन्त्रावगतदेवतायाः क्व निवेश इत्याशङ्कायामाह—प्रधानेति। अङ्गस्य प्रधानानुसारित्वात्पूषानुमन्त्रणन्यायेन पौर्णमास्यामुत्कर्ष इत्यर्थः॥

इत्युपांशुयाजस्य विष्ण्वादिदेवताकत्वाधिकरणम्॥ १७॥

१८

द्विपुरो० पूर्वत्रैव विशेषचिन्तनात्सङ्गतिरिति सूचयितुमाह—पौर्णमास्यामेवेति। पूर्वपक्षमाह—तत्रेति। अन्तरालस्य निरूपकीभूतपुरोडाशद्वयं विनाऽसम्भवात्कालरूपानुपादेयाङ्गाभावे च प्रयोगवैगुण्यादेकपुरोडाशायां न स्यादित्यर्थः। एकदेशिमतेन सिद्धान्तसिद्धं दूषयितुमाह—सिद्धान्त्येकदेशी त्विति। 'गुणलोपे तु मुख्यस्य क्रिया स्यादि'ति न्यायादिति भावः। उत्पत्तिशिष्टतयान्तरालगुणस्य न पाक्षिकत्वं युक्तमित्यापाततो दूषणमाह—विधीयमान एवेति। उत्पत्तिशिष्टसोमादेरपि पाक्षिकत्वाङ्गीकारात्तात्विकं दूषणमाह—अनुपादेयश्चेति। स्वमतेन सिद्धान्तमाह—स्यादेवमिति। पुरोडाशविशिष्टान्तरालस्याङ्गत्वे पुरोडाशयोरन्यार्थयोरप्यङ्गत्वापत्तेर्विशिष्टविधिगौरवाच्च पुरोडाशोप-

तत्रैवास्य विधिः, इतरत्र तु विधिरेव नास्तीत्यकर्त्तव्य एवेति प्राप्ते अभिधीयते—

स्यादेवमन्तरालस्य गुणत्वेन विधिर्यदि ।
कालो विधीयते त्वत्र पुरोडाशोपलक्षितः ॥

अन्यार्थाभ्यां हि पुरोडाशाभ्यामुपलक्षिते काले कर्म विधीयते, योऽयम्पुरोडाशयोर्मध्यकालः, तत्रोपांशुयाज इति सर्वत्र चोपलक्षणापायेऽपि उपलक्षणीयमवतिष्ठते शङ्खवेलायामागन्तव्यमित्यादौ । तेन कर्माङ्गभूतस्य कालस्यैकपुरोडाशायामपि लाभात् तत्राप्युपांशुयाजो न बाधितव्यः ।

तदेवं लुप्तार्थं यदपि च निषिद्धं विकृतिषु
तथा प्रत्याम्नातं त्रिविधमिह बाध्यं व्यवसितम् ।
अतस्त्वन्यास्याभ्युच्चयविधिरियत्तैवमुदिता
प्रयोगेयत्तायास्त्वत उपरि चिन्तां प्रकुरुते ॥

इत्येकपुरोडाशायामुपांशुयाजाधिकरणम् ॥ १८ ॥

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रकीपिकायामष्टमः पादः
समाप्तः
दशमोऽध्यायश्च समाप्तः



लक्षितकालविधानमेवेदम् । उपलक्षणापायेऽपि चोपलक्ष्यानपायादेकपुरोडाशायामप्युपांशुयाजः स्यादेवेत्यर्थः। निखिलाऽध्यायार्थमुपसंहरति—तदेवमिति । अतः एतत्त्रितयरूपाद्बाध्यात् । अन्यस्य अबाध्यस्य । एकार्थत्वायाह इयत्तेति । अग्रिमविचारेण पौनरुक्त्यशंकायामाह—प्रयोगेति । तथाचात्र विनियोगेयत्ताऽग्रे तु प्रयोगेयत्ता विषय इति भेद इत्यर्थ इति शिवम् ॥

इति श्रीमत्तत्सद्वंशावतंसधर्ममीमांसाधुरीणरामचन्द्रसूरिवरात्मज वैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां दशमस्याध्यायस्याष्टमः पादः । सम्पूर्णश्चाध्यायः ।



# अथ एकादशाध्याये

## प्रथमः पादः

१

प्रयोजनाभि० दशमेऽध्याये बाधाभ्युच्चयचिन्तया विकृतिष्वङ्ग-परिमाणं चिन्तितम्। अतिदेशविचारश्च सप्तमादिभिर्दशमपर्यन्तैः समाप्तः। सम्प्रत्युपदेशातिदेशसाधारण्येन प्रयोगपरिमाणं परिमाणप्रसङ्गादेकादशे तन्त्रावापचिन्तया चिन्त्यते। उपदिष्टातिदिष्टपदार्थेयत्तावधारणाधीनं प्रयोगेयत्ताऽवधारणमिति तदुत्तरकालमारम्भः। तदिहैकप्रयोगवचनचोदिता नामेकफलानां संहत्यकारिणां बहूनां कर्मणां साधारणाङ्गभाजामङ्गानुष्ठानं

---

# एकादशाध्यायः

## प्रथमः पादः

१

श्रीकृष्णायनमः। **प्रयोजनाभि०** सङ्गतिं दर्शयितुमाह—**दशम इत्यादि**। प्रयोग-परिमाणमेव पूर्वं कुतो न चिन्तितमिति शङ्कानिरासाया**तिदेशे**त्याद्युक्तम्। उपक्रान्ता-तिदेशविचारसमाप्तिं विना मध्य एवोपदेशातिदेशसाधारणविचारायोगाद्वैकृताङ्गपरि-माणचिन्तनोत्तरं तत्प्रसङ्गात्प्रयोगपरिमाणचिन्तोचितेत्यर्थः। परिमाणस्य साक्षात्क्वाप्य-धिकरणे विचाराभावादाह—**तन्त्रेति**। अनेकार्थतया सकृदनुष्ठानं तन्त्रम्। प्रासङ्गि-काप्रयोज्यादौ त्वेकार्थतयाऽनुष्ठितस्यैवाऽन्योपकारकत्वान्नातिव्याप्तिः। **आवापः** आवृत्तिः। तथा च तन्त्राऽऽवापचिन्ताद्वारेणार्थतः परिमाणसिद्धिरित्यर्थः। पौर्वापर्ये विनिगमकान्तर-मप्याह—**उपदिष्टेति**। ननु पदार्थेयत्तावधारणे सति तत एव प्रयोगेयत्तावधारणस्यापि सिद्धेः किमत्र विचार्यमित्याशङ्कायामाह **तदिहेति**। एकफलयोरपि दर्शपूर्णमासेष्ट्योः प्रयाजादितन्त्रत्वाभावादेकप्रयोगविधिविहितानां मध्ये कस्यचित्फलान्तरार्थमनुष्ठानेऽङ्ग-तन्त्राभावादुभयमुक्तम्। एवमपि निरपेक्षतया फलजनकत्वे तन्त्रासम्भवात्**संहत्ये**त्युक्तम्। एकैकमात्राङ्गे तन्त्राप्रसङ्गात्**साधारणेति**। एवञ्च पदार्थेयत्तावधारणेऽपि प्रयोगेयत्ताया आवृत्तिवशेनानिर्धारणाद्विचारोपपत्तिरिति भावः। प्रथमाधिकरणस्याध्यायसङ्गतिमाह—

किं तन्त्रेण भवति ? उतावृत्त्या ? इति चिन्ता लक्षणार्थः। प्रथमं तावदुपोद्घातत्वेन संहत्यकारित्वं प्रतिपाद्यते। यदि ह्याग्नेयादयः षडपि परस्परानपेक्षाः स्वर्गं साधयेयुः ततस्तेषां कामिनः कर्त्तव्यत्वेन युगपदुपस्थानाभावात्पृथक्पृथगेव स्वाङ्गयुक्ताः कर्त्तव्या इति न तन्त्रत्वं सिद्ध्येत्। तस्मात्संहत्यकारित्वं प्रतिपाद्यते।

तदयमत्राधिकरणे विचारः—किमाग्नेयादीनि पृथक् पृथक् स्वर्गं साधयन्ति ? उत संहत्येति ? तत्र—

परस्परानपेक्षाणामुत्पन्नानां फलार्थिनाम्।
चोद्यमानं फलन्तेषामेकैकस्यावधार्यते॥
तेषां ह्युद्दिश्यमानत्वात्साहित्यमविवक्षितम्।
तस्मात्प्रत्येकमेव स्यादिति प्राप्तेऽभिधीयते॥
आग्नेयादिकमुद्दिश्य फलं यद्युपदिश्यते।
तत उद्दिश्यमानत्वात्तेषामेकैकशः फलम्॥
कामिनान्तु यदोद्दिश्य कर्मणां चोदनात्तदा।
तेषां विधीयमानानां सहभावो विवक्षितः॥

यद्यपि चोभयथा वचनव्यक्तिः सम्भवति, तथाऽपि द्वित्वावगतं दर्शशब्देन च त्रिकस्य पूर्णमासशब्देन च तस्य तन्त्राभिधानावगतञ्च

---

**प्रथममिति**। एतदेवोपपादयति—**यदि हीति**। भाष्ये कृतस्य स्वर्गकामपदं फलपरं न तु कर्तृनिमित्तपरमिति विचारस्य षष्ठाद्येन गतार्थत्वादुपेक्षणीयतां सूचयितुमाह—**तदयमिति**। पूर्वपक्षमाह—**तत्रेति**। उत्पत्तिवाक्ये निरपेक्षतयेष्टसाधनत्वावगमात्तन्निरूपकतयेष्टविशेषरूपफलस्य फलवाक्येनावगमात्प्रत्येकमेव फलसाधनतेत्यर्थः। ननु दर्शपूर्णमासाभ्यामिति द्वन्द्वावगतसाहित्यस्य विवक्षितत्वात्सहितानां फलसाधनता स्यादत आह—**तेषामिति**। कर्मणां प्राप्तत्वेनाविधेयत्वात्तदनुवादेन फलसम्बन्ध एवाप्राप्तत्वाद्विधीयत इति भावः। **यद्यपीति**। यौ दर्शपूर्णमासौ तयोरिदं फलम्। एतत्फलार्थं दर्शपूर्णमासौ कर्तव्यावित्युभयप्रकारेणेत्यर्थः। प्राप्तानामपि कर्मणां विनियोगविधिविषयत्वसम्भवादिति भावः। **द्वित्वेति**। द्वयोः साहित्यं विना द्वित्वानुपपत्तेरित्यर्थः। एतच्च

साहित्यं मा बाधीति कामिनमेवोपायार्थिनं नरमुद्दिश्याग्नेयादीनि विधीयन्त इत्येतदेव युक्तम्। प्रधानत्वाच्च फलस्यैवोद्देशो युक्तो न कर्मणां गुणभूतानाम्। एकस्मिन्नपि फले संहत्यकारित्वेन विनियुक्तानां कर्मणां प्रत्येकमप्युत्पन्नानां फलापेक्षा निवर्तत इति नानपेक्षितसम्बन्धापत्तिः। तस्मात्फलोद्देशेन विधीयमानानां विवक्षितं साहित्यमिति सिद्धं संहत्यकारित्वम्।

यत्तु भाष्यकारेण पुरुषपरत्वं कालपरत्वं निमित्तपरत्वञ्च निराकृत्य फलपरत्वं च कामपदस्य समर्थितम्, तदिहासूत्रितमपि सूत्रितविचारस्योपोद्घातत्वेन। सति हि तस्य फलपरत्वे किं प्रत्येकं फलम्? उत संहत्येति-विचारः, नान्यथा इति। स्वर्गकामाधिकरणे तु स्वर्गस्य तत्कामनायाश्चाङ्गत्वेन विधानं निराकृतमित्यपुनरुक्तता॥

इत्याग्नेयादीनां तन्त्रेण स्वर्गफलकत्वाधिकरणम्॥ १॥

२

अङ्गानान्तु० अतः प्रभृति षड्भिः सूत्रैरेकमधिकरणम्। 'एकेनापि

---

द्वन्द्वोपलक्षणम्। एवं त्रिकयोः परस्परसाहित्यमुक्तम्। त्रयाणां परस्परसाहित्यगमकमाह-तन्त्रेति। नियामकान्तरमाह--प्रधानेति। तथा च फलस्य विधेयत्वाङ्गत्वापत्तिरित्यर्थः। वस्तुतः पदश्रुत्या धात्वर्थस्यैव विधेयत्वं न तु पदान्तरार्थस्येत्यपि बोध्यम्। पुरुषेति। 'राजा राजसूयेने'त्यादिवत्कर्तृपरत्वमित्यर्थः। कालपरत्वं स्वर्गकामना काल इति। निमित्तपरत्वं स्वर्गकामना यदा यदा तदा यजेतेत्येवमित्यर्थः। स्वर्गस्येति। प्रीतिसाधनद्रव्यस्य स्वर्गपदार्थत्वादिति भावः। एवञ्च शङ्कान्तरनिराकरणार्थत्वान्न पौनरुक्त्यमित्यर्थः। सूत्रार्थस्तु–पृथक् सतामाग्नेयादीनां तत उत्पत्यनन्तरं प्रयोजनेनाभिसम्बन्धादैककर्म्यमेकफलत्वं स्यात्। कुतः? एकेन यजतिशब्देनाभिसम्बन्धात्साहित्यावगमादिति॥

इत्याग्नेयादीनां तन्त्रेण स्वर्गफलकत्वाधिकरणम्॥ १॥

२

अङ्गानां० प्रतिभातीति। एकेनापि समाप्येतेति सूत्रेऽङ्गानां पृथग् विधाना-

**समाप्येतेत्यतः प्रभृति च नवभिः सूत्रैरधिकरणान्तरं भाष्यकारेण व्याख्यातमिति प्रतिभाति। तत्र च पूर्वाधिकरणे अङ्गानां कार्यभेदं पूर्वपक्षीकृत्य, ऐककार्यत्वं सिद्धान्तितम्। उत्तराधिकरणे तु तस्मिन्नेकस्मिन्कार्ये विकल्पमाशङ्क्य समुच्चयः प्रतिपाद्यत इति व्याचष्टे।**

**तदिदं वार्त्तिककारो नाऽनुमेने। न हि कार्यभेदाभेदमात्रचिन्ताप्रयोजनवती। भेदे सति कार्याणां कारकवदङ्गानां समुच्चयः, कार्यैक्येऽप्य-पर्यायविधानात्समुच्चय इति नास्त्यनुष्ठाने विशेषः। औपोद्घातिकमिदम्। सति हि कार्यैक्ये विकल्पसमुच्चयाविति चेत्? तथाऽपि नास्त्येव प्रयोजनम्, करणैकत्वाद्धि तत्सामर्थ्योद्बोधनरूपस्योपकारस्य स्पष्टमेवैकत्वम्। अवान्तरकार्यभेदस्तु सिद्धान्तेऽपि सम्मत एवेति न चिन्तनीयं पश्यामः। अथ शक्तपदबोधनस्यावान्तरकार्याणाञ्च मध्ये किंचिदुपकाराख्यं वस्तु मन्यसे, तदप्रमाणकं निष्प्रयोजनञ्च। शक्त्युद्बोधन एव विकल्प समुच्चयचिन्तेति। तस्मादेकमेवेदं पञ्चदशसूत्रं समुच्चयप्रतिपादनार्थं-**

---

त्प्रत्येकमितिकर्तव्यताकाङ्क्षापूर्वकत्ववत् बह्वाम्नानसामर्थ्यात्सन्निधानाविशेषाच्च सहितानामपीतिकर्तव्यताकाङ्क्षापूरकत्वावगमादुभयथाऽपि फलसिद्धिः। अङ्गभूयस्त्वे च फलभूयस्त्वं कल्पनीयमिति पूर्वपक्षान्तराभिधानादिति भावः। **व्याचष्ट इति**। भाष्यकार इति शेषः। **नहीति**। मात्रपदेनाङ्गविकल्पसमुच्चयव्यवच्छेदः। प्रयोजनाभावमेव दर्शयति—**भेदे सतीति**। कार्याणां भेदे सतीत्यन्वयः। यथा भिन्नावान्तरकार्याणामपि कर्त्रादिकारकाणामेकस्यां क्रियायां समुच्चयस्तथाऽङ्गानामपि समिदादीनामित्यर्थः। **अपर्यायेति**। युगपत्प्रयोगविधिना विधानादित्यर्थः। ननु करिष्यमाणविकल्पसमुच्चयचिन्तोपयोगात्कार्यैकत्वचिन्तानानर्थिकेति शङ्कते—**औपोद्घातिकमिति**। कार्यशब्देन करणोपकारोऽभिमतोऽङ्गावान्तरकार्यं वा। नाद्य इत्याह—**करणैकत्वादिति**। तथा च तदैक्यस्य निर्णीतत्वान्न विचार्यत्वमित्यर्थः। द्वितीयं दूषयति—**अवान्तरेति**। नन्वङ्गानां सहितानामेव प्रयोगविधिना करणोपकाररूपफलजनकत्वावगमात्तस्य च साक्षादसम्भवेन व्यापारापेक्षायां सर्वाङ्गजन्यमेकमपूर्वं परमापूर्वस्थानीयमावश्यकम्। तत्तदङ्गावान्तरापूर्वाणां सहिताङ्गाजन्यतया तत्र व्यापारत्वायोगादिति तादृशकार्यैकत्वसिध्यर्थं चिन्तेत्याशङ्कते—**अथेति**। दूषयति—**तदिति**। तत्तदवान्तरकार्यद्वारैव करणोपकारजनकत्वसम्भ-

मधिकरणम् । त्रयश्चेहपक्षाः—किमङ्गानामितरेतरनिरपेक्षाणां क्रतूपकारकतया विकल्पः ? उतैकेन, द्वाभ्यां, बहुभिश्चोपकारसिद्धेरुपकारभूयस्तया च फलभूयस्त्वम् ? उत समुच्चितानामेवोपकारकत्वमिति ? तदर्थमिदं चिन्त्यन्ते—किमङ्गानामात्मीयैर्विधिभिः प्रयोगोऽभिधीयते ? किं वा प्रधानविधिभिरिति ? तत्र प्रधानान्येकशब्देन तन्त्रेणाभिहितानि युगपत्फले विनियुक्तानि युक्तं यत्फले समुच्चीयन्ते । अङ्गानि तु पृथक् शब्देनाभिहितानि पृथगेव विहितानि फलमपेक्षमाणान्यन्योन्यनिरपेक्षाण्येव क्रतूपकारार्थतया विनियुक्तानि विकल्पितुमर्हन्ति । तेषां हि स्ववाक्यैरेव विधानम् असति विधानेऽङ्गत्वानुपपत्तेः । उक्तं हि 'न चाविहितमङ्गं भवती'ति । स्ववाक्यानि च तेषामेकैकमेव विदधतीति कुतः समुच्चयः ? न हि कश्चिच्छब्दोऽस्ति, येनैषां सहितानामनुष्ठानमुच्यते । तस्माद्यथा सत्यपि पशुफलत्वे चित्रोद्भिदादीनां पृथग्विधानादसमुच्चयः, तथाऽङ्गानामपीति प्रथमः पक्षः ।

सत्यम्, निरपेक्षाणामुपकारकत्वं गम्यते, तथाऽपि बह्वङ्गाम्नानसामर्थ्याद्विकल्पस्य चान्याय्यत्वात्तेषामेकमपि प्रयुञ्जीत, तथा द्वे, बहूनि चाङ्गभूयस्तया चोपकारभूयस्त्वात्फलभूयस्त्वमिति द्वितीयः । स 'चैकेनापि समाप्येते'त्यनेन सूत्रेणोच्यते । पक्षान्तरमेव चाधिकरणान्तर-

---

वान्नातिरिक्तापूर्वे किञ्चित्प्रमाणमित्यर्थः । न चैवं परमापूर्वमपि न सिध्येत्, समुदायद्वयापूर्वाभ्यामेवोपपत्तेरिति वाच्यम् । दर्शपौर्णमासाभ्यामिति द्वित्वावच्छिन्नकरणतायाः श्रुताया निरूपकत्वेन तत्सिद्धेरिति भावः । अस्तु वा तादृशापूर्वान्तरं तथापि प्रकृते तच्चिन्तनमनर्थकमेवेत्याह **निःप्रयोजनञ्चेति** । आद्यपूर्वपक्षमाह– **तत्रेति** । **प्रधानानि** आग्नेयादीनि षट् । **एकेन** यजेतेतिशब्देन । **तन्त्रेण** युगपत् । ननु प्रधानविधिविधेयत्वादङ्गानां पृथग् विहितत्वमसिद्धम् । अङ्गविधीनामुत्पत्तिमात्रपरत्वादित्याशङ्कायामाह—**तेषां हीति** । अन्यथा बाधकमाह—**असतीति** । तदुद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वं हि तदङ्गत्वमिति भावः । अत्र भाष्यसम्मतिमाह——**उक्तं हीति** । भाष्यकृतेति शेषः । **कश्चिदिति** । तन्त्रेण सर्वाभिधायक इत्यर्थः । ननु यथाऽऽग्नेयादीनां फलैक्यात्समुच्चयस्तथाङ्गानामपि स्यादित्याशङ्कां परिहरन्नुपसंहरति—**तस्मादिति** । दृष्टान्तेन पृथग् विधित्वमेव विकल्पप्रयोजकमेकपशुफलकत्वेऽपीत्युक्तम् । द्वितीयपूर्वपक्षमाह—**सत्य-**

मिव भाष्ये दर्शितम् । अधिकरणान्तरत्वे त्वनेनैव सूत्रेण विकल्पपक्षो वक्तव्यः स्यात् । न चानेन विकल्प उच्यते । 'प्राप्तेषु चोत्तरावत् स्यादि'ति समुच्चयस्याप्यस्यनुज्ञानात् । तस्मान्नाधिकरणान्तरम् ।

सिद्धान्तस्तु युक्तं चित्रादीनां नैरपेक्ष्यम्, तेषु हि प्रतिवाक्यं भेदेन कामपदं श्रूयते । समिदादिषु तु यद्यपि 'प्रतिवाक्यं विधिश्रवणात्फलापेक्षोपजायते । फलन्तु न प्रतिवाक्यं श्रूयते, प्रधानभावनया ह्येषां फलाकाङ्क्षाणां कथम्भावाकाङ्क्षिण्या सहेत्थम्भावेन सम्बन्धः । सा च सकृदुपात्ता सर्वैरङ्गैरगृह्यमाणविशेषैर्विशिष्टा युगपत्प्रधानविधिना विधीयत इति सिद्धः समुच्चयः । यद्यपि च प्रत्येकं विधिः श्रूयते, तथाऽप्यंशत्रयालाभादसावुदास्ते । भाव्यांशस्तु विध्यवगमबलादेव पुरुषार्थरूपोऽपेक्ष्यते । एतावानेव च तत्र विधेरुपयोगः, तदभावे धात्वर्थ एव भाव्यांशेऽपि निपतेत्, सत्यां च फलापेक्षायां प्रकृतभावनया युगपत्सम्बन्धात् तस्याश्च सर्वाङ्गविशिष्टाया युगपत्प्रधानविधिना विधानादङ्गानामपि तत एवानुष्ठानसिद्धेः,

---

मिति । विकल्पस्य अव्यवस्थितविकल्पस्य । फलभूमानुसारेण तु द्वित्र्यादिव्यवस्थेति न दोष इति भावः । अधिकरणान्तरत्वप्रतिभाने हेतुमाह—पक्षेति । प्राप्तेष्वङ्गेषूत्तरावत् 'तूष्णीमुत्तरा दोहयती'त्यत्र सकलगोदोहनवदिति समुच्चयबोधकसूत्रशेषः । दृष्टान्तवैषम्यपूर्वकं सिद्धान्तमाह—युक्तमिति । अयमर्थः—चित्रोद्भिदादिवाक्यभेदेन पशुकामादिपदश्रवणात्प्रतिवाक्यं विधिपर्यवसानादितरनिरपेक्षफलसाधनत्वागमान्न समुच्चयः । अङ्गविधिषु तु फलाश्रवणान्न विधिपर्यवसानं किन्तूभयाकाङ्क्षारूपप्रकरणेन प्रधानविध्येकवाक्यतया । प्रधानेतिकर्तव्यताकाङ्क्षा च सर्वाङ्गसाधारणीति खलेकपोतन्यायेन युगपत्सर्वेषामङ्गानामन्वयात्समिदाद्यङ्गोपकृतेन प्रधानेनेष्टं भावयेदित्येकस्यैव विनियोगस्यावगमादेकवाक्योपात्तानां समुच्चय इति । अङ्गविधीनान्तु फलाकाङ्क्षोत्थापकतया सार्थक्यम् । अन्यथा समिदादेरेव भाव्यत्वेन भावनान्वयापत्तेः । विध्यवरुद्धत्वे तु भावनाया इष्टफलकत्वनियमात्समिदादेस्तस्यां करणत्वेनैवान्वयात्फलाकाङ्क्षेति तत्सम्बन्धकल्पनेति ।

अन्ये तु विनियोगविधिभेदमङ्गीकृत्य प्रधानविधिबोधितप्रयोगैक्यमात्रेण समुच्चयमाहुः । तन्न समीचीनम्, निरपेक्षसाधनत्वेनावगतानामेकार्थानां प्रयोगविध्येकत्वमात्रेण समुच्चयाभ्युपगमे वैकल्पिकतया न्यायतः सम्मतेष्वपि समुच्चयप्रसङ्गात् ।

**तस्मिन्नंशेऽङ्गविधानामनुवादकत्वम्, सर्वविशिष्टविधानाच्च समुच्चयः ॥**
**इत्यङ्गानामेककार्यकरत्वाधिकरणम् ॥ २ ॥**

**३**

**कर्मण्यारम्भ० काम्यानां कर्मणामैन्द्राग्नसौर्यादीनां किं सकृदेव प्रयोगः ? उत भूयोभूयः फलमिच्छता भूयोऽपि प्रयोगः ? इति सन्देहे, सकृदिति ब्रूमः । कर्मणां हि फलं कालान्तरे जननीयम् । तच्च द्वारमपेक्षते । तत्रात्यन्तमदृष्टमपूर्वं तस्य कर्मजत्वं फलहेतुत्वं स्थायित्वञ्चेत्यनेककल्पनातो वरं कृतयागादात्मनः फलमिति कल्पितम् । आत्मनो हि सद्भावः स्थिरत्वं कर्मसम्बन्धश्च क्लृप्तः, केवलन्तु फलहेतुत्वं कल्पनीयम् । अतः कृतयागादात्मनः फलं सकृत्प्रयोगादेव चासौ कृतयागो जातः । पुनरपि प्रयुञ्जानस्य तस्य तावत्येव तु कृतयागता । न तस्य कश्चिदतिशय इत्यनर्थकः पुनः प्रयोगः । सकृदेव प्रयोग इति प्राप्ते ब्रूमः—**

**आत्मन्यतिशयः कश्चित्कृते कर्मणि नैव चेत् ।**
**प्रागवस्थासमानत्वादात्मनो न भवेत्फलम् ॥**
**आत्मस्वरूपहेतुत्वे ह्यकर्तुरपि तद्भवेत् ।**
**तस्मादतिशयः कश्चित्कर्मभ्यो जायते नरे ॥**

---

प्रयोजनं स्पष्टम् । सूत्रार्थस्तु-अङ्गानां विधायकशब्दभेदाच्चित्रोद्भिदादिक्रतुवत्फलान्यत्वम् निरपेक्षतया फलसाधनत्वमिति ॥

इत्यङ्गानामेककार्यकरत्वाधिकरणम् ॥ २ ।

३

**कर्मणि०** अत्र सङ्गतिमधिकरणान्ते स्वयमेव ग्रन्थकृद्वक्ष्यति । ननु सकृत्कर्मानुष्ठाने प्रथमोत्पन्नफलव्यक्त्यैव तदपूर्वनाशात्फलान्तरस्याभिलषितस्योत्पत्त्यसम्भव इति तदर्थं पुनः करणमावश्यकमित्याशङ्कां परिहरति—**कर्मणां हीति । कृतयागात्** यागकृत्युपलक्षितात् । एवं कल्पने लाघवं दर्शयति—**आत्मनो हीति** । सिद्धान्तमाह-**आत्मनीति** । अतिशयोऽदृष्टसंस्कारः । **प्रागिति** । तथा च तादृशादात्मनः फलाभ्युपगमे कर्मणः प्रागपि फलापत्तिरिति भावः । तदाह—**आत्मस्वरूपेति** । यागकृत्युपलक्षितात्मस्वरूपेत्यर्थः । **अकर्तुरपि** कर्माचरणात्प्राक् तत्कृतिशून्यादपि उपलक्षणापायेऽप्युपलक्ष्यानपायादिति

स च कार्यविरोधित्वात्स्वफलाप्तेर्विनश्यति ।
फलान्तरार्थं कर्त्तव्यं तस्मादतिशयान्तरम् ॥
स एवातिशयोऽस्माभिरपूर्वमिति गीयते ।
तस्माद् भूयः प्रयोक्तव्यं पुनः फलमभीप्सता ॥

कर्मभ्यः फलसिद्धिप्रकारे विकल्प समुच्चयरूपे चिन्तित, बहुफलसिद्धिप्रकारः सकृदसकृद्रूपश्चिन्त्यत इति सङ्गतिः ॥

इति काम्यकर्मणां भूयोऽभ्यासाधिकरणम् ॥ ३ ॥

४

क्रियाणामर्थं० दर्शपूर्णमासयोः श्रुतं 'व्रीहीनवहन्ती'ति । तत्र संशयः-किं सकृदेवोद्यमननिपातने कृत्वोपरन्तव्यम् ? उत यावत्तण्डुलनिष्पत्ति प्रयोक्तव्यमिति ? तत्रोद्यमननिपातनमात्रस्य शब्दार्थत्वात् तन्मात्रं विधीयते । विहितस्य च प्रयोजनकल्पनमित्यसत्यपि दृष्टेऽवघातमात्रमदृष्टार्थं कर्त्तव्यं सर्वौषधावहन्तिवत् ।

स्यादेवं, यद्यवघातं कुर्यादिति विधीयेत । अवघातेन तु समीहितं

---

भावः । न च यागध्वंसविशिष्टस्यात्मनः फलजनकत्वमिति वाच्यम् । तथा सति विकृतौ प्रयाजादिध्वंसविशिष्टादात्मन एव करणोपकारसम्भवेन प्रयाजाद्यनुष्ठानाभावप्रसङ्गात् । **कार्यविरोधित्वादिति** । कार्यं विरोधि यस्य तत्वादित्यर्थः । फलनाश्यत्वादिति यावत् । सङ्गतिं दर्शयति—**कर्मभ्य इति** । तथा च प्रसङ्गरूपानन्तरसङ्गतिरित्यर्थः । सूत्रार्थस्तु-कर्मणि प्रत्यारम्भं प्रति प्रयोगं फलानि स्युः । कुतः ? कृषिवदारम्भभाव्यत्वाद्यत्नसाध्यत्वादिति ॥

इति काम्यकर्मणां भूयोऽभ्यासाधिकरणम् ॥ ३ ॥

४

**क्रियाणाम्०** अवघातादीनां दृष्टार्थत्वस्य द्वितीयाध्यायसिद्धस्य प्रयोजनं तन्त्रप्रसङ्गादिहोच्यते । एवमग्रेऽपि द्रष्टव्यम् । शेषं सुगमम् ॥

इत्यवघातादीनामातण्डुलनिष्पत्तेरभ्यासाधिकरणम् ॥ ४ ॥

साधयेदिति विधिः । समीहितश्च दृष्टे सम्भवति नादृष्टं कल्पयितव्यम् । सम्भवति चेह क्रत्वपेक्षिततण्डुलनिर्वृत्त्यर्थतावघातस्येति तदेव प्रयोजनम् । तच्चानभ्यस्तेनाशक्यमिति प्रयोजनवशादश्रुतोऽभ्यासः कर्त्तव्यः । सर्वौषधावघाते तु दृष्टार्थासम्भवाददृष्टार्थं शब्दार्थमात्रं कर्त्तव्यम् । सकृदसकृद्विचारप्रसङ्गात्सङ्गतिः । एवमुत्तरत्रापि ॥

इत्यवघातादीनामातण्डुलनिर्वृत्तेरभ्यासाधिकरणम् ॥ ४ ॥

५

क्रतुवत्० फलभूमार्थिना कर्माणि पुनः पुनः प्रयोक्तव्यानीति स्थिते, चिन्त्यते—किमेकस्मिन्प्रयोगेऽङ्गानि पुनः पुनः प्रयुञ्जानस्य फलभूयस्त्वं भवति ? नेति ? तत्राभ्यस्यमानान्यङ्गानि बहूनुपकारान् जनयन्ति, बहूपकारयुक्तश्च प्रधानं फलभूयस्त्वाय भवतीति मन्वानस्योत्तरम् समग्रकारणावृत्त्या हि कार्यमावर्तते, प्रधानश्च साङ्गफलसामग्री नाङ्गमात्रम् । अतः तन्मात्रावृत्त्या न भूयः फललाभः । न चोपकारभूयस्तया फलभूयस्त्वं प्रमाणाभावात् । न चात्राङ्गाभ्यासः शास्त्रीयः । न चाशास्त्रीयेण प्रयासगौरवेण फलभूमा शक्यते कल्पयितुम् । अतः फलभूमार्थिना साङ्गं प्रधानमभ्यसितव्यम् नाङ्गमात्रं नापि प्रधानमात्रम् ॥

इत्याङ्गानां सकृदनुष्ठानाधिकरणम् ॥ ५ ॥

---

५

क्रतुवद्वा० फलभूमशब्देन फलनानात्वमभिमतं फलातिशयो वा । तत्राद्ये दोषमाह—समग्रेति । साङ्गेत्यर्थः । द्वितीयमाशङ्क्य परिहरति—न चेति । फलभूयस्त्वम् फलातिशयः । प्रमाणाभावमेव विवृणोति न चात्रेति । तस्मान्नाङ्गप्रधानाभ्यासादेव फलनानात्वरूपस्तद्भूमा नान्यतराभ्यासादित्युपसंहरति—अत इति । क्रतुदृष्टान्तकानुमानेनाङ्गाभ्यासेऽपि फलभूमा स्यादिति सूत्रार्थः ॥

इत्यङ्गानां सकृदनुष्ठानाधिकरणम् ॥ ५ ॥

६

बहुवचने० 'वसन्ताय कपिञ्जलानालभेत' इत्यादिषु बहुवचनेषु किं त्रयाणामेवालम्भः ? उत त्रिप्रभृतीनामसङ्ख्यानाम् ? इति सन्देहे बहुवचनस्य सर्वत्र वृत्तेः सर्वसङ्ख्यानां शास्त्रार्थत्वं शास्त्रीयाच्च प्रयासगौरवात्फलभूयस्त्वमविवादमतो यावदुत्साहं नानासङ्ख्योपादनम् । नैतदेवम् बहुत्वमात्रं हि शब्दार्थः । न तु 'षड् देया, द्वादश देये' त्यादिवत्सङ्ख्याविशेषाणां भेदेन शास्त्रमस्ति यद्बलात्फलभूयस्त्वं कल्प्येत । यो हि त्रीनालभते यश्च सहस्रं तयोरुभयोरपि बहुत्वसम्पादनमविशिष्टम् । यत्तु विशिष्यते सहस्रादि तदशास्त्रीयम् । न चाशास्त्रीयं गौरवं फलभूयस्त्वं कल्पयितुमलम् । एवञ्च त्रीननालभ्य चतुर्णामालम्भासम्भवादवश्यं त्रय आलब्धव्याः । तावता च सिद्धे शास्त्रार्थे नाधिकालम्भं तावच्छास्त्रं कल्पयति । निवृत्तव्यापारे च विधौ, 'न हिंस्यादि'ति निषेधशास्त्रं प्रवर्त्तते इत्यधिकानालम्भः ॥

इति कपिञ्जलाधिकरणम् ॥ ६ ॥

---

६

बहुवचनेन० पूर्वपक्षमाह--बहुवचनस्येति । सर्वत्र च वृत्तिर्नानार्थन्यायेन वा । तदनौचित्यात् द्वित्वाधिकसङ्ख्यात्वसामान्येनैकैव वेति बोध्यम् । शास्त्रीयाच्चेत्यनेन पूर्वप्रत्युदाहरणरूपेण शङ्कनात्सङ्गतिः सूचिता । कथं तर्हि 'षड् देया द्वादश देया' इत्यादौ फलभूमेत्याशङ्क्य तद्वैषम्यमाह--न त्विति । शास्त्रम् बोधकं वचनम् । प्रकृते तु बहुत्वमात्रं शास्त्रीयं तस्य च त्र्यालम्भनेनापि सम्पत्तेर्नाधिकानुष्ठाने विशेषः सहस्रादेर्विशिष्या शास्त्रीयत्वादित्याह--यो हीति । नन्वेवमप्यधिकालम्भेऽपि न शास्त्रार्थहानिरत आह--एवञ्चेति । आवश्यकप्रथमत्रित्वातिक्रमे कारणाभावादव्यवस्थितशास्त्रार्थायोगाच्च त्रित्वविशिष्ट एव बहुवचनतात्पर्यनिर्णयान्नाधिकालम्भः शास्त्रतात्पर्यविषय इति भावः । अधिकालम्भे दोषान्तरमपि प्रकृतोदाहरणे दर्शयति--न हिंस्यादिति । इयश्चाभ्युच्चययुक्तिः । ब्राह्मणान् भोजयेदित्याद्यव्यापकत्वादिति ध्येयम् । सूत्रं स्पष्टार्थम् ॥

इति कपिञ्जलाधिकरणम् ॥ ६ ॥

७

**उत्तरासु०** सान्नाय्यदोहाधिकारे श्रूयते—'वाग्यतस्तिस्रो दोहयित्वा, विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयती' इति। तत्र किमुत्तरासान्तिसृणामेव दोहः? उत यावत्यो यजमानस्य गावः तासां सर्वासामिति? संदेहे, पूर्ववत्तिसृणामेव। न च यावत्स्वं दोहनं साक्षात्केनचिद्विहितं येन सर्वासां दोहनं स्यात्। येन 'चोत्तरा दोहयती'त्यनुवादः स्यात्। अतो विधिरेवायमिति तिसृणामेव दोहः। नैवम्, 'नास्यैतां रात्रिं कुमारा अपि पयो लभेरन्नि'त्यनेन वचनेन कृत्स्नस्यापि पयसो हविष्ट्ववचनात्प्राप्तमेव सर्वासां दोहनम्। न हीदं कुमाराणां पयः प्रदानप्रतिषेधपरम् अदृष्टार्थत्वप्रसङ्गात् अपिशब्दानर्थक्यप्रसङ्गाच्च। तस्मात्सर्वासां दोहः॥

इत्युत्तरादोहाधिकरणम्॥ ७॥

८

**प्रधानकर्मार्थ०** उपोद्घातप्रसक्तानुप्रसक्तादि गतम्। इदानीं लक्षणार्थं तन्त्रावापं विचारयामः। दर्शपूर्णमासयोः षट् प्रधानकर्माणि

---

७

**उत्तरासु०** अपवादसङ्गतिं सूचयन् पूर्वपक्षमाह—**पूर्ववदिति**। **यावत्स्वम्** स्वकीयगोमर्यादम्। सिद्धान्तमाह—**नास्यैतामिति**। अस्य कुमारा इत्यन्वयः। श्रुतिवशेनादृष्टार्थताऽपि स्यादत आह—**अपिशब्देति**। एवञ्च नास्यैतामित्यनेन लक्षणया सकलगोदोहनविधिः गोत्रयदोहनोत्तरकालश्चानन्वारम्भविधानं 'उत्तरा दोहयती' त्यनुवादः। एवं 'बहु दुग्धीन्द्रायेति वाचं विसृजती'ति वाग्विसर्गोऽपि प्राप्त एवानूद्यते। तथा तूष्णीं भावोऽपि मन्त्रविध्यभावादेव प्राप्तोऽनूद्यत इति ज्ञेयम्। प्रयोजनं स्पष्टम्। सूत्रार्थस्तु-उत्तरासु यावत्स्वं दोहनमिति शेषः। कुतः? अपूर्वत्वात्। अनुवादतया त्रित्वस्याविहितत्वादिति॥

इत्युत्तरादोहाधिकरणम्॥ ७॥

८

**प्रधान० उपोद्घातेति**। आग्नेयादीनां षण्णां संहत्य फलसाधनत्वसाधकं प्रथमाधिकरणमङ्गतन्त्रत्वसिध्यर्थमुपोद्घातरूपं तत्प्रसक्तानुप्रसक्तान्यङ्गविकल्पसमुच्चयादि-

पौर्णमास्यां त्रीणि, अमावास्यायाञ्च त्रीणीति । तत्र देश-काल-कर्तॄणां तन्त्रत्वं वक्ष्यते । तेनैकस्यामेव पौर्णमास्याम् एकस्मिन्नेव देशे तैरेव कर्तृभिस्त्रीण्याग्नेयादीनि तदङ्गानि च कर्त्तव्यानीति स्थिते, चिन्त्यते—किं त्रयाणामप्याग्नेयादीनां प्रधानानां भेदेन प्रयाजाद्यङ्गानि कर्त्तव्यानि ? उत सकृदेवेति ? तत्र—

भेदेन विनियुक्तत्वाद् भेदेनैव क्रिया भवेत् ।
कथम्भावस्य भिन्नत्वाद्भेदेन विनियोगधीः ॥

षडप्याग्नेयादिभावनाः साध्यसाधनांशयुक्ता उत्पत्तिप्रयोगवाक्याभ्यामवगताः परस्परानपेक्षा एव कथमितीत्थं भावं भेदेनैवापेक्षन्ते । तद्वशाच्च सन्निधिसमाम्नातान्यङ्गानि प्रत्येकमेव तासु विनियुज्यन्ते, विनियोगानुसारेण चानुष्ठानम् । तस्मादेकैकं स्वाङ्गयुक्तं कर्त्तव्यमिति प्रत्येकं साङ्गं कृत्वा अपरमपि तथैव कर्त्तव्यमिति प्राप्ते ? ब्रूमः—

सत्यं प्रत्येकमङ्गानां विनियो स्तथापि तु ।
विधानवदनुष्ठानं सकृदेवोपकारकम् ॥

यथैव हि षट्सु भावनासु त्र्यंशविशिष्टासु विधित्सितासु साध्यसाधनांशप्रतिपादनेन प्रकृतासु प्रक्रान्तासु तृतीयमंशं कथम्भावं भेदेनैवापेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविधयः षण्णामपि प्रत्येकमङ्गानि समर्पयन्ति । सत्यपि च कस्यचित्प्रधानोत्पत्तिविधिसंनिधौ प्रकरणवशेन

---

चिन्तनातीत्यर्थः । वक्ष्यते अनन्तरपादाद्ये । पूर्वपक्षमाह—**भेदेनेति** । आग्नेयादिप्रधानेषु समिदादिभिराग्नेयस्योपकुर्यादिति रीत्या **भेदेन** समिदादीनां विनियोगाद् **भेदेनैव**-आवृत्त्यैव **क्रिया** अनुष्ठानं भवेदित्यर्थः । ननु समिदादिभिर्दर्शपूर्णमासयोरुपकुर्यादिति सहितेष्वेव विनियोगस्स्यादित्याशङ्क्याग्नेयादिभावनानां प्रत्येकमितिकर्तव्यताकाङ्क्षावशात्प्रत्येकमेव विनियोग इति परिहरति—**कथमिति** । श्लोकं व्याचष्टे—**षडपीति** । उत्पत्तिप्रयोगयोरर्थतो विपरीतक्रमेण साध्यसाधनांशान्वयः । सिद्धान्तमाह—**सत्यमिति** । **प्रत्येकम्** प्रतिप्रधानम् । **विधानवदिति** । यथा सकृदेवाङ्गाम्नानं सर्वार्थं तथैवानुष्ठानमपीत्यर्थः । एतदेव विवृणोति—**यथैव हीति** । साध्यसाधनांशप्रतिपादनेन **प्रकृतासु** बुद्धिस्थासु **तृतीयमंशं कथम्भावं प्रक्रान्तासु** गृहीतुमुद्यतास्वित्यर्थः । **कस्यचित्**

सन्निधिर्बाध्यते, तथैव संहतानाम्प्रधानानां फलसाधनत्वात्कर्तृदेशकालैक्याच्च युगपत्सर्वेष्वनुष्ठातुं प्रारब्धेषु सकृत्कृतमेवाङ्गं सर्वचिकीर्षया कृतत्वात्सन्तमपि केनचित्सन्निधिं बाधित्वा, अनुष्ठानक्रियाप्रारम्भाख्यप्रकरणवशेन सर्वार्थं भवतीति न पुनः क्रियायां प्रयोजनमस्ति। किं च 'पौर्णमास्यां पौर्णमास्या यजेते'ति युगपदनुष्ठानं त्रयाणामवगतं पृथक् पृथक् स्वाङ्गेष्वनुष्ठीयमानेषु बाध्येत। तस्मादेकदेशकालकर्तॄणां तन्त्रमङ्गानीति सिद्धम् ॥

इत्याग्नेयादिष्वाघारादीनां तन्त्रेणानुष्ठानाधिकरणम् ॥ ८ ॥

९

व्याख्यातं० 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्द्धमानः इति श्रुतम्। तत्राग्नेययोरनुष्ठानं तन्त्रम्, पृथग्वेति संशये, तन्त्रमिति ब्रूमः। भवति हि तन्त्रेणानुष्ठानं द्रव्यदेवतैक्यात्।

---

अङ्गस्य। तथा च न सन्निहितमात्राङ्गत्वमपि तु सर्वप्रधानार्थत्वमित्यर्थः। दार्ष्टान्तिकं प्रकृतमाह—तथैवेति। **सर्वचिकीर्षया** सर्वार्थचिकीर्षया। अनुष्ठानरूपक्रियायाः **प्रारम्भाख्यं** अधिकाराख्यं **प्रकरणं** तद्वशेनेत्यर्थः। अयं भावः—एकदेशकालकर्तृकत्वादगृह्यमाणविशेषत्वात्सकृदनुष्ठितैरेव सर्वोपकारसिद्धिरिति। नन्वेकस्मिन् प्रयोगे कथमनेकोपकाररूपफलोत्पत्तिरत आह—**किञ्चेति**। **त्रयाणाम्** साङ्गानामिति शेषः। साङ्गप्रधानानां साहित्येन फलसाधनतायाः एकपदोपादानेनावगमादगृह्यमाणविशेषत्वाच्च सकृदेव सर्वार्थमङ्गानुष्ठानम्। साङ्गप्रधानमेकं कृत्वा पुनः साङ्गापरप्रधानानुष्ठाने साहित्यबाधपत्तेरित्यर्थः। एकप्रयोगे चानेकोपकारव्यक्तीनामुत्पत्तिः साहित्यान्यथानुपपत्तिः प्रमाणिकीति न विरोध इति भावः। प्रयोजनं स्पष्टम्। सूत्रार्थस्तु-अङ्गानां प्रधानकर्मत्वात्प्रधानार्थानुष्ठेयत्वात्तद्भेदादनुष्ठानावृत्तिः प्रधानप्रयोगे स्यादिति ॥

**इत्याग्नेयादिष्वाघारादीनां तन्त्रेणानुष्ठानाधिकरणम् ॥ ८ ॥**

९

**व्याख्यातम्०** पूर्ववदगृह्यमाणविशेषत्वस्य सम्प्रतिपन्नदेवताकत्वेन सत्वात्क्वचि-

न च पाठक्रमात् क्रमेणानुष्ठानम्, अवश्यंभाविनि हि क्रमे पाठान्नियमः। सम्भवति चेह कृत्स्नानुष्ठानमिति, न क्रमापेक्षा। तस्मात्तन्त्रम्।

नैवम्, यद्यप्याग्नेययोस्तन्त्रता सम्भाव्येत, तथापि सौम्येन तावदवश्यंभावी क्रमः। तत्र पाठवशादेकस्याग्नेयस्य सौम्यात्पूर्वमनुष्ठानं उत्तरस्यततः पश्चात्। सहानुष्ठानेऽवश्यंभाव्यन्तरस्त सौम्येन यः क्रमः, स बाध्येत। तस्मात्पृथगेवानुष्ठानम्॥

इति कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम्॥ ६॥

इति महामहोपाध्याय श्रीपार्थसारथिमिश्रकृतायां शास्त्रदीपिकाया-मेकादशस्य प्रथमः पादः॥ १॥



त्प्रधानयोस्तन्त्रत्वावगतेर्न क्रमनियमानपेक्षितत्वादित्यर्थः। सिद्धान्तमाह—**नैवमिति**। सौम्येन सह कीदृक् क्रमस्तं दर्शयति—**तत्रेति**। अत्राग्नेये सौम्यपूर्वत्वोक्त्या सौम्ये आग्नेयानन्तर्यरूपः क्रमोऽभिप्रेतः। उत्तरपदार्थे पूर्वपदार्थानन्तर्यस्यैव प्रायेण विधानात्। एवञ्च सौम्ये आद्याग्नेयानन्तर्यस्याग्नेये द्वितीये सौम्यानन्तर्यस्य चावगमात्तन्त्रतायां तद्बाध इत्यर्थः। **बभ्रुः** पिंगलवर्णः। **अवश्यमिति**। क्रमापेक्षायां हि पाठादिना तन्नियमः क्रियते। प्रकृते तु दधिपयोयागवन्न्यायतस्तन्त्रत्वप्रसक्तौ तदपवादात्सङ्गतिः। तत्र सौम्यात्पूर्वमाग्नेययोस्तन्त्रानुष्ठाने तत्र सौम्योत्तरत्वबाधः सौम्यानन्तरं तदनुष्ठाने तु सौम्ये आग्नेयानन्तर्यस्य बाध इति। नचैवं दधिपयोयागवदत्राप्याग्नेयसौम्ययोर्न क्रमविधिरिति वाच्यम्। दधिपयोयागयोः पाठक्रमस्यावर्जनीयतयान्यथासिद्धत्वेन क्रमाकल्पकत्वेऽपि सौम्याग्नेयपाठक्रमस्यानन्यथासिद्धतया क्रमकल्पकत्वात्। अन्यथाग्नेयद्वयस्याव्यवधानेन पाठःस्यादिति तन्त्रबाधकत्वमेव युक्तमिति। सूत्रप्रयोजने स्पष्टे॥

इति कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम्॥ ९॥

इति श्रीमत्तत्सद्वंशावतंसरामचन्द्रसूरिवरात्मज तत्सद्वैद्यनाथ-कृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां एकादशाध्यायस्य प्रथमः पादः॥



# अथ एकादशे द्वितीयः पादः

१

एकदेश० दर्शपूर्णमासयोर्देशः 'समे दर्शपूर्णमासाभ्यां यजेते'ति कालः 'पौर्णमास्यां पौर्णमास्यां यजेत, अमावास्यायाममावास्यया यजेते'ति, कर्त्तारः—'दर्शपूर्णमासयोश्चत्वारः ऋत्विजः' इति। किमेते देश-काल-कर्त्तारस्तन्त्रम्? उत भेदेनेति? किं यस्मिन्नेव समे यैरेव कर्तृभिर्यस्यामेव पौर्णमास्याम् आग्नेयः, तस्मिन्नेव समे तैरेव कर्तृभिस्तस्यामेव पौर्णमास्यां तैरेव कर्तृभिरग्नीषोमीयः? उत समान्तरे पौर्णमास्यन्तरे कर्त्रन्तरैरिति? तदर्थमिदं विचार्यते—किमुत्पत्तिवाक्यैः 'यदाग्नेयोऽष्टाकपालः' इत्यादिभिर्देशादिविधीनां सम्बन्धः? उत फलवाक्येन 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति। तत्र—

कर्मरूपेण सम्बन्धो देशादीनां फलस्य च।
उत्पत्तिविधिनैवातः सर्वेषामेकवाक्यता॥

त्रयाणामपि ह्यंशानां भावनयैव सम्बन्धः, न परस्परम्। अतो देशादिविधीनां फलवाक्यस्य च न मिथः सम्बन्धः। किन्तु फलवाक्यं देशादिवाक्यानि च सर्वाणि भावनोत्पत्तिवाक्येन सम्बध्यन्ते। उत्पत्तिवाक्येषु चाग्नेयादयोऽन्योन्यनिरपेक्षा एवावगता इति तथाभूतैः सम्बध्यमाना देशादयो निरपेक्षाणामेव भवन्ति इति। निरपेक्षोत्पन्ना

---

## द्वितीयः पादः

१

**एकदेश०** अत्र देशकालादितन्त्रत्वाक्षेपेणाङ्गतन्त्रत्वमपि प्रागुक्तमाक्षिप्य समाधीयत इति सङ्गतिः। तन्त्रत्वमेव विवृणोति—**किं यस्मिन्नेवेति**। पूर्वपक्षमाह **कर्मरूपेणेति**। देशादिवत्फलस्यापि भावनांशत्वान्न परस्परापेक्षा, किन्तु भावनाद्वारा यागादिकर्मणैवोत्पत्तिवाक्यावगतेन सम्बन्धस्तत्र च निरपेक्षतया कर्मणोऽवगतेस्तथाभूता-

अपि देशादिविधिषु पौर्णमास्यादिशब्दैः तन्त्रेणोक्ताः सहैवावगता इति साहित्येनैव फलसम्बन्धवद्देशादिसम्बन्धः कस्मान्न भवतीति चेत् न, विषम उपन्यासः। फलं प्रति गुणभूतानां युक्ता तन्त्राभिधानावगत-साहित्यविवक्षा, देशादींस्तु प्रति कर्मणां प्राधान्यादविवक्षितं साहित्यम्। तस्माद्यथा 'य इष्ट्या पशुना, सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वे'त्यस्मिन्वाक्ये तन्त्राभिहिताभिरपीष्टिभिः प्रत्येकमेव कालः सम्बध्यत इति नैकस्यामेव पौर्णमास्यां सर्वाः क्रियन्ते। तथाऽऽग्नेयादिभिः प्रत्येकमेव कालादीनां सम्बन्धादेकस्यां पौर्णमास्यामाग्नेयं कृत्वा, अपरस्यामग्नीषोमीयं इत्येवं षट्सु पर्वसु षड्यागाः कर्त्तव्याः। न चैवं फलवाक्यावगतसाहित्यबाधः, तत्र ह्येतावदधिगतमेकमेव फलं सर्वैः साध्यते, न प्रत्येकं फलस्य पृथक् निष्पत्तिरिति। न तस्य कालभेदाद्बाधः। यथा पौर्णमासीत्रिके अमावास्यात्रिके च द्वयोः पर्वणोः निष्कृष्यमाणेऽपि, न फलं प्रति साहित्यबाधः, तथा षण्णामपि निष्कर्षे द्रष्टव्यम्।

यदा चैवमुत्पत्तिवाक्यशेषत्वं कालादीनां तदोत्पत्तिवाक्ये प्रधान-मात्राणां निरङ्गानां विधानात्तन्मात्राणामेवामी कालादयः नाङ्गानां प्रधानदेशकालकर्तृकत्वम्। तानि तु कामं कालान्तरादिष्वपि कर्त्तव्या-नीति प्राप्ते ब्रूमः—

भावनोत्पत्तिवेलायां देशादिविधयो यदि।
तत एवं भवेत्ते तु फलवद्भावनाश्रयाः॥

यद्यपि भावनयैवाङ्गानां सम्बन्धः न परस्परं तथाऽपि नोत्पत्ति-वेलायामङ्गसम्बन्धः। सा हि प्रथमं भाव्यमपेक्षते, तल्लाभश्च फलवाक्ये।

---

नामेव देशादिसम्बन्धो न सहितानां साङ्गानां वेत्यर्थः। **अपरस्यामग्नीषोमीयमित्य-नन्तरं** कुर्यादिति शेषः। **नचैवमिति**। उक्तरीत्या पृथक् स्वस्वाङ्गयुक्तप्रधानानुष्ठाने इत्यर्थः। परिहरति—**तत्र हीति**। फलवाक्ये इत्यर्थः। एवं सत्यङ्गानामपि न प्रधान-कालकत्वमित्याह—**यदा चैवमिति**। सिद्धान्तमाह—**भावनेति**। अत्र च फलवाक्येन देशादिविधीनां सम्बन्धकथनं विधित्सितप्रयोगाकाङ्क्षोत्थापनार्थं चिकीर्षायाः फलसाधन-

तेन फलवाक्यावरुद्धानामुत्पत्तिवाक्यानामङ्गसम्बन्धः। फलवाक्ये च फलं प्रति विवक्षितसाहित्यानां विनियोगात्फलार्थिनां युगपत्सर्वेषु कर्त्तव्यतावगतिः। यस्यां हि बुद्धावाग्नेयः कर्त्तव्यतयोपस्थितः, तस्यामेवाग्नीषोमीयादयोऽपि, प्रयोगविध्येकवाक्यत्वात्। तेन सर्वेषु कर्त्तव्यतयाऽवगतेषु चिकीर्षितेषु च पौर्णमासीकालो विहित इति यैवैका पौर्णमास्युपात्ता, सैव गृह्यमाणविशेषत्वात्सर्वार्था भवति। तथा-देशः कर्त्तारश्च। तस्मात्तन्त्रम्। सौर्यादीनां पुनःपुनः पृथक्-पृथक् स्वफले विनियुक्तानां पृथगेव कर्त्तव्यतावगमः, नानाविधिविधेयत्वात्। तेन तैरन्योन्यनिरपेक्षैरेव 'य इष्ट्या पशुने'त्यादिकालः सम्बध्यत इति नास्ति तन्त्रता।

यदि पुनः कश्चिच्चित्राफलं सौर्यफलं च युगपदिच्छन् कर्म द्वयमपि सह चिकीर्षति, किमसौ तन्त्रेणैकस्मिन्नेव काले द्वयमपि प्रयुञ्जीत ? नेति ब्रूमः। यदा हि विधिवेलायां साहित्यं नावगतं तदाऽनुष्ठान-

---

ताज्ञानाधीनत्वात्। एकफलसाधनत्वेनावगतानामेकप्रयोगविधिविषयत्वसम्भवात्। फलभेदे 'य इष्ट्ये'त्यादिवदेकप्रयोगत्वासम्भवात्। तेन फलसाधनतया युगपच्चिकीर्षितानां देशादिसम्बन्धादगृह्यमाणविशेषत्वेन तन्त्रता। यद्यपि च देशादीनामप्राप्ततया विधेयत्वं तथाप्यनुपादेयतया तदुद्देशेन कर्मणामुपादानात्साहित्यविवक्षा। स्वरूपेण प्राप्तानामपि प्रयोगविधिविषयत्वात्। तृतीयया करणत्वेनोपात्तानां साङ्गत्वावगमाच्चाङ्गानामपि तत्कालदेशकर्तृकत्वसिद्धिः। वस्तुतस्तु-फलभावनायास्त्र्यंशायाः प्रयोगविषयत्वात्साङ्गानां सहितानाञ्च फलसामग्रीत्वमिति तदनुष्ठानरूपप्रयोगाकाङ्क्षित देशादयः साङ्गानां सहितानामेवाङ्गमिति ज्ञेयम्। अतएव 'सायमग्निहोत्रं जुहोती'त्यादौ तृतीयाविरहेऽपि साङ्गस्य तत्कालता। द्रव्यदेवतादेस्तु प्रयोगावयवरूपयागस्वरूपमात्रापेक्षितत्वात्तन्मात्राङ्गत्वमिति भेदः। प्रयाजादीनान्तु प्रथमातिक्रमकारणाभावादुत्पत्तिविधिवेवान्वय इति वदन्ति। उत्पत्तिविधावनुग्राहकाकाङ्क्षाविरहात्तु विनियोगरूपफलवाक्ये तेषामन्वयः। प्रयाजाद्युपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवमिति युक्तम्। य इष्ट्येत्यादि विधावेतद्वैषम्यमाह—**सौर्येति**। तत्र यच्छब्देन यथाप्राप्ततत्तत्प्रयोगानुवादेन कालमात्रविधानाद्विधिभेदेन च पृथगेव प्रयोगस्य तत्तद्विधितः प्राप्तेर्न कालतन्त्रतेति वैषम्यमित्यर्थः। फलभेदेऽपि युगपत्तदिच्छया सहचिकीर्षायां तन्त्रमाशङ्क्य परिहरति—**यदि पुनरिति**। अत्र च द्वयोरप्येकोपक्रमावसानत्वरूपकालैक्यवदितराङ्गतन्त्रत्वमपि शङ्काविषयः।

दशायामपि न लब्धुं शक्यते। कस्मात्? एकेन विधिना यावन्त्यङ्गप्रधानानि विधीयन्ते, तावद्भिर्यावान्कालो व्याप्यते तावत्यविक्षिप्तः समस्ताङ्गप्रधानप्रयोगः कर्त्तव्य इत्यवगमात्, सहप्रयोगे च तद्विरोधात्। एकेन तु विधिना फले सहचोदितानामाग्नेयादीनामेकोपक्रमोपसंहारत्वात्तादृशैः सम्बध्यमाना देशादयोगृह्यमाणविशेषता विधिवेलायामेव सर्वसम्बन्धितयाऽवगतास्तन्त्रं भवन्तीति विशेषः।

यदा चैवं प्रयोगवाक्यशेषत्वं कालादीनां तदाऽङ्गानामपि तत्कालत्वं सिध्यति। तथा हि-साध्यसाधनांशयुक्ताऽवगता भावना कथमितीत्थम्भावमपेक्षते। भावनागतश्च रूपविशेष इत्थम्भावः। अज्ञातरूपा च भावना कालादीनपेक्षते तेन प्रकारापेक्षायां भावनायान्तत्प्रकारत्वेन प्रयाजादिष्ववगतेषु सामस्त्यरूपेण भावनाख्ये व्यापारे प्रयोगापरपर्यायेऽवगते तच्छेषत्वेन कालादयो विधीयन्त इत्यङ्गानामपि त एव देशादयो भवन्ति। द्रव्यदेवतन्तु पुनर्न समस्तप्रयोगसम्बन्धित्वेन विधीयते, अनपेक्षितत्वाद् अयोग्यत्वाच्च। न ह्यन्यन्वाधानबर्हिस्तरणाद्यनुरक्तस्य प्रयोगस्य द्रव्यदेवतापेक्षा। नापि तन्निष्पत्तौ द्रव्यदेवतं समर्थं, किन्तु फलभावनावयवयागरूपनिष्पादनेन द्रव्यदेवतमपेक्षितत्वाद्योग्यत्वाच्च सम्बध्यते। तस्मान्न प्रधानसम्बन्धिद्रव्यदेवतमङ्गानां भवति। कालादयस्त्वाग्नेयादिकरणिकया भावनया समग्ररूपया सम्बध्यमानास्तदन्तर्गतानामङ्गानामपि भवन्तीति विशेषः॥

इति देशकालादीनां तन्त्रताधिकरणम्॥ १॥

---

**कस्मादिति**। भिन्नविधिविषयत्वेऽपि युगपच्चिकीर्षायां तन्त्रानुष्ठाने किं बाधकमित्याशयः। **अविक्षिप्तः** कर्मान्तरविक्षेपशून्यः। तथा च तत्तत्क्रमप्रयोगप्रांशुभावबाधापत्या वैगुण्यप्रसङ्ग एव तन्त्रताबाधक इति भावः। **रूपविशेषः** फलानुकूलव्यापारसामान्यरूपभावनाया विशेष इत्यर्थः। शेषमुक्तार्थम्॥

इति देशकालादीनां तन्त्रताधिकरणम्॥ १॥

२

इष्टि० दर्शपौर्णमासयोर्विभज्य पर्वद्वये प्रयुज्यमानयोरङ्गानि तन्त्रम्? उत प्रतित्रिकक्रमावर्तेरन्निति? संदेहे, तन्त्रमित्याह। कस्मात्? एककर्मत्वात्, षण्णामप्येकोपक्रमावसानत्वात्। तेन यदेव किंचिदङ्गमनुष्ठितं तदेव षट्सु चिकीर्षितेषु क्रियमाणमगृह्यमाणविशेषत्वात्तन्त्रं भवति। वचनात्तु एकोऽपि प्रयोगो विप्रकृष्यते। न तावताऽङ्गानामावृत्तिः पशुवत्। यथा पशुप्रयोगे 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने' इति विप्रकृष्यमाणेऽपि नाङ्गानामावृत्तिः, तथेहापीति प्राप्ते। ब्रूमः—

त्रिकद्वयस्य साङ्गस्य चोदना कालयोर्द्वयोः।
तेनाङ्गानामिहावृत्तिर्वपादीनां पशौ पुनः॥

यद्यप्येकफलत्वादेकप्रयोगत्वं षण्णां प्राप्तम्, तथाऽपि वाचनिकेन कालभेदेन प्रयोगभेदो भवति। 'पौर्णमास्यां पौर्णमास्या यजेते'त्यनेन हि यः पौर्णमासीकरणकः फलार्थो व्यापारः प्रत्ययवाच्यः, तदङ्गत्वेन पौर्णमास्यामिति पौर्णमासीकालो विधीयते, न पौर्णमासी यागमात्रे। तेनाङ्गानामपि यागकरणकफलक्रियान्तर्गतानां तत्कालता विहिता भवति। तथा अमावास्यायामपि साङ्गैवाऽमावास्या विधीयत इति द्वयोः कालयोरङ्गानामावृत्तिः। पशौ पुनर्वपाप्रचारादिमात्रस्य भिन्नकालस्य चोदना न पशुयागस्य। न च प्रचारार्थान्यङ्गानि विहितानि। तेन तत्र नावर्तन्ते।

---

२

इष्टि० आपवादिकी सङ्गतिः। **एककर्मत्वादिति**। अयं चैकोपक्रमावसानत्वे हेतुः। एककर्मत्वञ्च 'समे दर्शपूर्णमासाभ्याम्' 'दर्मपूर्णमासाभ्यां स्वर्गकाम' इत्येकविधि विषयत्वम्। **वचनात्** 'पौर्णमास्यां पौर्णमास्यये'ति वचनात्। **पुरोडाशेनेति** पशुयागविप्रकर्षविधायकवाक्यमध्यगतत्वान्निर्दिष्टम्। **साङ्गस्येति**। करणत्वेन निर्देशादिति भावः। **पशौ तु वपादीनां चोदनेत्यनुषङ्गः**। **प्रचारार्थानि** तत्तदभ्यासार्थानि। **अङ्गानि**

अत्र पुनः प्रधानकालभेदेनाङ्गानामावृत्तिः। एवं चातुर्मास्येषु राजसूये च द्रष्टव्यम् ॥

इति दर्शपूर्णमासयोः पर्वभेदेनाङ्गभेदानुष्ठानाधिकरणम् ॥ २ ॥

३

तथा० अस्त्यध्वरकल्पा नामेष्टिः 'आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यश्चरुः, आग्नावैष्णवमेकादशकपालं निर्वपेत्, मध्यन्दिने सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यश्चरुः, आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे, सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यश्चरुरि'ति। तत्र श्रूयते 'पुरा वाचः प्रवदितोर्निर्वपेदि'ति। तत्रकिमङ्गानि तन्त्रम्? उत त्रयाणामपि त्रिकानामर्थेन त्रिरङ्गान्यावर्तनीयानि? इति। तदर्थमिदं विचार्यते-'पुरावाचः प्रवदितोर्निर्वपेदि'ति किं सर्वनिर्वापस्यापकर्षः? उत प्रातःकालीनस्यैवेति? प्रकरणाविशेषात्सर्वनिर्वापस्यापकर्षः। ततश्च 'तदादि वाऽभिसम्बन्धादि'ति न्यायान्निर्वापान्तस्याग्न्यन्वाधानादेरङ्गकाण्डस्यापकर्षः। तच्चाङ्गकाण्डं वचनादन्य-

---

प्रयाजादीनि। तथा च प्रयाजादीनां सवनीयपरमापूर्वप्रयुक्तानां वपाप्रयोगविध्यपरिगृहीतानां सवनीयमहाप्रयोगविधिपरिगृहीतत्वान्नावृत्तिरित्याशयः। प्रकृते तद्वैषम्यमाह— **अत्र पुनरिति।** पूर्णमास्यादिपदेन प्रधाननिर्द्देशात्तदपूर्वार्थानां तदवान्तरप्रयोगविधिपरिग्रहात्प्रयाजादीनामावृत्तिरित्यर्थः। न चावृत्तेर्वैयर्थ्यम्, तत्तत्समुदायापूर्वोपयोगितया तदप्रसक्तेरिति भावः। **एवमिति।** चातुर्मास्येषु वैश्वदेवादिपर्वभेदेनाङ्गावृत्तिः, एवं राजसूयेऽपि कालभेदादित्यर्थः। सूत्रे ऐककर्म्यादिकमहाप्रयोगविधिपरिग्रहादित्यर्थः। प्रयोजनं स्पष्टम् ॥

इति दर्शपूर्णमासयोः पर्वभेदेनाङ्गभेदानुष्ठानाधिकरणम् ॥ २ ॥

३

**तथा स्यात्**० अत्रातिदेशिकी सङ्गतिः। अत्र प्रातरादिकालभेदेन त्रित्रिहविष्कं प्रयोगत्रयं 'यस्य भ्रातृव्यः सोऽनेन यजेते'ति फले विनियुक्तं बोध्यम्। **पुरेति।** वाचः प्रवदनात्पुरा पूर्वमित्यर्थः। 'तदादिवाभिसम्बन्धात्तादन्तमपकर्षे स्यादि'ति पाञ्चमिकं

कालमेव प्रधानानामुपकारकमित्यगृह्यमाणविशेषत्वात्तन्त्रम् । अतश्च नवापि यागास्तन्त्रेणोपक्रान्ता भवन्ति । यथोपक्रमञ्च समापनमित्युत्तरेषामप्यङ्गानां तन्त्रत्वम् ।

स्यादेवं यदि निर्वापः सर्वेषामपकृष्यते ।
प्रातः कालिकमात्रस्य तद्विशेषोऽत्र चोद्यते ॥

प्रातः कालविशेषोऽयं पुरा वाचः इति विधीयते । तेन यस्य सामान्यतः प्राप्तिः तस्यैवायं विधीयते, नान्यकालस्याऽप्रधानकालत्वं चैवमङ्गानां चोदकप्राप्तं न बाधितं भवति । तस्मान्माध्यन्दिनापराह्णकालानां यागानामङ्गकाण्डं नापकृष्यत इति न सर्वेषां सहोपक्रमः । तस्मात्प्रातर्माध्यन्दिनापराह्णवर्तिनां प्रधानानामङ्गान्यपि तत्र तत्राऽऽवर्त्तनीयानीति तन्त्रभेदः ॥

इत्यध्वरकल्पायामङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ३ ॥

४

वसा० अग्नीषोमीये पशौ 'याज्यार्द्धर्चान्ते वसाहोमं जुहोती'ति श्रुतो वसाहोमश्चोदकपरम्परया प्राजापत्येषु पशुषु प्राप्तस्तन्त्रम्, आवापो

---

सूत्रम् । तदुक्तन्यायेन निर्वापोऽन्ते यस्य तादृशस्याग्न्यन्वाधानाद्यङ्गसमूहस्यापकर्षः बद्धक्रमत्वादित्यर्थः । स्यादेवमिति । तद्विशेषः प्रातर्विशेषः । नान्येति । प्राप्ताप्राप्तोभयविषयत्वे विधिवैरूप्यापत्तेर्नियमविधिलाघवाच्चेत्यर्थः । सूत्रार्थस्तु—अध्वरकल्पायां तथाङ्गवृत्तिः स्यात् । विशेषस्य निर्वापापकर्षस्य एककालत्वात् । प्रातः कालिकमात्रविषयत्वादिति ॥

इत्यध्वरकल्पायामङ्गानां भेदनानुष्ठानाधिकरणम् ॥ ३ ॥

४

वसाहोमः० आपवादिकी सङ्गतिः । एकत्वात् संसृष्टत्वात् । स्पष्टमन्यत् ॥

इति वसाहोमानां तन्त्रेणानुष्ठानाधिकरणम् ॥ ४ ॥

वेति संदेहे,सहश्रवणात् वसाया एकत्वादेकदेवतत्वाच्च याज्यार्द्धचान्तस्य चैकत्वात् तन्त्रं सकृत्कर्त्तव्य इति स्पष्टमेव शिष्यहितार्थमेवमुक्तम् ॥

इति वसाहोमानां तन्त्रेणानुष्ठानम् ॥ ४ ॥

५

कालभेदा० भिन्नदेवतेष्वपि पशुषु सहश्रपणश्रवणेन वसाया एकत्वाद्याज्यार्धर्चान्तभेदेऽपि यस्य कस्य चित् याज्यर्धर्चान्ते सकृदेव वसाहोमः स्यात् । नैवम् । सर्वे हि पशवः स्वयाज्यार्द्धर्चान्ते स्वस्या वसाया होमेन प्रतिपत्तिमपेक्षन्ते । भवति च वसाद्रव्यं तेन सर्वेषु याज्यार्द्धर्चान्तेषु भेदेन वसाहोमः सर्वपशुवसाप्रतिपत्तये कार्यः ॥

इति देवताभेद वसाहोमस्य भेदेनानुष्ठाधिकरणम् ॥ ५ ॥

६

अन्ते० अग्नीषोमीये पशौ यूपस्यान्तिके 'अग्निं मथित्वा यूपाहुतिं जुहोती'ति यूपाहुतिर्यूपैकादशिन्यां भेदेन कर्त्तव्या ? उत तन्त्रेण वेति ? संदेहे, तदन्तिकदेशानां भिन्नत्वात् वसाहोमवदावृत्तिः नैवम् ।

---

५

काल० अत्राप्यापवादिकी सङ्गतिः । भवति चेति । अस्ति चेत्यर्थः । तद्यागकालिकप्रक्षेपस्यैव तद्वसाप्रतिपत्तिरूपत्वादावृत्तिरिति निष्कृष्टार्थः ॥

इति देवताभेदे वसाहोमस्य भेदेनानुष्ठानाधिकरणम् ॥ ५ ॥

६

अन्ते० अत्र देशभेदाद् गृह्यमाणविशेषत्वेनावृत्तिप्राप्तावपवादात्सङ्गतिः ।

इति यूपैकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठानाधिकरणम् ॥ ६ ॥

आपेक्षिके ह्यन्तिकदेशे मन्थनं सम्भवति, तेन यं देशं प्राप्तो यूपसमीपं प्राप्तोऽस्मीति मन्यते, यत्र यूपो दृष्टिपथमापद्यते, तत्र मन्थनं होमश्च । स च सर्वेषामेकदेशः सम्भवतीत्यगृह्यमाणविशेषत्वात्तन्त्रम् ॥

इति यूपैकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठानाधिकरणम् ॥ ६ ॥

७

अवभृथे० 'अप्स्ववभृथेन चरन्ती'ति किं प्रधानमात्रमप्सु कर्त्तव्यम्? उताङ्गान्यपीति? संशये, 'मुख्यार्थो वाङ्गस्याचोदितत्वादि'ति न्यायेन वैकृतविशेषाणां प्रकृतावेव श्रुतानां केवलप्रधानार्थत्वात् उपांशुत्ववदापोऽपि प्रधानस्यैव, अङ्गानान्त्वाहवनीय एव क्रियेति प्राप्ते ब्रूमः—

'ता उपांशु कर्त्तव्याः' इति प्रधानक्रियायां विहितमुपांशुत्वं युक्तं यदङ्गेषु न भवति। देशस्त्ववभृथकरणिकायां क्रियायां श्रूयमाणस्तदन्तर्गतानामपि भवति। तस्मादङ्गप्रधानानामेकदेशत्वम् ॥

इति साङ्गस्यावभृथस्याप्स्वनुष्ठानाधिकरणम् ॥ ७ ॥

---

७

**अवभृथे०** इह देशतन्त्रतोक्तेरातिदेशिकी सङ्गतिः। **मुख्यार्थो वेति।** तार्तीयं सूत्रं 'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या' इति स्वरो मुख्यार्थः। अङ्गस्याशाब्दत्वेनाविहितत्वादिति तदर्थः। **देशस्त्विति। अवभृथेनेति** तृतीयानिर्देशाद्देशस्य च प्रयोगान्वयित्वात्तस्य च साङ्गस्यैव विधेयत्वादिति भावः। सूत्रार्थस्तु—अग्नेराहवनीयस्य विकाररूपोपदेशः प्रधानमात्रे स्यात्। नहि अब्देशसम्बन्धेऽग्निसंयोगो हेतुर्येन यत्र यत्राऽग्निसंयोगस्तत्र तत्राब्देश इति स्यादिति ॥

इति साङ्गस्यावभृथस्याप्स्वनुष्ठानाधिकरणम् ॥ ७ ॥

८

दक्षिणाग्नौ० वरुणप्रघासेषु विहारद्वयम् । द्वयोरप्याहवनीयो विभज्य स्थापितः । तत्र श्रूयते--'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतिमेव प्रतिप्रस्थाता दक्षिणस्मिन्नि'ति । तत्र विचार्यते-किं नवानामपि हविषां तन्त्रम् अङ्गानि ? उताग्नेयादीनामष्टानां मारुत्याश्चामिक्षाया भेदेनाङ्गानि कर्त्तव्यानीति ? तत्र 'प्रावृषि वरुणप्रघासैर्यजेते'ति प्रयोगवचनैक्यात्तन्त्रत्वम् । न च देशभेदः । आसादनमात्रं हि दक्षिणे विहारे मारुत्या विधीयते न होमः । तस्मात्प्रधानदेशाभेदात् तन्त्रमङ्गानि । नैवम्, न ह्यत्रासादनमपूर्वं विधीयते, किन्तु नवानामपि हविषां चोदकप्राप्तमासादनं होमश्च विहारद्वयेऽप्यव्यवस्थया प्राप्त उभयत्राहवनीयस्य स्थापितत्वादासादनं नियम्यते । वाक्यद्वयेन यथाप्राप्तस्य च नियमः, प्राप्तिश्च होमार्थतयेति तादृशस्यैव दक्षिणे विहारे विधानाद्धोमोऽपि दक्षिणस्मिन्नेव विहारे मारुत्याः । तस्मात्प्रधानदेशभेदादगृह्यमाणविशेषाण्यङ्गानि न तन्त्रं भवन्ति ।

सत्यं न तन्त्रमङ्गानि देशभेदात् तथापि तु ।
न पृथक् स्यादनुष्ठानं प्रसङ्गात्कार्यसिद्धितः ॥

ननु कर्तृदेशभेदे कथं प्रसङ्गः ? वक्ष्यत्यस्योत्तरं 'विकाराच्च न भेदस्यात्' 'अर्थस्याविकृतत्वादि'ति । तदिहाप्यर्थो विकृतः । तथा

---

८

दक्षिण० आपवादिकी सङ्गतिः । विहारेति । एको दक्षिणतो वेदिविहार अन्य उत्तरत इत्यर्थः । अष्टाविति । आग्नेयसावित्रपौष्णैन्द्राग्नपुरोडाशचतुष्टयं वारुणीमामिक्षां कायमेककपालं सौम्यं चरुं सावित्रं चरुमित्यष्टावित्यर्थः । मारुतीम् आमिक्षाम् । दक्षिणविहारे इत्यनन्तरमुत्तरविहारे चेति शेषः । मारुत्या इत्यनन्तरमितरेषां तूत्तरइति च शेषः । सकृदेकत्र कृतैरेवाङ्गैः प्रसङ्गादितरत्राप्युपकारलाभान्नावृत्तिरिति शङ्कते—सत्यमिति । वक्ष्यतीति । द्वादश इति शेषः । अर्थस्योपकारस्याविकृतत्वादविगुणत्वात् । उपकारस्यान्यतो लाभात्तज्जनकपदार्थानामनाक्षेपे तदङ्गदेशकर्त्रादि-

हि सर्वाणि तावदङ्गानि प्रधानानि चाऽध्वर्युकर्तृकाणि प्रतिप्रस्थातृकर्तृकाणि चोत्तरवैहारिकाणि दक्षिणवैहारिकाणि च यजमानात्मन्येव स्वापूर्वमुत्पादयन्ति। ततश्चोत्तरवैहारिकप्रधानोद्देशेनोत्तरस्मिन्विहारेऽध्वर्युणा कृतैरङ्गैर्यजमानात्मनि स्वापूर्वेष्वाहितेषु तदेकार्थसमवायलब्धसामर्थ्योद्बोधं मारुतीयागोत्पत्त्यपूर्वं दक्षिणवैहारिकमपि प्रतिप्रस्थातृकर्तृकमपि स्वकार्यं जनयतीति कृतमस्य स्वाङ्गैः पृथगनुष्ठितैः । अत्रोच्यते—

तन्त्रेऽन्यस्य समारब्धे यत्रान्यस्य विधिः श्रुतः ।
तत्र प्रसङ्गो न त्वत्र युगपत्सर्वचोदनात् ॥

यत्र हि प्रधाने चोद्यमानेऽन्यान्यङ्गानि प्रक्रान्तापरिसमाप्तान्यालोच्यन्ते, तत्र लाघवात्प्रयोगविधिरेव गुणकालाद्यन्यथाभावं कार्यपरतयाऽनादृत्य अन्यदीयमेव तन्त्रमुपजीव्य न स्वीयं तन्त्रं प्रयुङ्क्ते । इह पुनर्नवानामपि यागानां युगपच्चोदनाद्युगपदुपक्रमोऽवसानश्च । तेन सर्वेऽपि तेऽन्योन्यानपेक्षाः स्वाङ्गान्यात्मसमानदेशकालकर्तृकाणि प्रयुञ्जते । तेन मारुत्याः स्वाङ्गेषु दक्षिणे विहारे प्रतिप्रस्थात्रा कर्तव्यानीति गम्यमानेषु कथं तदनादरेणान्योपजीवनम् । तदुपजीवने हि यदस्य स्वाङ्गैः समानदेशकर्तृकत्वं चोदनावगतं तल्लोपे वैगुण्यादामिक्षायागो न फलसाधनम् । तस्मादुभयत्राङ्गानामावृत्तिः ॥

इति वरुणप्रघासेषु दक्षिणविहारे अङ्गानां पृथगनुष्ठानाधिकरणम् ॥ ८ ॥

---

वैगुण्याप्रसङ्गादित्यर्थः । तदेकार्थेति । अङ्गापूर्वैः सहैकस्मिन्नर्थे यजमानात्मनि समवायेन सम्बन्धेन लब्धः सामर्थ्योद्बोधः तदाख्य उपकारो येन तादृशमित्यर्थः । तन्त्र इति । अन्यस्य पश्वादेस्तन्त्रे प्रयोगे समारब्धे तन्मध्ये अन्यस्य पुरोडाशादेर्यत्र विधिः श्रुतस्तत्र प्रसङ्ग इत्यर्थः । युगपदुपक्रम इति । तथा च कस्य तन्त्रित्वं क्व प्रसङ्ग इति नियामकाभावान्न प्रसङ्गन्याय इत्यर्थः । न चाष्टानां बहुत्वात्तन्त्रत्वं मारुत्यास्त्वेकस्याः प्रसङ्गित्वमित्यस्ति नियामकमिति शङ्क्यम् । 'यदेवाध्वर्युः करोति तदेव प्रतिप्रस्थाते'ति वचनेन प्रसङ्गाभावप्रतीतेः न्यायस्य च समसङ्ख्यभिन्नदेशविषयत्वेन साफल्यादिति । सूत्रे विक्रियेत विशेषत आवृत्या क्रियेतेत्यर्थः ॥

इति वरुणप्रघासेषु दक्षिणविहारेऽङ्गानां पृथगनुष्ठानाधिकरणम् ॥ ८ ॥

९

कर्तृभेदस्तथेति० कर्तृष्विदानीं तन्त्रावापौ चिन्त्येते । तत्राध्वर्युप्रतिप्रस्थातारौ वचनात् विहारद्वये व्यवस्थितौ । ब्रह्मा होताऽऽग्नीध्रश्च किं विहारयोर्भेदेन ? उत तन्त्रमिति ? तत्र देशभेदेन प्रयोगयोर्भिन्नत्वात्प्रयोगाङ्गभूतानां कर्तॄणामपि भेदः—स्यात् । मैवम्, असत्यपि भेदे तैरेवोभयत्रापि कार्यसिद्धेः । दर्शिता च कार्यसिद्धिर्भाष्ये । वचनाच्च 'चातुर्मास्यानां पञ्चर्त्विजः' इति । विहारद्वयाभिप्रायं हीदं पञ्चर्त्विग्वचनम् । न ह्येकैकस्मिन्विहारे पञ्च पञ्च सन्ति । वचनादेव विहारद्वयेऽध्वर्युप्रतिप्रस्थात्रोर्विहारद्वये व्यवस्थितत्वात् । तस्मात्तन्त्रं ब्रह्मादयः ॥

इति वरुणप्रघासेषु होत्रादीनां तन्त्रत्वाधिकरणम् ॥ ९ ॥

१०

एकाग्नित्वा० ये पुनरापराग्निका होमाः पत्नीसंयाजादयः तेषु तन्त्रम् ? अवापो वेति ? सन्देहे, पौर्वाग्निकवद्देशभेदाभावात्तन्त्रत्वं

---

९

कर्तृ० कर्तृभेदापवादात्सङ्गतिः । दर्शिता चेति । विहारद्वयदक्षिणभागावस्थितेनैकेनैव ब्रह्मणा तन्त्रेणोभयोपकारसिद्धेः । एवमेकेनैव होत्रा गार्हपत्यपुरोभागावस्थितेनोभयोपकारसिद्धेः तस्यान्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्य इति वाक्येनार्द्धमन्तर्वेदीति न्यायेन लक्षणया गार्हपत्यपुरोभागस्यैव लक्षणया विधानादिति दर्शितेत्यर्थः । ननु भिन्नदेशस्थाग्निद्वयसम्मार्गाद्यनुरोधादाग्नीध्रभेदः स्यादत आह—वचनाच्चेति ॥

इति वरुणप्रघासेषु होत्रादीनां तन्त्रताधिकरणम् ॥ ९ ॥

१०

एकाग्नित्वात्० आपवादिकयेव सङ्गतिः । आपराग्निकाः अपरस्मिन् गार्ह-

स्यात्। असत्यपि देशभेदे कर्तृभेदात् भेदः। प्रतिप्रस्थातृकर्तृका हि मारुत्या उपकुर्वन्ति, अध्वर्युकर्तृकास्त्वितरेषाम्। तस्माद्भेदः॥

इत्यापराग्निकहोमानां भेदेनानुष्ठानाधिकरणम्॥ १०॥

११

पर्यग्नि० वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभते' इति। किमुत्सृजेदिति कर्मशेषप्रतिषेधः? आलभते इति कर्मान्तरविधिः? उतोत्सृजतीत्यनुवादः? आलभत इत्युत्कर्षविधिः? तत्र 'तान् पर्यग्निकृतानारण्यानुत्सृजती'तिवत् तदन्ताङ्गरीतिविधानात् तथैव प्राजापत्यानां नैराकाङ्क्ष्यान्न चोदकेनाङ्गान्तरग्रहणम्। अतः पर्यग्निकरणान्ताः प्राजापत्याः। 'ब्रह्मसामन्यालभत' इति 'आज्येन शेषमि'तिवत्कर्मान्तरमिति मन्वानस्योत्तरम्—

नान्यकर्मविधिर्युक्तोऽनेकादृष्टप्रकल्पनात्।
वाक्यभेदप्रसङ्गाच्च तस्मादुत्कर्षचोदना॥

पर्यग्निकरणानन्तरं प्राप्तस्यालम्भस्य ब्रह्मसामकाले उत्कर्षमात्रं

---

पत्याग्नौ भवाः। पौर्वाग्निकवत् पूर्वप्रदेशस्थित आहवनीयस्तत्र भवाः पौर्वाग्निकास्तद्वत्। शेषं सुगमम्॥

इत्यापराग्निकहोमानां भेदेनानुष्ठानाधिकरणम्॥ १०॥

११

**पर्यग्नि०** अत्रापि पर्यग्निकरणान्ताङ्गकाण्डस्य तन्त्रतोक्तेरापवादिकी सङ्गतिः। **ब्रह्मेति**। ब्रह्मसामाख्यस्तोत्रकाले माध्यन्दिनसवने। **कर्मान्तरेति**। 'सप्तदश प्राजापत्यान् पशूनि'त्यनुषङ्गेणेत्यर्थः। **अनुवाद इति**। आलम्भोत्कर्षविधिना तदादिवाभिसम्बन्धादिति तदाद्युत्कर्षन्यायेनोत्तराङ्गानामप्युत्कर्षादर्थप्राप्तत्वादित्यर्थः। **आज्येनेति**। 'आज्येन शेषं संस्थापयती'त्यत्राज्यं पात्नीवतं कुर्यादित्यनुषङ्गेण यथा कर्मान्तरं विधीयते तथाऽत्रापीत्यर्थः। आज्येनेत्यत्र कर्मान्तराविधाने तद्वाक्यानर्थक्यवदिहोत्कर्षविधानेन तदभावान्मन्वानस्येत्यस्वरससूचनम्। **वाक्यभेदेति**। सिद्धान्ते त्वनुवादतयोत्सर्गवाक्य-

विधीयते। तद्विधौ च प्राप्तः पर्यग्निकरणान्तो व्यापारोपरम इति तदनुवादमात्रमुत्सृजतिः। एवमत्यन्तलाघवलाभान्न कर्मान्तरवाक्यभेदाभ्युपगमो माध्यन्दिने सवने ब्रह्मसामाख्यस्तोत्रकाले युक्तः। तस्मात्पर्यग्निकरणान्तमङ्गकाण्डं सकृदेव कर्त्तव्यम्। न माध्यन्दिने पुनरावर्त्तनीयम्। पशवश्च नान्ये उपादातव्याः॥

इति ब्रह्मसामकाले प्राजापत्यालम्भोत्कर्षाधिकरणम्॥ ११॥

१२

पञ्चशारदी० अस्ति पञ्चशारदीयो नामाऽहीनः पञ्चाहः। तत्र श्रूयते—'वैशाख्याममावास्यायां सप्तदशमारुतीस्त्रिवत्सा अप्रवीता उपाकरोति, सप्तदश पृश्नीनुक्षणः, तान् पर्यग्निकृतान्प्रोक्षितानितरा आलभन्ते, प्रेतरानुत्सृजन्ति। ततः संवत्सरे राजीवा आनयन्ति, तांश्चैवोक्षणः, तान्पर्यग्निकृतानि'त्यादि पूर्ववत्। एवं तृतीये, चतुर्थे च संवत्सरे स्त्रीपशुयागानां सामस्त्येनानुष्ठानम्, उक्ष्णां च पर्यग्निकृतानामुत्सर्गमुक्त्वा तत्र श्रूयते—

---

स्योत्कर्षविध्यर्थवादत्वेनैकवाक्यतेति भावः। सूत्रे कर्मोत्सर्गः कर्मसमाप्तिः। श्रुतिसामान्यात् पर्यग्निकृतानारण्यानिति श्रुतिसाम्यात्। चोदनापृथक्त्वं कर्मान्तरत्वं स्यादित्यर्थः॥

इति ब्रह्मसामकाले प्राजापत्यालम्भोत्कर्षाधिकरणम्॥ ११॥

१२

पञ्च० अत्रोक्तवाक्येषु कर्मान्तरत्वोक्तेरापवादिकी सङ्गतिः। अस्तीति। 'यः कामयेत बहुस्यामि'ति 'स एतेन यजेते'ति फले विनियुक्तः सोमयाग इत्यर्थः। वैशाख्यामिति। विशाखानक्षत्रयुक्तायां कार्तिक्यनन्तरामावास्यायामित्यर्थः। मारुतीः मरुद्देवत्याः। त्रिवत्साः त्रिवर्षाः। अप्रवीताः अप्रसूताः। उपाकरोतीति निर्वपेदितिवदतिदेशप्राप्तोपाकरणानुवादः। मरुद्दैवत्यसप्तदशवत्सतरीद्रव्यकयागविधानं बोध्यम्। एवं पृश्नीनल्पशरीरानुक्षणः। सप्तदशमारुतानुपाकरोतीत्यनुषङ्गेणैकवाक्यतया चतुस्त्रिंशद्यागविधिरिति भाष्यकारः। भिन्नवाक्यतैवेति तु नव्याः। तानिति। प्रोक्षितानभिलक्ष्य इतरा वत्सतरीरालभन्ते। इतरानुक्षण प्रोत्सृजन्तीत्यर्थः। राजीवाः राजीववर्णा

'पञ्चमे वर्षे दीक्षित एतानुक्ष्णस्त्रींस्त्रीनन्वहमालभते, पञ्चोत्तमेऽहनी'ति। तत्रोक्षसु संशयः—किं य एव प्रथमवर्षे पर्यग्निकृता उक्षाण उत्स्रष्टव्याः, तेषामेव द्वितीयादिसंवत्सरेषु पर्यग्निकरणम्, पञ्चमे वर्षे तेषामेव पञ्चसु सुत्यासु त्रींस्त्रीनित्येवमालम्भः प्राजापत्यानामिव ? उत प्रथमे वर्षे उपक्रान्तानां पर्य्यग्निकरणान्ताङ्गरीतिविधानेन तत्रैव समाप्तिरारण्यवत् द्वितीयादिष्वन्ये अन्ये उक्षाणः। पञ्चमे वर्षे सुत्यासु अन्येषामुक्ष्णामालम्भ इति। तत्र 'त्रींस्त्रीनि'त्यनेन ब्रह्मसामालम्भवाक्यवत्तेषामेवालम्भोत्कर्षमात्रविधौ लाघवम्। वचनात्पर्यग्निकृतानामपि तेषां पुनः पुनः पर्यग्निकरणं क्रियते। उत्सर्गवचनानि चालम्भोत्कर्षादेव प्राप्तस्योत्सर्गस्यानुवाद इति प्राप्ते, ब्रूमः—स्यादेवं यदि त्रींस्त्रीनित्यनेनालम्भोत्कर्षः शक्यो विधातुम्, न त्वेवमस्ति। गुणवाक्यत्वे सति 'त्रींस्त्रीनिति च' अन्वहमिति चानेकार्थविधाने वाक्यभेदापत्तेः। तथा 'पञ्च' इति उत्तमेऽहनीति चार्थभेदो दर्शयितव्यः। तस्मादिदं तावत्सङ्ख्याकालविशिष्टापूर्वकर्मविधानम्। एवञ्चाविहिते सत्यालम्भोत्कर्षे प्राजापत्यन्यायासम्भवात् तदन्ताङ्गरीतिविधानेनारण्यन्यायेन प्रथमवर्षोपक्रान्तानामुक्ष्णां त्रिवत्सानामिव तत्रैव समाप्तिः। द्वितीयादिष्वपि वत्सरेषु अन्य एव स्त्रीपशुयागाश्च। एवं प्रतिसम्वत्सरं देवतानुषङ्गेण चतुस्त्रिंशत्कर्माणि। पञ्चमे चान्येषामेवोक्ष्णामालम्भः॥

## इति पञ्चशारदीयाधिकरणम् ॥ १२ ॥

---

वत्सतरीः। सप्तदशेत्याद्यनुषङ्गः। तांश्चैवेति। सप्तदशमारुतान्पृश्नीनित्यर्थः। **प्राजापत्यानामिवेत्यनन्तरं** ब्रह्मसाम्नीति शेषः। आरण्यवत् 'पर्यग्निकृतानारण्यानुत्सृजती'तिवत्। **वचनादिति**। तच्छब्देन पूर्वोपाकृतानामेव परामर्शादित्यर्थः। तदेतद्याज्ञिकमतं दूषयति **स्यादेतदिति**। **गुणवाक्यत्वे** आलम्भानुवादेन गुणविधायकत्वे। **त्रिवत्सानामिव**। तद्यागानामिव। तच्छब्दस्त्वतज्जातीयत्वार्थकः पृश्नित्वादि प्राप्त्यर्थ इति भावः।

इति पञ्चशारदीयाधिकरणम् ॥ १२ ॥

१३

दशपेये० राजसूयेऽभिषेचनीयो नाम सोमयागः । संसृपायां हवींषि ततः पुनर्दशपेयः सोमयागः । ताविमावभिषेचनीयदशपेयौ समानतन्त्रौ, भिन्नतन्त्रौ वेति संशये, 'सह सोमं क्रीणात्यभिषेचनीयस्य दशपेयस्य चे'ति वचनादभिषेचनीयसोमक्रयकाले दशपेयक्रयः प्रतिकृष्यते । स च प्रतिकृष्यमाणः प्राचोऽपि पदार्थान्प्रतिकर्षति 'तदन्तमपकर्षे स्यादि'ति न्यायात् । तस्मात्सहोपक्रमितव्यावभिषेचनीयदशपेयौ, यथोपक्रमं समापनमिति समानतन्त्रौ ।

मैवम् । उपसंवादमात्रमिह क्रीणातिनोच्यते, न त्वङ्गभूतः क्रयः । नन्वसौ क्रीणातेर्न मुख्यो वाचकः । परकीयस्य मूल्यं हि दत्वा स्वीकरणं क्रयः । न चोपसंवादमात्रस्यैवंरूपत्वमस्ति यद्यप्येवं तथाऽपि गौण्या वृत्त्या तस्यैवेदं साहित्यमुच्यते, वचनान्तरानुगुण्यात् । दशपेये हि श्रूयते 'सद्यो दीक्षयन्ति, सद्यः सोमं क्रीणन्ती'ति । तथाऽभिषेचनीयेऽवभृथदर्शनमत्यन्तानुपपन्नमेकतन्त्रत्वे स्यात् । तस्मादङ्गभूतक्रयापकर्षाभावान्न तदन्तापकर्ष इति न सहोपक्रमत्वम् । कालभेदात्तौ भिन्नोपक्रमावसानौ भिन्नतन्त्रावेवैतौ ॥

इति दशपेयाभिषेचनीययोर्भिन्नतन्त्रत्वाधिकरणम् ॥ १३ ॥

---

१३

दशपेये० । उक्षणामिवाभिषेचनीयदशपेयाङ्गानां न तन्त्रतेत्यभिधानादातिदेशकी सङ्गतिः । उपसंवादश्च—अयं सोमो मदीय एतन्मूल्यं दास्यामीति विक्रेत्रा संवादः । अत्यन्तेति । दीक्षाक्रययोरभिषेचनीयार्थं कृतत्वात्तन्त्रत्वे पुनर्वचनानुपपत्तिः । एवमवभृथस्य तन्त्रत्वे दशपेयान्त एवानुष्ठेयत्वादभिषेचनीये तद्वचनानुपपत्तिरित्यर्थः । सूत्रप्रयोजने स्पष्टे ॥

इति दशपेयाभिषेचनीययोर्भिन्नतन्त्रत्वाधिकरणम् ॥ १३ ॥

१४

निष्कास० वरुणप्रघासेषु 'वारुण्यामिक्षा, मारुत्यामिक्षे'ति श्रुतम्। तत्र पुनः श्रूयते—'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती'ति। तत्र संशयः—किं प्रधानस्यामिक्षायागस्यायं प्रचारविप्रकर्षः पशोरिव वपाहृदयादिभिः प्रातःसवनतृतीयसवनयोः ? उत निष्कासस्येयं प्रतिपत्तिः ? अथामिक्षानिष्कासद्रव्यकमवभृथधर्मकं कर्मान्तरं विधीयते ? इति। तत्र कृत्स्नस्यामिक्षाद्रव्यस्य प्रकृतयागशेषत्वात्, तदेकदेशे तस्या एव देवतायै वरुणाय दीयमानो न कर्मान्तरं युक्तम्। अवभृथशब्दस्तु देवतासामान्यादगौणोऽनुवादः। अवभृथोऽपि हि वारुणः। न चानुवादे गौणत्वं दोषः। सिद्धान्ते तु तद्धर्मककर्मविधौ विधावेव गौणत्वं स्यात्। तच्चायुक्तम्। तस्मात्तस्यैवायमभ्यास इति न स्विष्टकृदादेः पुनः करणम्। नैवम्, अवभृथशब्दानर्थक्यात्। न चार्थवत्त्वे सम्भवति, आनर्थक्यं युक्तम्। तस्मादवभृथधर्मकं कर्मान्तरविधानन्तु प्रयाजशेषाभिघारणवदामिक्षाशेषस्य प्रतिपत्त्यर्थम्। सत्यं कर्मान्तरम्। न तु प्रतिपत्तिः, अवभृथशब्दविरोधात्। अवभृथे हि द्रव्यं गुणतः, कर्म प्रधानतः। इह तु विपर्ययात्तद्भावानुपपत्तिः, तेन यस्यैवावभृथशब्दस्य प्रसादात्मकर्मान्तरमाश्रितम्, तेनैव प्रतिपत्त्यर्थ-

---

१४

**निष्कासस्य०** अङ्गतन्त्रावापप्रसङ्गात्प्रधानभूतामिक्षायागः सकृदुत प्रचारविप्रकर्षादावर्तत इति चिन्तनात्सङ्गतिः। **निष्कासः** पात्रसंलग्नशेषः। **तुषाः** पुरोडाशीय व्रीहिसम्बन्धिनः। **वपेति**। 'वपया प्रातः सवने चरन्त्यङ्गैस्तृतीय सवने' इति वाक्यादित्यर्थः। **उतेति**। अत्र निष्कासमात्रोपादानं तुषांशे अर्थकर्मत्वद्योतनार्थम्। तेषां निष्कासवत्सापेक्षत्वस्य किञ्चित्सम्बन्धितयाभिधानस्य चाभावादिति बोध्यम्। **अथेति**। अत्र निष्कासपदं तुषाणामप्युपलक्षणम्। आद्यपक्षमाह—**तत्रेति**। **देवतासामान्यात्** वरुणदेवताकत्वसाम्यात्। प्रयोजनद्वारेणापि आतिदेशिकसङ्गतिं सूचयति—**तस्मादिति**। आद्यपक्षदूषणपूर्वकं द्वितीयमाह— **नैवमिति**। सिद्धान्तमाह—**सत्यमिति**। ननु परकी-

तानिराकरणेनार्थकर्मता सिध्यति । वचनाच्चान्यादीयद्रव्यस्यैकदेशोऽन्यत्र विनियुज्यमानो न दुष्यति ॥

इति वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणम् ॥ १४ ॥

१५

उदयनीये० ज्योतिष्टोमे प्रायणीयश्चरुः, उदयनीयश्च । तत्र श्रूयते । 'प्रायणीयस्य निष्कास उदयनीयमनुनिर्वपती'ति । तत्र संशयः—किं प्रायणीयनिष्कासद्रव्यकम् उदयनीयधर्मकं कर्मान्तरं विधीयते ? किं वा प्रायणीयनिष्कासस्योदनीयनिर्वापसंयोगः प्रतिपत्तिः ? उत प्रायणीयनिष्कासे निर्वाप उदयनीयस्य संस्कारः ? इति । पूर्ववत्तद्धर्मककर्मविधिः, मुख्यस्यैव तूदयनीयस्येह प्रकृतत्वान्न प्रकरणान्तरन्यायेन तद्धर्मककर्मविधिः । तस्मात्प्रायणीयनिष्कासस्य कृतार्थस्येयं प्रतिपत्तिरुदयनीयनिर्वापसंयोगः । नैतदेवम्,

निष्कासस्य हि सप्तम्या गुणभावोऽधगम्यते ।
द्वितीयया प्रधानत्वमितरस्य स्फुटं श्रुतम् ॥

उदयनीयहविर्हि निरूप्यमाणं भाव्युपयोगित्वात्सुतरां संस्कारार्हम् ।

---

यस्य द्रव्यस्य कृतकार्यस्य प्रयोजनाकाङ्क्षाभावात्कथमन्यत्र गुणत्वमित्याशङ्क्याह—**वचनाच्चेति** । पूर्वपक्षसूत्रं स्पष्टार्थम् । प्रयोजनं तूक्तम् ॥

इति वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणम् ॥ १४ ॥

१५

**उदयनीये० ज्योतिष्टोम इति** । द्वितीयेऽह्नि प्रायणीयान्त्ये उदयनीय इत्यर्थः । **तत्रेति** । उदयनीयप्रकरण इत्यर्थः । **किमिति** । अत्र पक्षे उदयनीयधर्माणामावृत्तिः । सिद्धान्ते तु नेत्यापवादिकी सङ्गतिः । **किं वेति** । तथा च सप्तमीप्राधान्ये अगारे गावो वास्यन्तामिति वदिति भावः । **उतेति** । **उदयनीयस्य** उदयनीयहविषः । सिद्धान्तमाह—**नैतदिति** । तथा च शब्दस्वारस्याद्भाव्युपयोगित्वाच्चोदयनीयहविष

न च निष्कासस्य प्रयाजशेषवदुदनीयसंयोगात्किञ्चिददृष्टमस्ति । तस्माच्छब्दानुगुण्यादुदयनीयहविः संस्कारार्थः प्रायणीयनिष्कासनिर्वापः ॥

इत्युदयनीयनिर्वापस्यार्थकर्मताधिकरणम् ॥ १५ ॥

इति महामहोपाध्याय श्रीपार्थसारथिमिश्रविरचितायां
शास्त्रदीपिकायामेकादशस्य
द्वितीयः पादः ।



एव संस्कार्यतेत्यर्थः । प्रयाजशेषवैषम्यमाह—न चेति ।

इत्युदयनीयनिर्वापस्यार्थकर्मताधिकरणम् ॥ १५ ॥

इति श्रीमत्तत्सद्रामचन्द्रबुधवरात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्याया-
मेकादशस्य द्वितीयः पादः ।



## अथैकादशे तृतीयः पादः

१

अङ्गानां० प्रधानसमदेशत्वं प्रधानसमानकालत्वं चाङ्गानामुक्तम् । यत्र त्वाहत्याऽङ्गस्य भिन्नदेशकालत्वं वचनेनैवोक्तम् तत्र तथा भवतीति सुहृद्भूत्वोक्तवान् । नात्र निराकार्यमस्ति ॥

इति क्वचिदङ्गानां प्रधानान्यकालत्वाधिकरणम् ॥ १ ॥

२

द्रव्यस्य० 'वसन्ते ब्राह्मणोऽग्नीनादधीते' त्यनारभ्याधीतमप्याधानमग्निहोत्रादीनामङ्गमिति कृत्वा, चिन्त्यते—किमङ्गं सदाधानं प्रतिकर्म प्रयोगभेदेन कर्तव्यम् ? उत सर्वकर्मणां सर्वप्रयोगाणाञ्च तन्त्रेणेति ? तत्र—

प्रयाजादिवदङ्गत्वादावृत्तिः स्यात्प्रतिक्रियम् ।
आनन्तर्याद्विशेषश्च गृह्यतेऽतो न तन्त्रता ॥
स्वकालत्वात्तु तन्त्रत्वं विशेषाग्रहणाद्भवेत् ।
आनन्तर्याद्विशेषश्चेन्नाधानसमये ह्यसौ ॥

---

## अथ तृतीयः पादः

१

अङ्गानाम्० अत्र प्रतिप्रधानमङ्गावृत्त्यपवादेन तत्तन्त्रता पदार्थः । वचनेनेति । 'पूर्वेद्युरमावास्यायां वेदिं करोति' अप्स्ववभृथेन चरन्ती'त्यादिनेत्यर्थः ॥

इति क्वचिदङ्गानां प्रधानान्यकालत्वाधिकरणम् ॥ १ ॥

२

द्रव्यस्य० सिद्धान्तमाह—स्वकालत्वादिति । स्वतन्त्रविहितकालत्वादित्यर्थः ।

न हीदं कर्मणः प्रारम्भे मध्ये वा प्रयुज्यते, येन तदपवर्गे प्रयुज्येत। वाचनिको ह्यस्य वसन्तादिः स्वकालः, तेन तत्रैव स्थितं सर्वेषामुपकरोतीत्यगृह्यमाणविशेषत्वादिति तन्त्रम्। यदाऽऽधाने कृतेऽनन्तरं किञ्चित्कर्माऽऽपतति, तत्तदर्थमित्यानन्तर्येण विशेषो गृह्यत इति चेत्, नायमाधानसमयेऽस्ति विशेषः, तदा ह्येवमभिसन्धायासावाधत्ते यदेव किञ्चिन्निमित्तवशात् कामनावशाद्वा कर्त्तव्यं कर्मोपस्थास्यते, तदर्थमाधास्येऽग्नीनिति न तु कञ्चिदेव कर्मविशेषमभिसन्धायाऽऽधत्ते। एवमनभिसंहितकर्मविशेषेण सर्वोद्देशेनाधाने कृते यद्यपि किञ्चित्कारणवशात्प्रथमं कर्माऽऽपतति, तथाऽपि न तादर्थ्यमेव भवति, प्रथमावस्थायामेव सर्वार्थत्वावधारणात्। तस्मात्तन्त्रम्॥

इत्याधानस्य तन्त्रताधिकरणम्॥ २॥

३

यूपश्चाकर्म० ज्योतिष्टोमेऽग्नीषोमीये पशावुपदिष्टो यूपः सवनीयानुबन्ध्ययोस्त्वतिदिष्टः। स किं त्रयाणामपि पशूनां तन्त्रम्? उत प्रतिपशु भिन्नः? इति। तदर्थमिदं विचार्यते-'दीक्षासु यूपं छिनत्ती' ति किमग्नीषोमीययूपस्यापकर्षः? उत सर्वयूपानामिति? तत्र—

यथैवाध्वरकल्पायामाद्यस्यैवापकर्षणम्।
निर्वापस्य तथा यूपोऽप्याद्य एवापकृष्यते॥

---

कर्मविशेषोद्देशाभावादवर्जनीयमानन्तर्येण विशेषकमित्याह—**एवमिति**। सूत्रे—द्रव्यस्याहवनीयादेरित्यर्थः॥

इत्याधानस्य तन्त्रताधिकरणम्॥ २॥

३

**यूपश्च०** आतिदेशिकी सङ्गतिः। पूर्वपक्षमाह—**यथैवेति**। अध्वरकल्पायामिष्टौ 'पुरा वाचः प्रवदितोर्निर्वपेदि'त्यपकर्षः प्रातः कालिकनिर्वापस्यैव यथा तथेहाप्याद्ययूप

अग्नीषोमीयसंस्थायामतोऽसावपवृज्यते ।
भेदेन सवनीयादौ स्वकाले यूपसंग्रहः ॥
नैतदस्त्यविशेषेण सर्वयूपापकर्षणात् ।
न चेहाध्वरकल्पावद्युक्तमाद्यापकर्षणम् ॥
प्रधानकालबाधोऽत्र तथैवाप्राप्तचोदना ।
आद्यापकर्षणेऽप्यस्ति तस्मात्सर्वापकर्षणम् ॥

अध्वरकल्पायां हि प्रथमनिर्वापापकर्षे सति, प्रधानकालबाधः, नियमविधानं च लभ्यत इति, तस्यैवापकर्षः समाश्रितः। अत्र त्वग्नीषोमीययूपापकर्षणेऽप्यस्ति प्रधानकालबाधः, अप्राप्तविधिश्च। तस्मादविशेषात्सर्वयूपापकर्षे सत्यकर्मकालत्वादगृह्यमाणविशेषो यूपः सर्वेषां तन्त्रम् ॥

इति यूपस्य तन्त्रेण सम्पादनाधिकरणम् ॥ ३ ॥

४

संस्कारा० यूपस्य तन्त्रत्वे तत्संस्काराणां तक्षणप्रोक्षणादीनां तन्त्रत्वम्, आवृत्तिर्वेति संशये, छेदनमात्रस्यापकर्षविधानात्प्रोक्षणादीनां चाग्नीषोमीयकालानां तदपवर्गे, अपवर्गात् सवनीयादौ पुनः प्रयोग इति प्राप्ते ब्रूमः—तेषामप्यपकर्षः। 'दीक्षासु यूपं छिनत्ती'ति नायमर्थः-यूपं

---

एवापकृष्यत इत्यर्थः। संस्थायां समाप्तौ। अपवृज्यते नष्टसंकारो भवतीत्यर्थः। सिद्धान्तमाह—नैतदिति। दृष्टान्तवैषम्यमाह—न चेहेति। प्रधानं पशुयागस्तत्कालबाधः। अग्नीषोमप्रणयनानन्तरपठितस्य दीक्षास्वत्यन्ताप्राप्तस्यैव विधिराद्यमात्रापकर्षेऽपि प्रकृत इति वैषम्यमित्यर्थः॥

इति यूपस्य तन्त्रेण सम्पादनाधिकरणम् ॥ ३ ॥

४

संस्कारा:० आतिदेशिक्येव सङ्गतिः। न चेति। यूपशब्दस्य छेदनादिजन्यसंस्का-

सन्तं छिनत्तीति, यूपस्य प्रागसिद्धत्वात् । किं तर्हि-छेदनेन यूपं कुर्यादिति । न च छेदनमात्रेणासौ कर्त्तुं शक्यते, तक्षणादीनामपि यूपेऽपेक्षितत्वात् । तस्माच्छेदनग्रहणमुपलक्षणम्-छेदनादिभिर्यूपं कुर्यादिति । तस्मात्तेषामप्यपकर्षात्तान्त्रत्वम् । अस्तु वा छेदनमात्रापकर्षः, तावतैव च यूपसिद्धिः, तथाऽपि यूपस्तावत्सर्वेषामर्थेनैक एवोपात्तः, तद्‌द्वारा च संस्काराः । ते यद्यप्यग्नीषोमीयकालेऽनुष्ठीयन्ते, तथाऽपि यूपद्वारत्वात् तस्य च साधारणत्वात् तेषामपि साधारण्यम् ॥

इति यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम् ॥ ४ ॥

५

स्वरुस्तन्त्राप० 'यूपस्य स्वरुं करोती'ति स्वरुः किमेकयूपानां पशूनां तन्त्रम् ? उत प्रतिपशु भिद्यते ? इति सन्देहे, अञ्जनकालेऽस्योपादानात्तदपवर्गे चापवर्गादञ्जनान्तरेऽन्यशकलोपादानम् । 'यः प्रथमः शकलः, स स्वरुरि'ति चैकस्मिन् प्रहरणे यः प्रथम इति शास्त्रार्थः । तेनैकस्मिन्नपि यूपे प्रहरणबहुत्वात् सम्भवन्ति बहवः प्रथमशकलाः । मैवम्, प्रहरणस्यानुपात्तत्वात्, तेन शकलमात्रापेक्षं प्राथम्यमित्येकस्मिन्यूपे एक

---

रसमुदायवचनत्वादिति भावः । तदाह—**तक्षणादीति** । एवञ्च यच्छेदनादिना यूपं कुर्यात्तद्दीक्षास्विति विधानात्सर्वसंस्कारापकर्ष इत्यर्थः । ननु तक्षणादिलक्षणादोषादयुक्तोऽयं पक्ष इत्यतः पक्षान्तरमाह—**अस्तु वेति** । यद्यूपं कर्तुं काष्ठं छिनत्ति तद्दीक्षास्विति विधिः । न च विशिष्टोद्देशे वाक्यभेदः । अपूर्वविशेषसाधनत्वेन लक्षणाया आवश्यकत्वेन छेदनमात्रेति प्रसङ्गाभावादिति भावः । यूपशब्दस्य नानार्थत्वमप्युभ्युपेत्याह—**तावतैव चेति** । छेदनमात्रेणेत्यर्थः । सूत्रे अर्थकालत्वात्प्रयोजनभूतप्रधानकालत्वादित्यर्थः ॥

इति यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम् ॥ ४ ॥

५

**स्वरुः०** पूर्वोक्तैव सङ्गतिः । **अञ्जनेति** । 'स्वरुणा पशुमनक्तीति विहिताञ्जनेत्यर्थः । **अनुपात्तत्वादिति** । 'यः प्रथमः शकलः परापतेत्स स्वरुरि'ति वाक्य इत्यर्थः ।

एव प्रथमः शकल इति तन्त्रत्वम् । यूपच्छेदनकाल एव चास्य व्यामोह-निवृत्त्यर्थम् नाशापहारपरिहारार्थं चोपादानं कर्त्तव्यमित्यगृह्यमाण-विशेषत्वादपि तन्त्रम् ॥

इति स्वरोस्तन्त्रेण सम्पादनाधिकरणम् ॥ ५ ॥

६

अहर्गणे० ज्योतिष्टोमे श्रूयते 'कृष्णविषाणया कण्डूयते' इति तथा 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यती'ति । द्विरात्रादिष्वहर्गणेषु चिन्त्यते––किं प्रथमे एवाहनि कृष्णविषाणाप्रासनम् ? उतान्त्य एवेति ? विकल्पः स्यात् । प्रकृतौ हि प्रासनोत्तरकालानां पदार्थानां पाणिकण्डूयनं धर्मः । पूर्वकालानान्तु विषाणाकण्डूयनम्, तद्यदि प्रथमेऽहनि प्रास्येत तत उत्तरेष्वहस्सु ये दक्षिणानयनात्प्राग्भाविनः पदार्थाः तेषां विषाणाकण्डूयनं धर्मो बाध्येत । न हि प्रास्तायाः पुनरुपादानं सम्भवति । त्यागात्मकं हि प्रासनं प्रकृतौ विहितम् । न च पुनरुपादित्समानस्य त्यागबुद्धिर्भवति । तस्माद्बाध्यत एव विषाणाकण्डूयनम् । अथ पुनरन्त्येऽहनि प्रास्येत, ततः पूर्वेष्वहस्सु ये दक्षिणानयनात्परस्तात्पदार्थाः, तेषां पाणिकण्डूयनं बाध्येत । न ह्यप्रास्तायां तस्यां पाणिकण्डूयनं सम्भवति, अदृष्टार्थत्वापातात्, प्रक्रान्तनियमत्यागे शिष्टाचारविरोधाच्च । अतः पक्षद्वयेऽपि अवश्यम्भावी केषाञ्चिद्धर्मबाधः इति विकल्पः । स्यादेवं

---

सूत्रार्थस्तु–स्वरुः प्रधानानुष्ठानेनापवर्गो यस्य तादृशः स्यात् अस्वतन्त्रकालत्वादिति ॥

इति स्वरोस्तन्त्रेण सम्पादनाधिकरणम् ॥ ५ ॥

६

अर्हगणे० अत्र सिद्धान्ते द्वितीयादिदिनेषु कृष्णविषाणाकण्डूयनस्यावृत्तेरापवादिकी सङ्गतिः । अदृष्टार्थत्वेति । कृष्णविषाणाया अदृष्टार्थत्वापत्तेरित्यर्थः । ननु कृतकरिष्यमाणकण्डूयनार्थायाः कुतोऽदृष्टार्थतेत्यत आह––प्रक्रान्तेति । अर्थकृतत्वेन राग-

यद्यन्त्येऽहनि प्रासने धर्मबाधः स्यात्, न त्वेतदस्ति। पाणिकण्डूयनस्यार्थकृतत्वेनाशास्त्रीयत्वात् तस्मादन्त्येऽहनि प्रासनम् ॥

इत्यहर्गणे कृष्णविषाणाप्रासनस्यान्त्याहर्नियमाधिकरणम् ॥ ६ ॥

७

वाग्विसर्गः० दर्शपूर्णमासयोः श्रुतं 'प्रणीताः प्रणेष्यन्वाचं यच्छति, तां सह हविष्कृता वाचं विसृजती'ति। हविष्कृतेति च कालोपलक्षणम्। हविष्कृदाह्वानकाले इत्यर्थः। तत्र नानाबीजेषु चिन्त्यते— कृष्णाजिनास्तरणादीनां फलीकरणपर्यन्तानामनुसमय इत्युक्तम्। तत्र किं प्रथमस्य, अन्त्यस्य वा बीजस्य हविष्कृता वाग्विसर्गः? किं वान्त्यस्यैवेति? तत्र प्रथमं विसर्गे सत्युत्तरेषां बीजानां ये हविष्कृत्कालात्प्राञ्चः पदार्था हविरावपनादयः, तेषां धर्मो बाध्येत। अन्तिमे तु विसर्गे पूर्वबीजानां ये हविष्कृतः प्रत्यञ्चः परे वपनादयः, तेषां धर्मो वाग्विसर्गो वा बाध्येत। न ह्यत्र पूर्ववत् वाग्विसर्गस्याशास्त्रीयत्वम्, 'विसृजती'ति वचनात्। तस्मादवश्यम्भाविनि धर्मबाधे विकल्पः। नैवम्, न ह्यत्र विसर्गो विधीयते, वाग्यमविधेस्त्वयमवधिरुच्यते, तदेकवाक्यत्वात्। विसर्गविधौ हि वाक्यभेदः, अदृष्टकल्पना च स्यात्। प्राप्तश्च विसर्गो न विधातव्यः।

---

प्राप्तत्वेन। सूत्रे–प्रथमेवाहनीतीति शब्दाध्याहारो ज्ञेयः॥

इत्यहर्गणे कृष्णविषाणाप्रासनस्यान्त्याहर्नियमाधिकरणम् ॥ ६ ॥

७

वाग्विसर्गः० अत्रापि वाग्यमानुकूलप्रयत्नावृत्तिकथनादातिदेशिकी सङ्गतिः। नानेति। व्रीहिश्यामाकादिरूपेष्वेकप्रयोगविषयनानायागसाधनेष्वित्यर्थः। उक्तं पञ्चमे। प्राञ्चः पूर्वभाविनः। आदिना कृष्णाजिनास्तरणादिसङ्ग्रहः। धर्मो वाग्यमरूपमङ्गम्। प्रत्यञ्चोऽनन्तरभाविनः। विशेषाशङ्कामाह—न ह्यत्रेति। अदृष्टेति। दृष्टस्य विधि

तस्माद्विसर्गस्यानङ्गत्वादविसृष्टायामपि न कस्यचिद्धर्मबाधः इत्यन्त्य एव विसर्गः ॥

इति नानाबीजेषु वाग्विसर्गस्यान्त्याहर्नियमाधिकरणम् ॥ ७ ॥

८

पशौ च० पशावग्नीषोमीये पशुपुरोडाशः । तत्र तावदस्ति हविष्कृदाह्वानम्, पशावप्यस्तीति कृत्वा चिन्त्यते—किं प्रथमे पशुकाले वाग्विसर्गः ? पुरोडाशकाले वेति ? प्रासङ्गिकत्वात्पशुपुरोडाशस्य पाशुकेनैव वाग्यमेन कार्यसिद्धेर्न पृथग्वाग्यमेन कार्यम् । तस्मात्पशुकाले वाग्विसर्ग इति प्राप्ते उत्तरम्—न वाग्यमोऽयमारादुपकारकः, कर्तृसंस्कारस्त्वसौ । अतो विसृष्टवाचा क्रियमाणाः पौरोडाशिका विगुणा भवेयुः । तस्मात्पुरोडाशकाले विसर्गः ॥

इत्यग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम् ॥ ८ ॥

९

अग्नि० अग्नौ श्रूयते 'अग्निं युनज्मि शवसा घृतेनेति जुहोति

---

विनाऽपि सिद्धेरिति भावः ॥

इति नानाबीजेषु वाग्विसर्गस्यान्त्याहर्नियमाधिकरणम् ॥ ७ ॥

८

पशौ च० आतिदेशिकी सङ्गतिः । कर्तृसंस्कार इति । मनःप्रणिधानरूपदृष्टोपकारेणेत्यर्थः ॥

इत्यग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम् ॥ ८ ॥

९

अग्नियोगः० अत्र भाष्यकारमते आपवादिकी वार्तिकमतेत्वातिदेशिकी

अग्निमेव तद्युनक्ति, पञ्चभिर्युनक्ति पाङ्क्तो यज्ञः' इत्यग्नियोगः। तथा 'इमं स्तनमूर्जस्वन्तं धयामीत्याज्यस्य पूर्णां स्रुचं जुहोति, एष वा अग्नेर्विमोकः' इति। सोऽयमग्नेर्विमोकः किं प्रधानमात्रापवर्गे स्यात्? उत साङ्गप्रधानापवर्गे? इति। यदि प्रधानमात्रार्थो योगः तदपवर्गे विमोकः। साङ्गप्रधानार्थत्वे तु योगस्य सर्वान्ते विमोकः।

तत्राग्नेः सर्वार्थत्वात्तत्संस्कारो योगः सर्वार्थः। तस्मात्सर्वापवर्गे विमोक इति पूर्वपक्षं कृत्वा, 'पाङ्क्तो यज्ञः' इति वाक्यशेषेण यज्ञार्थता योगस्य। अतः प्रधानापवर्गेऽपवर्ग इति भाष्यकारेण सिद्धान्तितम्। एवम्—सौमिकमपि वरणं 'यदवृता वषट्कुर्युः, भ्रातृव्यमेव यज्ञस्याशीर्गच्छेदि'ति यज्ञसंयोगादग्नियोगतुल्यन्यायं केवलप्रधानार्थं भवति। तत्रावभृथे सौमिकेन वरणेनाप्रत्याम्नातं होतृवरणं प्राप्नोति। तत्र 'न होतारं वृणीते' इति प्रतिषेधोऽवक्लृप्तो भवति। इतरथा सौमिकस्य वरणस्य साङ्गप्रधानार्थत्वात्, अदवभृथे पृथग्वरणप्राप्त्यभावात्तन्निषेधो न स्यादिति च लिङ्गदर्शनमुक्तम्। तथा 'अहरहर्युनक्ति, अहरहर्विमुञ्चती'ति प्रत्यहं योग-विमोकदर्शनं द्वादशाहे। इतरथा साङ्गप्रधानार्थत्वे आद्यन्तयोरेव योगविमोकदर्शनं स्यादिति। ननु प्रधानार्थत्वेऽपि वरणस्याप्राप्तिरपूर्वत्वात्, अवभृथस्य नैष्टिकवरणप्राप्तिः।

तत्र कश्चिदाह—अपूर्वताया एवायमर्थवादो होतृवरणाभावे लाघवं स्यादिति। स चापूर्वत्वपक्षे वरणाप्राप्तौ सत्यामवकल्पते,

---

सङ्गतिः। **अग्निमेवेति**। अग्निं हूयमानेन घृतेन युनक्तीत्यर्थः। पञ्चभिर्मन्त्रैरिति गुणविधिः। **अग्नेर्विमोकः** पूर्वोक्तहोमरूपयोगजन्यादृष्टस्यानेन होमेन नाशादयं विमोक इत्युच्यत इत्यर्थः। **यज्ञार्थतेति**। 'दीक्षाः सोमस्ये'ति दीक्षावदित्यर्थः। **अप्रत्याम्नातमिति**। प्रधानमात्रविषयत्वादङ्गभूतावभृथाविषयेणाबाधितमित्यर्थः। साङ्गप्रधानाङ्गत्वे त्वौपदेशिकेनानेनातिदेशिकस्य होतृवरणस्य बाधात्प्राप्त्यभावेन प्रतिषेधानुपपत्तिरित्यर्थः। **प्रत्यहं योगविमोकदर्शनमित्यत्र** लिङ्गमित्यनुषङ्गः। आद्यलिङ्गदर्शनानुपपत्तिं शङ्कते **नन्विति**। **वरणस्य** प्राकृतहोतृवरणस्य। लिङ्गत्वानुपपत्तौ स्थितायामेव प्रतिषेधस्यानुवादत्वेनोपपत्तिरिति कस्यचिन्मतमाह **तत्रेति**। एतद्दूषणपूर्वकं लिङ्गदर्शनमुपपादयति—

नान्यथेति। वयन्तु ब्रूमः—यद्यप्यपूर्वोऽवभृथः, तथाऽप्याज्यभागयोस्तत्र सद्भावाद्धोतुश्चाङ्गप्रधानार्थत्वात्तद्वरणमप्यङ्गप्रधानार्थम्, न हि दार्शिकं वरणं केवलप्रधानार्थं यज्ञसंयोगाभावात्। अतोऽसत्यप्यतिदेशे होतृवरणस्याज्यभागार्थतयाऽस्त्येवावभृथे प्राप्तिरिति युक्तः प्रतिषेध इति।

तदिदं भाष्यकारीयमधिकरणव्याख्यानमनुपपन्नमिति मत्वा वार्त्तिककारेण विपर्ययेण पूर्वोत्तरपक्षौ वर्णितौ। वाक्यशेषादवभृथलिङ्गाच्च केवलप्रधानार्थो योग इति पूर्वः पक्षः। सिद्धान्तस्तु—अग्नेः सर्वार्थत्वात्तद्योगोऽपि सर्वार्थः। न च वाक्यशेषवशाद्विशेषः योगोत्पत्तिविधौ वाक्यशेषाभावात्। तत्र तावत्सर्वार्थत्वङ्गम्यते, पञ्चसङ्ख्यागुणविधौ वाक्यशेषः श्रुतः। न चासावुत्पत्तिवाक्यावगतं सर्वार्थत्वमलं निवर्तयितुम्। किञ्च यज्ञशब्दो यागमात्रं ब्रवीति, न तु प्रधानयागमात्रम्। अतो न तद्वशात्कैवलप्रधानार्थत्वम्, अवभृथे च होतृवरणप्रतिषेधोऽङ्गप्रधानार्थत्वेऽपि सौमिकस्य वरणस्य घटत एव। सौमिकं वरणमानत्यर्थम्। प्राकृतन्तु होतृवरणं प्रवृत्ते होतरि क्रियमाणमदृष्टार्थम्। अतस्तत् सर्वासु सोमेष्टिषु कार्यमिति द्वादशे वक्ष्यति। तस्माद्युक्तः प्रतिषेधः। द्वादशाहे च प्रत्यहं योगविमोकदर्शनमस्मिन्नेव पक्षे घटते, विधानार्थं ह्येतद्वचनं नानुवादमात्रम्, आनर्थक्यात्। तेन सर्वादौ सर्वान्ते च सकृद्योगविमोकयोर्न्यायतः प्राप्तयोर्वचनेनाहरहर्योगविमोकौ विधीयेते। तस्मात्सर्वार्थो योगः, सर्वापवर्गे विमोकः। सूत्राणि तु तन्त्ररत्ने एवास्माभिर्व्याख्यातानीति नेह व्याख्यायन्ते॥

इत्यग्नियोगविमोकाधिकरणम्॥ ९॥

---

**वयन्त्विति।** होतृवरणस्यादृष्टार्थत्वेऽपि होतृसंस्कारद्वारैवाङ्गत्वं न त्वारादुपकारत्वमिति भावः। **न तु प्रधानेति।** 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमि' त्यादावाज्यभागयोरपि प्रयोगदर्शनादिति भावः। लिङ्गमप्युपपादयति—**अवभृथे चेति।** द्वितीयलिङ्गमुपपादयति—**द्वादशाहे चेति।**

इत्यग्नियोगविमोकाधिकरणम्॥ ९॥

१०

सुब्रह्मण्या० ज्योतिष्टोमेऽस्त्युपसत्कालीनं सुब्रह्मण्याह्वानम् तदहर्गणेषु भिद्यते, न वेति संशये, प्रधानभेदाद् भेदः । अकर्मकालत्वात्तु तन्त्रम्, न हीदं प्रधानकालम् उपसत्कालन्तु सकृदेवानुष्ठितमेव सर्वेषामुपकरोतीति तन्त्रम् ॥

इत्युपसत्कालीनसुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम् ॥ १० ॥

११

तत्काल० सुत्याकालमाह्वानं तन्त्रम्, आवापो वेति संशये प्रथमसुत्याकाल एव कृतं सर्वसुत्यानामुपकारकं सत्यप्येकस्य सन्निधिविशेषे यूपाहुतिवदिति प्राप्ते उच्यते—कर्मकालं ह्येतद् यस्य कर्मणः काले कृतं तदर्थमिति विशेषग्रहणात् तदपवर्गे तत्कृतस्य देवतासंस्कारस्यापवर्गादहरन्तरे पुनः कर्त्तव्यम् । तस्मान्न तन्त्रम् ॥

इति सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् ॥ ११ ॥

---

१०

सुब्रह्मण्या० आतिदेशिकी सङ्गतिः । सुब्रह्मण्याख्यनिगदेनाह्वानमिन्द्रदेवतायाः । शेषं स्फुटम् ॥

इत्युपसत्कालीनसुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम् ॥ १० ॥

११

तत्कालात्तु० आपवादिकी सङ्गतिः । आह्वानम् सुब्रह्मण्याह्वानम् । यूपेति । यूपस्यान्तिके यूपाहुतिर्यथा यूपैकादशिन्यां तन्त्रेण भवतीत्युक्तं तद्वदित्यर्थः ॥

इति सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् ॥ ११ ॥

१२

लौकिकेषु० समादिदेशानाम् ऋत्विजां स्रुवादीनाञ्च पात्राणां किं प्रयोगेऽन्येषामुपादानम् ? उत तेषामन्येषां वेत्यनियमः ? इति संदेहे, निरिष्टिकोपादाने शिष्टाचारविरोधादन्येषामेवोपादानम् । नात्र शिष्टाचारविरोधः । एतेषु शिष्टा न पुनरुपादानं वर्जयन्ति, तस्मादनियम इत्यवसितमृत्विक्षु। देशे च पात्रेषु तु चिन्त्यते । पात्रेषु—किं देशादिवदनियमः ? उत तेषामेव आन्ताद्धारणमिति ? नियामकस्याभावादनियमः । न हि पूर्वप्रयोगे कृतः संस्कारः कश्चित् परेषूपजीवनीयोऽस्ति यल्लोपभयात्पात्रान्तराणि नोपाददीमहि । नन्वाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चे'ति परिधानीये कर्मणि पात्राणां प्रतिपत्तिर्विहिता तत्परित्यागे लुप्येत । अतस्तेषामेव धारणम् । नेयं पात्राणां प्रतिपत्तिर्यजमानशरीरसंस्कारार्थे दाहे पात्राणां तृतीयया गुणभावावगमात् । तेन परित्यज्यापि पूर्वोपात्तानि पात्राण्यभिनवैः परिदह्यमाने नास्ति किंचिद्वैगुण्यम् । तस्मादनियमः । सिद्धान्त्येकदेशी त्वाह—यद्यपि गुणभावः पात्राणाम्, तथाऽपि धारणम् । परित्यागे हि सति मरणस्यानियतत्वात्कदाचित्पूर्वप्रयोगोपयुक्तेषु परित्यक्तेषूत्तरप्रयोगकालेऽनागते यजमानः प्रमीयेत, तत्र यज्ञपात्राभावाद्विगुणो दाहः स्यात् । तस्मादवश्यं यावदुत्तरकालं तेषामेव धारणम्,

---

१२

लौकिकेषु० आपवादिकी सङ्गतिः । **निरिष्टिकेति** । इष्टेर्निर्गतं कृतेष्टिकमिति यावत् । सिद्धान्तमाह—**नात्रेति** ।

> कुशादर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः ।
> न ते निर्माल्यतां यान्ति विनियोज्याः पुनःपुनरिति ॥

स्मृतेरिति भावः । 'ऋत्विगाचार्यौ नातिचरितव्यावि'ति तु पुरुषार्थो निषेधो न

धारितेषु च तेषु तैरेव तत्प्रयोगस्यापि सिद्धेर्नान्योपादानम् । एवमतः परमपीत्यान्ताद्धारणम् ॥

इति देशकर्तृणामनियमाधिकरणम् ॥ १२ ॥

१३

यज्ञायुधानि० एवं स्थिते चिन्तान्तरं प्रक्रम्यते—किं दर्शपूर्णमासप्रभृति धारणम्? उत पवमानहविः प्रभृतीति? दर्शपूर्णमासयोः सर्वप्रकृतित्वात्तत्रैव पात्राणामुपदेशात् ततः प्रभृति धारणं मन्वानस्योत्तरं पवमानहविः प्रभृति धारणम्, अधारितेषु प्रागेव दर्शपूर्णमासाभ्यां यदि यजमानः प्रमीयेत, तदा तस्याहिताग्नेः सतो देहसंस्कारो यज्ञपात्राभावाल्लुप्येत । तस्मात्पवमानहवींष्यारभ्य धारणम् ।

स्थितादुत्तरम् । गुणभावेऽपि पात्राणां धारणमित्येकदेशिमतम् । परमार्थतस्तु प्रतिपत्तिरत्र पात्राणां यद्यपि दाहे गुणभावस्तृतीययाऽवगम्यते तथाऽपि 'दक्षिणे हस्ते जुहूमासादयती'ति द्वितीयानिर्देशादासादनं प्रतिपत्तिः । तेन यद्यप्यभिनवैरपि दाहस्यावैगुण्यम्, तथाऽऽप्यासादनरूपा प्रतिपत्तिर्मा लोपीत्याद्यानामेव धारणम् । तस्मात्सर्वकर्माणां सर्वप्रयोगा-

---

क्रत्वर्थः अनारभ्याधीतत्वादिति । अवसितम् समाप्तम् ॥

इति देशकर्तृणामनियमाधिकरणम् ॥ १२ ॥

१३

यज्ञा० अनियमापवादात्सङ्गतिः । तृतीययेति । दाहस्यापि शरीरप्रतिपत्तिरूपदृष्टप्रयोजनत्वान्न प्रयाजशेषाभिघारणन्याय इति भावः । अभिनवैरित्यनेन अपूर्वपरित्यागेन पात्रान्तरोपादाने हेतुसूचनम् । एवंस्थित इति । एवं पूर्वपक्षे स्थित इत्यर्थः । दक्षिणहस्तादावासादनेन पात्राणां प्रतिपत्तिः । सिद्धान्ते तु पवमानहविःप्रभृति धारणस्य स्पष्टत्वादन्तरा चिन्तेति भावः । सूत्रे ऋजीषवत् 'ऋजीषमप्सु प्रहरती'ति प्रतिपत्त्यर्थ-

णाञ्च तन्त्रं पात्राणि ॥

इति यज्ञपात्राणां यावज्जीवं धारणाधिकरणम् ॥ १३ ॥

१४

उपरिष्टा० वाजपेये श्रूयते 'सप्तदश प्राजापत्यान् पशूनालभते' इति। तान् प्रकृत्य श्रूयते 'उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ती'ति। तत्र विचार्यते—किमार्भवकाले प्रचरितव्यम्? उत शस्त्रवतां सोमानामुपरिष्टात्? उत विकारस्थाने? अथ सर्वसोमानामुपरिष्टादिति? तत्र चोदकानुग्रहादार्भवकाले प्रचार इति ब्रूमः—प्रकृतावार्भवकाले प्रचारो दृष्टः, प्रकृतिवदिहापि कर्त्तव्यः। आर्भवकालश्च केषाञ्चित्सोमानामुपरिष्टाद्भवतीति नास्ति वचनविरोध इति पूर्वः पक्षः। नैवम्, तथा सति चोदकेनैव तत्कालस्य सिद्धत्वाद्वचनमनर्थकं स्यात्। तस्माच्छस्त्रवतां सोमानामुपरिष्टात्। तथा सति प्रकृतिकालप्रत्यासत्तिर्लभ्यत इति द्वितीयः। न प्रधानप्रत्यासत्तिमात्रेण चोदकानुग्रहो भवति। तस्माद्विकारस्थाने प्रचारोऽग्निष्टोमप्रचारादूर्ध्वम्। तत्खल्वागन्तुकानामुक्थ्यादीनां विकाराणां स्थानम्। प्राजापत्यप्रचारश्चागन्तुकविकारः। तस्मात्तत्र स्यादिति तृतीयः पक्षः। सोमविकाराणामेतत्स्थानं न पशुविकाराणाम्, प्राजापत्यप्रचारश्च पशुविकारः। तस्मान्न तत्स्थानत्वम्। सामान्यतोदृष्टं चैवञ्जातीयकेषु न प्रमाणम्। तस्माद्वचनस्याविशेषप्रवृत्तेः सर्वसोमानामु-

---

महर्गणे सर्वान्त्येऽह्नि ऋजीषधारणवदित्यर्थः। हृतसारसोमः ऋजीषपदार्थः॥

इति यज्ञपात्राणां यावज्जीवं धारणाधिकरणम् ॥ १३ ॥

१४

**उपरिष्टात्**। अत्र सङ्गतिमधिकरणान्ते स्वयमेव वक्ष्यति। आद्यपक्षमाह—**चोदकेति**। तृतीयसवनगतार्भवस्तोत्रकालस्य सवनीयपशुयागतः परम्परयातिदेशादित्यर्थः। द्वितीयपक्षमाह—**शस्त्रवतामिति**। तत्र हेतुमाह—**तथाहीति**। तथा सतीत्यर्थः। वचनार्थवत्वं प्राकृतकालप्रत्यासत्तिश्च लभ्यत इति हेतोरित्यर्थः। तृतीयपक्षमाह—

परिष्टादिति सिद्धान्तः । आर्भवकालप्रचारे क्रतुपशूनां प्राजापत्यानां चैककालः प्रचार इति 'मनोतायै हविषोऽवदीयमानस्यानुब्रूही'ति मनोतासूक्तानुवचनं तन्त्रम् । सिद्धान्ते तु कालभेदादावाप इति सङ्गतिः ॥

इति सर्वसोमोत्तरं प्राजापत्यप्रचाराधिकरणम् ॥ १४ ॥

१५

उत्कर्षे० सवनीयपशौ प्राकृतस्य सूक्तवाकस्य विकृतस्य पाठः स चानुयाजोत्कर्षादाग्निमारुतादूर्ध्वमुत्कृष्यते । तत्र सवनीयपुरोडाशदेवताः कीर्त्यन्ते—'भृज्जन्निन्द्राय हरिवते धाना' इत्यादिपाशुकं च तन्त्रं पुरोडाशे प्रसज्यत इति वक्ष्यते । तत्र संशयः—किमुत्कृष्यमाणे सूक्तवाके पुरोडाशदेवतानामुत्कर्षो नेति । तत्र 'प्रासङ्गिकञ्च नोत्कर्षेदि'ति न्यायेन दाक्षिणाग्निकहोमयोरिव हरिवदादिपदानामनुत्कर्षप्राप्तौ उच्यते—तन्त्रिपदापेक्षित्वादेषामुत्कर्षः, न हि 'भृज्जन्निन्द्राय धानाः' इत्येतावन्मात्रं प्रयोगार्हम्, 'अग्निमद्य होतारमवृणीतायं सुन्वन्यजमानः' इति तन्त्रपदमपेक्ष्यैषामर्थप्राप्तिः । तच्च तन्त्रपदं पाशुकमुत्कृष्यते । अतस्तद-

---

विकारस्थान इति । सङ्गतिमाह—आर्भवेति । अनन्तरसङ्गतिस्त्वापवादिकीति ज्ञेयम् । सूत्रं स्पष्टार्थम् ॥

इति सर्वसोमोत्तरं प्राजापत्यप्रचाराधिकरणम् ॥ १४ ॥

१५

उत्कर्षे० सङ्गतिमधिकरणान्ते वक्ष्यति । विकृतस्येति । सवनीयपशुदेवतापदयुक्तस्येत्यर्थः । स चेति । 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्याग्निमारुतशस्त्रोत्तरमनुयाजोत्कर्षात्तदाद्युत्कर्षन्यायेन सूक्तवाकोऽप्युत्कृष्यत इत्यर्थः । वक्ष्यते द्वादशे । दाक्षिणाग्निकेति । दक्षिणाग्नौ क्रियमाणयोः पिष्टलेपफलीकरणहोमयोः प्रकृतावनुयाजोत्तरत्वेऽपि पुरोडाशाङ्गयोस्तयोः पाशुकैरनुयाजैर्भिन्नप्रयोगविधिपरिगृहीतत्वेन क्रमाकल्पनात्तदुत्कर्षेऽपि यथा नोत्कर्षस्तथा पुरोडाशदेवतापदानामपीत्यर्थः । तन्त्रेति । साधारणेत्यर्थः । तत इति । तन्त्रपदसापेक्षत्वादित्यर्थः । तदा वृत्तिकल्पनायाश्च पुरोडाशविधेस्तन्त्रपदांशे प्रयोजकत्वशक्तिकल्पनागौरवापत्तेरिति भावः । ननु पूर्णमास्यां

पेक्षाणां पुरोडाशदेवतापदानामप्युत्कर्षः । तैश्चोत्कृष्टैरपि सवनीयदेवता एव प्रकाश्यन्ते इति न लिङ्गविरोधः । पूर्वं प्राजापत्यप्रचारस्योत्कर्षेऽभिहिते प्रसङ्गात्सवनीयदेवतानामुत्कर्षः प्रतिपाद्यत इति सम्बन्धः ॥

इति सवनीये पुरोडाशे देवतोत्कर्षाधिकरणम् ॥ १५ ॥

इति श्रीमत्पार्थसारथिमिश्रविरचितायां
शास्त्रदीपिकायामेकादशस्य
तृतीयः पादः ॥



---

पठ्यमाने सूक्तवाकेऽमावास्यादेवतापदानामनुत्कर्षवदिहापि स्यादित्याशङ्कानिरासायाह—**तैश्चेति**। अमावास्यादेवतापदानान्तु पूर्णमास्यां लिङ्गविरोध इति नोत्कर्ष इति। सङ्गतिमाह—**पूर्वमिति**। तन्त्रपदानामावृत्त्यपवादादपि सङ्गतिर्ज्ञेया। सूत्रे यथा दर्शपूर्णमासयोः सूक्तवाकनिष्कर्षेऽमावास्यादेवतापदानां पूर्णमासेऽनन्वयस्तथाऽत्रेत्यर्थः ॥

इति सवनीये पुरोडाशे देवतोत्कर्षाधिकरणम् ॥ १५ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायामेकादश-
स्याध्यायस्य तृतीयः पादः ।



# अथैकादशे चतुर्थः पादः

१

चोदनैक० राजसूये यान्यनुक्तदेशकालानि दक्षिणाभेदवन्ति कर्माणि यथा'आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा। सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणे'ति। किमेवञ्जातीयकेषु तन्त्रमङ्गानि? उत प्रतिदक्षिणं तन्त्रभेदः? इति। तत्र—

देशकालफलाभेदादङ्गानां तन्त्रता भवेत्।
कर्तृभेदोऽपि नैवास्ति दक्षिणामात्रभेदतः॥

शक्यते हि तेभ्य एव कर्तृभ्योऽन्या दक्षिणा दातुम्। तस्मादेकतन्त्र्यम्।

उच्यते दक्षिणाभेदात्कर्तृत्वमपि भिद्यते।
तदानतानां कर्तृत्वादानतेश्च पृथक्त्वतः॥

दक्षिणाभेदादानतिभेदः, तद्भेदात्तत्कृतस्य रूपस्य भेदः। वामनानतैर्हि पूर्वं कर्म कर्त्तव्यम्, श्यामानतैरुत्तरम्। तन्त्रत्वे तु उभाभ्या-

---

## अथ चतुर्थः पादः

१

**चोदनैकत्वात्०** अस्मिन् पादे तन्त्रभेदः प्राधान्येन प्रतिपाद्यते। वामनः श्यामश्च गौः। **दक्षिणामात्रेति**। वचनवशाद्दक्षिणाभेदेऽपि न कर्तृभेदस्तदंशे वचनाभावादित्यर्थः। ननु दक्षिणान्तरानुपपत्तिरेव कर्तृभेदे मानमत आह—**शक्यते हीति**। सिद्धान्तमाह—**उच्यत इति**। दक्षिणायाः कर्त्रानतिद्वारेणाङ्गत्वात्तद्भेदादानतिभेदः आनतेश्च प्रयोगाङ्गत्वात्तद्भेद एव भेद इति न तन्त्रतेत्यर्थः। वामनश्यामयोर्मिलितयो-

मानता उभयं कुर्युः, तत्र दक्षिणाव्यवस्था गम्यमाना बाध्येत। तस्मात्प्रतिदक्षिणं तन्त्रभेदः ॥

इति दक्षिणाभेदेन तन्त्रभेदाधिकरणम् ॥ १ ॥

२

अनियम० दक्षिणाभेदात्कर्तृरूपं भिद्यते इत्युक्तम्। इदानीं कर्तृत्वाधिष्ठानभूताश्चिन्त्यन्ते-किं ये पूर्वं प्रवृत्तास्त एवान्तात्कुर्युः? उत ते वा, अन्ये वेति? तदर्थमिदं विचार्यते-किं सर्वकर्मणामृत्विग्वरणं तन्त्रम्? उत भेदेनेति? तत्र दक्षिणाभेदात्प्रयोगाणां भेदात्तदङ्गभूतस्य वरणस्यापि भेदः। यस्मिन्कर्मणि ये वरणभरणाभ्यामुपात्ताः, ते तदपवर्गेऽपवृक्ता लौकिका भवन्ति। तत्र पुनर्वरणसंस्कार आधातव्यः कर्मान्तरार्थं तदाधाने चाविशेषात्ते वा, अन्ये वेति प्राप्ते ब्रूमः—सर्वस्य राजसूयस्यैकफलत्वाद्युगपत्सर्वचिकीर्षा चिकीर्षितार्थं च सहायवरणम्। तस्मादगृह्यमाणविशेषत्वात्सर्वकर्मणां राजसूयावयवभूतानां तन्त्रं वरणमिति उपक्रमवृता एवान्तात्कर्तारः। ननु सत्यप्येकफलत्वे देशकालकर्तृभेदादिष्टि-पशु-सोमानां भिन्ना एव प्रयोगाः, 'बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे'

---

दक्षिणात्वमाशङ्क्य परिहरति—तन्त्रत्व इति। गम्यमानेति। प्रत्येकं दक्षिणाशब्दश्रवणादिति भावः। दक्षिणाशब्दस्य तदेकदेशे वृत्तौ च लक्षणैव दोष इति बोध्यम् ॥

इति दक्षिणाभेदेन तन्त्रभेदाधिकरणम् ॥ १ ॥

२

**अनियमः**० आपवादिकी सङ्गतिः। **अधिष्ठान**माश्रयः। **किमिति**। अनियमस्य नियमरूपप्रतियोगिसापेक्षत्वात्तदुत्तरमुपन्यासः। **अङ्गभूतस्येति**। कर्तुः प्रयोगाङ्गत्वात्तत्संस्काररूपवरणमपि प्रयोगाङ्गम् तद्भेदाद्भिन्नमित्यर्थः। **यस्मिन्निति**। यत्कर्मोद्देशेनेत्यर्थः। **अपवृक्ताः** नष्टसंस्काराः। सिद्धान्तमाह—**सर्वस्येति**। राजसूयपदस्य समुदायनामत्वात्तस्य च फलसाधनत्वेनैकचिकीर्षाविषयत्वात्कर्तॄणामपि युगपदेवोपादानम्। अन्यथा कर्त्रन्तरालाभे कर्मवैगुण्यं स्यादिति तन्त्रमेव वरणमित्यर्थः। एवं यथाश्रुते भाष्यव्याख्याने वार्तिकोक्तदूषणशङ्कामाह—**नन्विति**। **अयमर्थः**—देशकालकर्तृभेदाद्भिन्न-

ऐन्द्रमेकादशकपालं राजन्यस्य गृहे 'इत्यादिदेशभेदः, षडेव पूर्वेद्युर्निरूप्याणि, षडुत्तरेद्युरि'ति कालभेदः, दक्षिणाभेदाच्च कर्तृभेदः। तदेवं भिन्नेषु प्रयोगेषु यस्मिन्कर्मणि प्रयुयुक्षिते वरणमनुष्ठितं तदर्थमेवैतदिति विशेषग्रहणान्नास्ति तन्त्रत्वम्। न हि पवित्रारम्भसमयेऽनेकेष्टिव्यवहितस्याभिषेचनीयस्य प्रयोग उपस्थितो येन तदेव तस्यापि वरणं स्यात्। न ह्यकर्मकालं यूपच्छेदनवत् प्रकृतावृत्विग्वरणं येन सर्वकर्मार्थं स्यात्। कर्मकालत्वे तु तद्भेदात् पौर्णमास्यमावास्ययोरिव सत्यप्येकफलत्वे भेदेनैव वरणमृत्विजश्च। तस्मादनियमो ज्यायान्। भाष्यकारमते च सौमिकवरणस्य यज्ञसंयोगेन केवलप्रधानार्थत्वादग्नियोगविमोकवत् विस्पष्टमेव भेदेन प्रत्यहं वरणमित्यनाशङ्कनीयमेव तन्त्रत्वम्। सत्यमेवमङ्गभूतस्य वरणस्य भेदः। यत्तु लौकिकं वरणं तस्य तन्त्रत्वमस्माभिरुच्यते। यजमानो हि लौकिकप्रार्थनमृत्विजां कुर्वन् सर्वराजसूयोद्देशेन कुर्यात् लाघवादविघ्नसमाप्तये च, अन्यथा ह्येककर्मार्थे प्रार्थिताः कदाचित्तत्समाप्तौ ते न याजयेयुः, अन्ये च न लभ्येरन्, तत्र कर्मविघ्नो भवेत्। निरन्तरप्रयोगाणि च राजसूयकानि कर्माणि दर्शपूर्णमासवदौदासीन्यं मध्ये न लभन्त इति त एवान्तादविघ्नसमाप्त्यर्थमवश्यं स्थापनीया इत्येतावानभिप्रायः॥

इति राजसूये कर्तुस्तन्त्रताधिकरणम्॥ २॥

---

प्रयोगाणामेव कर्मणां राजसूयशब्देन फलसम्बन्धो न समुदायस्याकर्मणां निरपेक्षतयोत्पन्नानां समुदायस्य प्रागनवगमात्। समुदायिनां कर्मणामेव दर्शपूर्णमासवत्फलसाधनतावगमात् तद्वदेव च प्रयोगभेदात्। वरणस्य सर्वादौ विधानाभावादतिदेशप्राप्तस्य च तत्तत्कर्मकालभेदेनैव करणौचित्यात्, न तन्त्रता। अन्यथा अङ्गान्तराणामपि तन्त्रत्वापत्तेरिति। स्वमतविरोधोऽपि दूषणमित्याह—**भाष्येति**। अत्र वार्तिकोक्तमेव परिहारमाह—**सत्यमिति**। नन्वेवं दर्शपूर्णमासयोरपि रयादित्याशङ्कां वैषम्योक्त्या परिहरति—**दर्शेति**॥

इति राजसूये कर्तृतन्त्रताधिकरणम्॥ २॥

३

अवेष्टौ० राजसूयेऽवेष्टिर्नामेष्टिः 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणे'त्यादि पञ्चहविष्का। सा चेयम् 'ईश्वरो वा एषः-दिशोऽनून्मदितोर्यद्दिशोऽनुव्यवस्थापयन्ति, दिशामवेष्टयो भवन्ति, दिक्ष्वेव प्रतितिष्ठन्त्यनुन्मादाये' त्येवं दिग्व्यवस्थापने निमित्तोन्मादपरिहारतया श्रूयमाणा राजसूयान्तर्गतेति तावदविवादम्। राजसूये हि 'दिशो व्यवस्थापयन्ती'ति दिग्व्यवस्थापनं विहितम्। अतो नैवं भ्रमितव्यम्-'एतयान्नाद्यकामं याजयेदि'ति प्रत्यक्षया विशेषश्रुत्याऽन्नाद्यसंयोगान्न प्रकरणापेक्षिण्या सामान्यरूपया च स्वाराज्यकामगतयजतिचोदनयेयं गृह्यत इति। तस्या एव बहिःप्रयोगोऽपि श्रूयते- 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा, तमभिघारयेदि'ति ततश्चै 'तयाऽन्नाद्यकामं याजयेदि'ति बहिःप्रयोगस्य फलापेक्षत्वात्तेन सम्बध्यते, क्रतुमध्यप्रयोगस्य तु स्वाराज्यं फलमित्युभयोः फलयोर्भिन्नविषयत्वेनाविरोधः। तदेवं स्थिते क्रतुमध्यस्थायामवेष्टौ चिन्त्यते पञ्चापि हवींषि समानतन्त्राणि, न वेति। तत्र सत्यपि दक्षिणाभेदे 'बार्हस्पत्यं मध्ये निधाये'ति मध्येनिधानविध्यनुपपत्त्या समानतन्त्रत्वम्। ननु ब्राह्मणादिसंयुक्ते बहिः प्रयोगे मध्ये निधानं न क्रतुमध्यप्रयोगे। सत्यम्, तथाऽप्यन्तः प्रयोगेऽप्यैकतन्त्र्यं यथोत्पन्नाया एव हि दक्षिणाभेदयुक्तायाः क्रतुमध्य इव बहिरपि प्रयोगः। तत्र यदि दक्षिणाभेदान्नानातन्त्रत्वं स्यात्, बहिः प्रयोगेऽपि

---

३

अवेष्टौ० आतिदेशिकी सङ्गतिः। वक्ष्यमाणविचारोपयोगितया विषयशोधनायाह—**सा चेयमिति**। एष राजा दिशोऽनु दिग्व्यवस्थापनोत्तरमुन्मदितोः उन्मदितुं ईश्वरो योग्यो भवति यद्दिशोऽनुव्यवस्थापयन्ति तत्तन्नृपविजयेन विहितं दिग्व्यवस्थापनं कुर्वन्ति तज्जनितोन्मादपरिहाराय दिशां सम्बन्धिन्य अवेष्टयो भवन्ति तेन च दिक्षु प्रतितिष्ठन्तीत्यर्थवादार्थः। दिग्व्यवस्थापनविधिं दर्शयति—**राजसूये हीति**। राजसूयान्तर्गत्यभिधानस्य प्रयोजनमाह—**अत इति**। **प्रकरणापेक्षिण्येत्यनेन** तत्सापेक्षतया विलम्बित प्रवृत्तिकत्वमुक्तम्। **स्वाराज्यकामेति**। तद्वाक्येत्यर्थः। **यजिचोदना** यजेतेति शब्दः।

स्यात्। तन्त्रमध्ये विधानमत्यन्तानुपपन्नं स्यात्। तदनुरोधेन समानतन्त्रत्वमङ्गीकृत्य दक्षिणाभेदः कथञ्चिदेकस्मिन्नपि प्रयोगे तत्तत्प्रधानोद्देशेन दानात् समर्थः तथा क्रतुमध्येऽपि स्यात्। अवेष्टिरिति चैकनिर्देशः समानतन्त्रतां गमयति। तस्मात्समानतन्त्रत्वम्।

नैवम्, उत्पद्यमानान्येतानि दक्षिणाभेदसंयुक्तान्युत्पद्यन्ते। राजसूयार्थत्वेन चैषामुत्पत्तिः, 'ईश्वरो वा एष दिशोनून्मदितोरि'त्युपक्रम्य विधानात्। दक्षिणाभेदादुत्पत्तिसमय एवैतानि नानातन्त्राणि क्रतुमध्ये प्रयोक्तव्यानीति निर्णीतम्। पश्चात्तु ब्राह्मणादीनां बहिःप्रयोज्यानीति विधीयमानानि मध्ये निधानविधानान्यथानुपपत्त्या 'एतयाऽन्नाद्यकाममि' ति च प्रयोगवचनैक्यात्समानतन्त्राणि गम्यमानानि दक्षिणाभेदमुज्झित्वा समानतन्त्राणि भवन्ति। क्रतुमध्ये तु दक्षिणाभेदान्नानातन्त्राणीति नावश्यकमैकरूप्यम्॥

इत्यवेष्टावङ्गानां भेदाधिकरणम्॥ ३॥

४

पवमान० सन्त्याधाने पवमानहवींषि 'अग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये' इति। तान्यधिकृत्य श्रूयते 'अह्नो निरुप्याणि सर्वाणि सह निरुप्याणी'ति। तथा 'यः कामयेतोत्तरं वसी-

---

कथं तर्हि राजसूयान्तर्गताया अन्नाद्यफलकत्वमत आह—तस्या एवेति। तदनुरोधेन मध्यनिधानानुरोधेन। एकनिर्देशः एकनामधेयम्। उज्झित्वेति। न चैवं सति बहिः प्रयोग उक्त दक्षिणानापत्तिः। बहिः प्रयोगस्य दक्षिणाकाङ्क्षायां प्रत्येकदक्षिणानामुपस्थितानामेव मिलितत्वेन दक्षिणात्वकल्पनात्। आतिदेशिकान्वाहार्यस्यैव दक्षिणात्वेनेष्टापत्तेर्वा। सूत्रे मध्यनिधानलिङ्गदर्शनादित्यर्थः॥

इत्यवेष्टावङ्गानां भेदेनानुष्ठानाधिकरणम्॥ ३॥

४

पवमान० आतिदेशिक्येव सङ्गतिः। अह्न इति। अत्र संवत्सरद्वादशाहचतु-

यान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरुप्य, पावकशुचिभ्यामुत्तरे हविषी समानबर्हिषि निर्वपेदि'ति। तदिह काम्ये प्रयोगे चिन्त्यते-किं सर्वाणि समानतन्त्राणि ? उत प्रथममुत्तरञ्च द्वयं नानातन्त्रमिति ? तत्राह्नो निरुप्याणि 'सह निरुप्याणी'ति वचनात्समानतन्त्रत्वम्। न च 'यः कामयेते'त्यनेन वचनेन प्रयोगभेदः। नह्येकं वाक्यं प्राप्तानां पवमान-हविषां फलार्थतां प्रयोगभेदञ्च शक्नोति विधातुमिति आन्तः काम्येऽपि समानतन्त्रतामाह। सिद्धान्तस्तु—न हविषां काम्ये विधिः, तदाश्रितस्तु प्रयोगभेद एव दध्यादिवत्कामाय विधीयते। तस्माद्वसीयस्त्वं कामयमानः प्रथमं पृथङ् निरूप्य पश्चादुत्तरे समानतन्त्रे कुर्यात्॥

इति पवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम्॥ ४॥

५

द्वादशाहे० द्वादशाहे 'द्वादश दीक्षाः, द्वादशोपसदः' इति श्रूयते। तत्र विचार्यते—किमेकैकमहः पृथक् द्वादशदीक्षोपसद्युक्तं कृत्वा द्वादश पञ्चविंशतिरात्राः कर्त्तव्याः ? उतैकैकमहः सद्य एव दीक्षोपसद्युक्तं निर्वर्त्य द्वादशस्वहस्सु द्वादशसाद्यस्क्राः कर्त्तव्याः ? अथ वा द्वादशस्वेवाहस्सु चतुरहे दीक्षाः, चतुरहे चोपसदः, चतुरहे सुत्याः सम्पाद्याः ? आहोस्वि-द्दीक्षोपसत्सुत्यानां स्वस्थाने विवृद्धिः, ततो द्वादशसु अहःसु दीक्षाः द्वादशसूपसदः, द्वादश सुत्या इत्येवं षड्त्रिंशता अहोभिः समाप्तिरिति ?

---

रहकालानादरेणान्हो निरूप्याणि सद्य एवेत्यर्थः। वसीयस्त्वम् बहुधनत्वम्। अन्यत्सुगमम्॥

इति पवमानेष्टीनां भेदेनानुष्ठानाधिकरणम्॥ ४॥

५

द्वादशाहे० अत्र दीक्षोपसत्तन्त्रतोक्तेरापवादिकी सङ्गतिः। किमिति। एकैकमहः एकैका सुत्या। पृथगिति। प्रतिप्रधानं गुणावृत्तिरिति न्यायादित्यर्थः। ननु द्वादशाह-शब्दस्य द्वादशदिनात्मककालविधायित्वात्कालस्य च साङ्गप्रधानसम्बन्धित्वात्तद्विरोध

तत्रैकैकस्य यागस्य ज्योतिष्टोमप्रकृतित्वात्तद्वशेनैकैकं सदीक्षोपसत्कं कर्तव्यम्, द्वादशसङ्ख्या च दीक्षागतोपसद्गता च प्रत्येकमेवाङ्गम्। तस्माद् द्वादश पञ्चत्रिंशतिरात्राः द्वादशाहशब्दस्य नामत्वादिति प्रथमपक्षः। सत्यमेकैकं सदीक्षोपसत्कं कर्त्तव्यं न तु द्वादशाहशब्दो नामधेयम्, गुणविधिस्त्वसौ। तेन द्वादशस्वेवाहःसु द्वादशानामपि यागानां सदीक्षोपसत्कानां निर्वर्तनात् द्वादश साद्यस्क्रा इति द्वितीयः पक्षः। गृह्णीम एतत् द्वादशाहशब्दो गुणविधिरिति, न त्वेकैकं पृथक्साङ्गं कर्त्तव्यम्। एकेन विधिना एकस्मिन् फले विनियुक्तानां सहकर्त्तव्यत्वावगमात् तन्त्रमङ्गान्यसुत्याकालानि। तेन तन्त्रेण सर्वेषां दीक्षोपसदः कार्याः। द्वादशाहशब्दस्य गुणविधित्वात् द्वादशस्वेवाहस्सु सर्वं सम्पादनीयम्। तेन चतुरहे दीक्षाः, चतुरहे चोपसदः, चतुरहे च सुत्या इति तृतीयः पक्षः। युक्तमेव तन्त्रं दीक्षोपसदामिति, न तु द्वादशाहशब्दो गुणविधिः। नामधेयत्वन्तु यजिसामानाधिकरण्यात्, द्वादश दीक्षा इति विधानात् द्वादशसु अहस्सु दीक्षाः, तथोपसदस्तन्त्रेण कृत्वा ततो द्वादशस्वहस्सु

---

इत्यत आह—**नामत्वादिति**। अहः शब्दस्य यागवाचितया तत् द्वादशत्वस्य प्राप्तत्वात्तद्योगेन नामधेयं द्वादशाहशब्दो न गुणविधिरित्यर्थः। **गुणविधिस्त्विति**। दिने शक्तस्याहःपदस्य क्रतुपरत्वे लक्षणाप्रसङ्गात् द्वादशदिनरूपकालविधायको द्वादशाहशब्दः। कालश्च साङ्गप्रधानस्येति एकैकस्मिन्नहनि द्वादश द्वादश दीक्षोपसद्युक्तैकैकसुत्याप्रयोग इत्यर्थः। औपदेशिककालेन च दीक्षोपसदामातिदेशिकसुत्यान्यकालत्वबाध इति **तेनेत्यनेन** सूचितम्। सद्य एव साङ्गाः क्रियन्त इति साद्यस्क्राः। **न त्वेकैकमिति**। कर्तुमशक्यमित्यर्थः। तदुक्तं तन्त्ररत्ने—'न खल्वीश्वरोऽपि द्वादश दीक्षोपसद्युक्तां सुत्यां सद्यः शक्नोति कर्तुमिति। युक्त्यन्तरमाह—**एकेनेति**। 'द्वादशाहेन प्रजाकामं याजयेदि'त्येकफलसाधनत्वावगमादेकप्रयोगविधिविषयत्वेन साहित्यावगमात्तस्य चाङ्गसाहित्यं विनाऽनुपपत्तेरसुत्याकालानामगृह्यमाणविशेषत्वेन तन्त्रत्वौचित्याद्दीक्षोपसत्सुत्यानां समसङ्ख्यत्वेन द्वादशानामह्नां त्रेधा विभागेन समावेश इत्यर्थः। तथा चैकस्मिन् चतुरहे एकैकस्मिन्नहनि तिस्रस्तिस्रो दीक्षा अपरस्मिंश्चतुरहे तिस्रस्तिस्र उपसदोऽन्यस्मिन् प्रत्यहं तिस्रस्तिस्रः सुत्याश्च कर्त्तव्या इति। **न त्विति**। प्राप्ते यागे गुणफलसम्बन्धोभयविधौ वाक्यभेदापत्तेरिति भावः। कालवाचिनोऽहःशब्दस्य कथं यागनामता तत्राह—**नामेति**। तृतीयान्ततया करणप्रतिपादकत्वात्तस्य च द्वादशाहानि यत्रेति बहुव्रीहिणा निर्वाहादिति

सुत्याः कार्याः। द्वादशाह इति च नामधेयं प्रधानकालनिमित्तमित्यविरुद्धम्। तस्मात् षड्त्रिंशताऽहोभिः समाप्तिः ॥

इति द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशाहताधिकरणम् ॥ ५ ॥

६

भेदस्तु० यानि सुत्याकालान्यङ्गानि। यथा सवनीयः पशुः, सवनीयाः पुरोडाशाः। तानि किं द्वादशानां यागानां तन्त्रम्? उतावापः? इति संशये, प्रयोगैक्यात्तन्त्रत्वे प्राप्ते प्रधानकालत्वादेषां यस्य काले यदनुष्ठितं तत् तदर्थमिति विशेषग्रहणात्तदपवर्गे तस्यापवर्गादन्यस्मिन्नहनि प्रधानान्तरार्थं पुनः करणेन भवितव्यम् ॥

इति प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ६ ॥

७

सुत्याविवृद्धौ० प्रकृतावुपसत्कालं सुब्रह्मण्याह्वानं श्रूयते 'इत्यहे सुत्यामागच्छ मघवन्निति ब्रूयादि'ति। इतिकरणेन च सङ्ख्योच्यते।

---

भावः। कालपरत्वे द्वादशाहमिति प्रयोगापत्तेरिति। द्वादशस्वहस्स्विति। प्रकृतावेकैकस्मिन्नेकैकस्याः करणादिहाऽपि तथेत्यर्थः ॥

इति द्वादशाहे दीक्षोपसत्सुत्यानां द्वादशाहताधिकरणम् ॥ ५ ॥

६

भेदस्तु० आपवादिकी सङ्गतिः। सिद्धान्तमाह—प्रधानेति। सुत्याकालीनत्वेन तदपूर्वप्रयुक्तत्वात्तदपवर्गे सवनीयाद्यपूर्वाणामपवर्गे इत्यावृत्तिरित्यर्थः। सूत्रार्थस्तु-तद्भेदात्कालभेदात्कर्मणः सुत्याया भेदः तेन च सवनीयादीनां प्रयोगे भेदः स्यात्तेषां सवनीयादीनां प्रधानशब्दत्वात्प्रधानशब्दोपात्तत्वादिति ॥

इति प्रधानैरपृथक्कालाङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ६ ॥

७

सुत्या० अहःपदावृत्यपवादात्सङ्गतिः। सङ्ख्येति सुत्याधिकरणीभूताहे

चतुरहे, त्र्यहे सुत्यामागच्छ मघवन्निति ब्रूयादित्यर्थः । तदिदमकर्मकालत्वात् द्वादशाहे तन्त्रमित्युक्तम् । तस्मिंस्तन्त्रेण क्रियमाणे किं सर्वेषामह्नां पृथक् पृथक् उपलक्षणं—त्रयोदशाहे चतुर्दशाहे आगच्छेति । एवमहः शब्दस्यैकधाशब्दस्येवाभ्यासात्मक ऊहो भवति ? उताविकारेण प्रयोगः ? इति । ननु सिद्धान्तेऽप्यस्त्येव विकारः प्रकृतौ चतुरहे सुत्यामित्युक्तम् । इह तूपसदन्हां द्वादशसङ्ख्यया विवृद्धत्वात् त्रयोदशाह इति वक्तव्यम् । सत्यम्, तथापि नास्त्यूहः सिद्धान्ते । पूर्वपक्षे त्वहःशब्दस्याभ्यासात्मक ऊहो भवति । सिद्धान्ते तु तस्य तन्त्रत्वादविशेषादविकारः । तत्र प्रकृतौ सौत्यस्याह्न उपलक्षितत्वात् इहापि सर्वाणि तान्युपलक्षणीयानि । न चाहः शब्देनागृह्यमाणविशेषत्वात्सर्वोपलक्षणं सिध्यतीति वाच्यम् । सङ्ख्याशब्देन विशेषग्रहणात् त्रयोदशाह आगच्छेत्युक्ते प्रथमस्यैवाह्न उपलक्षणं न द्वितीयादेः । तस्मादावृत्तिः, 'सुत्यामागच्छ मघवन्नि'त्येवं सुत्यासम्बन्धिदेवतासंस्कारमात्रं विवक्षितम् । सङ्ख्याशब्दः अहः

---

सङ्ख्येत्यर्थः । तत्र प्रकृतौ प्रथमोपसद्दिने चतुरह इति द्वितीयोपसद्दिने त्र्यह इति तृतीयोपसद्दिने द्व्यह इति प्रयोगः । **त्रयोदशाह इति ।** आद्योपसद्दिनात्त्रयोदशं प्रथमसुत्यादिनं द्वितीयसुत्यादिनं चतुर्दशमित्येवं सर्वसुत्यादिनप्रकाशनार्थमाचतुर्विंशाहमभ्यासात्मक ऊहः 'एकधास्य त्वचमाछ्यतादि'त्यध्रिगुप्रैषगतैकधाशब्दवदित्यर्थः । **उतेति ।** प्रथमोपसद्दिने त्रयोदशाह इति सकृत् प्रयोगः द्वितीये द्वादशाह इत्येवं सकृदित्यर्थः । **नास्त्यूह इति ।** नहि प्रकृतौ चतुरादिशब्दानां पाठो येन तेषामूहः स्यादिति शब्देन तु तेषामध्याहारेण प्रयोगवत् त्रयोदशादिशब्दानामपीत्यर्थः । पूर्वपक्षमाह—**तत्रेति ।** सिद्धान्तमाह--**सुत्यामिति । संस्कारमात्रम्** प्रकाशनमात्रम् । मात्रेत्येतद्व्यवच्छेद्यमाह—**सङ्ख्येति ।** चशब्देन आगच्छेत्यपि गृह्यते । अयं भावः—नात्र सुत्यागमनसम्बन्धस्यापि विवक्षा, बाधात् । एवञ्च सुतरां तद्विशेषणाहःसङ्ख्ययोरविवक्षेति सुत्यासम्बन्धितयेन्द्रोपलक्षणार्थंतेव तत्तत्सङ्ख्याकाहरागमनस्येत्यन्यपरतया स्वयमविवक्षितं प्रथमसुत्याहः सम्बन्धितया तन्त्रेण देवताप्रकाशकमेव तदिति नाभ्यास इति । सूत्रे-प्रकृत्यन्वयात्प्रकृतिवद्भावा-

शब्दश्चार्थसिद्धत्वाद विवक्षितनिर्देशमात्रम् । अतः सकृदेव वक्तव्यं तन्त्रम् ॥

इति सुत्याकाले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणम् ॥७॥

८

पशुगणे० एकदेवत्येषु प्राजापत्यपशुषु कुम्भीं हृदयशूलं वपाश्रपणी च तन्त्रं विभवादित्युत्तरविवक्षया प्राप्यते ॥

इति वाजपेये प्राजापत्येषु शूलादीनां तन्त्रताधिकरणम् ॥ ८ ॥

९

भेदस्तु० ये तु भिन्नदेवत्या एकजातीयाः पशवः, तेषु किं कुम्भ्यादीनां भेदः ? उतात्रापि तन्त्रमिति ? सन्देहे, सहश्रपितेषु कस्यै देवतायै किमवदेयमित्यविज्ञानात्कदाचिदन्यस्यै उपाकृतात् पशोरन्यस्यै देवताय अवदीयेतापि । तस्माद्भेदः । चिह्नकरणेनापि तु शक्यते कर्त्तुं विवेकः ।

---

दित्यर्थः । आवाहनवत् यथैतत्पादान्त्ये सौम्यव्यवहृतयोराग्नेयकृष्णग्रीवयोः प्रधानभेदादेकस्याप्यग्नेः पृथगावाहनं तद्वदिति ॥

इति सुत्याकाले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणम् ॥ ७ ॥

८

पशुगणे० आतिदेशिकी सङ्गतिः । हृदयश्रपणार्थं शूलं हृदयशूलम् । वपाश्रपणसाधनपात्रं वपाश्रपणी । विभवादिति । परिमाणमहत्वसम्पादनेन तन्त्रत्वसम्भवादित्यर्थः ॥

इति वाजपेये प्राजापत्यपशुषु शूलादीनां तन्त्रताधिकरणम् ॥ ८ ॥

९

भेदस्तु० पूर्वोक्तैव सङ्गतिः । अधिकाशङ्कामाह— सहेति । अन्यस्यै अन्य-

तस्मात्साहित्यलिप्सया तन्त्रत्वम् । ननु वसानां चिह्नकरणासम्भवात्सर्वासां स्वे स्वे याज्यार्द्धर्चान्ते होमसिध्यर्थं भेदेनैव कुम्भी स्यात् । मैवम्, एकीभूतानामपि वसानां स्वे स्वे याज्यार्द्धर्चान्ते हूयमानानां न किञ्चिद्वैगुण्यम् । तस्मात्तन्त्रम् ॥

इति भिन्नदेवतासु शूलादीनां तन्त्रताधिकरणम् ॥ ९ ॥

१०

जात्यन्तरेषु० नानाजातीयेष्वैकादशिनादिषु 'आग्नेयः कृष्णग्रीवः, सारस्वती मेषीत्यादिष्वपि पूर्ववत्तन्त्रत्वम् । न, पक्तिवैषम्यात् । केचिद्धि पशवः शीघ्रं सिध्यन्ति, केचिच्चिरेण । तत्र सहश्रपणे केषाञ्चिदशृतत्वं विलयो वा स्यात् । तस्मात्तन्त्रभेदः ॥

इति भिन्नजातिषु पशुषु पाकभेदाधिकरणम् ॥ १० ॥

११

कपालानि० 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदि'ति श्रुतम् । तत्र यदा बहुष्वश्वेषु प्रतिगृहीतेषु बहवः पुरोडाशाः

---

देवतार्थम् । सिद्धान्तमाह—चिन्हेति । साहित्यलिप्सया एकप्रयोगविधिबोधि साहित्यलाभेच्छया । एकीभूतानामिति । होमस्य वसाप्रतिपत्तिकर्मत्वाद्वसाद्रव्याप्रयोजकस्य सुतरां तद्विभागाप्रयोजकत्वात्स्वयाज्यार्द्धर्चान्तहोमेन च संसृष्टतया प्रतिपत्तिसम्भवान्न वैगुण्यमिति भावः ॥

इति भिन्नदेवतासु शूलादीनां तन्त्रताधिकरणम् ॥ ९ ॥

१०

जात्यन्तरेषु० आपवादिकीं सङ्गतिं सूचयन्नाह—न पक्तीति । पाकेत्यर्थः ॥

इति भिन्नजातिषु पशुषु पाकभेदाधिकरणम् ॥ १० ॥

११

कपालानि० आतिदेशिकी सङ्गतिः । यावत्कपालं चेति । 'यावत्कपालं

प्रयुज्यन्ते, तदा किं तन्त्रेण चत्वारि कपालानि स्युः ? उत प्रतिपुरोडाशं चत्वारीति सन्देहे, दीर्घेषु चतुर्ष्वेव कपालेषु सर्वपुरोडाशानां श्रपण-सम्भवात्तन्त्रत्वप्राप्तौ उच्यते—कपालावयवस्य कपालशब्दवाच्यत्वा-भावात्, तन्त्रत्वे च सर्वेषां कपालावयवेषु श्रपणान्नैकोऽपि चतुष्कपालः स्यात् । यावत्कपालं चाभिप्रथनं प्रकृतितः प्राप्तम् । तच्च तन्त्रत्वे सति न सम्पादयितुं शक्यम् । तस्मात् प्रतिपुरोडाशं कपालभेदः ॥

इत्यश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालभेदाधिकरणम् ॥ ११ ॥

१२

एकद्रव्ये० दर्शपूर्णमासयोरवघातमन्त्रः 'अवरक्षो दिवः सपत्नं वध्यासमिति अवहन्ती'ति । स किं प्रतिप्रहारम्भेदेन प्रयोक्तव्यः ? उत सकृदेव सर्वादाविति विचारे प्राप्ते, प्रत्येकं प्रहाराणामवघातशब्दवाच्य-त्वादवघाताङ्गत्वाच्च मन्त्रस्य प्रधानावृत्तेरावृत्तिः ।

नैवम्, न ह्यत्र प्रधानावृत्तिः, अवघातकरणिका हि तण्डुलभावना 'व्रीहीनवहन्ती'त्यत्र विधीयते । तच्छेषश्चायं मन्त्रविधिः, तेन तण्डुल-भावनाम्प्रति करणीभवतोऽवघातस्य मन्त्रोऽङ्गम् । न च तद्रूपस्यावृत्तिः । न हि प्रति प्रहारं भेदेन तण्डुलाः क्रियन्ते । साभ्यासेन हि ते निष्पद्यन्ते । न च तादृशस्यावृत्तिः । तस्मात्सकृदेव मन्त्रः ॥

इति व्रीह्यवहनने प्रतिप्रहारं मन्त्रानावृत्त्यधिकरणम् ॥ १२ ॥

---

प्रथयती'ति वचनादित्यर्थः । प्रथनं पुरोडाशविस्तारणम् ॥

इत्यश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालभेदाधिकरणम् ॥ ११ ॥

१२

एकद्रव्ये० आवृत्त्यपवादात्सङ्गतिः । तच्छेषश्चेति । अवघातस्वरूपे आनर्थक्याद-पूर्वसाधनीभूततण्डुलीभावोत्पादकत्वेन तस्योद्देश्यत्वात्तद्रूपस्य च प्रत्येकावृत्तित्वान्न-मन्त्रावृत्तिरित्यर्थः ॥

इति व्रीह्यवहननेन प्रतिघातं मन्त्रानावृत्त्यधिकरणम् ॥ १२ ॥

१३

**द्रव्यान्तरे०** नानाबीजेषु 'अग्नये गृहपतयेऽष्टकापालं निर्वपति कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकं चरुमि'त्यादिषु किं सर्वेषामवघातमन्त्रस्तन्त्रम्? उत प्रतिबीजमावर्त्तते? इति संशये, सर्वावघातचिकीर्षायां प्रयुक्तस्य मन्त्रस्यागृह्यमाणविशेषत्वात्तन्त्रत्वम्। सत्यम्, यदि न गृह्येत विशेषः, सन्निपातित्वादवघातस्य समन्त्रस्यातिदेशाद्यस्मिन्नेव बीजे मन्त्रः प्रयुक्तः तस्यैव मन्त्रप्रयुक्तः संस्कारः, नान्यस्येति विशेषग्रहणाद्बीजान्तरे पुनः प्रयोक्तव्यः ॥

इति नानाबीजेष्टौ अवहननमन्त्रावृत्त्यधिकरणम् ॥ १३ ॥

१४

**निर्वपण०** दर्शपूर्णमासयोश्चतुरो मुष्टीन् निर्वपति, अयुङ्गान् युङ्गान् मुष्टीन् लुनाति, त्रिधातु पञ्चधातु वा वेदिं स्तृणाति, चतुर्जुह्वां गृह्णाती'ति श्रूयते। तत्र मन्त्राः 'देवस्य त्वा सवितुः प्रसवे, बर्हिर्देवसदनं दामि, ऊर्णाम्रदसं त्वा स्तृणामि', शुक्रं त्वा शुक्रायामि'ति। किमेते सकृत्प्रयो-

---

१३

**द्रव्यान्तरे०** आपवादिकी सङ्गतिः। **मन्त्रप्रयुक्तस्संस्कारः** मन्त्रस्मारितावघातसंस्कारः। तथा चावघातादीनां भेदात्पूर्वबीजसम्बन्धिपरावपनाद्यनन्तरानुष्ठीयमानबीजान्तरावघातकाले मन्त्रजन्यस्मृतेर्नष्टत्वेन मन्त्रावृत्तिरावश्यकीति भावः॥

इति नानाबीजेष्टाववहननमन्त्रावृत्त्यधिकरणम् ॥ १३ ॥

१४

**निर्वपण०** आतिदेशिकी सङ्गतिः। **अयुग्वेति**। अयुग्मसङ्ख्यं युग्मसङ्ख्यं वा यथा स्यात्तथा कुशमुष्टीन् लुनातीत्यर्थः। **त्रिधात्विति**। धातुशब्देन बर्हिर्मुष्टिरुच्यते। त्रिमुष्टि पञ्चमुष्टि वास्तीर्यमाणं बर्हिर्यत्रेति क्रियाविशेषणम्। **अथवा** वेदिमिति द्वितीया सप्तम्यर्थे। वेद्यां त्रिधातु पञ्चधातु वा बर्हिस्तृणातीत्यर्थः। अतएव व्रीह्याज्यमुष्टिसाहचर्येण दर्भास्तीर्यन्त इति दर्भाणां निर्देशोऽग्रिमग्रन्थे करिष्यते। दर्भाणां स्तरणगुणत्वे

क्तव्याः ? उत प्रतिमुष्टि प्रतिधातु प्रत्याज्यं भेदेनेति सन्देहे, ससङ्ख्यानामेककर्मत्वादवघातमन्त्रवत् मन्त्राणां सकृत्प्रयोगप्राप्तौ उच्यते—युक्तमवघाते, तत्र हि त एव व्रीहयः पुनः पुनरवहन्यन्ते, तेन सकृत्प्रयुक्तेनैव मन्त्रेण सर्वव्रीहीणां समन्त्रकावघातलाभान्न पुनः प्रयोगस्य कारणमस्ति। निर्वापादिषु पुनरन्येऽन्ये व्रीहयः दर्भाः आज्यञ्च प्रतिमुष्टि प्रतिस्तरणं प्रतिग्रहणञ्च निरूप्यन्ते लूयन्ते स्तीर्यन्ते च। ततश्च यत्रैव मन्त्रः प्रयुक्तः तत्रैव तत्कृतसंस्कारलाभात्सर्वेषां तल्लाभाय मुष्टयादिषु भेदेन मन्त्राः ॥

इति प्रतिनिर्वापादि मन्त्रावृत्त्यधिकरणम् ॥ १४ ॥

१५

वेदिप्रोक्षणे० दर्शपूर्णमासयोः श्रूयते 'वेदिरसि बर्हिषे त्वे'ति त्रिर्वेदिं प्रोक्षती'ति। तत्र किं प्रत्यभ्यासं मन्त्रावृत्तिः ? उत सकृदेवादौ मन्त्रः ? इति संशये, प्रोक्षणार्थत्वान्मन्त्रस्य, प्रोक्षणस्य च सङ्ख्यया भिन्नत्वात्प्रतिप्रधानञ्च गुणानामावृत्तेः प्रत्यभ्यासमावृत्तिः। किं चानेन मन्त्रेण 'त्रिः प्रोक्षती'ति वचनाद्विस्पष्टं मन्त्रावृत्तिर्गम्यते। उच्यते—नैवं सम्बन्धः—अनेन मन्त्रेण त्रिरिति, किन्तु मन्त्रस्य करणत्वात् क्रियया

---

तदसङ्गतेरिति। देवस्यत्वेति निर्वापमन्त्रः। बर्हिरिति लवनमन्त्रः। ऊर्णेति स्तरणमन्त्रः। ऊर्णावन्मृदु त्वां स्तृणामीति तदर्थः। शुक्रमित्याज्यग्रहणमन्त्रः। शुक्रं दीप्तं त्वां शुक्रायां जुह्वां गृह्णामीत्यर्थः। ससङ्ख्यानामिति। त्रित्वादिसङ्ख्यानां मुष्ट्यादीनामवघातवदावृत्तावपि एककर्मत्वान्निर्वापादिकर्मैक्यात्सकृत्प्रयोग इत्यर्थः। दृष्टान्तवैषम्याभिधानपूर्वकं सिद्धान्तमाह—युक्तमिति। आज्यं वेत्यनन्तरं अन्यदन्यदिति लिङ्गविपरिणामेनानुषङ्गः। तथा च प्रत्यभ्यासं संस्कार्यभेदात्तत्प्रयुक्तो मन्त्रभेद इत्यर्थः ॥

इति निर्वापलवनादिषु मन्त्रावृत्त्यधिकरणम् ॥ १४ ॥

१५

वेदि० आवृत्यपवादात्सङ्गतिः। आवृत्तेरेव सुजर्थत्वान्न प्रोक्षणक्रियाभेदो युक्तं

सम्बन्धः, अनेन प्रोक्षतीति। त्रिरभ्यासोऽपि क्रियाया एवाङ्गम्। तेन मन्त्र-वदावृत्तिमन्त्र कर्त्तव्यम्। न चात्र क्रियाभेदः, किन्त्वेकैव क्रिया आवृत्ति-धर्मिका क्रियाभ्यावृत्तौ हि सुजिधीयते न क्रियाभेदे। तस्मात्सकृदेव मन्त्रः॥

इति वेदिप्रोक्षणे मन्त्रानावृत्त्यधिकरणम्॥ १५॥

१६

कण्डूयने० ज्योतिष्टोमे श्रूयते 'कृष्णविषाणया कण्डूयते' इति। तत्र मन्त्रः 'कृष्यै त्वा सुसस्यायै' इति। तत्र यदानेकेषु पाण्याद्यङ्गेषु युगपत्कण्डूरुत्पद्यते किं तदा प्रत्यङ्गं मन्त्रावृत्तिः? उत सकृदिति? सन्देहे, कण्डूयनकर्मणः, तदपनेयस्य दुःखस्य दुःखापनयनसंस्कार्याणामङ्गानाञ्च भिन्नत्वात्प्रत्यङ्गमावृत्तिः। तन्त्रत्वे हि यस्मिन्नेव त्वङ्गे मन्त्रः प्रयुक्तः, तदर्थः स इति विशेषग्रहणादङ्गान्तराणां मन्त्रकृतसंस्कारहानिः स्यात्। सत्यं दुःखानि भिन्नानि, न तु दुःखापनयनं स्वरूपेण चिकीर्षितं नाप्यङ्ग-संस्कारः, येन तद्भेदाद्भेदः स्यात्। किन्त्वात्मानं कण्डूदुःखाक्षिप्तचित्तम-पनीतकण्डूदुःखं कर्त्तुं कण्डूयनं क्रियते। तेन यावता दुःखेनानपनीते-नात्मनि दुःखं भवति, तावत्सर्वमपनेतुमभिसन्धाय कण्डूयनमुपक्रममाणेन प्रयुक्तो मन्त्रोऽगृह्यमाणविशेषत्वात्तन्त्रं भवति॥

इति कण्डूयनमन्त्रस्यानावृत्त्यधिकरणम्॥ १६॥

---

इत्यरुचेराह—किञ्चेति। मन्त्रस्याभ्यासाङ्गत्वप्रतीतेः स्फुटैवावृत्तिरित्यर्थः। शेषं सुगमम्॥

इति वेदिप्रोक्षणे मन्त्रानावृत्त्यधिकरणम्॥ १५॥

१६

कण्डूयने० सङ्गतिरातिदेशिकी। विशेषाशङ्कामाह—कण्डूयनेति। सिद्धान्त-माह—सत्यमिति। लोकेऽपि कण्डूयनस्यात्मार्थत्वावगमात्तस्य प्रकृते क्रतूपयुक्तत्वाच्च तस्यैवानाकुलत्वसम्पादिकैकैव कण्डूतिक्रियावघातवदिति न मन्त्रावृत्तिरित्यर्थः। शेषं स्पष्टम्॥

इति कण्डूयनमन्त्रस्यानावृत्त्यधिकरणम्॥ १६॥

१७

स्वप्ननदी० ज्योतिष्टोमे स्वप्नार्थो मन्त्रः 'त्वमग्ने व्रतपा असी'ति। तथा नदीतरणमन्त्रो 'देवीरापो अपां नपादि'ति। तथा अभिवृष्टस्य 'उदन्तीर्वलं धत्तो' इति। तथा अमेध्यप्रतिमन्त्रणमन्त्रः 'अबद्धं मनो दरिद्रञ्चक्षुरि'ति। तत्र संशयः—यदा दीक्षितः पुनः पुनः प्रतिबुध्य स्वपिति, अनेकस्रोतसं वा नदीं तरति, सन्तानेन चाभिवृष्यते, युगपच्चानेकान्यमेध्यानि पश्यति तदा किं मन्त्राणामावृत्तिः? उत सकृत्प्रयोगः? इति। विशेषग्रहणादावृत्तिप्राप्तावुच्यते सर्वां रात्रिं निद्रामभिसन्धाय मन्त्रं प्रयुङ्क्ते, तथा नदीं, वृष्टिञ्च। नावान्तरनिद्रां नाप्येकं स्रोतः तथा वर्षधाराम्। तस्मात्सकृत्प्रयोगः अमेध्येषु तु कालभेदाभावादविस्पष्टमगृह्यमाणविशेषत्वम् ॥

इति स्वप्ननदीतरणादौ मन्त्रानावृत्त्यधिकरणम् ॥ १७ ॥

१८

प्रयाणे० दीक्षितस्य प्रस्थानार्थो मन्त्रः 'भद्रादभिश्रेयः प्रेहि' इति। स किं पुनः पुनः विश्रम्य प्रतिष्ठमानेन प्रयोक्तव्यः? उत सकृदेवेति? संशये, विशेषग्रहणादावृत्तिं मन्वानस्य उत्तरम्। आ समीहितप्राप्तेरेकं प्रयाणमिति तदर्थस्य मन्त्रस्य सकृत्प्रयोगः ॥

इति प्रयाणे मन्त्रानावृत्त्यधिकरणम् ॥ १८ ॥

---

१७

**स्वप्न०** आतिदेशिक्येव सङ्गतिः। **अभिवृष्टः** वृष्टिसम्बद्धः। **प्रतिमन्त्रणेति।** अमेध्यदर्शने निमित्ते मन्त्राणामभिधानं तत्रेत्यर्थः। शेषं स्पष्टम् ॥

इति स्वप्ननदीतरणादौ मन्त्रानावृत्त्यधिकरणम् ॥ १७ ॥

१८

**प्रयाणे०** सैव सङ्गतिः। **विशेषेति।** विश्रामस्य निश्चितत्वात्तत्पूर्वप्रयाणार्थतारूपविशेषस्य मन्त्रे ग्रहणादित्यर्थः ॥

इति प्रयाणे मन्त्रानावृत्त्यधिकरणम् ॥ १८ ॥

१९

उपरव० ज्योतिष्टोमे सन्त्युपरवाश्चत्वारः। तेषां खननार्थो मन्त्रः 'रक्षोहणोवलगहनो वैष्णवान्खनामी'ति। स किं चतुर्णामपि तन्त्रम्? उत प्रत्युपरवं भिद्यते? इति संशये, 'वैष्णवानि'ति बहुवचनान्तत्वात्सकृदेव प्रयुज्यमानो मन्त्रः सर्वानभिधत्त इति। न पुनः प्रयोक्तव्यः प्रत्येकं हि प्रयोगे बहुवचनमसमर्थम्। तस्मात्तन्त्रम्।

नैवम्। खननक्रियास्तावत् खेयभेदेन भिन्नाः क्रमेणोपक्रम्यन्ते, न युगपत्। मन्त्रश्च सन्निपाती, तेन यस्य खननस्योपक्रमो मन्त्रास्तेन सन्निपतित, तदर्थ एव मन्त्रो नान्येषामुपरवाणामलमुपकर्तुम्। अतः प्रातिपदिकमात्रं कारकमात्रं च विवक्षितम्। बहुवचनं त्वेकस्मिन्नेव पूजार्थं प्रयुक्तमिति वेदितव्यम्॥

इत्युपरवमन्त्रस्यावृत्त्यधिकरणम्॥ १९॥

२०

हविष्कृदध्रिगु० ज्योतिष्टोमे अनुसवनं सवनीयाः पुरोडाशाः। तेषु चोदकप्राप्तं हविष्कृदाह्वानं तन्त्रम्? उत प्रतिसवनं भेदेन? तथा—वाजपेये प्राजापत्यान् क्रतूपशूंश्च सहोपक्रम्य यदा प्राजापत्यान् पर्यग्नि कृत्वोत्सृज्य ब्रह्मसाम्न्यालभेत, तदा किं क्रतुपश्वालम्भकाले प्रातस्सवनकाले

---

१९

उपरव० आपवादिकी सङ्गतिः। उपरवा गर्तविशेषाः। अत्र निर्वपणादिमन्त्रन्यायेन संस्कार्यभेदादावृत्तिप्राप्तावपि बहुवचनवशेन तन्त्रताशङ्का। न्यायेनावृत्तिप्राप्तेः गुणे त्वन्याय्यकल्पनेति पाशाधिकरणन्यायेन बहुवचनोपपत्तेर्न तन्त्रतेति सिद्धान्तः॥

इत्युपरवमन्त्रस्यावृत्त्यधिकरणम्॥ १९॥

२०

हविष्कृत्० आतिदेशिकी सङ्गतिः। प्रयोगेति। तेन साङ्गप्रधानसाहित्यबोधना-

कृतमध्रिगुवचनं प्राजापत्यानामपि तन्त्रम्? उत प्राजापत्यार्थत्वेन ब्रह्मसामकाले पुनरध्रिगुर्वक्तव्यः? तथा 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं आग्नेयं कृष्णग्रीवमि'ति कृष्णग्रीवयोर्भेदेन प्रदाने क्रियमाणे, अवदाने च किमनुवाक्यायाः मनोतामन्त्रस्य च तन्त्रत्वम्? उतावृत्तिरिति विचारे, सर्वत्रासन्निपातित्वात्प्रयोगवचनानुग्रहाय तन्त्रत्वम्। न ह्येतेषां करणवत्सन्निपातित्वम्, अनुवाक्याऽपि हि याज्याव्यवधानादसन्निपातिन्येव। तस्मादगृह्यमाणविशेषत्वात् तन्त्रत्वभ्रान्तिः कस्य चित्स्यादिति तद्व्यावृत्त्यर्थमिदं सूत्रम्। हविष्कृदादीनामावृत्तिः, कालभेदेन विशेषग्रहणात्। न च प्रयाजवदत्र कालान्तरे कृतः संस्कारः कालान्तरेऽवतिष्ठते, येनानावृत्तिः स्यात् प्रकाशनार्थत्वादेषाम्। यद्यप्येतानि करणवत् सन्निपातीनि, तथाऽपि प्रकाशनार्थत्वात्, प्रकाशनस्य च कालान्तरे प्रध्वंसात्। तस्मादावर्त्तेरन्॥

तन्त्रावापनिमित्तः प्रयोगपरिमाणनिर्णयो वृत्तः।
प्रासङ्गिके प्रयोगे परिमाणमतः प्रवक्ष्यामः॥

इति ज्योतिष्टोमे हविष्कृदादिमन्त्राणामावृत्त्यधिकरणम्॥ २०॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायामेकादशाध्यायस्य चतुर्थः पादः
समाप्तश्चैकादशोऽध्यायः॥



---

दावृत्तौ तद्बाधापत्तेरित्यर्थः। वृत्तवर्तिष्यमाणयोः सङ्गतिं सूचयितुमाह—तन्त्रेति।

इति हविष्कृदादिमन्त्राणामावृत्त्यधिकरणम्॥ २०॥

इति श्रीमद्रामभट्टसूरिवरात्मजवैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां प्रभाख्यायामेकादशाध्यायस्य चतुर्थः पादः।



# अथ द्वादशोऽध्यायः

## प्रथमः पादः

१

तन्त्रि० सकृदनुष्ठितमप्यङ्गं बहूनां प्रधानानामेकदेशकालकर्तृकाणां शक्नोत्युपकर्त्तुमित्येतत्तान्त्रलक्षणोक्तमुपजीव्य किमगृह्यमाणविशेषत्वादेवं भवति ? उतास्मा इदमनुष्ठानं नास्मा इत्येवं गृह्यमाणेऽपि विशेषे अन्यार्थेऽप्यनुष्ठितमप्यङ्गमन्यस्यापि देशाद्यभेदे शक्नोत्युपकर्त्तुं न तादर्थ्येन पुनरनुष्ठातव्यमिति ? चिन्त्यत इति तन्त्र-प्रसङ्गयोर्हेतुहेतुमत्ता। अग्नीषोमीये पशावैष्टिको विध्यन्तः प्रवर्त्तते। तत्र पशुपुरोडाशः 'अग्नीषोमीयस्य वपया प्रचर्याऽग्नीषोमीयं पशुपुरोडाशं निर्वपती'ति तत्राप्यैष्टिको विध्यन्तः। तत्र चिन्त्यते—किं पश्वर्थानुष्ठितान्यङ्गानि पुरोडाशस्य नोपकुर्वन्ति, तेन तदर्थं पृथगनुष्ठातव्यानि ? उत तैरेवोपकारसिद्धेर्न पृथक् पुरोडाशार्थेनाङ्गानामनुष्ठानमिति। तत्र—

---

# द्वादशाध्यायः

## प्रथमः पादः

१

**तन्त्रिसमवाये**० पूर्वाध्यायेन सहास्याध्यायस्य सङ्गतिं दर्शयितुमाह—**सकृदिति**। तदर्थानुष्ठितस्यैव तदुपकारकत्वस्य प्रायशो दर्शनात्तन्त्रमौत्सर्गिकम्। प्रसङ्गस्तु तन्त्रिमध्यपातादिवागृह्यमाणेऽपि विशेषे क्वचिदेवोपकारलाभेनेति विशेषरूपत्वादुत्सर्गाधीन इति हेतुहेतुमद्भावसङ्गतिरिति भावः। **प्रसङ्गश्च** स्वानुद्देश्यकपदार्थानुष्ठानजन्योपकारलाभः। यथा पुरोडाशस्य स्वानुद्देश्यकपश्वर्थानुष्ठितप्रयाजजन्योपकारलाभः। प्रणयनस्य च स्वानुद्देश्यकगोदोहनानुष्ठानजन्योपकारलाभ इति द्रष्टव्यम्। अत्र च वाजिनतुषोपवापादावप्रयोजकेति प्रसङ्गव्यावृत्तये प्रयोजकत्वशक्तिमत्वे सतीति विशेषणं बोध्यम्। करिष्यमाणविचारार्थं वस्तुस्थितिमाह— **अग्नीषोमीय इति**। तत्र पुरोडाशो विहित इति शेषः। **पशुपुरोडाशम्** पशुयागाङ्गं पुरोडाशम्। पूर्वपक्षमाह—**अङ्गा-**

अङ्गानि पशुकालानि पश्वर्थानीत्यसंशयम् ।
अनागते पुरोडाशकाले नहि तदर्थता ॥
अन्यार्थानुष्ठितं चाङ्गं न ह्यन्यस्योपकारकम् ।
तदर्थेन कृतं तस्य तथा प्रकृतिदर्शनात् ॥

प्रकृतौ हि यदुद्देशेनाङ्गमनुष्ठितं तस्यैवोपकारकं दृष्टम्, इहापि नान्यार्थमनुष्ठितमन्यस्योपकरोति । किञ्च—

विधीयमानं कालादौ कर्म साङ्गं विधीयते ।
स्वकालेऽतः पुरोडाशः कार्यः सर्वाङ्गसंयुतः ॥

वपाप्रचारकालेऽप्युपदिष्टातिदिष्टसर्वाङ्गयुक्ते पुरोडाशे कर्त्तव्यतया विज्ञायमाने को नाम शास्त्रातिक्रमेण प्रधानमात्रमनुष्ठातुं क्षमः, वैगुण्यञ्च प्रसङ्गसमाश्रयणे स्यात् । प्रयाजानन्तर्यं ह्याज्यभागाङ्गम्, तदानन्तर्यञ्च प्रधानाङ्गम्, प्रकृतिवदतिदेशात् । तदिह पाशुकेषु प्रयाजेषु

---

**नीति** । **पशुकालानि** । पशुयागे प्रकृतिवत् क्रमानुष्ठितानि । पुरोडाशार्थतापि स्यादत आह—**अनागत इति** । अनागते दूरभाविनि पुरोडाशकाले सति तदर्थता नेत्यर्थः । तथा च प्राकृतस्य प्रयाजानन्तरमाज्यभागौ ततः प्रधानमिति क्रमस्यासम्भवान्न पुरोडाशार्थतेति भावः । ननु पुरोडाशार्थत्वाभावेऽपि तदुपकारकत्वसम्भवान्न पुनरनुष्ठानं स्यादत आह—**अन्येति** । अन्यमात्रेत्यर्थः । अन्यथा तन्त्रानुपपत्तेः । **तस्येत्यनन्तरमुपकारकमित्यनुषङ्गः । प्रकृतीति** । अन्यथा स्वर्गार्थतयानुष्ठितदर्शादितः पुत्रादेरप्युत्पत्यापत्तेरिति बोध्यम् । ननु पितृतृप्त्यर्थमनुष्ठितेन जलदानेनाम्रोपकारस्य लोके दर्शनान्न तदर्थानुष्ठितस्यैव तदुपकारकत्वमिति नियम इत्यत आह—**तथा प्रकृतीति** । प्रकृतिवदित्यतिदेशेन यथा प्रकृतौ तदुद्देशेन कृतस्य तदुपकारित्वमेवं विकृतावपीति बोधनाल्लोके च दृष्टमात्रोपकारस्य प्रत्यक्षगम्यत्वेऽन्यत्रालौकिकोपकारे मानाभाव इति भावः । ननु प्रकृतावुद्देशस्यार्थिकत्वान्न चार्थिकं चोदकः प्रतिदिशतीति न्यायेन तदनतिदेशादन्यार्थेनाप्युपकारसम्भव इत्यत आह—**किञ्चेति । स्वकाले** 'वपया प्रचर्ये'ति विहितवपा प्रचारोत्तरकाले । ननु प्रसङ्गत उपकारलाभाच्छास्त्रं तद्व्यतिरिक्तानुष्ठानपरमेवेति न तद्विरोध इत्यत आह—**वैगुण्यं चेति** । 'न तौ पशौ करोती'ति निषेधात्पशावाज्यभागयोर्विकल्प इत्युक्तं दशमे । तत्र पशावकरणपक्षे पुरोडाशार्थत्वेन तयोरनुष्ठानात्प्रयाजानन्तर्यस्याज्यभागाङ्गस्य प्रसङ्गपक्षे बाध इत्याह—**तदिहेति** । पशावाज्यभागकरणपक्षे त्वाह

प्रसज्यमानेषु तदानन्तर्यगुणहानाद्द्विगुणावाज्यभागौ न स्वकार्यं साधयेताम्। अथ तु वैकल्पिकत्वात्पशावेवाज्यभागावनुष्ठितौ, ततस्तयोरपि प्रसज्यमानयोः पुरोडाशस्य तदानन्तर्यगुणलोपान्न स्वकार्यसाधनत्वं स्यात्। तस्मान्न पाशुकानामङ्गानां पुरोडाशे प्रसङ्ग इति तस्य स्वाङ्गानि पृथक्कर्त्तव्यान्येव।

गुणकालकृतं चापि वैगुण्यं भाष्य ईरितम्।
तेनापि न प्रसङ्गोऽस्तीत्येवं प्राप्तेऽभिधीयते॥
वितते पाशुके तन्त्रे समाप्तिमागते सति।
मध्ये पतन् पुरोडाशस्तत्तन्त्रमुपजीवति॥
चोदकेन पुरोडाशे यो विध्यन्तः समर्पितः।
ऐष्टिकः स पशावेव विततो दृश्यते यदा॥
तदा तेनैव संतुष्टः पुरोडाशविधिः स्वयम्।
प्राकृतानां पदार्थानां न करोत्युपसङ्ग्रहम्॥

पुरोडाशप्रयोगवचनो हि पशुतन्त्रे वितते तदीयेषु प्रयाजानुयाजाद्यङ्गेषु कृतकरिष्यमाणेषु तत्कार्येषु चोपकारेष्वारब्धारिप्सितरूपेण मनसि विपरिवर्त्तमानेषु तन्मध्ये पुरोडाशभावनां चोदकसमर्पितप्रयाजाद्यङ्गजन्योप-

---

**अथत्विति**। वैगुण्यान्तरमप्याह—**गुणेति**। पशावेकादशप्रयाजान् यजतीत्येकादशत्वं प्रयाजगुणः। 'तिष्ठन्तं पशुं प्रयजन्ती'ति च कालः। एवमनुयाजानामेकादशत्वं पृषदाज्यद्रव्यकत्वञ्च गुणस्तत्कृतं पुरोडाशे वैगुण्यम्। तत्र प्रकृतिवत् प्रयाजानां पञ्चत्वाद्धविरासादनोत्तरकालत्वाच्च। तथानुयाजानां त्रित्वात्केवलाज्यद्रव्यकत्वाच्चेत्यर्थः।

सिद्धान्तमाह—**वितत इति**। **समर्पितः** समर्पयितुमारब्ध इत्यादि कर्मणि क्तप्रत्ययः। पश्वर्थैरेवोपकारलाभात्पदार्थानां पुरोडाशेऽतिदेशस्याऽपि प्रयोगवदकल्पनात्। यद्वा विध्यन्तशब्देनोपकारसम्पादनं ग्राह्यमिति न विरोधः। **तेनैवेति**। लाघवरूपोपपत्तिकथनम्। श्लोकं व्याचष्टे—**पुरोडाशेति**। अङ्गजन्योपकारवत्ता हि करणस्य फलसाधने अपेक्षिता। तत्र येषामुपकाराणां पश्वर्थकृताङ्गजन्यानां लाभस्तद्वत्ता तज्जनकाङ्गातिदेशकल्पनं तदनुष्ठापनञ्च विनैव सिद्धेति तद्व्यतिरिक्तोपकारजनकाङ्गविशिष्टतयैवातिदेशावगतया पुरोडाशानुष्ठानं प्रयोगविधिना बोध्यते। तद्बोध्यानाञ्च कालक्रमाद्यङ्गं

कारयुक्तां विदधल्लाघवात्पश्वर्थैरेवोपकारैस्तद्वत्तामुपजीव्य, यान्यङ्गानि पशुतो न लभ्यन्ते, तद्युक्तामेव विदधाति, यद्विशिष्टं च प्रधानं विधीयते तेषामेव प्रधानकालत्वं क्रमश्चाङ्गं भवति। तेन प्रधानमात्रानुष्ठानेऽपि नास्ति शास्त्रातिक्रमः। नापि क्रमलोपाद्वैगुण्यम्। तद्धि कार्य्यस्य प्रयाजादिजन्यस्य कृतत्वात्तन्मात्रस्य च पुरोडाशभावनयोपजीवनाद्भाव्य एव परिहृतम्।

नन्वेवं पौर्णमास्यर्थकृताङ्गकृतानामुपकाराणामाफलापूर्वनिष्पत्तेर-वस्थानादमावास्यायां न भूयः प्रयाजादीनि कर्त्तव्यानि स्युः, तत्र 'त्रयोदशामावास्याया'मिति वषट्काराहुतीनामाहवनीयगतानां सङ्ख्या-दर्शनं नोपपद्यते। तदिदं वारुणप्राघासिकयोर्दक्षिणोत्तरविहारयोर्मिथः प्रसङ्गनिराकरणेन निराकृतं चोद्यम्। "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेते"ति द्वे वाक्ये परस्परमनपेक्षमाणे द्वयोः कालयोस्त्रिकस्य त्रिकस्य कृत्स्नाङ्गयुक्तस्य प्रयोगद्वयं विदधाते इति कः प्रसङ्गः प्रसङ्गस्य? प्रसङ्गे हि यथाचोदितानुष्ठानात् क्रमादि-

---

नान्येषामित्यर्थः। उक्तन्यायस्य प्रकृतोपयोगमाह—तेनेति। प्रधानमात्रेत्यनेन लब्धो-पकाराङ्गव्यवच्छेदः। क्रमेति। गुणकालयोरप्युपलक्षणम्। ननु सङ्ख्याकालपृथक्त्वभेदा-त्प्राकृतकार्यात्कार्यान्तरप्रसङ्गे कथं प्रसङ्गन्यायः स्यादत आह—तद्धीति। प्राकृतकार्यसाधन-पदार्थोद्देशेन सङ्ख्यादिविशेषमात्रविधानान्न कार्यभेद इति भावः। मध्ये पतन्नित्यस्य व्यावर्त्यं दर्शयितुं शङ्कते—नन्वेवमिति। इष्टापत्तिशङ्कामपाकरोति—तत्रेति। वषडित्याघारवृत्यर्थम्। आहवनीयेति पत्नीसंयाजव्यावृत्यर्थम्। निराकृतमिति एकादश इति शेषः। तथा च तन्त्रमध्यपातरूपहेत्वभावान्न दर्शे पूर्णमासतन्त्रप्रसङ्ग इति भावः। एतदेव विवृणोति—पौर्णमास्यामिति। परशास्त्रापेक्षित्वे हि तदुपस्थितोप-कारवत्तावलम्बनेन प्रसङ्गन्यायः। यथा प्रधानभूतपशुशास्त्रापेक्षिणि पुरोडाशविधौ। दर्शादौ तु नैवमिति न पूर्णमास्युपकारवत्वं दर्शशास्त्रतात्पर्यविषय इति पृथगेवानुष्ठान मित्यर्थः। प्रसङ्गे हीति। शास्त्रतात्पर्याविषये प्रसङ्गेऽङ्गीकृते सतीत्यर्थः। प्रकृते

लोपेन वैगुण्यान्नामावास्या स्वकार्यसाधनाय पर्याप्नुयात् । इह त्वन्यस्य तन्त्रे विहिते प्रवृत्तानपवृत्ते च मध्ये पुरोडाशो विधीयमानः प्रसङ्गमुप- जीवतीति वैषम्यम् ।

यत्तु प्रकृतावनन्योद्देशेनानुष्ठितान्यङ्गान्युपकारकाणि दृष्टानि, इहापि पुरोडाशे तथैव कर्त्तव्यानीत्युक्तम् । तदयुक्तम् । न हि प्रकृता- वुद्देशोऽङ्गम्, अविहितत्वात् । प्रयाजादिस्वरूपमात्रं त्वङ्गमार्थिकस्तु तत्रोद्देशः । न चार्थिकं चोदकः प्रतिदिशति । तस्मादस्ति प्रसङ्गः । अन्यार्थानुष्ठिताङ्गस्यान्येनोपजीवनं प्रसङ्गः ॥

इति तन्त्रिसमवायाधिकरणम् ॥ १ ॥

२

जैमिनेः० स्थितं पाशुकैरङ्गैः कार्यसिद्धेर्न पुरोडाशस्य पृथगङ्गानि कर्त्तव्यानीति । यत्पुनराज्यभागावघातादिकमङ्गं पशौ न विद्यते, तदपि पुरोडाशे न कर्त्तव्यम्, कर्तव्यं वेति संशयः । तदर्थमिदं विचार्यते—प्रसङ्ग-

---

तद्वैषम्यमाह—इह त्विति । उपस्थितपाशुकाङ्गोपकारवैशिष्ट्यस्यैव पुरोडाशशास्त्र- तात्पर्यविषयत्वमिति वैषम्यमित्यर्थः ।

यत्त्विति । उद्देशांशस्याप्युपकारजनकत्वात्तदभावादुपकाराभाव इति शङ्कार्थः । न हीति । प्रयाजादिभिर्दर्शपूर्णमासोपकारं भावयेदित्येव शास्त्रार्थो न तु तदुद्देशेना- नुष्ठितैरित्येतावत्पर्यन्तमित्यार्थिक एवोद्देशांश इत्यर्थः । प्रसङ्गलक्षणमाह—अन्यार्थेति । अत्र चाप्रयोजकेति प्रसङ्गवारणाय । प्रयोजकत्वशक्तिमत्वे सतीति विशेषणमवगन्तव्यम् । सूत्रार्थस्तु—तन्त्रिणामङ्गवतां प्रधानानां समवाये चोदनातः समानानामेकदेशकालकर्तृ- काणामैकतन्त्र्यमाग्नेयादीनामुक्तम् । अतुल्येषु तु पशुपुरोडाशादिषु भेदः स्यादङ्गानाम् । कुतः ? विधिप्रक्रमस्याङ्गानुष्ठानस्य तादर्थ्यात्पश्वर्थत्वात् । अत्र हेतुः श्रुत्या पुरोडाश- कालस्य निर्देशात् । वपया प्रचर्येति वपायागोत्तरं पुरोडाशकाल इति ॥

इति तन्त्रिसमवायाधिकरणम् ॥ १ ॥

२

जैमिनेः० अत्र पृथगङ्गाननुष्ठानस्य क्वचिद्विषये अपवादात्सङ्गतिरिति सूचयितु- मुत्सर्गमनुवदति—स्थितमिति । तदर्थमिति । पुरोडाशेन तद्विधिना पशुचोदकेनैव

मुपजीवता पुरोडाशेन प्रयोगवचनमबाधित्वा चोदको बाध्यते ? उत चोदकस्याबाधः प्रयोगवचनस्तु बाध्यते ? इति ।

तत्र प्रयोगवचनः प्रत्यक्षत्वान्न बाध्यते ।
चोदकस्त्वनुमेयत्वाद्दुर्बलो बाधमर्हति ॥

लिङ्प्रत्ययो हि प्रयोगवचनः प्रत्यक्षो न शक्यते बाधितुम् । प्रकृतिवच्छब्दस्तत्त्वानुमानिकोऽयं बाध्यते । तेन पाशुकेन चोदकेन प्रापितान्यङ्गकार्याणि पौरोडाशिकः प्रयोगवचनः संगृह्य तद्विशिष्टं प्रयोगं विधत्ते, तेनैव च पुरोडाशस्य निराकाङ्क्षत्वाच्चोदको लुप्यते । तेन पशौ विद्यमानानामेव पुरोडाशेन सङ्ग्रहादाज्यभागादेरकरणमिति प्राप्ते ब्रूमः—

चोदकेनाङ्गकार्याणां पुरोडाशान्वये सति ।
प्रयोगवचनः पश्चात्तद्विशिष्टं विधास्यति ॥

यत्खलु भावनासम्बन्धितया श्रुत्यादिभिः, अतिदेशेन वा समर्पितं तद्विशिष्टां भावनां प्रयोगवचनो विदधाति, न तु स्वयमङ्गानि भावनया सम्बध्नाति, विधिमात्रव्यापारात् । न च पाशुकेन चोदकेन पुरोडाशान्वयोऽङ्गानां कार्याणां वा सिध्यति । तेनावश्यं पौरोडाशिकश्चोदकोऽङ्गीकर्त्तव्यः । तेन तु प्राकृतेष्वङ्गेषु कार्यमुखेन भावनाऽन्वयितया समर्पितेषु तद्विशिष्टां भावनां विदधत् प्रयोगवचनो यानि पश्वर्थतयैव प्रक्रान्तानुष्ठा-

---

प्राप्तानामङ्गोपकाराणां पुरोडाशविशेषणत्वेन प्रयोगविधिना सङ्ग्रहान्निराकाङ्क्षतयाऽतिदेशाकल्पने त्वाज्यभागाननुष्ठानम् । तत्कल्पने तु आज्यभागोपकारस्यालब्धत्वादाज्यभागानुष्ठानमिति फलफलिभावो बोध्यः । पूर्वपक्षमाह—**तत्रेति** । वस्तुतः प्रयोगवचनबाधेऽप्राकृतं किञ्चिदप्यङ्गं पुरोडाशयागरूपकरणञ्च नानुष्ठीयेतेत्यपि दूषणं बोध्यम् । **चोदकेनेति** । अङ्गस्य सतः प्रयोगविधिविषयत्वाच्चोदकाभावे च प्राकृतोपकाराणां पुरोडाशभावनासम्बन्धानवगमात्तदङ्गीकार आवश्यक इत्यर्थः । **तेन त्विति** । पुरोडाशीयचोदकेनेत्यर्थः । **समर्पितेषु** समर्पयितुमारब्धेषु । **तेनेति** । प्रसङ्गोपजीवनेनेत्यर्थः । एवं चोदकैकदेशोऽपि प्रयाजादिपदार्थविषयो बाध्यत इत्यपि ज्ञेयम् ।

नानि, तैस्तथाविधैरेव तद्वत्तामुपजीव्याङ्गान्तरयुक्तां विदधाति । तेन प्रयोगवचनैकदेशो यः प्रयाजादिविषयः, स बाध्यते । अङ्गान्तरेषु तु सोऽपि न बाध्यत इति सिद्धमाज्यभागादेरनुष्ठानम् ।

कश्चित्तु प्रयाजादिष्वपि प्रयोजकत्वं विधेर्न बाध्यते, सत्येव तु प्रयोजकत्वे कार्यस्यान्यार्थैरेव सिद्धेर्नानुष्ठानम् । एवञ्च प्रयोजकत्वाद्विशेषो भवति, इतरथा प्रसङ्गाप्रयोजकयोरविशेषः स्यादित्याह । तदिदमसारम् यदि शास्त्रेण पुरोडाशार्थतया वपाप्रचारादूर्ध्वकाले प्रयाजादीनि कर्त्तव्यानीति बोध्यते, कस्तदा तदतिक्रमेणान्यार्थान्यङ्गान्युपजीवितुं क्षमः । यदप्युच्यते प्रयोजनमनुष्ठाने हेतुः, न चेह पृथगनुष्ठाने प्रयोजनमस्ति, अन्यार्थैरेव कार्यसिद्धेरिति । तदपि यत्किञ्चिदेतत्, यदि शास्त्रात् पुरोडाशार्थतयाऽवगतं पृथगनुष्ठानं तदा तद्बलादेव फलं कल्प्यतां पृथगनुष्ठितैरेव पुरोडाशस्योपकारः सिध्यति, न पश्वर्थैरिति ।

यत्तु प्रयोजकत्वलोपे सत्यप्रयोजकादविशेषापत्तिरिति । तदपि बुद्धिमान्द्यम् । अप्रयोजके प्रयुक्तिसामर्थ्यमेव नास्ति, प्रसङ्गी तु प्रयुक्तिसमर्थ एव सन्नन्यार्थानामुपजीवनं लाघवात्करोतीति विशेषः । यदि च सत्यपि प्रयोजकत्वे कार्याभावादननुष्ठानं ततो वरुणप्रघासेषूत्तरवेहारि-

---

गुरुमतमाह—**कश्चित्त्विति** । **प्रयोजकत्वम्** अनुष्ठानाक्षेपकत्वम् । **विधेः** पुरोडाशप्रयोगविधेः । तदुक्तं गुरुणा 'नायं प्राप्तेर्बाधः किन्त्वनुष्ठानस्ये'ति । विवृतं चैतदृजुविमलायां शालिकनाथेन—'प्राप्तेरनुष्ठानाक्षेपरूपाया नायं बाधः' इति । प्रयोगविधेः प्रयाजाद्यनुष्ठानपरत्वे सत्यप्यनुष्ठानाभावः कुत इत्यत्राह—**सत्येवेति** । **अन्यार्थैरेव** अन्यार्थानुष्ठितैरेव । तदुक्तं शालिकनाथेन—'प्रयोजनमपि ह्यनुष्ठानहेतुर्न प्राप्तिमात्रमि'ति । ननु शास्त्रस्यानुष्ठानपरत्वबाधे को दोषस्तत्राह—**एवञ्चेति** । **अप्रयोजकात्** वाजिनतुषोपवापादेः । **विशेषो** वैलक्षण्यम् । **पृथगनुष्ठितैरेवेति** । उत्तक्रमकालादिविशिष्टतयानुष्ठितैरित्यर्थः । **प्रयुक्तिसामर्थ्यमेवेति** । परप्रयुक्ततयावगतस्य हि कपालादेस्तुषोपवापाङ्गत्वे तद्विषयाप्रयुक्तिस्तुषोपवापेन कल्प्यते । पुरोडाशे तु न परप्रयुक्तस्याङ्गताबोधकं प्रमाणमस्ति येन प्रयुक्तिसामर्थ्याभावः स्यादपितु सत्येव सामर्थ्ये प्रसङ्गोपकारलाभादननुष्ठानमिति विशेष इत्यर्थः । प्रयोजनाभावादननुष्ठानमित्यत्र दूषणान्तर-

कैरेवाङ्गैर्मारुत्याः कार्यसिद्धेस्सत्यपि देशभेदे कर्तृभेदे च 'विकाराच्च न भेदः स्यादर्थस्याविकृतत्वादि'ति न्यायेन पृथगङ्गानि न क्रियेरन्। किं च वपाप्रचारानन्तरकाले पुरोडाशो यदि सकलप्राकृताङ्गयुक्त एव कर्त्तव्यतया चोद्यते, ततस्तस्मिन्नेव काले सर्वाङ्गेषु प्राकृतेन क्रमेण कार्यतयाऽवगम्यमानेषु यद्यपि कथं चित्प्राकृतानां प्रयाजाद्यङ्गानां कार्याणि निष्पन्नान्यनपवृक्तानि संनिहितानीति कृत्वा तानि न क्रियेरन्, तथाऽपि यानि तस्यामेव वेलायां पशवर्थेनाप्यननुष्ठितानि अनूयाजादीनि, तानि क्रमवशात्पौरोडाशिकेडोपाह्वानानन्तरमुपस्थितानि कर्त्तव्यतया च पुरोडाशप्रयोगवचनाद्बोध्यमानानि किमिति न क्रियन्ते। न हि तदनुष्ठानं निष्प्रयोजनं तत्कार्यस्येदानीमनिष्पन्नत्वात्। अनिष्पन्नस्य प्रतीक्षणे कारणाभावात्। अस्मत्पक्षे पुनः पशुप्रयोगवचनसंनिधापितान्यङ्गान्युपजीवन्पुरोडाशविधिर्यादृशानि तेन पूर्वापरकालवर्तीनि सन्निधापितानि, तादृशान्येव लाघवतृष्णयोपजीव्य, अधिकानामेव प्रयोगं विधत्त इति युक्तं साध्यानामपि प्रसङ्गेनोपजीवनेनानुष्ठानम्। लाघवमेव हि प्रसङ्गे कारणम्। आह च—

> अन्यार्थानुष्ठितैः शेषैरुपकारेऽल्पकल्पना।
> प्रसङ्गे तदभावे च स्याद् भूयिष्ठप्रकल्पना॥ इति।

---

माह—यदि चेति। मारुत्याः आमिक्षायाः। विकाराच्चेति पूर्वाधिकरणे सूत्रम्। गुणकालादिविकारादपि भेदो न स्यात्। अर्थस्याङ्गजन्योपकारस्याविकृतत्वादिति तदर्थः। तथा च शास्त्रतात्पर्यबलादेव कार्यावश्यम्भावान्न तदभावादननुष्ठानमिति भावः। कार्यस्य सिद्धावननुष्ठानेऽपि तस्य निष्पत्स्यमानत्वे प्रसङ्गो न सिध्येदित्याह—किञ्चेति। हविरासादनोत्तरकालाभावाद्वैगुण्यं कथञ्चिदित्यनेनोक्तम्। अननुष्ठितानीति। 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्युत्कर्षविधानादिति भावः। अधिकानामेव प्रसङ्गादलब्धानामेव। प्रसङ्ग इति पूर्वान्वितम्। उपसंहरति—तस्मादिति। एतच्च चोदकैकदेशलोपस्याप्युपलक्षणं बोध्यम्। सूत्रार्थस्तु जैमिनेर्मते परतन्त्रापत्तेः। परतन्त्रोपजीवना-

तस्मात्प्रयोगवचनैकदेशो लुप्यत एव। अधिकाङ्गविषयस्त्वंशो न लुप्यत इति सिद्धमाज्यभागादेरनुष्ठानम् ॥

इति पुरोडाशे आज्यभागयोः कर्त्तव्यताधिकरणम् ॥ २ ॥

३

नानार्थत्वा० ज्योतिष्टोमे यानि महावेद्यां कृतायां दर्शपूर्णमासप्रकृतीनि कर्माणि प्रवर्त्तन्ते, तेषु महावेदेर्भेदेन प्राकृती वेदिः कर्त्तव्या, नेति सन्देहे-यद्यप्यङ्गप्रधानार्था महावेदिः, तथाऽपि प्रचारार्थत्वान्न हविरासादनार्थीयाः प्राकृत्याः कार्यं साधयतीति तदर्थं प्राकृती कर्त्तव्या। नैवम्, प्रचारार्थाऽपि प्रसङ्गाद्धविरासादनमपि शक्नोति साधयितुम्। न हि तस्यां क्रियमाणं हविरासादनं विगुणं भवति, वेद्यां हि हविरासादनं प्रकृतौ श्रुतं न स्वार्थायामेवेति। तस्मात्प्रचारार्थैव प्रसङ्गादासादनेनोपजीव्यते ॥

इति सोमे दार्शिकवेद्यकरणाधिकरणम् ॥ ३ ॥

---

देव स्वकीयतन्त्रस्य प्रयाजादेः प्रतिषेधः स्यात् न त्वाज्याभागादेः परतन्त्रमध्यवर्तितया अलाभादिति ॥

इति पुरोडाशे आज्यभागयोः कर्तव्यताधिकरणम् ॥ २ ॥

३

**नानार्थत्वात्०** दार्शिकवेद्याः पृथगननुष्ठानसाधनादापवादिकी सङ्गतिः। प्रचारेति। अवदानादियागान्तानुष्ठानस्य प्रचारपदार्थत्वात्तदर्थत्वम् 'इयति शक्ष्यामहे अस्यां कर्त्तुमि'ति वचनादवगतम्। न तु हविरासादनार्थत्वमित्यर्थः। सूत्रे नानार्थत्वाद्भिन्नप्रयोजनत्वादित्यर्थः ॥

इति सोमे दार्शिकवेद्यकरणाधिकरणम् ॥ ३ ॥

४

पात्रेषु० सोमाङ्गेष्वैष्टिकेषु कर्मसु किं सोमार्थान्येव पात्राणि प्रसज्येरन् ? उत जुह्वादीनि पात्राणि पृथक्प्रयोक्तव्यानीति ? संशये, सौमिकैरेव होमार्थैरैष्टिकानामपि होमादिकार्यसिद्धेः प्रसङ्गं मन्यते। जुह्वादिकार्याणि होमादीनि अन्यैः क्रियमाणानि विगुणीभवेयुः। न चात्रान्यैरेव होमादयः कृता येन पृषदाज्यानुयाजवन्न पुनः क्रियेरन्। तेन कर्त्तव्याः सन्तो होमादयः साद्गुण्यस्य सम्भवे किमिति विगुणाः क्रियन्ते। तस्मान्न पात्रप्रसङ्गः॥

इति सोमे सौमिकपात्राणां प्रसङ्गाभावाधिकरणम्॥ ४॥

५

शामित्रे० अग्नीषोमीये पशौ शामित्रोऽग्निः हविः श्रपणार्थः श्रुतः। पशुतन्त्रोपजीवी च पुरोडाश इति स्थितम्। अतः सोऽपि तत्रैव श्रपयितव्य इति मन्यते। न पशुश्रपणेन पुरोडाशः श्रपितो भवति। तेन पृथक् श्रपयितव्यः, पुरोडाशश्चोदकप्राप्ते गार्हपत्ये श्रपयितव्यः, अवैगुण्यात्॥

इति शामित्रे पुरोडाशश्रपणाभावाधिकरणम्॥ ५॥

---

४

**पात्रेषु च०** आपवादिकी सङ्गतिः। **सोमार्थान्येवेति**। ग्रहचमसादीनामित्यर्थः। अर्थस्याविकृतत्वादित्येतत्प्रत्याचष्टे–**न चेति**।

इति सोमे सौमिकपात्राणां प्रसङ्गाभावाधिकरणम्॥ ४॥

५

**शामित्रे०** इहातिदेशिकी सङ्गतिः। पशोर्यः शमिता तत्सम्बन्धी। **श्रपणार्थः** पश्वङ्गश्रपणार्थः। **गार्हपत्ये शालामुखीये** 'एषोऽत ऊर्ध्वं गार्हपत्यः सम्पद्यते' इत्यग्नीषोमप्रणयनोत्तरं तस्य गार्हपत्यकार्यकारित्वोक्तेः॥

इति शामित्रे पुरोडाशश्रपणाभावाधिकरणम्॥५॥

६

श्रपणं० कुण्डपायिनामयनेऽग्निहोत्रे किं प्राजहिते मुख्ये गार्हपत्ये श्रपणम्? उत शालामुखीये? इति सन्देहे, चोदकप्राप्ते शालामुखीये स्यात्। ज्योतिष्टोमे हि शालामुखीय एव 'अत ऊर्ध्वं गार्हपत्यो भवती'ति शालामुखीयो गार्हपत्यकार्ये विहितश्चोदकपरम्परया कुण्डपायिनामयनं प्राप्तः। तस्मात्तत्र श्रपणम्। सत्यम्, चोदकादेवम्, अग्निहोत्रनामधेयात्तु नैयमिकाग्निहोत्रवन्मुख्य एव गार्हपत्ये श्रपणं प्रापितं तच्च चोदकात् बलीय इत्युक्तम्।

केचित्तु कृत्वाचिन्तामाहुरसत्यपि नामधेये 'गार्हपत्ये हवींषि श्रपयती'त्यनारभ्यवादस्य सर्वार्थत्वादुपदेशतः प्राप्तः प्राजहितश्चोदकप्राप्तं शालामुखीयं बाधत इति। तत्तु नैवम्। अनारभ्यवादस्य हविःश्रपणद्वारकत्वात्कौण्डपायिनामयने च हविःश्रपणस्याश्रुतत्वात्प्रकृतितः प्राप्यमाणस्य सहैव प्राजहितेन प्राप्तेर्द्विरुक्तत्वान्नोपदेशसम्भवः। तस्मान्नाम्नैव प्राजहितस्य प्राप्तिः। ननु सिद्धं प्राबल्यं सप्तमे। सत्यम्, इदन्तु प्रसङ्गनिराकरणार्थं सूत्रम्। शालामुखीयस्तावदस्मिंस्तन्त्रे चोदकेन सर्वगार्हपत्यकार्याय प्रवृत्तः स एव प्रसङ्गादग्निहोत्रश्रपणमपि साधयिष्यति, विनाऽपि तादर्थ्येनेति शङ्का। सेयं निराक्रियते—अन्यार्थस्य

---

६

**श्रपणं०** आतिदेशिक्येव सङ्गतिः। **कुण्डपायिनामयने** यदग्निहोत्रं तत्रेति व्यधिकरणे सप्तम्यौ। प्राजहितशब्दो मुख्यगार्हपत्यवचनः। सोमे आहवनीयाद्युत्तरवेद्यामग्निप्रणयनोत्तरमवशिष्टाहवनीयस्य शालामुखीय इति संज्ञा। स एव च 'अत ऊर्ध्वं गार्हपत्यो भवती'ति वचनाद्गार्हपत्ये कार्ये विनियुक्त इति गौणो गार्हपत्यः। **परम्परयेति**। ज्योतिष्टोमाद् द्वादशाहं तस्मादगवामयनं तस्माच्च कौण्डपायिनामयनं प्राप्त इति परम्परेत्यर्थः। **नामधेयात्** नामातिदेशात्। **उक्तम्** सप्तमान्त्ये।

गुरुमतं दूषयितुमुपन्यस्यति—**केचित्त्विति**। कथं तर्हि सप्तमान्त्येनागतार्थतेति शङ्कते—**नन्विति**। अत ऊर्ध्वमिति वचनेन शालामुखीयस्य हविःश्रपणे प्रवृत्तेरावश्यकत्वात्तत्प्रसङ्गोपजीवनाशङ्कानिरासार्थत्वेन न पौनरुक्त्यदोष इत्याह—**सत्यमित्यादि**।

नामप्राप्तेन प्राजहितेन बाधितत्वादिति । पूर्ववत् साद्गुण्यसम्भवे वैगुण्यानाश्रयणादित्यस्यैव न्यायस्य प्रपञ्चोऽयम् ॥

इति प्राजहिताधिकरणम् ॥ ६ ॥

७

हविर्धाने० ज्योतिष्टोमे हविर्द्धानसमाख्ययोः सोमधारणार्थयोरनसोः प्रवर्त्तने कृते, यानि सवनीयपुरोडाशादीनि, तेषां किं तयोरन्यतरत्र निर्वपणम्? उत अनोऽन्तरमुपादेयमिति? संशये, 'अनसोऽधिनिर्वपती'त्यस्य प्रकृतितः प्राप्तस्य सोमधारणार्थाभ्यामपि प्रसङ्गतः सिद्धेर्न निर्वापार्थेन अनोऽन्तरमुपादेयम्। सत्यमेतावत्सम्भवति। देशस्तु निर्वापस्य 'अपरेण गार्हपत्यं निर्वपती'ति प्रकृतितः प्राप्तयोर्हविर्द्धानयोर्न सम्पद्यते, तयोर्मन्त्रवन्नियमवच्च महावेद्यामवस्थापितयोः प्राग्वंशनयनासम्भवात्। तस्मादनोऽन्तरमुपादेयम्, अवैगुण्यात् ॥

इति हविर्धानान्यशकटेनौषधद्रव्यकपुरोडाशनिर्वापाधिकरणम् ॥ ७ ॥

---

साद्गुण्यसम्भवे वैगुण्यायोगस्य सिद्धान्तन्यायस्य पूर्वाधिकरणयोरेवोक्तेराह—**पूर्ववदिति** ॥

इति प्राजहिताधिकरणम् ॥ ६ ॥

७

**हविर्धाने०** आतिदेशिक्येव सङ्गतिः। हविर्धीयतेऽत्रेति हविर्धानम्। अनः शकटम्। **एतावत्** अनस उपरि निर्वापमन्त्रम्। **अपरेण** पश्चिमतः। **मन्त्रवत्** मन्त्रयुक्तं यथा स्यात्तथा। **प्राग्वंशः** पत्नीशाला। तथा च तन्त्रिण एव प्रधानस्य वैगुण्यापत्तिरित्यर्थः। न च प्रसङ्गिन एवाङ्गस्य देशाभावकृतवैगुण्याङ्गीकारोऽस्त्विति शङ्क्यम्। अनुपादेयदेशरूपपदार्थत्यागापेक्षयानोन्तराक्षेपस्यैवौचित्यादिति भावः ॥

इति हविर्धानान्यशकटे औषधद्रव्यनिर्वापाधिकरणम् ॥ ७ ॥

८

तद्युक्तं० दीक्षाकालं जागरणमाम्नातम् । दीक्षोत्तरकालेषु प्रायणीयादिषु कर्मसु किं चोदकप्राप्तं दार्शपौर्णमासिकं जागरणं कर्त्तव्यम् ? नेति ? संशये, सोमार्थेन दीक्षाकालीनेन जागरणेन प्रसङ्गात्कार्यसिद्धेर्न पृथक्तेषु जागरणं कर्त्तव्यम् । यदि तावदप्रमादार्थं जागरणं यज्ञसाधनरक्षणार्थं, ततो न दीक्षाकालीनेषु रक्षितेषु तदुत्तरकालानि रक्षितानि सम्भवन्तीति तदर्थं पुनर्जागरितव्यम् । अथादृष्टार्थं जागरणं तथाऽपि सौमिकेन जागरणेनैत्रैष्टिकजागरणजन्यादृष्टसिद्धौ प्रमाणाभावात् तदर्थं कर्त्तव्यमेव प्राकृतं जागरणम् ॥

इति प्रायणीयादिषु प्राकृतजागरणकर्तव्यत्वाधिकरणम् ॥ ८ ॥

९

मन्त्राश्च० वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्निर्वापादिमन्त्राः किं तन्त्रेणाध्वर्युणा, प्रतिप्रस्थात्रा वाऽन्यतरेण वक्तव्याः ? उतोभाभ्यामपि भेदेन ? इति संशये अन्यतरेणाप्युच्यमानाः शक्नुवन्ति उभयोः स्मृतिं कर्त्तुमिति मन्यते । निर्वपामीत्यादेरात्माभिवादित्वान्न तन्त्रता सम्भवतीत्युभयोः पृथक् पृथक् प्रयोगः सकृदसकृदनुष्ठानप्रसङ्गात्तन्त्रावापचिन्तापीयमत्र कृता ॥

इति विहारभेदेन मन्त्रभेदाधिकरणम् ॥ ९ ॥

---

८

तद्युक्तम्० सैव सङ्गतिः । सिद्धान्तमाह—यदीति । तद्युक्तं दीक्षाकालयुक्तं जागरणं कालभेदान्न प्रसज्यत इत्यध्याहारेण सूत्रं योज्यम् ॥

इति प्रायणीयादिषु प्राकृतजागरणकर्तव्यत्वाधिकरणम् ॥ ८ ॥

९

मन्त्राश्च० सङ्गतिरुक्तैव । आत्माभिवादित्वात् आत्मकर्तृकत्वप्रकाशकत्वात् । अध्यायासङ्गतिमाशङ्क्याह—सकृदिति ॥

इति विहारभेदेन मन्त्रभेदाधिकरणम् ॥ ९ ॥

१०

धारणार्थं० सोमाङ्गेष्वैष्टिकेषु कर्मसु चोदकप्राप्तमग्न्यन्वाधानं कार्यं नेति संशये, चोदकानुग्रहात्कर्त्तव्यमिति प्राप्ते ब्रूमः, धारणार्थं तु तत्। सोमार्थेन विहृतस्य धारितस्याग्नेस्तेनैव धारणेन प्रसङ्गसिद्धकार्यत्वात्, न पुनर्धारणं कार्यम्। ननु चाक्रतुसमाप्तेः पुनः पुनः प्रयत्नेन धारयितव्य एवाग्निः। सत्यम्, तथाऽपि नान्वाधानं कार्यम्, तद्धि विहृतस्याग्नेराद्यो यः समिन्धनव्यापारो धारणार्थः, तद्रूपम्, न हि तत् प्रकृतौ पुनः पुनः कृतम्। तस्मादत्रापि धार्यमाणस्य धारणायाग्न्यन्वाधानं न कर्त्तव्यम् ॥

इति दीक्षिणीयादिषु अग्न्यन्वाधानस्याभावाधिकरणम् ॥ १० ॥

११

तथा० तत्रैव प्रकृतं व्रतोपायनं कर्तव्यं नेति संशये, कर्त्तव्यमिति प्राप्ते सोमार्थेऽपि तेनैव व्रतेन सत्यवदनब्रह्मचर्यादिसङ्कल्परूपेणासमाप्तेरविनष्टेन प्रसङ्गात्सिद्धेर्न पुनरुपायनं कर्त्तव्यम् ॥

इति दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम् ॥ ११ ॥

---

१०

धारणार्थत्वात्० पृथगनुष्ठानापवादात्सङ्गतिः। विहृतस्य प्रागुद्धृतस्य। आद्य इति। 'पूर्वेद्युरग्निं गृह्णाती'ति विधानात्प्रथमोपस्थितसमिन्धनव्यापारार्थतैवेत्यर्थः। अतएव प्रकृतौ नान्वाधानावृत्तिरित्याह—नहीति ॥

इति दीक्षिणीयादिषु व्रतोपायनाभावाधिकरणम् ॥ १० ॥

११

तथा० व्रतोपायनम् व्रतस्वीकारः। शेषं सुगमम् ॥

इति तत्रैव व्रतोपायनाभावाधिकरणम् ॥ ११ ॥

१२

ग्रहणार्थं० यदुक्तं धारणार्थत्वात्सोमेऽग्न्यदग्न्यन्वाधानं न विद्यत इति, तदाक्षिप्यते। यदि तत्केवलधारणार्थं स्यात्, ततो न विद्येत। तत्तु दर्शपूर्णमासयोर्देवतापरिग्रहार्थमपि श्रुतं 'ममाऽग्ने वर्च इति पूर्वमग्निं गृह्णाति, देवता एव तत्पूर्वेद्युर्गृहीत्वा श्वो भूते यजते' इति। ततः प्रायणीयादिष्वपि तत् देवतापरिग्रहार्थं कर्त्तव्यमग्न्यन्वाधानम्। नैवम्, न ह्यग्निधारणे दृष्टप्रयोजने सति, अदृष्टदेवतापरिग्रहार्थत्वमर्थवादमात्रोपयुक्ताद्वाक्यशेषात्कल्पयितुं शक्यम्। अभ्युपेत्य ब्रूमः। यद्यपि देवतापरिग्रहार्थः, तथाऽपि प्रायणीयादिष्वकर्त्तव्यम्। दीक्षणीयाया अपि वाक्यशेषे देवतापरिग्रहार्थता श्रूयते 'आग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाणोऽग्निरवमो देवतानां विष्णुः परमो देवता एवोभयतः परिगृह्य दीक्षते' इति। यद्यपि 'दीक्षाः सोमस्ये'ति वचनात्प्रधानर्था दीक्षणीया प्रधानदेवता एव परिगृह्णाति, तथाऽपि वैश्वदेवग्रहे सर्वदेवतासमवायात्तत्परिग्रहं कुर्वति दीक्षणीया प्रसङ्गादङ्गकर्मदेवता अपि गृह्णाति। न हि विश्वदेवशब्दः कस्यचिद्देवतागणस्य वाचकः, प्रसिद्धावयवार्थस्य समुदायस्य शक्त्यन्तरकल्पनायां प्रमाणाभावात्। तस्मात्सर्वदेवतावचनत्वात्तत्परिग्रहे च सर्वान्तर्गतानामङ्गदेवतानामपि प्रसङ्गतः परिग्रहादकर्त्तव्यमग्न्यन्वाधा-

---

१२

**ग्रहणार्थञ्च० दृष्टेति**। समित्प्रक्षेपरूपान्वाधानेनाग्निधारणस्य प्रत्यक्षसिद्धत्वादित्यर्थः। **अवमः** कनिष्ठः। **परमः** श्रेष्ठः। **उभयतः** उभाभ्याम्। **यद्यपीति**। दीक्षिष्यमाण इति क्रियार्थायां क्रियायामुपपदे लृट् प्रयोगेन दीक्षणीयाया दीक्षार्थत्वात्तस्याश्च प्रधानभूतसोममात्रार्थत्वेन तद्द्वारा दीक्षणीयाया अपि तथात्वादार्थवादिकदेवतापरिग्रहार्थत्वमपि प्रधानविषयमेवेति भावः। विश्वेदेवशब्दे रूढिमाशङ्क्य निराकरोति—**नहीति**। नन्वेवमपि दीक्षणीयायागार्थो देवतापरिग्रहो नान्वाधानं विनेत्यत आह—

नम् । यद्वा तत्राभ्युपगमपक्षे दीक्षणीयायां कर्त्तव्यमेवान्वाधानम् । ततः परन्तु न कर्त्तव्यम् ॥

इति दीक्षणीयादिष्वग्न्यन्वाधानाननुष्ठानाधिकरणम् ॥ १२ ॥

१३

सन्नहनञ्च० दार्शपौर्णमासिकं पत्नीसन्नहनं प्रायणीयादिषु चोदकप्राप्तं कर्त्तव्यम् । नैवम्, वासोधारणार्थं तद्धि, दृष्टार्थत्वात् । दीक्षाकालेन च सोमार्थेन सन्नहनेन वाससो धारितत्वादकर्त्तव्यम् । अथाऽपि न वासोधारणार्थं तथापि सन्नद्धैव कर्माणि कार्याणीत्येतदर्थं सन्नहनम्, नादृष्टार्थम् । अन्यार्थेनापि सन्नहनेन सन्नद्धैवेति न पृथक् सन्नहनम् ॥

इति पृथक् पत्नीसन्नहनाननुष्ठानाधिकरणम् ॥ १३ ॥

१४

अन्यविधा० आरण्याशनमपि प्रायणीयादिषु चोदकप्राप्तमपि वृत्त्यर्थत्वात्सौमिकेनैव पयोव्रतादिना वृत्तिसिद्धेरकर्त्तव्यम् ॥

इत्यैष्टिकेष्वारण्यभोजनाभावाधिकरणम् ॥ १४ ॥

---

यद्वेति । अभ्युपगमपक्ष इत्यनेन परमार्थतस्तत्राप्यननुष्ठानमेवेति दर्शितम् । सूत्रार्थस्तु-पूर्वोक्तं देवताग्रहणार्थमप्यन्वाधानं न कार्यमिष्टेर्दीक्षणीयायास्तदर्थत्वादिति ॥

इति दीक्षणीयादिष्वग्न्याधानाननुष्ठानाधिकरणम् । १२ ।।

१३

संनहनं० आतिदेशिकी सङ्गतिः । ननु 'योक्त्रेण पत्नीं सन्नह्यती'ति द्वितीयाश्रुत्या पत्नीसंस्कारार्थं संनहनं न वासो धारणार्थमित्याशङ्क्य संस्कारोऽपि कर्मानुष्ठानसौकर्यरूपो दृष्ट एवेति सौमिकेनैव तत्सिद्धेर्न पृथगनुष्ठानमित्याह—अथापीति ॥

इति पृथक् पत्नीसंनहनाननुष्ठाधिकरणम् ॥ १३ ॥

१४

अन्य० आतिदेशिक्येव सङ्गतिः । पयोव्रतारण्याशनयोर्विजातीयतृप्तिरूपकार्यभेदान्न प्रसङ्ग इत्यधिकाशङ्का । तृप्तेरानुषङ्गिकत्वात्प्राणधारणमेव क्रतूपयोगितया मुख्यं कार्यमिति प्रसङ्गोपपत्तिरिति सिद्धान्तमाह—वृत्त्यर्थत्वादिति ॥

इत्यैष्टिकेष्वारण्यभोजनाभावाधिकरणम् ॥ १४ ॥

१५

शेषभक्ष० एवं तर्हि शेषभक्षा अपि ये यजमानकर्तृका इडाभक्षणादयः, तेऽपि वृत्त्यर्थत्वात्सौमिकेन व्रतेन निवर्त्तेरन् । सत्यम्, यदि वृत्त्यर्थाः, ते तु शेषभक्षप्रतिपत्त्यर्थाः 'यजमानपञ्चमा इडां भक्षयन्ती'ति शेषस्य द्वितीयानिर्देशात् । तदिदं षष्ठ एव प्रसाधितम् । तस्य त्विदं प्रयोजनकथनं प्रसङ्गात्मकत्वादिहोक्तम् ॥

इत्यैष्टिकेषु शेषभक्षानुष्ठानाधिकरणम्॥ १५ ॥

१६

भृतत्वान्न० दीक्षणायादिषु चोदकप्राप्तान्वाहार्यदक्षिणा दातव्या, नेति संशये, 'दक्षिणाः सोमस्ये'ति वचनात् द्वादशशतदक्षिणा केवलप्रधानार्थेत्युक्तम् । अतोऽङ्गेषु स्वार्थदक्षिणा दातव्यैव । प्रसङ्गसिद्धकार्यत्वात्तु न दातव्या, प्रधानार्थं ह्यानतिरुपक्रमप्रभृत्यासमाप्तेः प्रवृत्ता अनपवृक्ता चावस्थितेति, तामेवोपजीवन्तो दक्षणीयादिविधयश्चोदकप्राप्ता-

---

१५

शेष० आपवादिकी सङ्गतिः । **तदिदमिति** । यद्यपि षष्ठे 'होमाभिषवभक्षणं च तद्वदि'त्यत्र सोमभक्षे होमाभिषवरूपनिमित्तसाहित्यविवक्षाविवक्षामात्रचिन्तनम्, तथापि प्राप्ते भक्षे होमाभिषवकर्तृविधानमिति सिद्धान्ते भक्षप्रापकविधौ शेषसंस्कारकत्वस्य द्वितीयाश्रुतिवशेन स्फुटत्वात्तत्राप्यार्थस्य सिद्धतोक्ता । वस्तुतस्तत्र होमाभिषवसाहित्यविवक्षासाधनमिह तु वृत्यर्थतानिरास इति न गतार्थत्वमिति बोध्यम् ॥

इत्यैष्टिकेषु शेषभक्षानुष्ठानाधिकरणम् ॥ १५ ॥

१६

**भृतत्वात०** आपवादिकी सङ्गतिः । **उक्तं** तृतीये । सिद्धान्तमाह—**प्रसङ्गेति** । 'दक्षिणाः सोमस्ये'ति वचनस्य प्रसङ्गापवादकत्वे बाधकमाह—**किञ्चेति** । कर्तृभेदे च प्रयोगभेदापत्तिरिति भावः । ननु ज्योतिष्टोमप्रयोगविधौ प्रधान एव कर्त्रैकत्वं श्रुतमङ्गेषु

मपि स्वार्थमानतिं न प्रयुञ्जते। किञ्च पृथग्दक्षिणायां सत्यामानति-भेदादङ्गप्रधानानामश्रुतः कर्तृभेद आपद्यते। किञ्च यैः प्रधानं कर्तव्यं तैरेवावश्यमङ्गान्यपि कर्त्तव्यानि। नाकुर्वद्भिरङ्गानि प्रधानं कर्तुं शक्यमिति निश्चिते शास्त्रार्थे, प्रधानार्थत्वेनाङ्गानां बलादङ्गान्यपि कर्त्तव्यानि भवन्तीति प्रसङ्गसिद्धानुष्ठानत्वान्नाङ्गेषु दक्षिणा॥

इति दीक्षणीयादिष्वन्वाहार्यदानाभावाधिकरणम्॥ १६॥

१७

शेषभक्षा० पूर्वं यजमानभक्षस्य हृत्यर्थत्वात् व्रतेन निवृत्तिराशङ्किता। सम्प्रति ऋत्विग्भक्षाणां परिक्रियार्थतया प्रधानदक्षिणया निवृत्तिराशङ्क्यते। निराकरणं च तद्वदेव। शेषप्रतिपत्त्यर्था भक्षाः, नानत्यर्था इति दशम एव चानत्यर्थत्वं भक्षाणां निराकृतम्। तस्येदं प्रयोजनं प्रसङ्गात्मकत्वेनेहोक्तम्॥

इत्यैष्टिकेषु शेषभक्षस्य कर्तव्यत्वाधिकरणम्॥ १७॥

---

तु प्रयोगान्तःपातात्कल्प्यमेवेत्यत आह किञ्चेति। कर्त्रेकत्वस्य प्रयोगाङ्गत्वादङ्गाङ्गत्वं विना च तदनुपपत्तेस्तदावश्यकम्। दक्षिणायास्तु प्रधानमात्राङ्गत्वमन्येन प्रसङ्गत उपजीवनेऽप्यविरुद्धमिति भावः। सौमिक्यैव दक्षिणया कर्तृणां भृतत्वादानतत्वान्न पृथक् परिक्रयोऽन्वाहार्यदक्षिणेति सूत्रार्थः॥

इति दीक्षणीयादिष्वन्वाहार्यदानाभावाधिकरणम्॥ १६॥

१७

शेषभक्षः० आपवादिकीं सङ्गतिः। नानत्यर्था इति। आनतावन्वाहार्यनियमात्तद्विरोधान्न भक्षाणामानत्यर्थताकल्पनेत्यर्थः। निराकृतम् शेषभक्षाश्च तद्वदिति सूत्रेणेति शेषः॥

इत्यैष्टिकेषु शेषभक्षस्य कर्तव्यत्वाधिकरणम्॥ १७॥

१८

प्रवृत्त० दर्शपूर्णमासयोः होतृवरणमाम्नातम् 'अग्निर्देवो दैव्यो होते'ति। तत्क्रिमानत्यर्थत्वात्सौमिकेनैव वरणेन 'अग्निर्होता स मे होते'त्येवमादिना प्रसङ्गादानतिसिद्धेर्दीक्षणीयादिषु न कर्त्तव्यम्? उतादृष्टार्थत्वात्कर्त्तव्यमिति? संशये, वरणस्यानत्यर्थत्वान्निवृत्तिं मन्यते। ननु प्रवृत्ते कर्मणि क्रियमाणमृतुयाज्यावरणवददृष्टार्थम्। नैवम्, ऋतुयाज्यावरणमादावेवानत्यर्थे कृते वरणे पश्चात्क्रियमाणमदृष्टार्थं स्यात्। होतुस्तु न प्रागस्ति वरणम्। अतः प्रवृत्तेऽपि कर्मणि दृष्टार्थमेव ब्रह्मवरणवत्, तदपि हि पूर्वेद्युरमावास्यायां वेदिकरणेऽनुमतिप्रसवदाने प्रवृत्ते ब्रह्मण्यपरेद्युः प्रणीताप्रणयनकाले क्रियते। अथ च दृष्टार्थमेव, अन्यथा तदपि दीक्षणीयादिषु कर्त्तव्यं स्यात्। तस्माद्धोतुर्वरणमपि न कर्त्तव्यमिति प्राप्ते—

ब्रूमः—प्रवृत्तस्य वरणं न कथञ्चित् दृष्टार्थं भवति। दक्षिणादानं हि भविष्यदवस्थमपि भवत्यानतिनिमित्तं लोके तथा दर्शनात्। न तु वरणेन भाविना भवत्यानमनम्। तस्माददृष्टार्थं ब्रह्मवरणं त्वप्रवृत्ते ब्रह्मणि क्रियते, पौर्णमास्यां तावदप्रवृत्त एव क्रियत इत्यविवादम्। अमावास्यायामपि पूर्वेद्युरपकृष्यमाणा वेदिः स्वाङ्गभूतप्रसवसिद्धये ब्रह्मणो वरणमप्यपकर्षति। लिङ्गाद्धि वरणस्यानतिरेव प्रयोजनं गम्यते। प्रयोजनवशेन च पाठक्रमं बाधित्वा युक्तमेव वरणस्य पूर्वेद्युरनुष्ठानम्। तस्माद्-

---

१८

प्रवृत्त० आतिदेशिकी सङ्गतिः। होतेति मन्त्रेणेत्यर्थः। एवं इति मन्त्र आदिर्यस्य तेनेत्यर्थः। नन्विति। वरणस्य कर्मणि प्रवर्तनार्थत्वेन दृष्टार्थता प्रवृत्ते तु वरणमदृष्टार्थमेवेत्यर्थः। पूर्ववृतत्वमेव पश्चाद्वरणस्यादृष्टार्थताप्रयोजकं न तु प्रवृत्तत्वम्। लोभादग्रे वरणसम्भावनयापि प्रवृत्युपपत्तेरिति पूर्वपक्षी समाधत्ते—नैवमिति। प्रसवदाने अनुज्ञादाने। न त्विति। सम्भावनया तु प्रवृत्तस्य कदाचिन्निवृत्तेरपि सम्भवात्प्रयोगवैगुण्य-

प्रवृत्तविषयत्वात् ब्रह्मवरणं दृष्टार्थम् । न चैवं होतृवरणस्यापकर्षः सम्भवति, 'अवृतः सामिधेनीरन्वाहे'ति वचनात् । तस्माददृष्टार्थं होतृवरणं प्रतिकर्म कर्त्तव्यम् ॥

इतीष्टिषु होतृवरणसद्भावाधिकरणम् ॥ १८ ॥

१९

यज्ञोत्पत्त्यु० 'यदातिथ्यायां बर्हिः तदुपसदां तदग्नीषोमीयस्ये'ति बर्हिःसाधारण्यविधिरित्युक्तमेव । त्रयाणामर्थेनोपात्ते बर्हिषि संस्काराः प्रोक्षणादयो विचार्यन्ते—किन्ते प्रतिकर्माऽऽवर्तनीयाः ? उतातिथ्या-कालकृता एवोपसत्सु अग्नीषोमीये च प्रसज्यन्ते ? इति सन्देहे, मध्य-पाताभावान्न प्रसङ्गः, नापि तन्त्रम् । आतिथ्याकालत्वेन विशेषग्रहणा-दिति प्राप्ते ब्रूमः—सत्यं न तन्त्रता, प्रसङ्गस्तु भवति । तन्त्रमध्यपाता-भावेऽपि बर्हिर्द्वारा ये संस्काराः ते यदर्थं बर्हिरुपात्तं तदर्था विज्ञायमाना

---

परिहाराय लौकिकाभ्यर्थनस्याप्रवृत्तप्रवर्तनार्थमावश्यकतया वैधस्यादृष्टार्थत्वावश्यम्भावा-दिति भावः । व्रियत इति । प्रणीताप्रणयनकाल इत्यर्थः । शेषं सुगमम् ॥

इतीष्टिषु होतृवरणसद्भावाधिकरणम् । १८ ॥

१९

यज्ञोत्पत्ति० आपवादिकी सङ्गतिः । उक्तमेवेति । चतुर्थ इति शेषः । बर्हिरुपा-दानार्थलवनस्य सकृत्त्वं विना बर्हिःसाधारण्यानुपपत्तेः प्रोक्षणादय इत्युक्तम् । मध्येति । तन्त्रिमध्यपाते ह्युपकारानपवर्गाविगमात्प्रसङ्गस्तदभावे तु कार्यस्य नाशान्न प्रसङ्गसम्भव इत्यर्थः । ननु लवनतन्त्रतावत् प्रोक्षणादेरपि तन्त्रतैव स्यादित्याशङ्कां निरस्यति—नापीति । लवनस्य तु बर्हिरुत्पादकतया बर्हिः साधारण्यविधिबलात्तान्त्रता । प्रोक्षणा-देस्तु बर्हिरनुत्पादकतया न साधारण्यविध्यन्यथानुपपत्तिस्तत्तान्त्रतां विनेति गृह्यमाण-विशेषत्वान्न तन्त्रतेति भावः । बर्हिर्द्वारेति । तथा च द्वारस्य साधारणत्वेनानपवृक्तत्वात्त-त्संस्काराणामपि कार्यनाश्यानां यावत्कार्योत्पत्तिमनुवृत्तेरावश्यकत्वात्तन्त्रिमध्यपाताभावेऽपि तत्फलसिद्धिरित्यर्थः । द्वारसाधारण्ये सत्यातिथ्याकाल एव नियतं प्रोक्षणाद्यनुष्ठाने

बर्हिषः साधारणत्वात् तेऽपि सकृदेव कर्त्तव्या इत्यवगते सति नान्त-रीयकमातिथ्याकालेऽनुष्ठानम्, उपसदादेस्तदानीमप्राप्तत्वात् । न चैतावता आतिथ्यापवर्गे अपवृज्यन्ते, बर्हिषोऽनपवृक्तत्वात् । तदर्थत्वाच्च तेषाम् । तस्मान्न भेदेन कर्त्तव्याः ॥

इत्यातिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाभावाधिकरणम् ॥ १९ ॥

२०

देशपृथ० तदेव बर्हिर्यदातिथ्यार्थं प्राग्वंशे स्तीर्णं तत अनीयापरेणोत्तरवेदिमग्नीषोमीयार्थत्वेनास्तीर्यते, तदा किं 'ऊर्णा म्रदसं त्वा स्तृणामी'ति स्तरणमन्त्रः पूर्वकृत एव प्रसज्यते, उतावर्त्तनीय इति विचारे, पूर्ववद्बर्हिः साधारण्यात्प्रसङ्गे प्राप्ते उच्यते—स्यादेवं यदि बर्हिरर्थं स्तरणं स्यात् । तत्तु 'बर्हिषा वेदिं स्तृणाती'ति द्वितीयानिर्दिष्टत्वात्प्रयोजनवत्त्वाच्च वेदिदेशसंस्कारार्थम् । भिन्नौ चेह प्राग्वंशोत्तर-

---

हेतुमाह—नान्तरीयकमिति । शास्त्रीयक्रमवशादापतितमित्यर्थः । अतएव प्राथमिकत्वादातिथ्यायास्तन्त्रित्वमितरयोः प्रसङ्गित्वमिति ज्ञेयम् । सूत्रार्थस्तु—यज्ञानामातिथ्यादीनामुत्पत्तौ य उपदेशो यदाऽतिथ्यायामित्यादिस्तत्र निष्ठितं साधारण्येन निश्रितं यद्बर्हिस्तत्कर्म प्रोक्षणादिकमिति ॥

इत्यातिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाधिकरणम् ॥ १९ ॥

२०

**देशपृथक्त्वात्** ० आपवादिकी सङ्गतिः । **प्राग्वंशः** पत्नीशाला । **अपरेण** पश्चिमतः । पूर्वपक्षमाह—**पूर्ववदिति** । बर्हिस्तृणातीति द्वितीययास्तरणस्य बर्हिस्संस्कारत्वावगमान्मन्त्रेऽपि त्वा स्तृणमीति स्तरणकर्मत्वेन बर्हिःप्रकाशनावगतेर्बर्हिषश्च साधारण्यान्नावृत्तिरित्याशयः । सिद्धान्तमाह—**स्यादेवमिति** । 'बर्हिषा वेदिं स्तृणाती'ति वाक्ये तृतीयाश्रुतेरनन्यगतिकत्वाद्बर्हिस्तृणातीत्यत्र द्वितीयायास्त्वनीप्सितकर्मण्यपि सम्भवान्मन्त्रस्य च वेदिसम्बोधनेन तत्प्रकाशनप्रधानतयाप्युपपत्तेस्तस्याश्च भेदात्स्तरण-

वेदिसमीपदेशौ । तेन तदर्थं स्तरणं तदङ्गं च मन्त्रोऽप्यावर्त्तते । असत्यामावृत्तौ वेदिवैगुण्यादग्नीषोमीयहविषामासादनं विगुणं स्यात् । भवतु वा बर्हिरर्थं स्तरणं बर्हिष्यवस्तीर्णे हवींषि साक्षादासाद्यन्त इति । तथाऽपि तदावृत्तेस्तदङ्गमन्त्रावृत्तिः । अन्यथा ह्यमन्त्रास्तीर्णे बर्हिषि हवींष्यासाद्येरन् ॥

इत्यातिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम् ॥ २० ॥

२१

सन्नहनहरणे० तदेव बर्हिः प्राग्वंशे स्तीर्णं पुनः सन्नह्योत्तरवेदिसमीपे स्तीर्यते । प्रकृतौ संनहनमन्त्रः 'पूषा ते ग्रन्थिं ग्रथ्नात्वि'दि, तथा हरणमन्त्रः 'बृहस्पतेमूर्ध्ना हरामी'ति । तौ किमस्मिन्सन्नहने हरणे च प्रयोक्तव्यौ ? नेति ? संदेहे, सन्नहनहरणयोरावृत्तेर्मन्त्रयोरप्यावृत्तिः पूर्ववत् । मैवम्, प्रकृतौ मन्त्रौ विहारदेशं प्रापितस्य बर्हिषो वेदिदेशप्रापणार्थ-

---

वन्मन्त्रोऽप्यावर्तत इत्यर्थः । ननु बर्हिस्तृणातीत्यनेन न बर्हिष एव संस्कार्यता प्रतीयते । 'बर्हिषि हवींष्यासादयती'ति साक्षाद्धविरासादनोपयुक्तं च बर्हिरिति युक्तं तस्य संस्कारार्थत्वम् । एवं त्वेति मन्त्रलिङ्गादपि बर्हिषः संस्कार्यतावगमः । वेदिसम्बोधनपरत्वे ऊर्णाम्रदसमित्यस्यासामञ्जस्यात् । बर्हिषा वेदिमिति वचनं त्वेतदनुसारेण व्याख्येयमिति पूर्वपक्षयुक्तमभ्युपेत्यापि सिद्धान्तमाह—**भवति वेति** । **तदावृत्तेः** स्तरणावृत्तेः ॥

इत्यातिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम् ॥ २० ॥

२१

**संनहन०** आपवादिकी सङ्गतिः । **विहारदेशः** यज्ञप्रदेशः । **अन्यकार्यत्वादिति** । बर्हिः साधारण्यविधिबलादर्थाक्षिप्तं ह्येतत्संनहनादिना बर्हिः संनह्यतीति विधिविहितम् । लवनोत्तरं प्राग्वंशप्रापणार्थस्यैवोपस्थितस्य प्रकृतौ विधानादिति भावः । अत्र दृष्टान्त

मेतत् । अतोऽन्यकार्यत्वात्कार्यप्रयुक्तत्वाच्च मन्त्रयोर्नात्र प्रयोगः । यथा-प्रकृतावेव गार्हपत्यादाहवनीये आनीयमाने बर्हिषि मन्त्रो न प्रयुज्यते तद्वत् ॥

इति सन्नहनहरणाधिकरणम् ॥ २१ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्र-
दीपिकायां द्वादशाध्यायस्य
प्रथमः पादः ॥



---

माह—यथेति । सूत्रे संनहनहरणे इति समाहारद्वन्द्वे सप्तमी । तत्र तथा मन्त्रावृत्तिरिति तदर्थः ॥

इति संनहनहरणाधिकरणम् ॥ २१ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां शास्त्र-
दीपिकाटीकायां प्रभाख्यायां द्वादशाध्यायस्य
प्रथमः पादः ।



## अथ द्वादशाध्याये द्वितीयः पादः

१

विहारः० किं गार्हपत्योऽग्निः लौकिकानां पार्वणस्थलीपाकतापपचनप्रकाशादीनां चरुपुरोडाशहोमहविःश्रपणादीनाञ्च वैदिकानां सर्वेषामग्निकार्याणामङ्गम् ? उत वैदिकानामेवेति ? संशये, सामर्थ्यात्समकाल्लिङ्गात् मांसपाकप्रतिषेधदर्शनाच्च सर्वार्थताप्राप्तौ, उच्यते—'गार्हपत्ये हवींषि श्रपयति' 'दक्षिणाग्नावन्वाहार्यं पचति' 'यदाहवनीये जुहोती' ति प्रत्यक्षवचननिर्दिष्टैरेव प्रयोजनैर्निराकाङ्क्षाणां न लिङ्गेन सर्वार्थता शक्या कल्पयितुम्। मांसपाकप्रतिषेधस्तु वैदिकवपाश्रपण एवोपपन्नः। स्थालीपाकादयस्त्वौपासने विहिता न सामान्यविहितान् गार्हपत्यादीन्

---

## अथ द्वितीयः पादः

१

विहारः० अङ्गस्य प्रधानतन्त्रोपजीवनं पूर्वपादे दर्शितम्। अत्र तूदासीनानामन्यतन्त्रोपजीवनं सापवादं चिन्त्यत इति पादभेदः। तत्रास्मिन्नधिकरणे प्रसङ्गापवादः क्रियते। गार्हपत्येत्यग्नित्रयोपलक्षणम्। लौकिकशब्दो रागप्राप्तस्मार्तोभयपरः। तत्र स्थालीपाकः स्मार्त्तः। पचनप्रकाशादि रागप्राप्तम्। चर्वादि श्रौतम्। सर्वाङ्गत्वोक्तिश्च प्रसङ्गसिध्यर्थम्। अङ्गस्यैव प्रायशः प्रसङ्गोपजीवनात्। **अवैदिकेति**। 'मांसन्तु न पचेयुस्तस्मिन्नग्नौ यदि पचेयुः क्रव्यादं कुर्यु'रिति प्रतिषेधो न वैदिकस्य सम्भवति। पशुपाकस्य शामित्रे विधाने नान्यत्र तदप्रसक्तेरिति भावः। एवञ्च मांसातिरिक्तपाकस्याभ्यनुज्ञावगमात्सर्वार्थतायामिदं लिङ्गमित्यर्थः। सिद्धान्तमाह—**गार्हपत्य** इति। नन्वेवं सर्वार्थत्वाभावेऽप्युपादानलाघवादविरोधान्मांसपाकप्रतिषेधलिङ्गाच्च प्रसङ्गोपकारिता स्यादत आह—**मांसेति**। आहवनीये वपाश्रपणस्य विहितस्य पाक्षिकत्वार्थो निषेध इति भावः। वस्तुतो विकल्पस्यान्याय्यत्वाद्दक्षिणाग्नौ पत्नीव्रतश्रपणविधानाद्रोगवशेन प्रसक्ते मांसव्रते तत्पाकस्यायं निषेध इत्याहुः। प्रसङ्गतो लौकिकपाकादिप्रसक्तिस्तु रागप्राप्तपाकनिषेधात्स्थालीपाकादेः स्मार्तस्य गृह्याग्नौ विधानान्निरस्ता। आयतन-

गृह्णन्ति । तस्माद् वैदिकानामेव विहारोऽङ्गम् । **पूर्वं बर्हिः संस्काराणां साधारण्यासाधारण्ये विचारिते तत्प्रसङ्गादग्नीनां लौकिकालौकिकसाधारण्यं विचारितमिति** सम्बन्धः ॥

इति विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणम् ॥ १ ॥

२

सवनीये० सवनीये पशावग्नीषोमीयात्पशोश्चोदकप्राप्तः **पशुपुरोडाशः** कर्त्तव्यः ? नेति ? संशये, न कर्त्तव्यः । स हि प्रकृतौ **छिद्रापिधानार्थः** 'सुषिरो वा एतर्हि पशुः, यर्हि वपामुत्खिदति, **यद्व्रीहिमयः पुरोडाशो निरुप्यते अपिहित्यै, अच्छिद्रतायै'** इति । **सवनीयपशौ च** सवनीयैरेव पिधानात् छिद्रापिधानं कृतम् । तत्रापि हि श्रूयते **'अनुसवनं** सवनीयाः पुरोडाशा निरूप्यन्ते अपिहित्यै, अच्छिद्रतायै' इति । **तस्मात्तैरेव कृतकार्यः** पुरोडाशो निवर्तते । नतु '**पुरोडाशेन माध्यन्दिने सवने'** इति लिङ्गात्कर्तव्यः ? एवं तर्हि विकल्पोऽस्तु । **नैवम्, अर्थवादमात्रं छिद्रापिधानवचनं** प्रत्यक्षविरोधात्, **देवतासंस्कारार्थस्त्वसौ । तस्मात्कर्त्तव्य एव ।** लिङ्गञ्च 'पुरोडाशेन माध्यन्दिने' **इति न पाक्षिकं कल्पयितुं शक्यम् ॥**

**इति सवनीयपशौ पशुपुरोडाशस्य कर्तव्यत्वाधिकरणम् ॥ २ ॥**

---

बहिर्भावसाध्यप्रकाशादिकार्यन्तु बहिर्नयने दोषश्रवणादेव निरस्तमिति भावः । **विहारः** अग्नित्रयम् । पूर्वप्रकृतसङ्गतिमाह—**पूर्वमिति** । सूत्रं स्पष्टम् ॥

इति विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणम् ॥ १ ॥

२

**सवनीये०** आतिदेशिकयनन्तरसङ्गतिः । पूर्ववदत्र निषेधाभावादधिकाशङ्का । **सुषिरश्**छिद्रवान् । **सवनीयैरेवेति**। प्रतिसवनं क्रियमाणैः सोमाङ्गैरित्यर्थः । **नन्विति** । पुरोडाशेनेत्येकवचनान्माध्यन्दिनसवनमात्रनिर्देशाद्वपायागाङ्गयागसन्दंशाच्च नैतल्लिङ्गं सवनीयपुरोडाशविषयत्वेनान्यथासिद्धं किन्तु पशुपुरोडाशविषयमेवेति भावः । लिङ्गोपपत्यै प्रकारान्तरेण पूर्वपक्षमाह—**एवं तर्हीति** । सिद्धान्तमाह **नैवमिति** ॥

**इति सवनीयपशौ पशुपुरोडाशकर्तव्यताधिकरणम् ॥ २ ॥**

३

हविष्कृत्स० प्रकृतौ पात्रप्रोक्षणानन्तरमवघातकालः। तस्मिन् काले 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयती'ति हविष्कृदाह्वानम्। तदाज्यौषधसान्नाय्यानां सर्वेषामङ्गमिति कृत्वा चिन्त्यते। तदा हि सान्नाय्यविकारे पशावपि पात्रप्रोक्षणानन्तरमस्ति हविष्कृदाह्वानम्। अतश्च सवनीयपश्वर्थेन तदीयपात्रप्रोक्षणानन्तरमाहूता हविष्कृत् तन्मध्यपातिनां सवनीयपुरोडाशानां प्रसङ्गसिद्धेर्न पृथगाह्वातव्येति सिद्धमेवोत्तरविवक्षया प्राप्यते॥

इति सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम्॥ ३॥

४

पशौ तु० सन्ति तृतीयसवने सवनीयाः पुरोडाशाः, सौम्यश्चरुः, आश्विनश्च द्विकपालः? इति। ते च सवनीये पशौ पक्वे क्रियन्ते। तेषु किं हविष्कृदाह्वातव्या? उत पाशुक्येव च प्रसज्यत इति संशये, हविष्कृत्समाख्यया हविष्करणमेव तस्याः कार्यम्। अतः पक्वे पशौ तदर्था हविष्कृत्कृतकार्यत्वादपवृक्तेति ततः परेषु पुनराह्वातव्येति प्राप्ते, ब्रूमः—साहाय्यकरणं तदाह्वानकार्यं सामर्थ्यात्। न केवलं हविष्करणमेव, मुख्य-

---

३

हविष्कृत्। आपवादिकी सङ्गतिः। हविष्कृत्पत्नी। सर्वेषामिति। प्रकरणाविशेषाद्धविष्करणयोगरूपसमाख्यासाधारण्याच्चेति भावः। वस्तुतः 'पत्न्यवहन्ती'त्यवघातमात्रे विनियोगात्तदनुसारेण समाख्यायास्तन्मात्रेणोपपत्तेरवान्तरप्रकरणेन चाह्वानस्यावघातमात्राङ्गत्वात्सर्वाङ्गत्वानुपपत्तेराह—कृत्वेति। आज्यग्रहणं प्रकृतानुपयोगेऽपि पूर्वपक्षन्यायसाम्यात्। अतश्चेति। अग्नीषोमीयपश्वतिदेशादित्यर्थः। तन्मध्यपातिनामित्यनेन च प्रातर्माध्यन्दिनसवनिकानां ग्रहणम्। सूत्रं स्पष्टम्॥

इति सवनीयपुरोडाशे हविष्कृदाह्वानाभावाधिकरणम्॥ ३॥

४

पशौ तु० आतिदेशिकी सङ्गतिः। अधिकाशङ्कामाह—हविष्करणमेवेति। सिद्धान्तमाह—सहायेति। प्रकरणाविशेषाल्लिङ्गाच्चाह्वानं सर्वसहायकरणार्थं प्रतीयते।

त्वात् हविष्करणे समाख्यायते । तेनाहूता सती प्रागुत्थानविधानान्नोत्थातु-मर्हति । प्रकृतौ च पत्नीसंयाजेभ्यः पश्चात्पत्न्युत्थानं विहितमिति, सवनीये पशावा पत्नीसंयाजेभ्यः सन्निहितेति तत्कालवर्तिनां तार्तीयसवनिकानां न भेदेनाह्वातव्येति ॥

इति तृतीयसवने हविष्कृदाह्वानस्यापुनरावृत्त्यधिकरणम् ॥ ४ ॥

५

निशि० काम्यास्विष्टिषु श्रूयते 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभियादि'ति । तत्रापरं वचनम् 'आमावास्यायां निशि यजेते'ति । तस्मिन्निशि यज्ञे चिन्त्यते—किं पृथक् तन्त्रं कर्तव्यम् ? उत दार्शिकमेव तन्त्रं प्रसज्येत ? इति । तत्रामावास्यायां निशीति सामानाधिकरण्यात्कालवचनोऽमावास्याशब्दो न कर्मवचनः । काले चानपेक्षः प्रवर्तते । कर्मणि तु कालापेक्षा वृत्तिः, ततोऽपि कालवचनः । तेन वाक्यात्तावन्नामावास्याकर्मणाऽुपस्थानं नाऽपि प्रकरणात्, तदभावात् । अतो नालोच्य दर्शं विधीयमाना निशीष्टिस्तत्तन्त्रोपजीवनासम्भवात् स्वाङ्गयुक्तैव निशि कर्त्तव्यतया विधीयत इति नास्ति प्रसङ्ग इति प्राप्ते,

---

हविष्कृत्समाख्या तु 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेनोपपन्ना न व्यावर्तनायाऽलमित्यर्थः । समाख्यया नियमेऽपि पत्नीसंयाजोत्तरमुत्थानविधिबलादेव प्रसङ्गसिद्धिरित्याह—तेनेति । सूत्रार्थस्तु-तार्तीयसवनिकेषु पुरोडाशेषु सौम्याश्विनयोश्च पशौ संस्कृते पक्वे सति विधानाद्धविष्कृत्स्यात् । कुतः ? पशुपाकरूपकार्यनिष्पत्तावपवृक्तत्वादिति ॥

इति तृतीयसवने हविष्कृदाह्वानस्यानावृत्त्यधिकरणम् ॥ ४ ॥

५

निशि यज्ञे० आतिदेशिकी सङ्गतिः । पूर्वपक्षमाह—तत्रेति । उभयत्र मुख्यत्वाभ्युपगमेऽपि प्रकृतवाक्ये सामानाधिकरण्यात्कालपरत्वमेवेत्यर्थः । वस्तुतस्तु काल एव मुख्यो न कर्मणीत्याह—काले चेति । एवञ्च कर्मणोऽनुपस्थितेर्न तत्तन्त्रमध्यविधानं येन तत्तन्त्रोपजीवनेन निशीष्टिप्रयोगविधिः स्यादित्याह—अत इति । शब्देन तन्त्रमध्यपातानुपस्थितावपि दर्शप्रयोगस्य दिवसारब्धत्वान्निशि क्रियमाणाया इष्टेरर्थात्तन्त्रमध्य-

ब्रूमः—यद्यपि वाक्यात्प्रकरणेन वा नोपस्थानं तथाऽपि यस्मिन्काले विधीयते, स तावन्नियमेन प्रवृत्तामावास्यातन्त्र एव। तेन तत्र विधीयमानेष्टिस्तत्तन्त्रमध्यविहिता भवति। अवश्यं चार्थस्वभावागतममावास्यातन्त्रमालोच्यैव निशीष्टिर्विधातव्या। अन्यथाऽग्निप्रणयनव्रतोपायनादिकमपि विदध्यात्। तच्चाशक्यम्, प्रणीतानामग्नीनां पुनःप्रणयनासम्भवात्। उपेतस्य च व्रतस्यानुत्सृष्टस्य पुनरुपेतुमशक्यत्वात्। तस्मादालोच्यैव दर्शतन्त्रं विधीयमानेष्टिर्यत्तत उपजीवितुमशक्यमिध्माबर्हिः सामिधेन्यादि, तन्मात्रं स्वयं प्रयुङ्क्ते। अन्यत्तु दार्शिकमेवोपजीवतीति। विकृत्यन्तराणि तु सौर्यादीनि पौर्णमास्यमावास्ययोर्विधीयमानान्यपि न प्रवृत्ततन्त्रायां प्रकृतौ विधीयन्ते। प्रागेव प्रकृत्यारम्भात्तदनुष्ठानसम्भवात्। इयन्तु निशायां विधीयमाना तत्तन्त्रमध्यपातिनी प्रसङ्गमुपजीवतीति वैषम्यम्॥

इति निशियज्ञाधिकरणम्॥ ५॥

६

आरम्भणीया० सौर्यादिषु आरम्भणीया स्यात्, न वेति सन्देहे, न स्यादिति ब्रूमः। प्रकृतौ हि सकृदेवेयं कर्त्तव्या, न प्रतिप्रयोगमावर्त्त-

---

पातावगतेर्युक्तः प्रसङ्ग इति सिद्धान्तमाह—**यद्यपीति**। नन्वेवमार्थिकोपस्थितेरनियतत्वान्न प्रयोगविधिसङ्कोचकत्वमित्याशंक्याह **अवश्यं चेति**। तथा च प्रणयनाद्यङ्गानुसारेणोपस्थितेरावश्यकत्वात्प्रसङ्गोपपत्तिरित्यर्थः। सौर्यादि विकृतावतिप्रसङ्गं वैषम्येणोद्धरति—**विकृत्यन्तराणीति**। अतिदेशप्राप्तप्रातःकालरूपाङ्गस्य प्रधानभूतायां विकृतावनुग्रहाद्दर्शाङ्गाऽन्वाधाने चाङ्गगुणविरोधन्यायेन बाधान्न दर्शतन्त्रमध्यपात इति भावः। सूत्रे–प्रत्यक्षशिष्टत्वादित्यस्य प्रत्यक्षे मुख्यवृत्या प्रतीते काले शिष्टत्वादित्यर्थः॥

इति निशियज्ञाधिकरणम्॥ ५॥

६

**आरम्भणीया०** आपवादिकी सङ्गतिः। पूर्वपक्षमाह—**न स्यादिति**। आरम्भणीयाजन्यसंस्कारस्यान्तिमदर्शपूर्णमासप्रयोगपर्यन्तावस्थानं विना सकृत्कृतायाः सकल

नीयेत्युक्तं नवमे। यदि च सकृत्कृतयाऽनया संस्कृतः पुरुषो यावज्जीवं संस्कृतो भवति, ततोऽस्याः—सकृत्करणं युक्तम्। अपवृक्ते तु तत्संस्कारे पुनः पुनस्तत्सिध्यर्थमनुष्ठातव्या स्यात्। तेन प्रकृत्यर्थं कृत एव संस्कारोऽनपवृक्तः प्रसङ्गेन विकृतीमामुपकरोतीति, न तास्वारम्भणीया कर्त्तव्या। उच्यते—न संस्कारव्यवस्थानात्प्रकृतावनावृत्तिः, किं त्वारम्भैक्यात्। आद्या हि कर्त्तुः प्रवृत्तिरारम्भः। स चैकस्य क्रतोरेक एव। अतस्तदपवर्गेऽवृज्यत एव तदर्थः संस्कारः, कार्यविरोधित्वात्। धर्मस्य पुनः पुनः प्रयोगे हि प्रयोगाः एव भिद्यन्ते, न क्रत्वारम्भः। क्रत्वारम्भाङ्गं चान्वारम्भणीया, दर्शपूर्णमासशब्दस्य क्रतुवचनत्वात्। तस्मान्न पुनः पुनः प्रयोगे चारम्भणीया। विकृतिषु त्वारम्भभेदाच्चोदकप्राप्ताऽऽरम्भणीया कर्त्तव्यैवाऽऽरम्भवेलायाम्॥

इति विकृतिष्वारम्भणीयानुष्ठानाधिकरणम्॥ ६॥

७

विप्रतिषिद्ध० पञ्चदशरात्रेऽग्निष्टुत्प्रथममहः, तत्रैकाहाग्निष्टुद्धर्मा नामधेयेन प्राप्यन्ते। तेनाग्नेयी तत्र सुब्रह्मण्या, ततो ज्योतिर्गौरायुरिति ज्योतिरादीनि त्रीणि अहानि। तत्र ज्योतिरादिनामधेयैरेकाहज्योतिरादि-

---

दर्शपूर्णमासप्रयोगाङ्गत्वायोगात्तन्मध्यपातिविकृतिषु प्रसङ्गोपपत्तिमाह—**प्रकृतौ हीति**। सिद्धान्तमाह—**उच्यत इति**। आरभ्यमानपुरुषे आरम्भयोग्यताजननद्वारारम्भाङ्गमेवारम्भणीया। आरम्भश्चैक स्यैवेत्यनावृत्तौ बीजम्। न तु संस्कारानुवृत्तिरित्यारम्भभेदात्पुनरनुष्ठानमित्यर्थः। कृता पुनः **तदर्थेनेति** सूत्रशेषस्य तदर्थे प्रकृत्यर्थं पुनर्न कृताः संस्कारानपवर्गादतो विकृतौ न स्यादित्यर्थः॥

इति विकृतिष्वारम्भणीयानुष्ठानाधिकरणम्॥ ६॥

७

**विप्रतिषिद्ध०** प्रकृतिविकृतिप्रसङ्गोपस्थितविकृतिविशेषप्रसङ्गे विशेषचिन्तनात्प्रसङ्गसङ्गतिः। **एकाहेति**। 'त्रिवृदग्निष्टुदग्निष्टोमः' इति विहितेत्यर्थः। **त्रीणीति**।

धर्मप्राप्तिः । तेन तेष्वैन्द्री सुब्रह्मण्या, [ अनन्तराणि त्रीणि ज्योतिरादीनि तत्र ज्योतिरादीनामेकैकेभ्यो नास्त्यैन्द्री ] परिशिष्टान्येकादशाहानि द्वादशाहिकानि तेष्वप्यैन्द्रयेव । तदिह चोदकप्राप्तैन्द्रीधर्मकाणामेकादशानामह्नामप्राप्ताग्नेयीधर्मकस्य चाग्निष्टुतौ विरोधे चिन्त्यते । यद्वा नाम्नामेव ज्योतिरादीनामग्निष्टुतश्च मिथश्चिन्ता । तत्रोपसत्कालसुब्रह्मण्यायां तन्त्रभूतायां किमनियमः ? उताग्नेयी ग्राह्या ? अथवैन्द्रीति ? तत्रानियमे मुख्यत्वाद्वाऽग्निष्टुद्धर्मानुग्रहे प्राप्ते, भूयसां साधर्म्यायैन्द्रीति सिद्धान्तितम् । न त्विह सुब्रह्मण्योदाहरणं युक्तम्, यत्रान्यार्थेनान्यस्योपकारसिद्धिः, तत्र प्रसङ्गः । न चाग्नेय्या सुब्रह्मण्यया इन्द्रः संस्कृतो भवति, ऐन्द्रया वाऽग्निः । अत एव न तन्त्रता । तेनोभावपि भेदेनाह्वातव्यावित्यनुदाहरणम् ।

काम्यास्विष्टिषु श्रूयते 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालमि'ति, दधि-मधु-घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकामः इति । तदिमानि सप्त हवींषि-आग्नेयम्, ऐन्द्रम्, प्राजापत्यानि पञ्चेति । तत्राग्नेयं प्राजापत्याश्च धाना आग्नेयविकारत्वादुभयथाऽप्यविरुद्धाः । यस्त्वैन्द्रपुरोडाशः यच्च प्राजापत्यं दधि, तयोरैन्द्राग्नसान्नाय्यविकारत्वादमावास्याधर्मापेक्षा, मधुघृतायान्तु उपांशुयाजविकारत्वात्पौर्णमासिकधर्मापेक्षा । मधूदकयोराज्यविकारत्वमष्टमे सिद्धम् । घृतस्य त्वसन्दिग्धमेव । तदेतेषु सप्तसु यागेषु सह प्रक्रान्तेषु पौर्णमासीविकाराणां वार्त्रघ्नावाज्यभागमन्त्रौ प्राप्तौ, दर्शविकारयोस्तु वृधन्वन्तौ न चान्यतराभ्यां कृतावाज्यभागौ पुनर्मन्त्रार्थमावर्त्तनीयौ । तदिह किममावास्यामन्त्राभ्यामाज्यभागौ

ज्योतिर्गौरायुरित्येवं नामकानीत्यर्थः । भाष्यानुसाराच्चिन्ता विषयद्वयमाह-इहेत्यादि । उभयत्रापि भूयस्त्वन्यायसाम्यान्न विशेष इति भावः । सुत्याकालीनाया भेदेनानुष्ठानस्य निर्णयादुपसदिति । तदेतद्भाष्यकारीयमुदाहरणं वार्तिकानुसारेण दूषयति—न त्विहेति । वार्तिकोक्तमुदाहरति—काम्यास्विति । मन्त्रार्थमिति । गुणानुरोधेन प्रधानावृत्ती-

कर्त्तव्यौ, ताभ्यामेव च प्रसङ्गसिद्धकार्यत्वात्पौर्णमासिकौ मन्त्रौ निवर्तेते ? अथ वा विपर्ययः ? इति संदेहे, अनियमः। मुख्यत्वाद्वा ऐन्द्रदध्नोस्तद्धर्मानुग्रहे प्राप्ते ब्रूमः—भूयसां मध्वादीनां धर्मौ वात्रघ्नावनुग्रहीतव्यौ। यद्यपि मुख्यधर्मः प्रथममवगम्यते, तथाऽपि पश्चाद्भूयोऽनुग्रहमालोच्य बाध्यते। सोऽयं प्राप्तबाधः। तस्मात्पौर्णमासिकौ धर्मावनुग्रहीतव्यौ॥

इति भूयोऽनुग्रहाधिकरणम्॥ ७॥

८

मुख्यं वा० यत्र समसङ्ख्यानां धर्मविप्रतिषेधः तत्र कस्य स्वधर्मलाभः कस्य वाऽन्यधर्मोपजीवनमिति चिन्तायाम्, अनियमप्राप्तौ मुख्यस्य स्वाधर्म्यमित्याह। तस्य हि धर्मोऽसञ्जातविरोधावस्थायां निर्विघ्नमवगम्यते। जघन्यस्य तु तद्विरुद्धत्वान्न धर्मः सङ्ग्रहीतुं शक्यते। न चात्रावगतस्य त्यागे, अनवगतसङ्ग्रहे च किञ्चित्कारणं भूयस्त्वं प्रधानधर्मत्वं वाऽस्ति। तस्मादत्र मुख्यस्य स्वाधर्म्यमिति।

किमिहोदाहरणम् ? अध्वरकल्पायां श्रूयते 'आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्ने, सरस्वतीमाज्यस्य यजेते'ति। तत्राग्नावैष्णवस्यौषधद्रव्यकत्वद्विदेवत्यत्व-द्वादशकपालत्वैरैन्द्राग्नविकारत्वाद्दार्शिकं तन्त्रम्। आज्यस्य तूपांशुयाजविकारत्वात्पौर्णमासधर्मापेक्षा। तत्र पूर्ववदाज्यभागमन्त्रयोर्विरोधे मुख्यधर्मत्वात् वृधन्वन्तौ ग्रहीतव्यौ। ऐकाधिकरण्यं त्वेकीय

रन्याय्यत्वादिति भावः। एतदप्युपांशुयाजस्यामावास्यायामभावपक्षे उदाहरणम्। तत्र सत्सत्वे तूदाहरणान्तरमूहनीयमित्याहुः॥

इति भूयोऽनुग्रहाधिकरणम्॥ ७॥

८

मुख्यं वा० आपवादिकी सङ्गतिः। ऐन्द्राग्नविकारत्वादिति। तत्र द्वादशकपालत्वस्यापि विकल्पितत्वादिति भावः। अत्राधिकरणान्ते ऐकाधिकरण्यं त्वेके मन्यन्त

मतत्वेनोपन्यासादन्याय्यत्वाच्च परमतमेव । न ह्यल्पवैगुण्ये सम्भवति भूयोवैगुण्यं प्रयोगवचनः क्षमते । अवगतमपि हि कारणान्तरवशाद्बाध्यत एव । यथोपरितनाधिकरणे मुख्यमपि दीक्षणीयाधर्मत्वं बाधित्वा प्रधानधर्मत्वबलेन सुत्याकाल एवानुग्रहीष्यते, तथा भूयस्त्वेनापि । तस्माद्द्वे एवाधिकरणे ॥

इति तुल्यसंख्याकानां विरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम् ॥ ८ ॥

९

अङ्गगुण० दीक्षणीयायाः सोमस्य च 'य इष्ट्या पशुना सोमेने' त्यादिना वचनेन पूर्वकालत्वे प्राप्ते सति एकादिदीक्षापक्षे द्वयोः कालासम्भवात्कस्य कालोऽनुग्राह्य इति विचारे, अनियमे, मुख्यत्वाद्वा दीक्षणीयाधर्मानुग्रहे प्राप्ते प्रधानधर्मत्वात्सुत्याकालानुग्रहः । सर्वाणि ह्यङ्गानि तदङ्गानि च प्रधानसाद्गुण्याय क्रियन्ते । न च साक्षात्साद्गुण्यसम्भवे

---

इत्युक्त्वा पशुकामेष्टावेव भूयस्त्वेन पूर्वपक्षमुक्त्वा मुख्यं वेत्यनेन सिद्धान्त इत्यैकाधिकरण्यं दर्शितम् । तदेकीयत्वोपन्यासात्परमतमयुक्तमित्याह—एकेति ।।

इति तुल्यसङ्ख्यानां विरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम् ॥ ८ ॥

९

अङ्गगुण० प्रसङ्गानुनिष्पन्नबाधप्रसङ्गादध्यायसङ्गतिमधिकरणान्ते वक्ष्यति । आपवादिक्यनन्तरा । एकादीति । द्वादशदीक्षापक्षे त्वविरोधाद्दीक्षणीयायामपि पर्वकालत्वं सम्भवतीत्यर्थः । मुख्यत्वाद्वेति । एतच्च भूयस्त्वस्याप्युपलक्षणम् । तेनौपवसथ्याहे क्रियमाणोपसदग्नीषोमीयपशुपुरोडाशादीनां भूयस्त्वेन पर्वकालत्वपूर्वपक्षोऽपि बोध्यः । भूयस्त्वप्राबल्यस्योक्तत्वेन मुख्यत्वेन पूर्वपक्षस्य मन्दत्वात् । यदि तु सुत्याकालानां पञ्चानां सवनीयहविषां सवनीयपशुतत्पुरोडाशानुबन्ध्यावभृथोदवसानीयानां चोपसदादिभ्योऽपि भूयसामनुग्रहो युक्त इति भूयस्त्वेनैव सिद्धान्तसिद्धिरिति विभाव्यते, तदा

परम्परामाश्रयति । तस्मात्प्रधानकालानुग्रहोऽयम् । प्राप्तबाधचिन्ताऽपीयं विप्रतिषिद्धधर्मसमवायप्रसङ्गादिह कृता ॥

इत्यङ्गगुणविरोधाधिकरणम् ॥ ९ ॥

१०

परिधि० 'परिधौ पशुं नियुञ्जीते'ति परिधानं यूपकार्यञ्च कुर्वन् परिधिः परिधिधर्मान् संमार्जनादीन् यूपधर्मांश्च परिव्याणादींल्लभेतेति प्राप्तिसूत्रमेतत् ॥

इति परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम् ॥ १० ॥

११

यौप्यस्तु० विरुद्धेषु धर्मेषु किं यूपधर्माः कर्त्तव्याः, परिधिधर्मा वेति संशये, यूपस्य हविषा पशुना साक्षात्सम्बन्धात्प्रधानप्रत्यासत्तिः, परिधेस्तु हविराधाराग्निसंस्कारार्थत्वाद्विप्रकर्षः, तेन यूपधर्मानुग्रहः, पूर्ववत् प्रधानप्रत्यासत्तेरिति प्राप्ते ब्रूमः—परिधेः सतो नियोजने

---

सवनीयादीनामभावं कृत्वेयं चिन्तेत्याहुः । आश्रयतीत्यनन्तरं कश्चिदिति शेषः । प्रधानविधिना हि पूर्वमङ्गमनुष्ठाप्यते पश्चात्तु तदङ्गमिति पूर्वावगताङ्गविरोधान्न तदङ्गानुष्ठापकतेति भावः ॥

इत्यङ्गगुणविरोधाधिकरणम् ॥ ९ ॥

१०

परिधिः सुगममेतत् ॥

इति परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम् ॥ १० ॥

११

यौप्यस्तु० आपवादिकी सङ्गतिः । विरुद्धेष्विति । सत्वक्कः परिधिर्भवति । यूपं तक्षतीत्यादिष्वित्यर्थः । सिद्धान्तमाह—परिधेः सत इति । परिधीयतेऽनेनेति

विधानादपरित्यक्तस्वधर्मे परिधौ नियुञ्जीतेति नियोजनमात्रं ह्यत्र वाचनिकम्। तत्प्रयुक्तास्तु तक्षणादिधर्माश्चोदकेन प्राप्नुवन्तः परिधित्वानुपमर्देन भवितुमर्हन्ति। सत्यामपि च प्रत्यासत्तावङ्गधर्मत्वमुभयोरविशिष्टम्। तस्माद्विरोधे परिधिधर्माः कर्त्तव्याः॥

इति परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम्॥ ११॥

## १२

पशु० सवनीयः पशुः प्रातः सवने प्रारभ्यते, तृतीयसवने समाप्यते 'वपया प्रातः सवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीसवने' इति। सवनीयाः पुरोडाशाः प्रतिसवनं विहिताः 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते' इति। माध्यन्दिनीयानां तार्तीयसवनिकानां च पुरोडाशानां तन्त्रमध्यपातादसन्दिग्धं प्रसङ्गित्वम्। प्रातः सवनिकानां पशोश्च मिथश्चिन्ता–किं पुरोडाशास्तन्त्रिणः, पशुः प्रसङ्गी, अथवा तन्त्री। ते प्रसङ्गिण,ः पशुरेव तन्त्री, विपरीतं वेति। यस्य पूर्वमुपक्रमः,यस्य वा पश्चात् समाप्तिः, स तन्त्री, इतरस्तु प्रसङ्गी। तत्रेह कस्य पूर्वमुपक्रम

---

परिधिरिति व्युत्पत्या परिधिशब्देन पुरोडाशकपालन्यायेन परिधानकार्यप्रयुक्तस्यैव नियोजनाङ्गत्वावगमात्स्वधर्मविशिष्टतया पूर्वावगतत्वेनोपजीव्यतया तदुपजीवकयूपधर्मातिदेशस्य दुर्बलत्वमिति भावः। यूपधर्माणां वाचनिकत्वभ्रमनिरासायाह–**नियोजनेति**। **चोदकेनेति**। यूपस्थानापत्यतिदेशपरम्॥

इति परिधौ विरोधिधर्माननुष्ठानाधिकरणम्॥ ११॥

## १२

**पशु०** पूर्वं यूपधर्मरूपपशुधर्मबाध उक्तः। अत्र तु सवनीयहविःप्रसङ्गात्पशुधर्मबाध आशङ्क्य निरस्यत इति सङ्गतिः। **ते प्रसङ्गिण** इत्यन्त एक एव विकल्प पूर्वपक्षस्तस्मादविशेष इत्युपसंहरिष्यते। **पशुरेवेत्यादिः** सिद्धान्तकोटिः। **विपरीतं** वेत्यस्य सवनीयाः प्रसङ्गिण इत्यर्थः। न तु सवनीयास्तन्त्रिणः पशुः प्रसङ्गीति तदर्थः। अस्य पक्षस्योत्तरत्रानुपन्यासादित्यवधेयम्। नियामकाभावादविशेषं वक्तुं नियामकं तावदाह

इति विशेषो नावगम्यते । ननु समाप्तावस्ति विशेषः, पशोस्तृतीयसवने समाप्तेः, स एव तन्त्री स्यात् । प्रातःसवनिकाः पुरोडाशा हि प्रातःसवने समाप्यन्ते । अतस्ते प्रसङ्गिनः । मैवम्, तेऽपि तृतीयसवने समाप्यन्ते, 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ती'ति पौरोडाशिकानूयाजोत्कर्षविधिरस्त्विति मन्यते । तस्मादविशेषः ।

उच्यते—पशुरेव तन्त्री । तत्र 'अग्निमद्य होतारमवृणीतायं यजमानः' इत्यादिसूक्तवाकप्रैषो मैत्रावरुणकर्तृकोऽग्नीषोमीयात्पशोश्चोदकेन प्राप्तः, पुनः 'अग्निमद्य होतारमवृणीतायं सुतासुती यजमानः' इत्यादिरूपेण विकृतः प्रत्यक्षेण सवनीयपशौ पठ्यते । सोऽयमनर्थकः पुरोडाशानां तन्त्रित्वे स्यात् । न हि तेषामयमङ्गम्, नापि मैत्रावरुणस्तेषामस्ति, येनायमुच्येत । विकल्पे तु नित्यवद्वचनानर्थक्यम् तस्मादनेन पशुवैशेषिकाङ्गाम्नानेन पशुरेव तन्त्रीति निश्चीयते ।

किं च–'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्ययमपि पाशुकानामेवानुयाजानामुत्कर्षः, तेषां 'अङ्गैस्तृतीयसवने' इत्यङ्गप्रचारोत्कर्षादेव तृतीयसवनसम्बन्धे प्राप्ते प्रदेशविशेषमात्रं सुखेन विधीयते । पुरोडाशानां तु 'अनुसवनं निरुप्यन्ते' इति वचनात्प्रातस्सवनसमाप्त्यवगमात्तद्विरोधेनाऽयुक्तं तदीयानूयाजोत्कर्षविधानम् । तस्माद्दीक्षाकालत्वात्पशोस्तन्त्रिता, तन्मध्यपातात्तु पुरोडाशाः प्रसङ्गिनः ॥

इति सवनीयपुरोडाशयोः पशोरेव तन्त्रिताधिकरणम् ॥ १२ ॥

---

**यस्येति** । प्रथमनियामकस्याभावेऽपि द्वितीयं शङ्कते **नन्विति** । वस्तुतः पाशुकानुयाजानामेवोत्कर्षविधानान्मन्यत इत्युक्तम् । सिद्धान्तमाह— **पशुरेवेति** । ननु विकल्प पूर्वपक्षात्पक्षे सार्थकता प्रैषस्येति नानर्थक्यमत आह—**नित्येति** । शेषं सुगमम् । **सूत्रार्थस्तु**—पशुसवनीयेषु विकल्पः प्रसङ्गस्य स्यात् । वैकृतोऽनुयाजोत्कर्षश्चेन्नियामक इति शेषः । तन्न, यतः सोऽप्युभयोः श्रुतिविशेषाभावादिति ॥

इति सवनीयपुरोडाशयोः पशोरेव तन्त्रिताधिकरणम् ॥ १२ ॥

१३

अपूर्वं च० प्रकृतिर्यावज्जीवं पर्वणि पर्वणि प्रयुज्यते, विकृतयोऽपि कामेन निमित्तेन वा पर्वण्येवापतन्ति । तत्र प्रकृतिविकृत्योस्तन्त्रेण प्रयोगं कृत्वा चिन्त्यते—विरुद्धेषु धर्मेषु रक्षोघ्नीसामिधेनीत्यादिषु कस्य धर्मः प्रयुज्यते ? कस्य प्रसङ्गित्वमिति ? संशये, प्रकृतेः पूर्वं प्रवृत्तत्वात्सैव तन्त्रिणीति प्राप्ते, ब्रूमः—यद्यपि तावत्पूर्वं प्रवृत्ता प्रकृतिः स्यात्, तथाऽपि वैकृतमेवानुष्ठेयम् । इतरथा सर्वदैव प्राकृतानां प्रयोगाद्वैकृता विशेषविधयोऽनर्थका भवेयुः । न च पूर्वं प्रवृत्ता प्रकृतिः । न ह्ययमेको यावज्जीविकः प्रयोगः । पर्वणि पर्वणि भिन्नाः प्रयोगाः प्रक्रम्यन्ते, अपवृज्यन्ते च । तस्मात्कामेन निमित्तेन चापतन्ती विकृतिरेवौत्सर्गिकीं नित्यचिकीर्षां बाधित्वा निविशत इति वैकृतमेव तन्त्रं प्रकृतौ प्रसज्यते इति ॥

इति प्रकृतिविकृत्योर्विकृतितन्त्रानुष्ठानाधिकरणम् ॥ १३ ॥

---

१३

**अपूर्वं**० पूर्ववद्वैकृतविशेषोपदेशवशेन तन्त्रित्वोक्तेरातिदेशिकी सङ्गतिः । ननु सद्यस्कालाया विकृतेर्द्व्यहकालप्रकृत्या सह प्रयोगाभावात्कथं तन्त्रितेत्यत आह—**तत्रेति** । पूर्वपक्षमाह—**प्रकृतेरिति** । प्रकृतिपूर्विका हि विकृतिरतिदेशेन तद्धर्मोपजीवनादिति प्रकृतेरेव तन्त्रित्वं नित्यत्वाच्च पूर्वप्रवृत्ता प्रकृतिः पश्चात्तु नैमित्तिकी काम्या वा विकृतिरित्यर्थः । तत्र पूर्वप्रवृत्तिमभ्युपेत्य तावत्सिद्धान्तमाह—**यद्यपीति** । 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि'ति न्यायादिति भावः । पूर्वप्रवृत्तिरप्यसिद्धेत्याह—**न चेति** । यावज्जीविकैकप्रयोगसत्वे हि तदन्तःपातात्तत्प्रसङ्गः स्यात्सतु द्वितीये निराकृत इत्यर्थः । पूर्वं विहितत्वात्प्रवृत्तिस्तु नैमित्तिकबाधितेति न प्रसङ्गोपयोगिनी किन्तु विकृतेरेव तन्त्रित्वहेतुरित्याह—**तस्मादिति** । **सूत्रार्थस्तु** अपूर्वं सामिधेन्यादि वैकृतं प्रकृतौ प्रसज्यते समानतन्त्रा चेत् । अन्यथा अपूर्वमङ्गं न नित्यत्वात्पाक्षिकत्वाङ्गीकारादनर्थकं स्यादिति ॥

इति प्रकृतिविकृत्योः विकृतितन्त्रानुष्ठानाधिकरणम् ॥ १३ ॥

१४

अधिकश्च० आग्रयणेष्ट्यामैन्द्राग्न-वैश्वदेव-द्यावापृथिव्यानि हवींषि। द्यावापृथिव्यस्य वैश्वदेविकद्यावापृथिव्यविकारत्वात्प्रसूनं बर्हिः प्राप्तम्, ऐन्द्राग्नादेस्तु प्रसूनमप्रसूनं वा बर्हिर्मात्रम्। तत्र समानतन्त्रेषु किं प्रसूनमप्रसूनं वोपादेयम्? उत प्रसूनमेवेति? संशये, मुख्यत्वाद्-भूयस्त्वाच्चानियम एव युक्तः। नैवम्, न ह्यनियमो नाम किञ्चिदङ्गं यदनुगृह्येत। बर्हिर्मात्रं त्वङ्गम्, तच्च प्रसूनोपादानेऽप्यविरुद्धमिति न कस्यचिद्वैगुण्यम्। अनियमे तु द्यावापृथिव्यस्य वैगुण्यं स्यात्। न चावैगुण्यसम्भवे तद्युक्तम्। तस्मात्प्रसूनमेव स्यात्॥

इति प्रसूनबर्हिरधिकरणम्॥ १४॥

१५

तत्प्रवृत्त्या० एवं तर्ह्यनेनैव द्यावापृथिव्यतन्त्रलिङ्गभूतेन बर्हिषा सर्वमेवेदं द्यावापृथिवीयं तन्त्रम्। ऐन्द्राग्नादेस्तु तदेव तन्त्रं प्रसज्यते। अतो विरुद्धेष्वपि धर्मेषु द्यावापृथिवीय एव स्यात्। नैवम्, न ह्येतदै-

---

१४

अधिकश्च० भूयसां प्राकृताग्नेयादीनामल्पविकृतिधर्मप्रसङ्गवदिहाप्यैन्द्राग्नादि-बहुधर्माणामल्पद्यावापृथिव्यधर्मप्रसङ्गोक्तेरातिदेशिकी सङ्गतिः। वैश्वदेविकस्तत्पर्वा-न्तर्गतः। अन्यत् सुगमम्। **सूत्रार्थस्तु**—अधिकः प्रसूनादिर्गुणः साधारणे बर्हिर्मात्रे प्रसज्यते अविरोधात्। कीदृशो गुणः? अमुख्ये अपि शब्दादल्पे विद्यमानः। यथा शिष्यस्य कांस्यभोजित्वगुरूच्छिष्टभोजित्वनियमवतोऽनुरोधेन गुरोः कांस्यभोजित्वमिति दृष्टान्तार्थः॥

इति प्रसूनबर्हिरधिकरणम्॥ १४॥

१५

तत्प्रवृत्त्या० आपवादिकी सङ्गतिः। पूर्वपक्षमाह—**एवमिति**। पूर्ववद्विशेष-धर्मवत एव तन्त्रित्वमिति भावः। अविरुद्धत्वेन साधारणत्वान्नैतत्तन्त्रिता नियामकमतो

कान्तिकं द्यावापृथिवीयतन्त्रलिङ्गं साधारणमिदमविरोधात्सङ्गृहीतं न त्वनेन द्यावापृथिव्यं तन्त्रं नियन्तुं शक्यम्। तस्मात्सर्वं तन्त्रेण इति विरुद्धेषु ऐन्द्राग्नादिधर्मः कर्त्तव्यो मुख्यभूयस्त्वाभ्याम् ॥

इति द्यावापृथिव्यादीनां तन्त्रित्वाधिकरणम् ॥ १५ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां
शास्त्रदीपिकायां द्वादशाध्यायस्य
द्वितीयः पादः।



---

विरोधस्थले मुख्यभूयस्त्वाभ्यामेव तन्त्रित्वव्यवस्थेति सिद्धान्तमाह—**नैवमिति**। सूत्रं स्पष्टार्थम् ॥

इति द्यावापृथिव्यादीनां तन्त्रिताधिकरणम् ॥ १५ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां द्वादशाध्यायस्य
द्वितीयः पादः।



# अथ द्वादशाध्याये तृतीयः पादः

१

विश्वजिति० अष्टरात्रे विश्वजित्प्रथममहः, ततोऽभिप्लवः षडहः, ततो अभिजित्। तत्र विश्वजिति नामधेयेनैकाहिकविश्वजिद्धर्मः 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति वत्सत्वक्प्राप्तिः, इतरेषु तु ज्योतिष्टोमादहतं वासः। तत्र द्वयोः परिधानार्थत्वात् महाव्रते तार्प्यादिवच्च 'वासांसि विस्रंसयति' इत्यादिवद्वासोबहुत्वादर्शनादसति समुच्चये भूयोधर्मत्वादहतानुग्रहः। ऐकाधिकरण्यवादिमते तु सूत्रान्यथाकरणं भाष्यकारेण दर्शितम्। सिद्धान्तस्तु—सत्यं न दृष्टं वासोबहुत्वम्, तथाऽपि कौपीनाच्छादने वत्सत्वचोऽयोग्यत्वादुपरिवासः कार्येऽसौ विधीयते। तत्रापि परिदधातीति प्रयोगात्कम्बलं परिधत्त इतिवत्। अहतन्तु कौपीनाच्छादने योग्यं तत्रैव विधीयत इति द्वयोरपि भिन्नकार्यत्वात्समुच्चयः॥

इत्यष्टरात्रे वत्सत्वगहतवाससोस्समुच्चयाधिकरणम्॥ १ ॥

---

## अथ तृतीयः पादः

१

**विश्वजिति।** अत्र विकल्पसमुच्चयचिन्तेति पादभेदः। अध्यायसङ्गतिस्तु तस्या अन्येन कार्यसिद्धेरन्यस्य निवृत्तिरिति प्रसङ्गसाम्यादिति 'एकार्थास्तु विकल्पेरन्नि'-त्यत्र मूल एव वक्ष्यते। **अवभृथादिति।** अवभृथसमाप्तौ तत्स्थानाज्जलप्रदेशादुपरिस्थले आगत्येत्यर्थः। दशमे घृताक्तकम्बलरूपतार्प्यदर्भयोर्महाव्रतेऽहतेन समुच्चयोक्तेर्गतार्थतामाशङ्क्य परिहरति—**महाव्रतेति।** तथा च तत्र समुच्चयहेतुतयोक्तलिङ्गदर्शनस्येहासत्वात् न गतार्थतेत्यर्थः। **ऐकाधिकरण्येति।** भूयस्त्वादपि मुख्यत्वप्राबल्यवादिमते इत्यर्थः। विश्वजितिनामवशात्वत्सत्वक् तदभावे त्वहतं स्यादित्यन्यथा व्याख्यानं कृतमित्यर्थः। शेषं सुगमम्॥

इत्यष्टरात्रे वत्सत्वगहतवाससोस्समुच्चयाधिकरणम्॥ १ ॥

२

अनुनिर्वाप्येषु० अग्नीषोमीयस्य पशुपुरोडाशं 'देवसुवां हवींष्यनुनिर्वपती'त्यत्रानुनिर्वाप्याणां स्वाधर्म्यं पुरोडाशस्य प्रसङ्गित्वं विपरीतं वेति संशये, भूयस्त्वादनुनिर्वाप्याणामिति प्राप्ते उच्यते—न हि तेषां सहचोदना, नापि सहोपक्रमः, किन्तु पशुपुरोडाशतन्त्रे प्रक्रान्तेऽनुनिर्वाप्याणां तन्त्रमध्ये विधानाद्विस्पष्टं प्रसङ्गित्वम्, इतरस्य च तन्त्रित्वं तन्त्रिधर्मश्च प्रसङ्गिभिरुपजीवनीय इति पशुपुरोडाशस्य स्वाधर्म्यम् ।

ये तु सर्वेष्वपि तन्त्रिषु विप्रतिषिद्धविषये मुख्यस्यैव स्वाधर्म्यं न भूयसामित्यैकाधिकरण्यमाश्रित्य वदन्ति, तेषां प्रसङ्गिभ्योऽनुनिर्वाप्येभ्यो मुख्यबलीयस्त्वं विस्पष्टमित्यधिकरणमिदमनर्थकं स्यात् । ऐकाधिकरण्यमेव विस्पष्टीकर्तुमिदमधिकरणमिति तु लज्जाशून्यानां वैयात्यभाषितम् । किञ्च विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् साधर्म्यं, मुख्यं वा स्वधर्मेति सामान्येनोक्त्वा, अनुनिर्वाप्येष्विति विशेषमुपादाय तद्विषये भूयोभ्योऽपि मुख्यबलीयस्त्वमित्यभिधानात् । तत्र भूयसामेव स्वधर्मत्वम् ।

---

२

अनुनिर्वाप्येषु० पूर्ववदिहाऽपि भूयस्त्वापवादादातिदेशिकी सङ्गतिः । चयनप्रकरणगतमुदाहरति—**अग्नीति** । पुरोडाशमन्विति सम्बन्धः । **देवसुवामिति** । 'त एनं स्तुवन्त' इत्यर्थवादाद्देवं यजमानं सुवन्ते अभ्यनुजानन्तीत्यग्न्यादयोऽष्टौ देवतादेवसुवस्तेषामित्यर्थः । **स्वाधर्म्यं** स्वधर्मतातन्त्रित्वमित्यर्थः । पूर्वपक्षमाह—**भूयस्त्वादिति** । अनुनिर्वाप्याणामित्यनन्तरं स्वाधर्म्यमित्यनुषङ्गः । सिद्धान्तमाह—**नहीति** । सह विधौ प्रयोगे वा भूयस्त्वमेव तन्त्रितानियामकं स्यात्, इह तु तन्त्रमध्यपातस्य स्पष्टं प्रतीतेः स एव प्रसङ्गितापादक इति न नियामकान्तरावतार इत्यर्थः । फलितमाह—**पुरोडाशस्येति** । पुरोडाशस्य हि स्वधर्मः केवलाग्निदैवत्यः स्विष्टकृतः अनुनिर्वाप्याणां तु स्विष्टकृद्गुणकाग्निदेवत्य इति विरोधे तन्त्रित्वात् । पुरोडाशधर्मानुग्रहस्तेन चेतरेषां प्रसङ्ग-

मुख्यस्वाधर्म्यन्तु समसङ्ख्याविषयमित्यधिकरणभेद एव स्पष्टीभवति नैकाधिकरण्यमित्यास्तां तावत् ॥

इत्यनुनिर्वाप्याधिकरणम् ॥ २ ॥

३

एककर्मणि० दर्शपूर्णमासयोराघारौ प्रकृत्य श्रूयते 'ऊर्ध्वमाघारयति, ऋजुमाघारयति, सन्ततमाघारयती'त्यादि । तत्रोदूर्ध्वत्वादीनां विकल्पसमुच्चयचिन्तायामेकार्थत्वाद्विकल्पप्राप्तौ सर्वेषां सहसम्भवात्समुच्चयः ॥

इत्याघारयोरूर्ध्वादीनां समुच्चयाधिकरणम् ॥ ३ ॥

४

एकार्थास्तु० 'व्रीहिभिर्यजेत यवैर्यजेते'त्यादिष्वपि सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहायाष्टदोषनिदानविकल्पपरिहाराय च समुच्चयः स्यात् । सम्भवति च ज्योतिष्टोमवदभ्यासमाश्रित्य समुच्चयसम्पादनम्,

---

सिद्धिरिति सूचितम् । ऐकाधिकरण्यमतानुवर्तिनां गुरूणां मतं दूषयितुमाह—**ये त्विति** । **वैयात्यम्** धाष्ट्र्यम् । शेषं सुगमम् ॥

इत्यनुनिर्वाप्याधिकरणम् ॥ २ ॥

३

**एककर्मणि०** अत्र प्रसङ्गापवादात्सङ्गतिः । समुच्चये तदभावात् । **सहसम्भवादिति** । ऊर्ध्वत्वादीनामदृष्टार्थत्वादिति भावः ॥

इत्याघारयोरूर्ध्वादीनां समुच्चयाधिकरणम् ॥ ३ ॥

४

**एकार्थस्तु०** आपवादिकी सङ्गतिः । पूर्वपक्षमाह—**सर्वाङ्गेति** । नन्वेकेन कार्यनिष्पत्तावितरस्यानर्थक्यादननुष्ठानमत आह—**सम्भवति चेति** । ननु 'दशैतानध्वर्यु'

मिश्रैर्वा इज्यतामिति प्राप्ते ब्रूमः—एकार्थानामेकस्मिन्नुपकारेऽन्योन्यानपेक्षया विनियुक्तानां विकल्पः स्यात्। ज्योतिष्टोमो हि द्रव्यदेवतासंयोगानामदृष्टार्थानामपर्यायविधानात्प्रकरणेन युगपद्ग्रहणात्सर्वसम्पादनाय युक्तं यदभ्यस्यते। व्रीहियवौ तु द्वाभ्यां वाक्याभ्यामन्योन्यनिरपेक्षौ यागद्रव्यपुरोडाशप्रकृतितया विधीयमानौ तद्द्वारेण प्रयोगवचनो गृह्णन् पर्यायेणैव गृह्णाति, न युगपत्। यद्बलात्प्रधानाभ्यासः स्यात् ज्योतिष्टोमवत्। मिश्रत्वमपि निरपेक्षविधानादयुक्तमेव। समुच्चित्य यजतोऽपि वाक्यद्वयमपि बाधितं स्यात्। द्वाभ्यामपि वाक्याभ्यां द्वयोरपि निरपेक्षयोः प्रकृतित्वेन विधानात् तद्बलेन द्रव्यान्तरनिवृत्तिप्रतीतेः। तस्माद्विकल्पः। ततो व्रीहिप्रयोगे तैरेव कार्यसिद्धेर्यवानामनुपादानम्। यथा पाशुकैरङ्गैः कार्यसिद्धेः पौरोडाशिकानाम्। ननु चान्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्गः?

'साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः।
एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ॥'

---

रित्यादिवचनबलाज्ज्योतिष्टोमाभ्यासेऽप्यत्र तादृशवचनाभावाद् गुणानुरोधेन प्रधानवृत्तिर्न युक्तेत्यत आह—**मिश्रैर्वेति**। व्रीहियवयोः प्रयोगविध्युपसङ्ग्रहानुरोधादुभयातिरिक्तनैरपेक्ष्यमेव व्रीहिभिरित्यादि तृतीयया बोध्यत इत्याशयः। **एकार्थानामिति**। **उपकार** इति सति सप्तमी। अवान्तरोपकारभेदाभावे सति निरपेक्षतयैकत्रार्थे विनियुक्तत्वं विकल्पप्रयोजकमित्यर्थः। 'ऊर्ध्वमाघारयति ऋजुमाघारयति सन्ततमाघारयती'त्यादीनां निरपेक्षतयाऽऽघारार्थानां विकल्पवारणाय सत्यन्तम्। तत्रोर्ध्वत्वादिजन्यनियमादृष्टरूपोपकारभेदात्। तावन्मात्रोक्तौ च स्वर्गपश्वाद्यनेकफलानां कर्मणामवान्तरोपकारभेदाभावाद्विकल्पः स्यात्। तत्रावान्तरोपकारस्यैवासत्वेन तद्भेदस्य सुतरामभावात्। तस्य शेषिगतत्वनियमेनादृष्टमात्रे तत्वाभावात्। अतो विशेष्यदलम्। तत्राप्याग्नेयादीनां षण्णां विकल्पवारणाय **निरपेक्षेति**। ज्योतिष्टोमवदित्युक्तदृष्टान्तवैषम्यमाह—**ज्योतिष्टोमो हीति**। अदृष्टार्थानामित्यवान्तरोपकारभेदप्रदर्शनम्। अतएवापर्याये विकल्पाभावोक्तिः। समुच्चयप्रमाणमप्याह—**प्रकरणेनेति**। व्रीहियवयोरपि प्रयोगवचनसङ्ग्रहानुरोधेन समुच्चयमाशङ्क्य निराकरोति—**व्रीहीति**। प्रथमावगतविनियोगानुसारेणैव प्रयोगविधिप्रवृत्तेस्तेनापि विकल्पेनैव तयोर्ग्रहणमित्यर्थः। द्वितीयां समुच्चयोपपत्तिं निराकरोति—**मिश्रत्वमपीति**। तदुक्तं वार्तिके—'मिश्रैर्वा यजमानस्य मिश्राणां विध्यदर्शनादि'ति। किञ्च नियमविधौ यथाप्राप्तस्य नियमकरणात्प्राप्तेश्च

इति वचनात् । अत्र तु द्वयोरप्याग्नेयार्थत्वान्नास्ति प्रसङ्गरूपम् । सत्यमेतावान्विशेषः, तथाऽप्यन्येन कार्यसिद्धेरन्यनिवृत्तिरित्येतावता सामान्येनात्र सङ्गतिः ॥

इत्येकप्रयोजनकगुणानां विकल्पाधिकरणम् ॥ ४ ॥

५

प्रायश्चित्तेषु० यानि प्रायश्चित्तानि कर्मवैगुण्ये निमित्ते विधीयन्ते । यथा 'यद्दक्तो यज्ञ आर्तिमियात्, भूः स्वाहेति गार्हपत्ये जुहुयात्, योऽमावास्यां पौर्णमासीं वाऽतिपातयेत्, अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, अमावास्यां पौर्णमासीं वातिपातयेद्वैश्वानरं द्वादशकपालं निर्वपेदि'त्यादीनि वैगुण्यसमाधित्सायां विधानात् समाधानार्थानि । यान्येकस्मिन्वैगुण्ये विधीयन्ते पथिकृद्वैश्वानरादीनि तेषां विकल्पसमुच्चयचिन्तायामदृष्टार्थत्वात्समुच्चयप्राप्तावेकैकेन वाक्येन वैगुण्यसमाधानाय निरपेक्षविधानाद्विकल्पः ॥

इति वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् ॥ ५ ॥

---

प्रत्येकमेव लोकतोऽवगमान्न मिश्रत्वसम्भव इत्यूह्यम् । विकल्पसाधनस्य प्रकृतोपयोगमाह—तत इति । प्रसङ्गलक्षणानाक्रान्तत्वादध्यायासङ्गतिमाशङ्कते—ननु चेति । प्रासङ्गिकी सङ्गतिरित्याशयेन समाधत्ते—सत्यमिति ॥

इत्येकप्रयोजनकगुणानां विकल्पाधिकरणम् ॥ ४ ॥

५

प्रायश्चित्ते० आतिदेशिकी सङ्गतिः । अत्र 'यद्दक्त' इति वैगुण्यसमाधानार्थत्वसाम्याद्दृष्टान्तमात्रार्थम् । तत्र 'यानी'त्युत्तरग्रन्थे पथिकृदादेरेव विचारविषयत्वोक्तेरिति बोध्यम् । सिद्धान्तमाह—एकैकेनेति । दर्शपूर्णमासातिक्रमरूपनिमित्तैक्यादपेक्षितस्य वाक्यशेषावगतस्य च तन्निमित्तप्रत्यवायपरिहारस्याप्येकत्वात्तत्र निरपेक्षतया विहितयोर्विकल्प एव युक्त इत्यर्थः । सूत्रे निष्पन्नेन वैगुण्येनेत्यर्थः । सर्वेषु प्रायश्चित्तेषु तन्निर्हरणमेकमेव कार्यमिति शेषः ॥

इति वैगुण्यसमाधानार्थानां प्रायश्चित्तानां समुच्चयाधिकरणम् ॥ ५ ॥

६

समुच्च० यानि पुनर्न दोषनिर्घातार्थानि निमित्ते कर्माङ्गानि 'भिन्ने जुहोती'त्यादीनि, तेषां प्रयाजादीनामिवापर्यायविधानात्समुच्चय इति प्रत्युदाहरणमात्रमेतत् ॥

इति नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् ॥ ६ ॥

७

मन्त्राणां० 'पर्वणि नाध्येतव्यमि'त्यादयो ये मन्त्राणामध्ययनकाले स्वधर्माः, ते कर्मकालेऽपि स्युर्न वेति संशये, मन्त्रप्रयोगार्थत्वात्कर्मकालेऽपि प्रयोगात्तत्रापि स्युः। नैवम्, प्रकरणादेते धर्माः स्वाध्यायविधिविहितस्य ग्रहणार्थस्याध्ययनस्याविघ्नसमाप्त्युपकारेणाङ्गभूताः। कः प्रसङ्गो यत्कर्मणि धर्मादरः। पूर्वपक्षे विधीयमानानां धर्माणां मन्त्रप्रयोगार्थत्वेन कर्मकालेऽपि प्राप्तेस्तद्विधयः स्वाध्यायसमयवर्तिन एव प्रसङ्गात्कर्मकालेऽप्युपकुर्वन्ति। सिद्धान्ते तु नेत्येवंविधप्रसङ्गाप्रसङ्गविचारात्सङ्गतिः ॥

इति कर्मकालेऽनध्याये मन्त्राणां प्रयोगाधिकरणम् ॥ ७ ॥

---

६

समुच्चयः० न दोषेति। तद्गमकवाक्यशेषाद्यभावादिति भावः। सङ्गतिमाह—प्रत्युदाहरणेति ॥

इति नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् ॥ ६ ॥

७

मन्त्राणाम्० इहाऽपि पूर्ववत्प्रसङ्गाभावादातिदेशिकी सङ्गतिः। पूर्वपक्षमाह—मन्त्रेति। अध्ययनस्य दृष्टार्थतया तत्र धर्मविधानानर्थक्यान्नाध्येतव्यमित्यादि निषेधेष्वध्येतव्यमित्यनेन प्रयोजनवदुच्चारणानुवादेन धर्मविधिरिति कर्मकालीनमन्त्रोच्चारणाङ्गतेत्यर्थः। तत्रापोत्यनास्थयोक्तं प्रयोजनमाह—अविघ्नेति। पदार्थप्रसङ्गवद्विधिप्रसङ्गविचारः प्रासङ्गिक इत्यध्यायसङ्गतिमाह—पूर्वपक्ष इति ॥

इति कर्मकालेऽनध्याये मन्त्राणां प्रयोगाधिकरणम ॥ ७ ॥

८

भाषास्वरः० ये मन्त्राः समाम्नाये स्वरान्तरेण समाम्नाताः, ब्राह्मणे च मन्त्राः स्वरान्तरेणोपात्ताः, ते मन्त्राः किं समाम्नायसिद्धेन स्वरेण प्रयोक्तव्याः ? उत ब्राह्मणस्वरेणेति ? संशये, वाचनिकत्वाद्-ब्राह्मणस्वरस्य तेनैव प्रयोगः। नैवम्, ये तावल्लिङ्गविनियुक्ता मन्त्रास्तेषां ब्राह्मणस्य गुणार्थवादपरिसङ्ख्यार्थत्वान्न मन्त्रस्वरूपे, तत्स्वरे वा व्यापारः। येऽपि वचनविनियोज्याः, तेष्वपि मन्त्रविनियोगपरं वचनं न तत्स्वर-विनियोगे व्याप्रियत। स्वरान्तरोपादानन्तु ब्राह्मणे प्रवृत्तस्य स्वरस्या विच्छेदार्थम्। तस्मादात्मीयेनैव स्वरेण कर्मण्यपि प्रयोगः॥

इति कर्मणि समाम्नायस्वरेण मन्त्रोच्चारणाधिकरणम्॥ ८॥

---

८

**भाषा०** बाधे सति प्रसङ्गाभावादातिदेशिकी सङ्गतिः। अध्ययनधर्माणां कर्मप्रकरणपाठाभावादिह तु स्वरस्य ब्राह्मणेऽपि पाठ इत्यधिकाशङ्का। पूर्वपक्षमाह—**वाचनिकेति**। लिङ्गादेव प्राप्तानां विधिरप्राप्तस्वरार्थ एव। वचनविनियोज्यानामपि पठितस्वरविशिष्टानां विधिः। मन्त्रसमाम्नायस्वरस्य तु न कर्माङ्गतया विधिरिति तस्य पारायणेऽर्थविशेषनिर्णये चोपयोग इत्याशयः। सिद्धान्तमाह—**नैवमिति**। अत्र स्वरस्याशाब्दत्वाद्विधिव्यापाराविषयत्वं बोध्यम्। स्वरपाठान्यथानुपपत्त्या विध्यन्तरकल्पना-निरासाय तु लिङ्गप्राप्तेषु प्रयोजनान्तरसत्वमुक्तम्। वाचनिकेषु तन्निरासायाह—**स्वरान्तरेति**। न च मन्त्रसमाम्नायस्वरस्याप्यशाब्दत्वात्कथं विवक्षेति वाच्यम्। तस्यानुपूर्वीवन्मन्त्रस्वरूपान्तर्गतत्वाद्विवक्षोपपत्तेः। तदेत**दात्मीयेनेत्य**नेन ध्वनितम्। सूत्रे भाषास्वरशब्देन।

छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते॥

इति वचनलक्षितो ब्राह्मणस्वर उच्यते ऐरवत्। ऐरं कृत्वोद्गेयमितिवत्प्रवचनस्य सामाम्नायगतस्य निषेधो बाधः स्यादित्यर्थः।

इति कर्मणि समाम्नायस्वरेण मन्त्रोच्चारणाधिकरणम्॥ ८॥

९

तन्न्यायत्वात्० ये पुनर्मन्त्रसमाम्नाये नाधीता ब्राह्मणोत्पन्ना मन्त्राः, तेष्वपि ब्राह्मणस्य मन्त्रस्वरूपविनियोगपरत्वान्न स्वरपरत्वम्। अतो न ब्राह्मणस्वरेण प्रयोक्तव्याः। नैवम्, असत्यपि स्वरविनियोगे मन्त्रस्य विनियुक्तस्य यथाविज्ञातरूपस्य प्रयोगात्तस्य च ब्राह्मणस्वरातिरेकेण स्वरान्तरानवगमात्तेनैव स्वरेण प्रयोगः॥

इति भाषिकस्वराधिकरणम्॥ ९॥

१०

मन्त्राणां० करणमन्त्रेषु किं मन्त्रमध्ये, मन्त्रान्ते, ततोऽपि वा कियन्तंचित्कालं स्थित्वा समवेताभिधायिपदानन्तरं वा कर्मप्रयोगः? किं वा सर्वमन्त्रान्तेऽनन्तरमेवेति? संशये, अनियमः, समवेताभिधायिनो वा

---

९

तन्न्यायत्वात्० आपवादिकी सङ्गतिः। पूर्वपक्षमाह—मन्त्रस्वरूपेति। स्वरस्याशाब्दत्वात्तद्विशिष्टमन्त्रविधानायोगादिति भावः। असत्यपीति। स्वातन्त्र्येण स्वराविनियोगेऽपि मन्त्रस्वरूपस्यान्यतोऽनवगमादत्रैव यथा स्वरानुपूर्वीकस्यावगतमन्त्रस्वरूपस्य विनियोगान्मन्त्रत्वान्तर्गतत्वेनैव स्वरविनियोगसिद्धिरित्यर्थः॥

इति भाषिकस्वराधिकरणम्॥ ९॥

१०

मन्त्राणाम्० अत्र समवेतार्थकपदेनेतरेषां कार्यसिद्धेः प्रसङ्गमाशङ्क्य तदपवादादातिदेशिकी सङ्गतिः। मन्त्रमध्य इति वचनविनियोज्ये प्रतीकान्ताभिप्रायम्। लिङ्गविनियोज्ये तु मन्त्रोच्चारणकालाभिप्रायम्। मन्त्रान्ते ततोऽपि वेत्यनियमपक्षः। समवेतेत्यपरः। प्रतीकमात्रविनियोगाभिप्रायेणाद्यकोटिः। मन्त्रारम्भमात्रेण तस्य करणत्वोपपत्तेस्तदुच्चारणकाल इति पक्षः। मन्त्रानन्तर्ये व्यवधाने च मन्त्रस्य करणत्वोपपत्तेरनियमपक्षोत्थानम्। सामर्थ्येन समवेतपदस्यैव कर्माङ्गत्वमितरेषान्नु तदाकाङ्क्षा

स्मरणस्य सञ्जातत्वादनन्तरमेवेति प्राप्ते ब्रूमः—सकलस्य मन्त्रस्य विनियुक्तत्वात्सकलेन सम्पादितं स्मरणं कर्माङ्गम्, अतः सकलमन्त्रसमाप्तौ तज्जनितं स्मरणं यावदेव न प्रभ्रष्टं तावदेव प्रयोगः कर्त्तव्यः। तेन मन्त्रान्तस्य कर्मादेः सन्निपातः ॥

इति करणमन्त्रान्ते पदार्थानुष्ठानाधिकरणम् ॥ १० ॥

११

सन्ततवच० 'सन्ततां वसोर्द्धारां जुहोती'त्यत्र सन्ततवचनात्, तस्य च साहित्यवाचित्वात्साहित्यस्य चानेकापेक्षितत्वात्कर्मणश्चैकत्वात्कर्म-मन्त्रयोः साहित्यमिदमुच्यते। अतो मन्त्रादेः कर्मादेश्च सन्निपातः। स्यादेवं, यद्येकं कर्म स्यात्। भिन्नानि त्वत्र 'द्वादशैतानि जुहोती'ति-सङ्ख्यया कर्माणि। तेषामविच्छेदः सन्ततशब्देनोच्यते, जुहोतीति तेषामुपात्तत्वात्। न मन्त्रकर्मणोः साहित्यं मन्त्रस्यानुपात्तत्वात्। अविच्छेदेऽपि सन्ततशब्दो वर्त्तते न केवलं साहित्ये। अतोऽत्रापि पूर्व एव न्यायः ॥

इति वसोर्धारायां मन्त्रान्ते कर्मसन्निपाताधिकरणम् ॥ ११ ॥

---

निवर्तकत्वमात्रेणोपयोग इत्यन्तिमपक्षोपपत्तिः। सिद्धान्तमाह—**सकलस्येति**। अध्य-यनविधिवशेन सकलमन्त्रस्य प्रयोजनापेक्षत्वात्समवेतार्थकपदैकवाक्यतया कर्माङ्गत्वम-समवेतार्थानामप्यावश्यकमिति सर्वान्त एवाऽव्यवधानेन कर्मानुष्ठानम्। अन्यथा मन्त्र जन्यस्मृतिविच्छेदेन वैगुण्यापत्तेरित्यर्थः। **सन्निपातः** संयोजनम् ॥

इति करणमन्त्रान्ते पदार्थानुष्ठानाधिकरणम् ॥ १० ॥

११

**सन्तत०** आतिदेशिकी सङ्गतिः। **सन्ततामिति**। चयनप्रकरणगतमिदं वाक्यम्। सिद्धान्तमाह—**स्यादेवमिति**। द्वादशानां होमानामेव वसोर्धारेति नामधेयम्। वसोर्मे धारेत्यर्थवादेन तत्प्रवृत्तिनिमित्तोक्तेरिति भावः। शेषं सुगमम् ॥

इति वसोर्धारायां मन्त्रान्ते कर्मसंनिपाताधिकरणम् ॥ ११ ॥

१२

आधारे० आघारं प्रकृत्य श्रूयते 'सन्ततमाघारयती'ति । तत्र कर्मैकत्वात्तत् सन्तानासम्भवे मन्त्रसाहित्यमेव विधीयत इत्यादिसंयोगः । नेत्याह । न कर्मणः क्षणिकस्य दीर्घेण मन्त्रेण 'ऊर्ध्वोऽध्वरः' इत्यादिना-साहित्यसम्भवः । अतो दीर्घधारस्याधार्यमाणद्रव्यस्य सातत्यमुच्यते । तेनात्रापि मन्त्रान्तकर्मणोरेव सन्निपातः ॥

इत्याघारेऽपि मन्त्रान्ते कर्मसन्निपाताधिकरणम् ॥ १२ ॥

१३

मन्त्राणां० करणमन्त्राणामेकार्थानां 'भगो वां विभजत्वि'त्यादीनां व्रीहियवन्यायेन विकल्प इति प्राप्तिसूत्रमेतदपवादार्थम् ॥

इत्येककार्यमन्त्राणां विकल्पाधिकरणम् ॥ १३ ॥

१४

संख्याविहितेषु० ये तु सङ्ख्यायुक्ता मन्त्राः 'तां चतुर्भिरभ्रि-मादत्ते' इत्येवमादयः, तेषामपि पूर्ववत् विकल्पः । सङ्ख्यावशात्तु

---

१२

आधारे० आतिदेशिकी सङ्गतिः । अधिकाशङ्कामाह—**कर्मैकत्वादिति** । **दीर्घधारस्येति** । 'दीर्घमाघारयती'ति श्रवणादित्यर्थः । **दीर्घम्** दीर्घकालम् । एवञ्चावृत्या दीर्घकालत्ववारणाय सातत्यविधिरिति भावः ॥

इत्याधारेऽपि मन्त्रान्ते सन्निपाताधिकरणम् ॥ १२ ॥

१३

**मन्त्राणाम्०** सुगमम् ॥

इत्येककार्यकरमन्त्राणां विकल्पाधिकरणम् ॥ १३ ॥

१४

**सङ्ख्या०** सङ्गतिर्मूल एव पूर्वाधिकरणे दर्शिता । सिद्धान्तमाह—**सङ्ख्यावशा-**

समुच्चयः । चतुःसङ्ख्या हि कर्माङ्गभूता नासति समुच्चये सम्पद्यते । तत्र पूर्वंप्रयुक्तानां मन्त्राणां संस्कारद्वारेण करणत्वम् । चरमस्य तु साक्षादिति सङ्ख्यावचनसामर्थ्याद्ध्यवसीयते । तस्मात्समुच्चयः ॥

इति सङ्ख्यायुक्तवचनविहितमन्त्राणां समुच्चयाधिकरणम् ॥ १४ ॥

१५

ब्राह्मणविहितेषु० ये ब्राह्मणविहिता मन्त्राः 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति, यज्ञपतिमेव तत्प्रजया पशुभिश्च प्रथयति' 'उरु ते यज्ञपतिः प्रथतामितिपुरोडाशं प्रथयती'ति च । तेषामपि सर्वेषामुपदिष्टत्वाद्विकल्पे च पाक्षिकबाधप्रसङ्गात्समुच्चयेऽपि सङ्ख्याविहितवत्सर्वेषां करणत्वोपपत्तेः समुच्चय इति वचनविनियोगाङ्गीकारेण भाष्यकारेण पूर्वपक्षितम् ।

वार्त्तिककारस्तु लिङ्गविनियोगेनैव मन्त्राणां विनियोगसिद्धेः, समुच्चयार्थमेव वचनं मन्यते । तस्मादपि समच्चय इति । नैवम्, लिङ्गेनैषां निरपेक्षसाधनत्वावगमात् । अतो न समुच्चयः । सङ्ख्यावशेन हि पूर्वत्र समुच्चयाश्रयणम् । न चैवमिहास्ति । ब्राह्मणविनियोगस्तु येषां लिङ्ग-

---

दिति । तद्विधिवशादित्यर्थः । इष्टकामृतवननार्थमभ्यादानस्य लिङ्गान्मन्त्रस्य च प्राप्तत्वात्सङ्ख्याया अवश्यविधेयत्वेन पाक्षिकानुवादत्वानुपपत्तेश्चेति भावः । ननूत्तरमन्त्रैः पूर्वमन्त्रजन्यस्मृतिविच्छेदात्पूर्वप्रयुक्तानां करणत्वानुपपत्तिरित्यत आह—तत्रेति । अत्र मानमाह—सङ्ख्येति ॥

इति सङ्ख्यायुक्तवचनविहितमन्त्राणां समुच्चयाधिकरणम् ॥ १४ ॥

१५

ब्राह्मण० आपवादिकी सङ्गतिः । ब्राह्मणेति । सङ्ख्यारहितब्राह्मणविहिता इत्यर्थः । वस्तुतस्तु भगोवामित्यादि मन्त्रव्यावृत्त्यर्थमिदम् । अभ्रिमन्त्राणामिहोदाहरण-

विनियोगो नास्ति, तेषां मन्त्रस्वरूपविनियोगार्थः । येषां त्वस्ति लिङ्गं तत्रार्थवादाद्यर्थमिति न तेनापि समुच्चयः ॥

इति ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम् ॥ १५ ॥

१६

हौत्रास्तु० 'उच्छ्रयस्व वनस्पते' इत्यादयो ये क्रियमाणानुवादिनो- हौत्रमन्त्राः, तेषामपि करणवदेकार्थत्वाद्विकल्पप्राप्तौ उच्यते—करणानि हि कर्मानुष्ठाने करणभूतां स्मृतिं पूर्वक्षणवर्त्तिनीं कुर्वन्ति, न चैकेन तत्सिद्धावितरेण कार्यमस्तीति युक्तस्तत्र विकल्पः । क्रियमाणानुवादिन- स्त्वध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः । अविच्छेदश्चान्ताद- पेक्षित इति सर्वेषां समुच्चयः ॥

इति हौत्रमन्त्राणां समुच्चयाधिकरणम् ॥ १६ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां
शास्त्रदीपिकायां द्वादशाध्यायस्य
तृतीयः पादः ॥ ३ ॥



---

त्वाप्रसक्त्या तद्व्यावृत्तेरनुपयोगादित्यूह्यम् । मन्यत इति । पूर्वपक्षसाधकत्वेनेत्यर्थः । शेषं स्पष्टम् ॥

इति ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम् ॥ १५ ॥

१६

हौत्रास्तु० आपवादिकी सङ्गतिः । स्पष्टमन्यत् ॥

इति हौत्रमन्त्राणां समुच्चयाधिकरणम् ॥ १६ ॥

इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजवैद्यनाथकृतायां शास्त्रदीपिका- व्याख्यायां प्रभाख्यायां द्वादशाध्यायस्य तृतीयः पादः ।



# अथ द्वादशाध्याये चतुर्थः पादः

१

जपाश्च० यत्र सन्तमप्यर्थप्रत्ययमविवक्षित्वोच्चारणमात्रमदृष्टार्थ क्रियते 'वैष्णवीमनूच्य वाग्यन्तव्ये'त्यादौ, स जपः। गुणकीर्त्तनं स्तुतिः 'अग्निर्मूर्द्धे'ति। आशासनम् आशीः 'आयुर्मे देही'ति। गुणविशिष्टगुणिप्रकाशनमदृष्टार्थमभिधानं तेषु ब्राह्मणविहितवद्विकल्पप्राप्तावदृष्टार्थत्वात्समुच्चयः॥

इति जपादिमन्त्राणां समुच्चयाधिकरणम् ॥ १ ॥

२

याज्यानुवाक्यासु० ऐन्द्राबार्हस्पत्ये कर्मणि द्वे याज्यानुवाक्यायुगले समाम्नाते 'इदं वामास्ये हविः, अयं वां परिषिच्यते' इत्येकं युगलम्।

---

## अथ चतुर्थः पादः

१

**जपाश्च०** अत्र समुच्चयतदभावचिन्ता पादार्थः। तद्द्वारेण प्रसङ्गतदभावपर्यवसानादध्यायसङ्गतिः। **अविवक्षित्वेति**। असमवेतार्थविषयत्वेन निष्प्रयोजनत्वादिति भावः। **वैष्णवीम्**। विष्णुदैवत्यामृचम्। आदिपदेन 'बार्हस्पत्यामनूच्य वाग्यन्तव्ये'ति जपान्तरस्य विकल्पसमुच्चयप्रतियोगिनः सङ्ग्रहः। स्तुतेरदृष्टार्थत्वं स्तोत्रशस्त्राधिकरणे द्वितीयाध्याय एवोक्तम्। **आशासनम्** फलस्येति शेषः। पूर्वपक्षमाह **विकल्पेति**' जपादिसमाख्यैकत्वेनैककार्यत्वकल्पनादित्याशयः। सिद्धान्तमाह—**अदृष्टार्थत्वादिति**। जपादिसमाख्याया अनुमन्त्रणादिवदनेकसाधारणत्वान्न कार्यैक्यज्ञापकतेति भावः। सूत्रे याजमानेष्विति प्रायिकत्वाभिप्रायम्। आशीःपृथक्त्वादिति च जपादिपृथक्त्वस्याप्युपलक्षणमिति बोध्यम्॥

इति जपादिमन्त्राणां समुच्चयाधिकरणम् ॥ १ ॥

२

**याज्या०** समुच्चयापवादात्सङ्गतिः। पूर्वपक्षमाह—**यथेति**। 'पुरोनुवाक्यामनूच्य-

'अस्मे इन्द्राबृहस्पती', बृहस्पतिर्नः परिपातु' त्यपरम्, तत्र समुच्चय-विकल्पसंशये, यथा याज्यापुरोनुवाक्ययोः सत्यपि देवतोपलक्षणार्थत्वेनैकार्थत्वे, मिथस्समुच्चयः, तथा युगलयोरपि स्यादविशेषादिति प्राप्ते, उच्यते—विकल्पः एकार्थत्वादिति। याज्यापुरोऽनुवाक्ययोस्तु पुरोऽनुवाक्यासमाख्यावशात् न्यायप्राप्तविकल्पबाधेन समुच्चय इति विशेषः ॥

इत्यैन्द्राबार्हस्पत्ये याज्यानुवाक्यायुगलस्य विकल्पाधिकरणम् ॥ २ ॥

३

क्रयणेषु० 'एकहायन्या क्रीणाति, अजया क्रीणाति, वाससा क्रीणाति' इति दश क्रयद्रव्याणि। तेषां विकल्पः समुच्चयो वेति चिन्त्यते। तत्र व्रीहि-यवन्यायेनैकार्थत्वाद्विकल्पः। कथं पुनरेकार्थत्वम्? भिन्ना एव हि प्रतिवाक्यं क्रयाः। न ह्येकेन वाक्येन विहितं क्रयमनूद्य वाक्यान्तरैर्द्रव्यान्तरविधानं सम्भवति, उत्पत्तिशिष्टद्रव्यावरोधात्। तस्मात्सर्वाणि क्रयविधानानि, विध्यन्तराच्च क्रयभेदः। तस्मान्नानाक्रयसाधनत्वाद् द्रव्याणां नास्त्यैकार्थ्यम्। सत्यम्, साक्षान्नास्ति क्रयद्वारेण त्वस्त्येव। सर्वे हि क्रयास्सोमप्राप्त्यर्थत्वादेकार्थाः। तद्द्वारेण द्रव्याण्यप्येकार्थानि। तदनेन प्रकारेण क्रयाणामेवात्रविकल्पसमुच्चयौ चिन्त्येते—व्रीहियववच्च विकल्प-

---

याज्यया जुहोती'ति समुच्चयानुवादबलात्तयोः समुच्चयवद्युगलयोरपि नित्यवदाम्नानात्स इति भावः। सिद्धान्तमाह—विकल्प इति। प्रबलेन लिङ्गेनैकार्थ्याद्विकल्प इत्यर्थः। दृष्टान्तवैषम्यमाह—याज्येति। याज्यातः पूर्वं पठ्यमानत्वार्थकसमाख्याया अनन्यथासिद्धत्वात्सङ्ख्यावशादग्निमन्त्राणामिव तयोः समुच्चय इत्यर्थः ॥

इत्यैन्द्राबार्हस्पत्ये याज्यानुवाक्यायुगलस्य विकल्पाधिकरणम्॥ २ ॥

३

क्रयणेषु० विकल्पापवादात्सङ्गतिः। इतीति। इत्यादिवाक्यविहितानीत्यर्थः। एकार्थत्वादिति। सौत्रहेतोरेकक्रयसाधनत्वादित्यर्थं मन्वानानामेकदेशिनां मतमाह—तत्रेति। शङ्काव्याजेनैतद्दूषयति—कथमिति। क्रयद्वारा द्रव्याणामेकार्थत्वं सूत्र उक्तमिति समाधानव्याजेन स्वमतमाह—सत्यमिति। एवञ्च सति क्रयसमुच्चयविकल्प

प्राप्तौ उच्यते—विक्रेतुराननतिरत्र प्रयोजनम् । तच्च बहुभिः सुकरम् । अतः कार्यप्रधानत्वात्पदार्थानां सौकर्यमालोच्य समुच्चयाश्रयणं न्याय्यम् । व्रीहियवादीनान्तु नैवं किंचित्कारणमस्ति । येन पृथक् श्रुतानामपि सापेक्षत्वं कल्प्येत । अत्र तु कार्यविशेषात्सापेक्षत्वकल्पनमिति वैषम्यम् ॥

इति सोमक्रयसाधनानां समुच्चयाधिकरणम् ॥ ३ ॥

४

संस्कारे० अग्नीषोमीये पशौ 'गुदेनोपयजती'ति श्रुतम् । पशुगणेऽनेकगुदसन्निपाते गुदानां विकल्पः, समुच्चयो वेति चिन्ता । यद्यर्थकर्म, ततो विकल्पः । अथ प्रतिपत्तिः ततस्समुच्चयः । तत्र सत्यपि तृतीयासंयोगे प्रयाजशेषवत्, 'उत्पत्तौ येन संयुक्तमि' त्येवं सिद्धस्य प्रतिपत्तित्वस्य प्रयोजनकथनमेतत् ॥

इत्युपयजनाधिकरणम् ॥ ४ ॥

---

चिन्तायां पर्यवसानमित्याह—तदनेनेति । अत्र च दशभिः क्रीणातीति लिङ्गदर्शनमपि तात्पर्यग्राहकं समुच्चये बोध्यम् ॥

इति सोमक्रयसाधनानां समुच्चयाधिकरणम् ॥ ३ ॥

४

संस्कारे० आतिदेशिकी सङ्गतिः । प्रयाजशेषवदिति तृतीयासंयोगेऽपि प्रतिपत्तित्वांशमात्रे दृष्टान्तः न तु तन्न्यायांशे । तत्र प्रयाजसम्बन्धित्वशेषत्वयोरिवात्र प्रतिपत्तिगमकाभावात् । अतएवोत्पत्ताविति सूत्रोक्तन्यायसिद्धतोक्ता । पशुयागावशिष्टतया आकीर्णकरत्वेन प्रतिपत्तिसाकांक्षत्वाद्दृष्टार्थत्वाच्च न्यायद्वयसिद्धत्वं चाभिप्रेतमिति बोध्यम् ॥

इत्युपयजनाधिकरणम् ॥ ४ ॥

५

संख्यासु० अग्न्याधेयाङ्गानां 'एका देया, षड् देया' इत्यादीनां दक्षिणानामानत्यर्थत्वात् क्रयणवत् समुच्चयः । सङ्ख्याश्रुतिविरोधात्तु विकल्पः । समुच्चये सङ्ख्यान्तरोपजननाच्छ्रुतसङ्ख्याहानिप्रसङ्गात् ॥

इत्याधाने दक्षिणानां विकल्पाधिकरणम् ॥ ५ ॥

६

द्रव्यविकारं० दर्शपूर्णमासयोः पत्नीसंयाजेषु आज्येन सह विकल्प्यमाना जाघनी विहिता, 'जाघन्या पत्नीः संयाजयन्ती'ति । सा चोदकेनाग्नीषोमीये पशौ प्राप्ता । अत्रापि पुनः श्रूयते 'जाघन्या पत्नीः संयाजयन्ती'ति । ततोऽपि पशुगणे चोदकेन प्राप्नोति । तत्र बह्वीनां जाघनीनां समुच्चयः, विकल्पो वेति सन्देहः । यदि प्रतिपत्तिः, ततस्समुच्चयः, अथाऽर्थकर्म ततो विकल्पः । तत्र यद्यपि दर्शपूर्णमासयोर्जाघनी गुणभूता पत्नीसंयाजानां तथाऽप्यग्नीषोमीये हृदयाद्यर्थालब्धपशुनिष्पन्नाया जाघन्याः प्रतिपत्त्यापेक्षायां प्रतिपत्तित्वेन पत्नीसंयाजविधानम् । एवमर्थं पुनर्वचनम् । ततश्च दृष्टार्थत्वात्पशुगणे समुच्चयः । नैवम्, आज्येन सह

---

५

सङ्ख्यासु० समुच्चयापवादात्सङ्गतिः । सिद्धान्तमाह—**सङ्ख्येति** । सङ्ख्यायाः सङ्ख्यान्तरव्यवच्छेदकत्वेनैव सर्वत्रान्वयस्य व्युत्पन्नत्वादिति भावः ॥

इत्याधाने दक्षिणानां विकल्पाधिकरणम् ॥ ५ ॥

६

द्रव्यविकार० आतिदेशिकी सङ्गतिः । अधिकाशङ्कामाह—**तत्रेति** । अन्यथाऽतिदेशादेव प्राप्तेः पशौ पुनर्वचनमनर्थकं स्यादिति युक्त्यन्तरमाह—**एवमर्थमिति** । प्रतिपत्तित्वेन विधानार्थमित्यर्थः । **दृष्टार्थत्वादिति** । जाघनीप्रतिपत्तिरूपदृष्टप्रयोजनत्वात्-

विकल्पमानायाश्चोदकप्राप्तायाः पुनर्वचनं नियमार्थम्। यथाप्राप्तायाश्च नियमः प्राप्तिश्च गुणभावेनेति तादृश्येव नियम्यते। अतः पशुगणे विकल्पः॥

इति पशुगणेषु जाघनीनां विकल्पाधिकरणम्॥ ६॥

७

**उखायां०** अग्नावुख्यं प्रकृत्य श्रूयते 'वृक्षाग्रात् ज्वलतो ब्रह्मवर्चसकामस्याहृत्याऽवदध्यात्, आष्ट्रादन्नाद्यकामस्ये'ति। तत्र किं नित्यस्योख्यस्य, काम्यस्य च वार्क्षादेः समुच्चयः? अथवा नित्यो निवर्त्यः? इति सन्देहे? अवधानमात्रं कामाय श्रूयते न होमः। तस्मात्फलाय काम्यमवधाय होमाय पुनर्नित्योऽग्निः, उख्योऽग्निर्वाऽवधातव्य इति समुच्चयः। स्यादेतदेवं यद्यवधानं विधीयते। प्राप्तमेव तु होमार्थमग्न्य-

---

स्य च विकल्पे सति जाघन्यन्तरस्य प्रतिपत्तिलोपादनिष्पत्तेरित्यर्थः। **नियमार्थमिति**। विधिलाघवादन्यथा पत्नीसंयाजानामप्राकृतकार्यकारित्वापत्तेश्चेति भावः। सूत्रार्थस्तु—द्रव्यस्याज्यस्य विकारात् बाधात् अर्थकर्म पत्नीसंयाजरूपं पूर्ववत्प्रकृतिवत्स्यात्। तथा सति विकल्पे प्राप्ते विधेर्नियमप्रधानत्वाल्लाघवमिति शेषः॥

**इति पशुगणेषु जाघनीनां विकल्पाधिकरणम्॥ ६॥**

७

**उखायाम्०** आतिदेशिकी सङ्गतिः। **अग्नौ** चयने। ब्रह्मवर्चसकामस्य प्रयोगे ज्वलतो वृक्षाग्रादग्निमाहृत्यावदध्यात् स्थापयेदित्यर्थः। **उख्यस्येति**। उखा आहवनीयाग्निधारणपात्रं यजमानगलगतशिक्येऽब्दपर्यन्तं ध्रियते। तत्रोखायां सन्तापेनाग्निं जनयतीति वाक्यादुत्पादित उख्यः स नित्य इत्यर्थः। सन्देहे विकल्पोक्तिः पाक्षिकत्वमात्रेण। मुख्यविकल्पस्यातुल्यबलत्वेनासम्भवात्। अतएव वक्ष्यति 'विकल्पसमुच्चयविचारे समाप्त' इति। पूर्वपक्षमाह—**अवधानमात्रमिति**। उखायां धारणमात्रमित्यर्थः। **न होमः** न होमार्थधारणम्। तस्याश्रुतत्वादप्रकृतत्वाच्चेति भावः। काम्यमवधायेत्यत्र समानकर्तृत्वमात्रं विवक्षितं न तु पूर्वकालत्वमपि, पाठक्रमबाधापत्तेः। तस्माद्धोमार्थे उख्येऽन्यन्तरं काम्यमवधेयमिति तात्पर्यम्। सिद्धान्तमाह—**स्यादेतदिति**। शब्दादु-

न्वाधानमाश्रित्याग्न्यन्तरमात्रं विधीयते । तस्मात्तेन काम्येन नित्यस्य निवृत्तिः। विकल्प-समुच्चयविचारे समाप्ते समुच्चय एवास्ति नास्तीति चिन्त्यत इति सङ्गतिः ॥

इति काम्येन नित्याग्नेर्विकाराधिकरणम् ॥ ७ ॥

८

स० सोऽयं काम्योऽग्निराहवनीयशब्दवाच्यः स्यात्, आहूयतेऽस्मिन्निति। तस्मादाहवनीयधर्मा गतश्रीधारणादयोऽत्र कर्त्तव्याः । नैवम् । आधानजन्मनः संस्कारविशेषस्य वाचकोऽयमाहवनीयशब्दो नासति तस्मिन्संस्कारे वर्त्तितुमर्हति । तस्मान्नाऽत्राऽऽहवनीयधर्माः ॥

इति वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम् ॥ ८ ॥

९

तस्मिन्सं० एवं तर्हि संस्कारात् तत्राधानादिकाः कर्त्तव्या होमार्थत्वात्संस्काराणाम्, अस्य चाग्नेर्होमसाधनत्वात् । सत्यम्, होमसाधनोऽय-

---

पस्थित्यभावेऽप्यर्थादुपस्थितत्वाद्धोमार्थमवधानमर्थप्राप्तमेवाश्रय इति काम्येन नित्यबाध इत्यर्थः । विकल्प इति । तथा च समुच्चयतदभावचिन्ता पादार्थः । समुच्चयाभावस्तु क्वचिद्विकल्पे पर्यवस्यति क्वचित्तु बाध इत्यवान्तरभेदमात्रमित्याशयः । सूत्रे नियोगेऽवधानमात्र इत्यर्थः ॥

इति काम्येन नित्याग्नेर्विकाराधिकरणम् ॥ ७ ॥

८

स० समुच्चयाभावादातिदेशिकी सङ्गतिः । गतश्रीति । 'धार्यो गतश्रिय आहवनीय' इत्यादिविहिता इत्यर्थः । गतश्रियः प्राप्तश्रियो यजमानस्य । शेषं सुगमम् ॥

इति वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम् ॥ ८ ॥

९

तस्मिन्० आतिदेशिकी सङ्गतिः। अधिकाशङ्कामाह— एवं तर्हीति । होमार्थत्वादिति । 'यदाऽऽहवनीये जुहोती'ति वाक्यादित्यर्थः। एवञ्चाऽऽहवनीयस्थानापत्त्या संस्काराति-

मग्निः, तथाऽप्यसंस्कृत एवायं संस्कृतस्थानापन्न इति नात्र संस्काराः कर्त्तव्याः। न हि वृक्षादाहृतस्यारणिमन्थनादिजन्यः संस्कारः शक्यते आधातुम्। तस्मान्नात्र संस्काराः॥

इति वैकारिकाग्नेः संस्काराभावाधिकरणम्॥ ९॥

१०

नित्यधारणे० काम्याग्निप्रसङ्गं समाप्य, पुनर्नित्यमेवोख्याग्निमुपक्रम्य चिन्तयति—किमुख्यस्य नित्यधारणम् न वेति विकल्पः? उताधारणमेवेति? तत्र—'न प्रतिसन्दध्यात्' इति धारणप्रतिषेधोऽसत्यां प्राप्तावनुपपद्यमानः प्रापकं विधिमनुमापयति। तेन चानुमितेन विधिना प्रापितं प्रतिषेधेन च प्रतिषिद्धं धारणं विकल्पमर्हतीति प्राप्ते, अभिधीयते—सामान्येनाहवनीयधारणं गतश्रियो विहितम्। उख्यश्चायमाहवनीयस्थानापन्नः। आहवनीय एव हि सन्तापेनोख्यः सञ्जातः तस्य धारणं सामान्यवचनप्राप्तं गतश्रियो धारणमुख्यविषयेऽनेन प्रतिषिध्यत इति, नानेनाऽश्रुतविध्यनुमानं सम्भवति। तस्मादधार्य एवायमुख्यः॥

इत्युख्यस्य नित्यस्याग्नेरधार्यत्वाधिकरणम्॥ १०॥

---

देश इति भावः। प्रथनाद्यसम्भवान्नात्र संस्कारप्राप्तिरिति सिद्धान्तमाह—**सत्यमिति**। आधानस्य होमानङ्गत्वादपि न प्राप्तिरित्याहुः॥

इति वैकारिकाग्नेस्संस्काराभावाधिकरणम्॥ ९॥

१०

**नित्यधारणे**० आतिदेशिकी सङ्गतिः। अधिकाशङ्कया पूर्वपक्षमाह—**तत्रेति**। गतश्रीधारणस्य पुरुषार्थतया आहवनीयधर्मत्वाभावेन तत्स्थानापत्योक्थ्ये प्राप्त्यसम्भावादप्राप्तस्य च निषेधायोगात्तत्प्रापकविधिकल्पनात् प्राप्तप्रतिषिद्धत्वेन ग्रहणाग्रहणवद्विकल्प इत्यर्थः। तस्य धारणं सामान्यवचनप्राप्तं गतश्रियो धारणरूपमेवेति सम्बन्धः। उख्यानुख्याहवनीयसाधारणं तदुख्यविषये प्रतिषिध्यत इत्यर्थः॥

इत्युख्यस्याग्नेः नित्यधारणाभावाधिकरणम्॥ १०॥

११

परार्थान्येको० सत्राहीनयोरनेकयजमानसमवाये यानि परार्थान्ययजमानसंस्कारार्थानि शुक्रान्वारम्भणौदुम्बरीसंमानादीनि, तान्येकेनैव कर्त्तव्यानि न सर्वैः, प्रयोजनाभावादिति प्राप्तिसूत्रमेतत् ॥

इति सत्राहीनयोश्शुक्रस्पर्शादीनामेककर्तृकत्वाधिकरणम् ॥ ११ ॥

१२

अनियमो० स चोक्तो यः कश्चित्स्यादविशेषात्, अतो येन केनचिदेकेन कृतमन्वारम्भणादिकमितरे प्रसङ्गादुपजीवन्तीतीदमपि प्राप्तिसूत्रमेव असत्रेष्वपवादं वक्तुम् ॥

इति शुक्रस्पर्शे यस्य कस्यचिद्यजमानस्य कर्तृत्वाधिकरणम् ॥ १२ ॥

१३

मुख्यो० सत्रेषु गृहपतिरेव परार्थानि कुर्यात्, नानियमः। कस्मात् ? इतरेषामार्त्विज्यविरोधात् ॥

इति सत्रे गृहपतेरेव कर्तृत्वाधिकरणम् ॥ १३ ॥

---

११

परार्थानि० सुगमम् ॥

इति शुक्रग्रहान्वारम्भणस्यैककर्तृकत्वाधिकरणम् ॥ ११ ॥

१२

अनियमः० एतदपि स्पष्टम् ॥

इति शुक्रस्पर्शे यस्यकस्यचिद्यजमानस्य कर्तृत्वाधिकरणम् ॥ १२ ॥

१३

मुख्यो वा० एतदपि सुगमम् ॥

इति सत्रे गृहपतेरेव कर्तृत्वाधिकरणम् ॥ १३ ॥

१४

सत्रे० यानि पुनर्यजमानसंस्कारार्थानि कर्माण्यञ्जनाभ्याञ्जनादीनि, तान्यपि सत्रे गृहपतिरेव कुर्यात्, उत सर्व इति संशये, गृहपतिरेवेत्याह गृहपतिसमाख्यानात्। अत्र हि गृहशब्देन कर्मोच्यते, तस्य पतिर्गृहपतिः, सर्वेषां च यजमानानां स्वामित्वाद्गृहपतिशब्दार्हत्वे सति विशेषेण कस्यचिदेषा समाख्या फलभूयस्त्वनिमित्ता। फलभूयस्त्वञ्च संस्काराधिक्यात्। अतस्तस्यैव संस्काराः नान्येषाम्। अत्राभिधीयते—फलिसंस्काराः सर्वेषामेव कर्त्तव्याः तदभावे फलमेव न स्यात्। गृहपतिसमाख्या त्वार्त्विज्याभावात् इतरे ह्यार्त्विज्यं कुर्वाणाः कर्मकरा इव भवन्ति। अयन्तु केवलयाजमानकरणात्स्वामिवाचिना गृहपतिशब्देनोच्यते। भवतु फलभूयस्त्वं तत्तु वचनात् 'स हि भूयिष्ठामृद्धिमृध्नोती'ति, न संस्काराधिक्यात्। अतः सर्वे याजमानं कुर्युः॥

इति सत्रे संस्काराणां सर्वगामित्वाधिकरणम्॥ १४॥

१५

विप्रतिषेधे० यत्रार्त्विज्ययाजमानयोर्विप्रतिषेधः, तत्रार्त्विज्यमेव कुर्युः, प्रधानत्वात्। कर्त्तारो हि कर्मणां गुणभूताः, कर्तॄणामपि गुणभूताः

---

१४

सत्रे० गृहपतिपदार्थस्य साधारण्येऽपि क्वचिदेव प्रयोगः फलभूयस्त्वप्रयुक्तस्तच्च संस्काराधिक्यादिति पूर्वपक्षः। कर्मकरत्वाभावात्प्राधान्येन व्यपदेशा भवन्तीति न्यायेन समाख्योपपत्तिर्न फलभूयस्त्वनिमित्ता। फलभूयस्त्वन्तु वाचनिकं न समाख्याकल्प्यमिति न तत्र संस्काराधिक्यं प्रयोजकमिति सिद्धान्तः॥

इति सत्रे संस्काराणां सर्वगामित्वाधिकरणम्॥ १४॥

१५

विप्रति० अत्राधिकरणे 'विप्रतिषेधे परमिति' सूत्रेणार्त्विज्यविरोधे फलिसंस्कारबाध उक्तस्तदुपन्यस्यति—यत्रेति। आर्त्विज्ये यजमानस्य गुणत्वेन ये यजमाना इति

संस्काराः। प्रत्यक्षविधानाच्च 'ये यजमानास्त ऋत्विज' इति। अनेन ह्यार्त्विज्यं यजमानानां विहितं, याजमानं तु चोदकप्राप्तमिति, आर्त्विज्यं बलीयः ॥

इति याजमानार्त्विज्ययोरार्त्विज्यस्य बलत्त्वाधिकरणम् ॥ १५ ॥

१६

प्रभुत्वादा० 'विप्रतिषेधे परमि'ति सूत्रे याजमानादार्त्विज्यं बलीय इति स्थितम्। तत्प्रसङ्गादार्त्विज्ये कर्त्तारश्चिन्त्यन्ते-दर्शपूर्णमास-ज्योतिष्टोमादिषु किं त्रिभिरपि द्विजातिभिरार्त्विज्यं कारयितव्यम्? उत ब्राह्मणैरेवेति। तत्र--

त्रयोऽप्यार्त्विज्यमर्हन्ति विद्वत्त्वात् स्मरणं पुनः।
पुरुषार्थमतः कर्मवैगुण्यं नास्ति किञ्चन ॥

याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति नियमः पुरुषार्थतया स्मर्यते, न क्रत्वर्थतया। तेन क्षत्रियवैश्यौ आर्त्विज्यं कुर्वन्तौ नियमातिक्रमात्कामं स्वधर्मात्प्रच्यवेयातां न तु क्रतोः काचित् गुणहानिः। तस्मात् त्रिभिरप्यार्त्विज्यं कारयितव्यमिति प्राप्ते ब्रूमः--

---

वाक्येन विधानादार्त्विज्यं प्रधानमित्यङ्गगुणविरोधन्यादार्त्विज्यानुग्रह इत्यर्थः। संस्कारा इत्यनन्तरं गुणभूता इत्यनुषङ्गः। शेषं सुगमम् ॥

इति यजमानार्त्विज्ययोरार्त्विज्यस्य प्राबल्याधिकरणम् ॥ १५ ॥

१६

प्रभुत्वात्० सङ्गतिमाह—**विप्रतिषेध इति**। पूर्वपक्षमाह—**तत्रेति**। **स्मरणम्**--

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥

इति ब्राह्मणस्यैवार्त्विज्यस्मृतिः। **पुरुषार्थं** पुरुषार्थतया ब्राह्मणनियमबोधकं न क्रत्वङ्गतया। प्रकरणाद्यभावादिति भावः। अध्यायार्थमुपसंहरति--**मध्य इति**।

द्विजोत्तमानामार्त्विज्यं न तु क्षत्रियवैश्ययोः ।
ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः ॥

'यज्ञं व्याख्यास्यामः' इत्युपक्रम्य 'ब्राह्मणानामार्त्विज्यमि'ति स्मरन्तो यज्ञसूत्रकारः क्रत्वर्थेन स्मरन्तीति स्पष्टमेव ।

तथा श्रीमद्रामायणेऽपि—

क्षत्रियो याजको यस्य चाण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥ इति ।

सुराः-देवताः, ऋषयश्च ऋत्विग्भूता इति, देवताहविर्भागनिराकरणात् क्रतुवैगुण्यमेव दर्शितम् ।

'राजयाजकयाज्यस्य विनश्यति यथा हविरि'त्यब्राह्मणार्त्विज्ये हविर्नाशश्च स्मृतः । लिङ्गानि च दर्शितानि 'ब्राह्मणानामिदं हविरि'-त्येवमादीनि । तस्माद् ब्राह्मणानामेवार्त्विज्यमिति सिद्धम् ।

मध्ये तन्त्रं यस्य येषां विधानं तेषु प्रोक्तो मुख्यतन्त्रप्रसङ्गः ।
जिज्ञास्यो यो धर्म उक्तश्चतुर्द्धा स प्रज्ञातो लक्षणैर्द्वादशान्तैः ॥

इत्यार्त्विज्ये ब्राह्मणानामेवाधिकारनिरूपणाधिकरणम् ॥ १६ ॥

इति महामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां
शास्त्रदीपिकायां द्वादशाध्यायस्य चतुर्थः पादः ।
द्वादशाध्यायः समाप्तः ।

## ॥ शास्त्रदीपिकाग्रन्थश्च समाप्तः ॥



तन्त्रस्य मध्ये इति मध्येतन्त्रम् । यस्य मध्ये तन्त्रं येषामित्यन्वयः । इदानीं कृत्स्न-शास्त्रार्थमुपसंहरति—**जिज्ञास्य इति** । **चतुर्धा** प्रमाणस्वरूपसाधनफलैः । **लक्षणैः** अध्यायैः ।

क्व पार्थसारथेर्वाचाङ्गरिमा क्व च मे मतिः ।
तथापि सद्गुरुकृपा तेनैनां समयोजयत् ॥

मुनिरसमुनिचन्द्र सम्मितेऽब्दे शुभतरमाधवमासि शुक्लपक्षे ।
पुरहरमहिलातिथौ युगादौ कृतिरियमीशपदेऽर्पिता प्रभाख्या ॥

इति श्रीमत्तत्सत्कुलजलधिचन्द्रधर्मशास्त्रपारावारीणश्रीरामचन्द्रसूरि-
वरात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां
द्वादशस्याध्यायस्य चतुर्थः पादः समाप्तः ॥

**॥ समाप्ता च शास्त्रदीपिका ॥**

